श्रीपार्वत्युवाच—

ओं मन्नाथ जगतां नाथ मम प्रेरणकारण ।
गणेशस्य तु यन्मन्त्रं श्रुतं देव महेश्वर ॥ २ ॥

इदानीं श्रोतुमिच्छामि कवचं तस्य दुर्लभम् ।
तद्वदस्व दयासिन्धो कृपया मम शङ्कर ॥ ३ ॥

श्री ईश्वर उवाच—

शृणु देवि महाभागे गणेशकवचं परम् ।
यद् धृत्वा पठनात् सद्यो विघ्ननाशो भविष्यति ॥ ४ ॥

विष्णुना कथितं पुण्यं कवचं ब्रह्मणे मुदा ।
पठित्वा कृतवान् सृष्टिमेकभावः पितामहः ॥ ५ ॥

कवचस्यास्य देवस्य ऋषिर्देवो महेश्वरः ।
छन्दो विराट् देवता च गणेशो विघ्ननायकः ।
धर्मार्थकाम[1]मोक्षार्थे विनियोगः प्रकीर्तितः ॥ ६ ॥

श्रीमहागणपतये नमः

ओं अस्य श्रीमहागणपतिकवचस्तोत्रमहामन्त्रस्य, श्रीमहेश्वर ऋषिः, विराट् छन्दः, श्रीमहागणपतिर्देवता । श्रीमहागणपतिप्रसादसिद्ध्यर्थे धर्मार्थकाममोक्ष-चतुर्विधफलपुरुषार्थसिद्ध्यर्थे जपे विनियोगः ॥

ओं गं पातु मस्तकं देवो गणनाथो महाबलः ।
एकाक्षरो महामन्त्रो सर्वदेवनमस्कृतः ॥ ७ ॥

---

अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदं त भक्तानामेकदन्तमुपास्महे ॥ ६ ॥

अचिन्त्याव्यक्तरूपाय निर्गुणाय गुणात्मने ।
समस्तजगदाधारमूर्तये ब्रह्मणे नमः ॥ ७ ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरू रुद्रो महेश्वरः ।
गुरुः सदाशिवः सर्वं तस्मै श्रीगुरवे नमः ॥ ८ ॥

गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ॥ ९ ॥

यं ब्रह्म वेदान्तविदो वदन्ति
परं प्रधानं पुरुषं तथान्ये ।
विश्वोद्गतेः कारणमीश्वरं वा [च]
तस्मै नमो विघ्नविनायकाय ॥ १० ॥

1. काम्य-

ओं श्रीं ह्रीं क्लीं ऐं च वदनं ग्लौं गं गणपते हृदयम् ।
वरद वरद मे नाभिदेशं सर्वजनं मे वशमानय ॥ ८ ॥

[1]वसु बीजाक्षरो मन्त्रो वह्निजायात्मकस्तथा ।
सर्वाङ्गं मे सदा पातु सर्वदेवसुपूजितः ॥ ९ ॥

ह्रीं विरिविरि गणपति चैवावर वर वरद सर्वलोकं तथा ।
पातु मूलाधार नियतं मे वशमानय स्वाहा ॥ १० ॥

षड्विंशत्यक्षरो मन्त्रो नृणां शीघ्रफलप्रदः ।
पातु मां परितो देवः सर्वधर्मसमावृतम् [:] ॥ ११ ॥

ह्रीं गं ह्रीं मम सर्व टंगं पातु श्रीमहागणपतये ।
वह्निजायात्मको मन्त्रो द्वादशाक्षरसंयुतः ॥ १२ ॥

राजद्वारे जले मध्ये शून्ये गेहे श्मशानके ।
(श्री)महागणपतिः पातु सर्वशत्रुनिबर्हणः ॥ १३ ॥

ह्रीं गं श्रीं वशमानय द्वयेन समाद्यतः । (?)
दशाक्षरो महामन्त्रो सर्वकार्येषु रक्षतु ॥ १४ ॥

गं क्षिप्रप्रसादनाय नमोऽन्तश्च महामनुः ।
दशाक्षरो मन्त्रराजो दशदिक्षु सदावतु ॥ १५ ॥

ह्रं वक्रतुण्डाय नमः पातु मां [2][दु]र्गमेषु च ।
हुं वक्रतुण्डाय हुं च पातु मे नृहमेधयोः(?) ॥ १६ ॥

ओं ग्रं नमः पातु नित्यं वेदवर्णात्मको मनुः ।
सर्वकार्येषु सर्वत्र पातु मां पार्वतीसुतः ॥ १७ ॥

इति ते कथितं भद्रे कवचं परमाद्भुतम् ।
पठित्वा धारयित्वा च सर्वमाशु समालभेत् ॥ १८ ॥

सकृद्वा यस्तु [3]पठति कवचं देवदुर्लभम् ।
सर्वसिद्धियुतो भूत्वा देवतुल्यो भवेन्नरः ॥ ॥ १९ ॥

ब्रह्मास्त्रादीनि चास्त्राणि तद्गात्रं प्राप्य पार्वति ।
माल्यानि चम्पकान्येव भविष्यन्ति न संशयः ॥ २० ॥

रामोऽपि कवचं [4]धृत्वा जघानाशु निशाचरान् ।
[4]धृत्वा तु कवचं लोके कुबेरोऽपि धनेश्वरः ॥ २१ ॥

---

1. विजशा-
2. ज
3. पठितः
4. कृत्वा

इन्द्रोऽमरावतीं लब्ध्वा[1] पठनात् कवचस्य तु ।
देवनामाधिपत्यं वै तथावाप महेश्वरि ॥ २२ ॥

सृष्टिं वितनुते ब्रह्मा स्थितिं वितनुते हरिः ।
संहारं तनुते रुद्रोऽप्यहमेव न संशयः ॥ २३ ॥

भजेद्विलिख्य कवचं धारयेद्भक्तितः परम् ।
यं यं चिन्तयते लोके तं तं प्राप्नोति सर्वदा ॥ २४ ॥

गन्धर्वो गायते धीरः सर्वलोकवशंकरः ।
कामतुल्योऽपि नारीणां योगी योगपतिर्यथा ॥ २५ ॥

न देयं परशिष्येभ्यो देयं शिष्येभ्य एव च ।
अप्रशिष्याय दुष्टाय कृतघ्नाय दुरात्मने ॥ २६ ॥

भक्तिश्रद्धाविहीनाय परनिन्दापराय च ।
यो ददाति निषिद्धेभ्यो कवचं परमाद्भुतम् ॥ २७ ॥

तस्य नश्यन्ति देवेशि पुत्रायुःकीर्तिसम्पदः ।
शिष्याय भक्तियुक्ताय गुरुभक्तिरताय [च]॥ २८ ॥

शान्ताय विष्णुभक्ताय शिवपूजापराय च ।
देव्यर्चनपरायास्मै स्वजनाय महात्मने ॥ २९ ॥

ददाति चेद्यत् कवचं शीघ्रसिद्धिप्रदं भवेत् ।
एतत् कवचमज्ञात्वा यो जपेच्च गणाधिपम् ॥ ३० ॥

दारिद्र्यं परमं लब्ध्वा [2]सोऽचिरान्मृत्युमाप्नुयात् ।
ज्ञात्वा तु कवचं यो वै जपेद्भक्तिपुरःसरम् ॥ ३१ ॥

जपान्ते कवचं दिव्यं पठेन्नित्यं नियन्त्रितः ।
सर्वान् कामान् समासाद्य गणेशस्य प्रियो भवेत् ॥ ३२ ॥

॥ इति [श्रीरुद्रयामले श्रीपार्वतीपरमेश्वरसंवादे]
श्रीमहागणपतिकवचं समाप्तम् ॥

---

## ७. ॥ श्रीविनायकस्तवराजः ॥

बीजापूरगदेक्षुकार्मुक[3]रुजा चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया सपद्मकरयाश्लिष्टोज्ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो [4]विघ्नेश इष्टार्थदः ॥ १ ॥

---

1. तिं 2. यो 3. लसच्चक्राब्जं 4. विघ्नोविशिष्टार्थदः

नमस्ते सिद्धिलक्ष्मीश गणाधिप महाप्रभो ।
विघ्नेश्वर जगन्नाथ गौरीपुत्र जगत्प्रभो ॥ २ ॥

जय विघ्नेश्वर विभो विनायक महेश्वर ।
लम्बोदर महाबाहो सर्वदा त्वं प्रसीद मे ॥ ३ ॥

महादेव जगत्स्वामिन् मूषिकारूढ शङ्कर ।
विशालाक्ष महाकाय मां त्राहि परमेश्वर ॥ ४ ॥

कुञ्जरास्य सुराधीश महेश करुणानिधे ।
दशबाहो महाराज गजवक्त्र चतुर्भुज ॥ ५ ॥

शूर्पकर्ण महाकर्ण गणनाथ प्रसीद मे ।
मातुलुङ्गधर स्वामिन् गदाचक्रसमन्वित ॥ ६ ॥

शङ्खशूलसमायुक्त बीजापूरसमन्वित ।
इक्षुकार्मुकसंयुक्त पद्महस्त प्रसीद मे ॥ ७ ॥

नानाभरणसंयुक्त रत्नकुम्भकर प्रभो ।
सर्गस्थितिलयाधीश परमात्मन् जय प्रभो ॥ ८ ॥

अनाथनाथ विश्वेश विघ्नसङ्घविनाशन ।
त्रयीमूर्ते सुरपते ब्रह्मविष्णुशिवात्मक ॥ ९ ॥

त्रयीगुण महादेव पाहि मां सर्वपालक ।
अणिमादिगुणाधार लक्ष्मीश्री[भू]विष्णुपूजित ॥ १० ॥

गौरीशङ्करसंपूज्य जय त्वं गणनायक ।
रतिमन्मथसंसेव्य महीभूदारसंस्तुत ॥ ११ ॥

रिध्या[ऋद्धया]मोदादिसंसेव्य महागणपते जय ।
शङ्खपद्मादिसंसेव्य निरालम्ब निरीश्वर ॥ १२ ॥

निष्कलङ्क निराधार पाहि मां नित्यमव्यय ।
अनाद्य जगतामाद्य पितामहसुपूजित ॥ १३ ॥

धूमकेतो गणाध्यक्ष महामूषकवाहन ।
अनन्तपरमानन्द जय विघ्नेश्वरेश्वर ॥ १४ ॥

रत्नसिंहासनासीन किरीटेन सुशोभित ।
परात्पर परेशान परपूरुष पाहि माम् ॥ १५ ॥

निर्द्वन्द्व निर्गुणाभास जपापुष्पसमप्रभ ।
[1]सर्वप्रमथसंस्तुत्य त्राहि मां विघ्ननायक ॥ १६ ॥

कुमारस्य गुरो देव सर्वैश्वर्यप्रदायक ।
सर्वाभीष्टप्रद स्वामिन् सर्वप्रत्यूहनाशक ॥ १७ ॥

शरण्य सर्वलोकानां शरणागतवत्सल ।
महागणपते नित्यं मां पालय कृपानिधे ॥ १८ ॥

एवं श्रीगणनाथस्य स्तवराजमनुत्तमम् ।
यः पठेच्छृणुयान्नित्यं प्रत्यूहैः स विमुच्यते ॥ १९ ॥

अश्वमेधसमं पुण्यफलं प्राप्नोत्यनुत्तमम् ।
वशीकरोति त्रैलोक्यं प्राप्य सौभाग्यमुत्तमम् ॥ २० ॥

रमते देवकन्याभिः स नित्यं साधकोत्तमः ।
सर्वान् भोगान् प्रभुङ्क्तेऽसौ दुर्लभांश्च दिने दिने ॥ २१ ॥

सर्वाभीष्टमवाप्नोति शीघ्रमेव सुदुर्लभम् ।
महागणेशसान्निध्यं प्राप्नोत्येव न संशयः ॥ २२ ॥

॥ इति [श्रीरुद्रयामले] श्रीविनायकस्तवराजः सम्पूर्णः ॥

---

## ८. ॥ श्रीविघ्नेश्वरगीतम् ॥

विशदवाससं विस्तृतोरसं विमलतेजसं विद्रुराक्षसम् ।
विगततामसं विष्टरौकसं विभुमुपास्महे विघ्ननायकम् ॥ १ ॥

विधिहरिस्तुतं विष्टरस्थितं विपुललोचनं वीर्यशालिनम् ।
विकटविक्रमं विद्ययावृतं विभुमुपास्महे विघ्ननायकम् ॥ २ ॥

विबुधसत्तमं विप्रपूजितं विधु[2]कुलोज्ज्वलं विघ्ननाशनम् ।
विधृतभूषणं वीतरागिणं विभुमुपास्महे विघ्ननायकम् ॥ ३ ॥

विभवसंयुतं विभ्रमान्वितं विषधरेट्तनूवेष्टितोदरम् ।
विनुतपौरुषं विस्तरा[विस्तृता]लिकं विभुमुपास्महे विघ्ननायकम् ॥ ४ ॥

विमतमर्दनं विश्वनायकं वितरणोत्सुकं वारणाननम् ।
विचलितश्रुतिं वीतकल्मषं विभुमुपास्महे विघ्ननायकम् ॥ ५ ॥

॥ इति श्रीविघ्नेश्वरगीतं सम्पूर्णम् ॥

---

1. प्रथम        2. क.

## ९ ॥ श्रीविद्यागणेशाष्टोत्तरशतनामस्तोत्रम् ॥

श्रीमद्विद्यागणेशस्य नाम्नामष्टोत्तरं शतम् ।
वक्ष्यामि शृणु देवेशि सावधानेन चेतसा ॥ १ ॥

सर्वपापप्रशमनं सर्वविघ्ननिवारकम् ।
सर्वरोगहरं दिव्यं साधकाभीष्टदायकम् ॥ २ ॥

ब्रह्मादयः सुराः सर्वे वसिष्ठाद्या मुनीश्वराः ।
विद्यागणाधिनाथस्य चक्राराधनतत्पराः ॥ ३ ॥

स्तोत्रेणानेन सम्पूज्य जप्त्वा स्वे स्वे पदे स्थिताः ।
सुखिनोऽद्यापि दृश्यन्ते सद्यः सन्तुष्टमानसाः ॥ ४ ॥

तादृशं परमं दिव्यं प्रत्यक्षफलदायकम् ।
यः पठेत् प्रातरुत्थाय चिन्तयेन्मूर्ध्नि वे[बा]लकम् ? ॥ ५ ॥

स सर्वदुरितान्मुक्त्वा[क्तो] सर्वान् कामानवाप्नुयात् ।
चक्रपूजाविधानेन प्रयाणे समुपस्थिते ॥ ६ ॥

शोभनेषु समस्तेषु कार्येष्वन्येषु बुद्धिमान् ।
स्तोत्रेणानेन सम्पूज्य जप्त्वाभीष्टमवाप्नुयात् ॥ ७ ॥

धान्यकामी लभेद्धान्यं धनकामी धनं लभेत् ।
सन्तानकामी सन्तानं क्षेत्रार्थी क्षेत्रमुत्तमम् ॥ ८ ॥

सर्वं लभेत् सर्वकामी निष्कामी तत्फलं लभेत् ।
विद्यागणपतिर्विघ्नहरो गजमुखोऽव्ययः ॥ ९ ॥

विज्ञानात्मा वियत्कायो विश्वाकारो विनायकः ।
विश्वसृग्विश्वभुग्विश्वसंहर्ता विश्वगोपनः ॥ १० ॥

विश्वानुग्राहकः सत्यः शिवस्तुल्य[शिवतुल्यः] शिवात्मजः ।
विचित्रनर्तनो वीरो विश्वसन्तोषवर्धनः ॥ ११ ॥

विमर्शी विमलाचारो विश्वाकारो विनायकः ।
स्वतन्त्रः सुलभः स्वर्चः सुमुखः सुखबोधकः ॥ १२ ॥

सूर्याग्निशशिदृक् सोमकलाचूडः सुखान[स]नः ।
स्वप्रकाशः सुधावक्रः[स्वधावक्त्रः] स्वयं वक्त्रः[व्यक्तः] स्मृतिप्रियः॥१३॥

शक्तीशः शङ्करः शम्भुः प्रभुर्विभुरुमासुतः ।
शान्तः शतमखाराध्यश्चतुरश्चक्रनायकः ॥ १४ ॥

कालजित् करुणामूर्तिरव्यक्तः शाश्वतः शुभः ।
उग्रकर्मोदितानन्दी शिवभक्तः शिवान्तरः ॥ १५ ॥

चैतन्यधृतिरव्यग्रः सर्वज्ञः सर्वशत्रुभृ[हृ]त् ।
सर्वाग्रः समरानन्दी संसिद्धगणनायकः ॥ १६ ॥

साम्बप्रमोदको वज्री मानसो मोदकप्रियः ।
एकदन्तो बृहत्कुक्षिः [दीर्घतुण्डो] विकर्णकः ॥ १७ ॥

ब्रह्माण्डकन्दुकश्चित्रवर्णश्चित्ररथासनः ।
तेजस्वी तीक्ष्णधिषणः शक्तिबृन्दनिषेवितः ॥ १८ ॥

परापराश्च पश्यन्ती प्राणनाथः प्र[म]त्तहृत् । (?)
संक्लिष्टमध्यमस्पष्टो वैखरीजनकः शुचिः ॥ १९ ॥

धर्मप्रवर्तकः कामो भूमिस्फुरितविग्रहः ।
तपस्वी तरुणोल्लासी योगिनीभोगतत्परः ॥ २० ॥

जितेन्द्रियो जयश्रीको जन्ममृत्युविदारणः ।
जगद्गुरुरमेयात्मा जङ्गमस्थावरात्मकः ॥ २१ ॥

नमस्कारप्रियो नानामतभेदविभेदकः ।
नयवित् समदृक् शूरः सर्वलोकैकशासनः ॥ २२ ॥

विशुद्धविक्रमो वृद्धः संवृद्धः ससुहृद्गणः ।
सर्वसाक्षी सदानन्दी सर्वलोकप्रियङ्करः ॥ २३ ॥

सर्वातीतः समरसः सत्यावासः सतां गतिः ।
इति विद्यागणेशस्य नाम्नामष्टोत्तरं शतम् ॥ २४ ॥

यः पठेच्छृणुयाद्वापि नित्यं भक्तिसमन्वितः ।
तस्य साधकवर्यस्य सर्वावस्थासु सर्वदा ।
नासाध्यमस्ति किमपि विद्याविघ्नेश्वरात्मज[नः] ॥ २५ ॥

॥ इति [महाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे शङ्करविरचिते]
श्रीविद्यागणेशाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

---

## १०. ॥ श्रीगणेशशतकम् ॥

### श्रीमङ्गलाशंसनपद्धतिः

कल्याणं कलयन्तु मे गणपतेः पादारविन्दोद्गताः
पुण्याः पांसुकणाः सुरेन्द्रमकुटीकोटीरकोटीतटे ।
[1]काश्मीरन्ति कठोरपापपटलीकान्तारसंप्लोषणे
[2]दावीयन्ति च येऽन्तरायशिखरित्राते [3]पवीयन्ति च ॥ १ ॥

विघ्नव्रातवनानलो गणपतिर्विघ्नक्षपाभास्करो
विघ्नप्रावृडु[4]पेन्द्रबोधसमयो विघ्नप्रपाताशनिः ।
विघ्नक्षोणिरुहप्रचण्डपवनो विघ्नग्रहोच्चाटनो
विघ्नव्याधिमहौषधिर्विजयते विघ्नस्मरे[5]शानदृक् ॥ २ ॥

विघ्नाद्रिव्रजपक्षतक्षणपविं विघ्नाब्धिकालानलं
विघ्ना[6]च्छच्छदवार्षिकाम्बुदततिं विघ्नासुराब्जेक्षणम् ।
विघ्नाभेद्यतमःप्रभातसमयं विघ्नालिमुस्ताकिटिं
विघ्नाहिव्रजवैनतेयमनिशं विघ्नाधिपं संश्रये ॥ ३ ॥

विघ्नेद्धानलतोयवृष्टिरनघो विघ्नेभकण्ठीरवो
विघ्नेन्द्रारिसुदर्शनायितपदो विघ्ने[7]त्वरीचन्द्रमाः ।
[8]विघ्नेर्मोल्यमृताक्तवर्ति र[9]नघा विघ्नेक्षुदन्तावलो
विघ्नेन्दिन्दिर[10]चम्पको भवतु मे विघ्नेश्वरः श्रेयसे ॥ ४ ॥

वन्दे कल्पकविघ्नराजमनिशं तं देहिनामाश्रयं
यं देवाः शरणं समेत्य सकलं विन्देयुराशंसितम् ।
मन्देहोऽपि यदाश्रयान्मधुझरीसन्देहसन्दायिनीं
सन्देहेन विना लभेत सरसां मन्देतरां साहितीम् ॥ ५ ॥

---

1. =काश्मीरपुष्पमिव लसन्ति
2. =वनहुताशन इवाचरन्ति
3. =वज्रायन्ते
4. उपेन्द्रबोधसमयः—शरत् वर्षान्त भवा
5. ईशानदृक्—ईशतृतीयनेत्रम्
6. अच्छच्छदो—हंसः
7. इत्वरी—स्वैरिणी
8. विघ्नेरंमदशारदासिदिवसो, विघ्नेर्मोलिविरोपणामृतसिचिः । ईर्मे=व्रणम् ।
9. मला
10. इन्दिन्दिरः=भ्रमरः

पारं संसृतिसागरस्य जगदाधारं च सच्चित्सुखा-
कारं निर्मलयोगिबृन्दहृदयागारं विकारोज्झितम् ।
धीरं वाञ्छितपूरपूरणमहोदारं सदा सज्जनो-
त्तारं वारिजविष्टरादिविनुतं हेरम्बमीडे विभुम् ॥ ६ ॥

वन्दारुत्रिदशेश्वरप्रभृतिभिर्बृन्दारकैरर्चितं
मन्दारप्रसुखामरद्रुसुमनोबृन्दावभास्वत्करैः ।
मन्दानां मतिदं गणेशमरिषट्कं दारयन्तं सतां
[1]कन्दात्मेति जगत्तरोरधिगतं विन्दामहे साम्प्रतम् ॥ ७ ॥

भिन्दानं विशयं महोपनिषदां छिन्दा[निन्दा]दसन्देहतोऽ-
हं दारा वसु नन्दना इति चिरात् सन्दानितं दारुणम् ।
छिन्दानं भवपाशमाश्रितजनानन्दातिसन्दायिनं
विन्दामो गणनाथमद्वयचिदानन्दातितुन्दायितम् ॥ ८ ॥

चित्ते सर्वमिदं विधातुमनुसन्धत्ते विधत्तेऽथ यत्
धत्ते यत्र जगच्चिरादपि तिरोधत्तेऽपवृत्ते युगे ।
सत्तेयं जगतः स्वतो न हि यदायत्तेति जोघुष्यते
तत्तेजः सततं विभातु हृदि मे मत्तेभवक्त्राभिधम् ॥ ९ ॥

नाकाधीशसुरेशकेशवशिवाद्याकारभेदाश्रया -
च्छोकाम्भोनिधिमग्नभक्तजनतानौकायमानः स्वयम् ।
राकायामवतीशकोटिघटनानीकाशनैजप्रभः
कोकारातिकलाधरोऽवतु सुरानीकाधिराजाग्रजः ॥ १० ॥

॥ इति श्रीमङ्गलाशंसनपद्धतिः ॥

---

## श्रीविनयप्रपञ्चनपद्धतिः

कल्याणाद्रिमुदक्षिपत् स्वबलसाफल्याय या पुष्करात्
कुल्यातुल्यतयापिबज्जलधिमावल्या सुराणां नुता ।
तुल्यान्या न यतः श्रितार्थिकृतवात्सल्या क्वचिद्देवता
कल्या वर्णयितुं कथं वयमिमां शल्यापहां देवताम् ॥ ११ ॥

मोचागर्वहरा नवामपि सुधां नीचामथातन्वती
वाचा फाणितशर्करेक्षुरसमाध्वीचातुरीं निघ्नती ।

---

1. विन्दामो विविधप्रपञ्चलवलीकन्दायितं संततम् ।

आचामत्यखिलं न यस्य चरितं प्राचामनीचापि चेत्
का चात्यल्पमतेर्ममास्य गदितुं धीचापलं केवलम् ॥ १२ ॥

नागानामधिपोऽपि यस्य गदितुं भोगावलिं नाशकत्
भोगानालिखितुं करैर्दिनमणिः खेगाधिपो वीक्षितुम् ।
को गाहेत परो गणेशचरिताख्यागाधपाथोनिधिं
वागाशात्र ममोदिता यदि तदा सागा भवेयं न किम् ॥ १३ ॥

मर्यादाग्रथितो विनैव जलधिस्तर्या न सन्तीर्यते
चर्या त्वस्य न तादृशी कलितमौखर्यैश्च हर्यादयः ।
पर्याप्ता न गणेशितुर्निगमवैखर्यापि धुर्याः सुराः
पर्यायाद्गदितुं कथं नु विषयीकुर्यामहन्तामहम् ॥ १४ ॥

मानातीतगणेशमङ्गलगुणाख्यानावधानाहत-
ज्ञानाभासविचेष्टितं किमपि दुर्मानाभिमानाहितम् ।
मेनापत्यतनूजपादकमलध्यानाभिधां निष्कृतिं
भूनाकिप्रवरा विधाय तनुतानेनाशु हीनागसम् ॥ १५ ॥

स्कन्दाग्रेजनुषोऽभिनन्दितुमिमे कुन्दावदातं यशो
विन्दानाः सनकादयोऽप्यमृतनिष्यन्दायितैर्वाग्भरैः ।
मन्दाक्षप्रतिरुद्धसुन्दरवचःस्पन्दा न शेकुः कथां
मन्दात्मान इमे कथं गणपते विन्दामहे साम्प्रतम् ॥ १६ ॥

मित्राण्यत्र विचित्रबन्धुनिवहाः पुत्राः कलत्राणि वा
यत्रायास्यति तत्र कोऽपि न पुनः सत्त्रासमायास्यति ।
द्वित्रा ये गदिता गुणा गणपतेरत्रामुना भक्तितो
जित्रास्ते स्युरमुत्र तस्य तु धुरीत्यत्राभियुक्ता वयम् ॥ १७ ॥

[1]व्यासाद्या अपि यस्य नालमभवन् दासा गुणानामुप-
न्यासायात्र रता वयं बत परीहासाय भासामहे ।
प्रासाय स्पृहयालुना स्वधिषणायासात् समासादितं
त्रासापेतमिदं महागणपते धीसाहसं क्षम्यताम् ॥ १८ ॥

पद्यान्यद्यतनानि यद्यपि न सावद्यानि विद्यावतां
हृद्यानि स्युरथापि चेतसि सतां दद्यान्मुदं मत्कृतिः ।

1. ......मनिशाभ्यासादनायासतो
ये साहित्यसमुद्रपारगाधियो व्यासादयो मन्वते ।
......कियत् कियदुपन्यासान्महासाहसं
कोऽसावस्मि गणाधिनाथचरिते मत्या तु तस्याक्षमः ॥

यद्यायात्युदधिं कदम्बुविततिर्नद्या सहावाप्तवै-
शद्या स्यात् त्रिदिवौकसां परिषदा दद्यादतश्चामृतम् ॥ १९ ॥

एषा यद्यपि मत्कृतिर्न विदुषां तोषाय दोषाधिका
जोषावस्थितितो वरा हि फ[भ]णितिर्भाषाविशेषान्विता ।
योषाणां पतिभक्तिरेव हि परा भूषान्यदोषापहा
मोषायाप्यगुणस्य मे गणपतेरेषा मनीषा पदे ॥ २० ॥

॥ इति श्रीविनयप्रपञ्चनपद्धतिः ॥

---

श्रीमनोनियमनपद्धतिः

मातङ्गाननमार्तरक्षणचणं मातङ्गकन्यासुतं
मातङ्गाहितनन्दनं घनतमोमातङ्गकण्ठीरवम् ।
मातङ्गान्तविभूतिदाननिपुणं मातङ्गविद्विट्स्थितं
मा तं गाः परिहृत्य मामकमनोमातङ्ग मा चापलात् ॥ २१ ॥

अध्यासीनमधीक्षुसागरसभामध्याग्र्यसिंहासनं
सिद्ध्या पादविभूषिताङ्कतलया बुद्ध्या च संसेवितम् ।
विध्याचारपरायणानविरतं स्वाध्याननिष्ठान् जनान्
ऋद्ध्या योजयितारमाशु शरणं कुध्याखुवाहं मनः ॥ २२ ॥

वेद्यं वेदशिरश्शतैस्त्रिजगतामाद्यं तपोभिः समा-
साद्यं संसृतिघोररोगसुमहावैद्यं सुराद्यञ्चितम् ।
आद्यन्तापगतं मुनीन्द्रहृदयास्वाद्यं समालम्बतां
माद्यन्ती विषयैर्मतिर्दिनकराभेद्यं विभेत्तुं तमः ॥ २३ ॥

बिम्बोत्सेकहराधरात्मदयिताबिम्बोकबद्धस्पृहं
कम्बोरप्यतिशुभ्रदन्तमखिलालम्बोदयं यं मनाक् ।
सम्बोध्यैव नरः समस्तसुखभाक् संबोभवीति क्षणात्
तं बोधैकसुधानिधिं भज मनो लम्बोदरं सादरम् ॥ २४ ॥

गन्धर्वाधिपतिर्भृगोरपचितावन्धत्वसम्भावना-
गन्धप्रापितभीमनक्रजनुषाप्तं धर्ममप्याचरन् ।
रुन्धन् यत्पदमस्य सङ्गतिवशात् स्वं धन्यतामानयन्
बन्धच्छेदमवाप तत्पदयुगं सन्धत्स्व चेतः सदा ॥ २५ ॥

अम्बे द्वे चरणे श्रयाशु धिषणे स्तम्बेरमस्याखिला-
लम्बे नान्यदितीव पुष्करशिखालम्बेन संसूचिते ।

बिम्बे स्वादुतरे नवोष्णमहसो बिम्बेन तुल्ये चरन्
लम्बेत् किं बत काकलोककलितालम्बे शुकः पल्लवम् ॥ २६ ॥

नालीकासनवासवादिदिविषन्मौलीड्यकल्पद्रुपु-
ष्पालीगर्भदलान्तरालविगलद्धूलीमधूलीभृतम् ।
केलीलोलविशालकर्णयुगलीतालीधुतालित्रजै-
र्व्यालीढं करटोद्गतैर्भज मनो कालीसुताङ्घ्रिद्वयम् ॥ २७ ॥

कारामन्दिरसन्दिताः किल सुनासीरादिमाः खेचराः
वीराग्रेसरसिन्धुदैत्यहतये साराधिकं यं पुरा ।
आराध्यापुरभीप्सितं विविधसंसाराख्यबन्धच्छिदं
मारारातितनूभुवं श्रय मते धीरा मयूराधिपम् (?) ॥ २८ ॥

कोटीरन्ति महाहयो मणितुलाकोटीभवन्तीतरे
शाटीयन्त्यपरे त्वचा ? धृतजटाजूटीगुणन्त्यल्पकाः ।
पाटीरन्ति रिपोरसृञ्जि विबुधाश्चेटीभवन्ति स्वतः
कीटीयन्त्यसुराः स यस्य गणराडाटीकतां चेतसि ॥ २९ ॥

वारं वारमहर्निशं भुवि नृणामारञ्जनं यत्नतः
कारं कारमलम्भि किं नु सचमत्कारं फलं जन्मनः ।
सारं यत्सकलागमोपनिषदां दूरं दुरीहावतां
स्वैरं संश्रय मूर्ध्नि दर्शितगजाकारं मनीषे महः ॥ ३० ॥

॥ इति श्रीमनोनियमनपद्धतिः ॥

---

## श्रीनिर्वेदपद्धतिः

मा गा मानस कर्म कापथमुरोभागावगाढस्तना-
भोगामर्त्यवधूविचित्रतरसंभोगाख्यसौख्यप्रदम् ।
योगायाभिरताः परे खलु महाभागा वयं नेदृशाः
द्रागाशापरिपूरकं गणपतिं नागाननं संश्रय ॥ ३१ ॥

मातेयं महिलापि तेऽतिजडसङ्घातेऽत्र भूतेन्द्रियैः
पूते मा ममतेति हन्त बहुधा[1]धीतेऽप्यवीतेक्षणः ।
नीते निष्फलतां वयस्यसि पराभूतेः पदं द्राग्भवे
शीते नीत इवावृतिर्गिरिसुतापोते कदा स्यान्मतिः ॥ ३२ ॥

ध्येयं योगिभिरन्तरब्जकुहरे ज्ञेयं त्रयीमस्तकै-
र्गेयं सिद्धसुरासुरैरपगतापायं विधेयं सताम् ।

---

1. गीते

सायं सागरसम्पतद्रविसमच्छायं विमायं सदा
ध्यायं ध्यायमुमासुतं गतमलप्रायं कदा स्यान्मनः ॥ ३३ ॥

नित्यानित्यविचारलेशविकलः सत्यापचित्यान्वितः
कृत्याकृत्यपरिग्रहे तु मनसो वृत्त्या प्रवृत्तः स्वयम् ।
नत्या केवलया गणेश न मनःस्थित्या च भृत्यायितो
मृत्यावन्तिकगे कया पुनरहं मत्या तरेयं भवम् ॥ ३४ ॥

क्षोणावर्थपरायणानवनिपान् हूणादिमानाश्रयन्
त्राणाभाषणभूषणैर्बत परिक्षीणायुरप्यन्ततः ।
रेणावप्यमुतः फले नसुलभे ह्रीणाशयोऽद्याप्यनि-
द्राणावाश्रितरक्षणे न चरणौ गाणाधिपावाश्रये ॥ ३५ ॥

बुद्ध्वा तत्त्वमनेकदेशिकगिरामध्वानुसाराच्चिरा-
दिद्ध्वाग्नीनभितो विविक्तविषये बद्ध्वासनं मारुतम् ।
रुद्ध्वा हृत्कमलोत्थरश्मिनिचयेन ध्वान्तमज्ञानजं
विद्ध्वा तत्र गणेश्वरानुभवजं मध्वापिबेयं कदा ॥ ३६ ॥

दीनं सर्वगुणैः कदाप्यकलितध्यानं शिवानन्दन
वीनं मानमदादिभिः प्रचुरिताज्ञानं दधानं सदा ।
एनः केवलमात्मनो विदधतं वेनं समानं[वेनोपमानं]गुणैः
स्वानन्दं गमयेत् कथं गणपतिर्दूनं भवाधिव्रजैः ॥ ३७ ॥

दुर्वारस्मयदुर्भरासुरवराखर्वायितौजोभुजा -
गर्वास्कन्दितसार्वलौकिकविपन्निर्वापणे धूर्वहम् ।
अर्वाचीनवचोविचारविभवानिर्वाच्यतेजोभरं
शर्वाणीतनयं भजेऽहमनिशं सर्वापदुच्छित्तये ॥ ३८ ॥

यल्लालेखितमब्जजेन यदतिक्षुल्लात्मकं मे धनं
तल्लाभः स कियानतः करटवन्मल्लाकृतिः साम्प्रतम् ।
बल्लालाभिधया वसन् बलिपुरे फुल्लं चिरप्रोल्लस-
द्धल्लातात्मकलेबरोऽतिविपुलामुल्लासयाशु श्रियम् (?) ॥ ३९ ॥

स्फाराकारधराधराधरजगद्धाराद्विनिर्गत्वरै-
स्तारान्तर्गतमौक्तिकैरिव नखैराराढुपारञ्जितौ (?) ।
धीरावाश्रितरक्षणेऽब्जयुगलाकारावरातिष्वति-
क्रूरावत्यरुणौ गणेशचरणावाराधयामो हृदि ॥ ४० ॥

॥ इति श्रीनिर्वेदपद्धतिः ॥

## श्रीवैराग्यपद्धतिः

यो मानेन मदेन मुग्धहृदयो हेमादिना वा नरो[1]
नामाप्यस्य कदापि न स्मर सकृत् क्षेमाय हे मानस ।
सीमापेतगुणाकरं गणपतिं सोमार्धचूडामणिं
कामातीतफलप्रदाननिपुणं भूमानमेवाश्रय ॥ ४१ ॥

वित्तात् प्राक्तनजन्मपुण्यशकलायत्तादपि क्षुल्लका-
न्मत्ता ये मनुजा न तान् वयममी वृत्तावपेक्षामहे ।
तत्तादृक्करुणाकटाक्षमहिमायत्तामियत्तातिगां
वित्ताधीशसखात्मजो मम सदा दत्तामभित्तां[2] श्रियम् ॥ ४२ ॥

कालं दैत्यकुलस्य देवपरिषत्पालं दयालुं फणि-
प्रालम्बाञ्चललम्बि मञ्जुलमणीमालं सलीलं निजे ।
लोलं गण्डतले नुदन्तमसकृल्लोलम्बजालं जग-
न्मूलं दूरनिवारिताश्रितजनाभीलं गणेशं नुमः ॥ ४३ ॥

कार्याकार्यविचारणां विजहता नार्यादिषु भ्राम्यता
नार्याचारकृता स्थितेन विबुधाचार्याहते[3] दुर्मते ।
धैर्याद् दुश्चरितं मयान्वहमहोऽकार्यात्मने द्रुह्यता
सूर्यापत्यजभीः कथं गणपतेस्तार्या कथामन्तरा ॥ ४४ ॥

धीहान्यासकृदार्जितं महदघं मोहान्मुहुः शीलितं
देहात्मभ्रमतः पुनर्बहुविधद्रोहादपारीकृतम् [ताम्] ।
स्वाहानाथवदुग्रतापजनकं[निकां] हा हा कथं तां सहे
देहार्तिं नरकोद्भवां गणपतेरीहा पदाब्जे न चेत् ॥ ४५ ॥

अन्यायोपगताल्पवित्तमहितंमन्यानवन्यां मृगा
वन्या मित्रमरीचिकामिव महोदन्याः सदोपासते ।
धन्या एव वयं भवेम यदि नस्तन्यादुमानन्दनो
विन्यासं नयनाञ्चलस्य न ततो मन्यामहेऽन्यां श्रियम् ॥ ४६ ॥

कादाचित्कसुखावहाल्पविषयास्वादाय [4]गोदारणा-
न्यादायात्र रतः फलैर्विरहितः कैदारिके कर्मणि ।
पादावाश्रयतेऽथ चेद्गणपतेर्मे दास्यतः काममि-
त्यादावेव कुतः श्रयेन्न मतिमान् खेदानपास्येतरान् ॥ ४७ ॥

---

1. मानवो
2. अभित्तां—अखण्डाम् ।
3. हिते
4. गोदारणानि—हलानि

[1]नालीकासनवासवादिदिविषन्मौलीड्यकल्पद्रुपु-
ष्पालीगर्भदलान्तरालविगलद्धूलीमधूलीभृतम् ।
केलीलोलविशालकर्णयुगलीतालीधुतालिव्रजै-
र्व्यालीढं करटोद्गतैर्भज मनः कालीसुताङ्घ्रिद्वयम् ॥ ४८ ॥

पञ्चानां वियदाशुगाग्न्युदभुवां[2]सञ्चारिणां सञ्चये
चिञ्चातुल्यकलेवरेऽत्र हृदय त्वं चापलं मा कृथाः ।
मुञ्चामूं ममतां जडात्मनि पराचं चाद्वयं चिन्मयं
स्वं चामुं च गणाधिनाथमपृथक् किञ्चात्मना चिन्तय ॥ ४९ ॥

भूतस्तोममयं शरीरमयि मा चेतः स्थिरं चिन्तय
ख्यातस्तस्य लयो यथा हि बदरीमूतस्य बन्धात्यये ।
भ्रातर्न स्मर नश्वरं दिशति यः प्रीतः पदं शाश्वतं
जातप्रीतिरुपाश्रयाशु गिरिजापोतस्य पादाम्बुजम् ॥ ५० ॥

॥ इति श्रीवैराग्यपद्धतिः ॥

---

## श्रीस्वरूपपद्धतिः

सव्याङ्कस्थितया स्वया दयितया निर्व्याजकारुण्यया
भव्याम्भोरुहवक्त्रया सरसया सव्याजमालिङ्गितः ।
नव्याशोकदलातिमञ्जुलतनुच्छव्या भवव्याधिहा
हर्याशाधिपवन्दितः सपदि मामव्यादुमानन्दनः ॥ ५१ ॥

नारीमङ्कतले दधानमखिलाधारीभवन्तीं धृतिं
सूरीन्द्रैः सनकादिभिर्नुतगुणं हारीभवद्भोगिनम् ।
स्फारीभूतकराञ्चलेन दनुजं गौरीद्रुहं चारु सि-
न्दूरीकृत्य विचर्चिताखिलतनुं नारीगणेशं भजे ॥ ५२ ॥

शुण्डादण्डगृहीतदन्तमुसलोच्चण्डाभिघातोद्गतै-
श्चण्डांशुप्रतिमैः सुरालयमणीषण्डार्जितैर्यः कणैः ।
पिण्डालक्तकमाकलय्य शशिनः खण्डामृतेनात्मन-
श्चण्डातं रमणीमणेरकृत वेतण्डाननः पातु [3]नः ॥ ५३ ॥

वामं भूमितले निधाय भुवनक्षेमं दिशन्तं सदा
श्रीमन्तं परमुन्नमय्य चरणं कामं नटन्तं मुदा ।

---

1. अयमेव पूर्वं २७ श्लोकतया दृश्यते ।  3. सः ।
2. संचारिणीनां चये ।

सोमं शेखरिताच्छकैतकदलक्षामं दधानं बहु-
व्यामं पन्नगभोगनिर्मलतरक्षौमं [1]वसानं भजे ॥ ५४ ॥

एलागन्धिमदाम्बुचुम्बिमधुलिण्मालापनोदोद्यत-
स्थूलात्मीयकपोलमण्डलचलत्तालानुकारिश्रुतिम् ।
हेलाक्षिप्तगिरीन्द्रजास्तनतटीचेलाञ्चलं चारु शु-
ण्डालापीतपयोधरं गणपतिं बालाकृतिं भावये ॥ ५५ ॥

फालाक्षस्य शिरस्यमर्त्यतटिनीवेलासु लीलावशात्
कूलाघात[2]विहारलोलशिरसा कालारिणा वारितः ।
आलापानपरिस्फुटाक्षरपदान् खेलावशादुद्गिरन्
लालामौक्तिकमण्डितोऽवतु गणेट् बालाब्जमौलिः शिशुः ॥ ५६ ॥

आजानोज्ज्वलपद्मरागनिकरैरोजायमानं जवात्
बीजापूरधिया सुमेरुमहरद्यो जातमात्रः पुरा ।
मा जानाहि फलं त्यजामुमिति तत्याजाद्रिराजात्मजा-
पूजापूर्ववचोभरैरवतु मां राजार्धमौलिर्विभुः ॥ ५७ ॥

[3]चण्डीशात्मभवो गिरामथितमत्स्यण्डीमदश्चण्डपा-
षण्डीयप्रकरापहोऽमृतधुनीडिण्डीरपाण्डुप्रभः ।
भिण्डीपालमुखायुधैरशिरः खण्डीकृतौ पण्डितो
ढुण्डी राजति वारणासिपुरि वैतण्डीयतुण्डः प्रभुः ॥ ५८ ॥

माता यस्य नगाधिराजतनया ख्याता पिता शङ्करो
भ्राताशेषसुराधिराजपृतनानेता हतारिव्रजः ।
गीता यस्य कथा निजेन्दुवदनात्रातानपेतैः सुरै-
र्नीता गेयपदं सदा भवतु संत्राता समेतापदः ॥ ५९ ॥

क्षामात्युज्ज्वलफालमूलकलितश्यामाभिको भास्कर-
स्तोमाहंकृतिमोचकामितमहस्थेमाभिरामाकृतिः ।
वामाङ्कस्थितवल्लभाख्यदयितानामाङ्कनामा विभु-
र्मामानन्दयतु स्वभक्तनिहितप्रेमा स सोमात्मजः ॥ ६० ॥

॥ इति श्रीस्वरूपपद्धतिः ॥

---

1. गणेशं 2. विलास

3. चण्डीशप्रथमात्मजं मधुरमत्स्यण्डीय खण्डीभव-
ढुण्डीति प्रथिताख्यया घपटलीपण्डीकृता दक्षिणम् ।
भिण्डीपालमुखायुधैर्निहतपाषण्डीयषण्डं......
स्तण्डीत्यादिमुनीडितं कलितवैतण्डीयवक्त्रं भजे ॥

श्रीगुणानुवर्णनपद्धतिः

पाकारातिमुखामरेड्यचरितं नाकारिवर्गच्छिदं
स्तोकात्मीयजनाभिपूजनविधिस्वीकारतुष्टाशयम् ।
तोकाकारमृपेः सुरेन्द्रललनालोकाभिगीतामित-
श्लोकामेयगुणं भजेम सदयालोकावितार्थित्रजम् ॥ ६१ ॥

दोर्भिः स्वैर्दशभिर्धृतायुध विभो गीर्भिर्मुनीन्द्रैः कृता-
शीर्भिः संनुत दीनरक्षणमहाधूर्भिर्बृहत्कन्धर ।
नौर्भिन्ना जलधौ यथैवममगतेर्वार्भिः परीता दया-
पूर्भिर्दृष्टिभिरेव देव विषयार्तीर्भिन्धि सिन्धुद्विषन् ॥ ६२ ॥

दम्यामिन्द्रियसन्ततिं सपदि संयम्यान्तरब्जं समु-
न्नम्यास्मिन् सनकादियोगिपरिषद्रम्याभिगम्या सताम् ।
कृम्याद्यब्जभवान्तसर्वजनिमन्नम्यास्तु मे श्रेयसे
शम्या पूजयतामभीष्टवरदा रम्या परा देवता ॥ ६३ ॥

सत्यं ब्रह्म सनातनं श्रुतिशिरःस्तुत्यं मुनीन्द्रैर्हृदा
नित्यं ध्येयमधीक्षुवारिधिसभं नृत्यं वितन्वत् सदा ।
चित्यंशे सदृशेऽपि यत् किल परागित्यंशभेदास्पदं
प्रत्यञ्चं विदधातु मां प्रकृतिवैकृत्यंशमुक्तं चिरात् ॥ ६४ ॥

तातोऽब्धेरुदितं विषं ननु पिबन् ख्यातोरुहालाहलं
गीतोऽभूदखिलैरितीव स यतो जातोऽयमेवाधुना । (?)
वातोच्चालितवीचिचुम्बितनभाः स्फीतो विषाणां निधिः
पीतो येन तमाश्रये मम सदा नातोऽन्यदैवं क्वचित् ॥ ६५ ॥

कानीनेन सहारचय्य समयं मौनीश्वरेणाक्षराम्
धानीकृत्य रदं निजं कटमदोदानीरयन् द्योसदां । (?)
स्थानीभूतगिरेस्तटेऽलिखत यो मानी महाभारतं
यानीमं शरणं श्रितार्थिजनसन्तानीभवन्तं विभुम् ॥ ६६ ॥

अन्याशक्यविनिग्रहौ समितिमूर्धन्याविमौ दानवौ
हन्याद्देवनरान्तकाविति सुरैर्मुन्यादिभिर्नाथितः ।
जन्यायाभिमुखौ जघान गदयाशन्या यथेन्द्रो गिरीन्
तन्याद्देष महोत्कटः शुभमिहानन्याश्रयस्याशु मे ॥ ६७ ॥

कुन्तात्तीक्ष्णतरेण सर्वजगदत्यन्तार्तिदान् दानवान्
दन्ताग्रेण मृगाधिभूरिव नखैर्दन्तावलान् संहरन् ।
सन्तापं जगतां जहार जनतायन्ता नियन्ता धियां
भिन्तामेष गजाननः सपदि मे चिन्तां दुरन्तामिमाम् ॥ ६८ ॥

चीटी यस्य पुरन्दरादिदिविषत्कोटीभिरभ्यर्च्यते
खेटीभिश्चरितं सुरावनिरुहां वाटीषु जेगीयते ।
धाटी यस्य रणेषु दैत्यनिवहोत्पाटी गणेशः स मे
घोटीभावितमूषिकोऽघपटलोच्चाटी भवत्वञ्जसा ॥ ६९ ॥

पूषा यन्महसा जितोऽनुदिवसं काषायमालम्बते
दोषानायक एष यस्य मनसस्तोषाय भूषायते ।
आषाढान्तरमाश्रितं ननु भिया [1]मेषाधिरूढं महः
शेषाणां गणनायकानुकरणे केषां परेषां महः ॥ ७० ॥

॥ इति श्रीगुणानुवर्णनपद्धतिः ॥

---

## श्रीचारित्रपद्धतिः

कन्तावाहितसायके मुनिवधूरन्ताहिहन्ता मुने-
र्गन्तासीति गिरा सहस्रभगतां चिन्ताकुलोऽभ्येत्य यम् ।
क्षन्तारं स्वजनागसां [2]गुरुगिरा हन्तारमघ्यंहसां
सन्तापं विजहौ भजे गणपतिं चिन्तामणिं नाम तम् ॥ ७१ ॥

बन्धूकस्तबकारुणं रणमहीगं धूलिधूम्रानना-
भं धूम्राक्षविमर्दनं शरगणैः सिन्धूत्तमाङ्गच्छिदम् ।
अन्धूकृत्य निपीय पुष्करतटे सिन्धून् क्षिपन्तं श्रिता-
घं धून्वन्तमशेषमाश्रय गणेशं धूमकेतुं मनः ॥ ७२ ॥

मासे भाद्रपदे जयोत्तरतिथावासेवकेभ्यो निजा-
वासे] कल्पितदिव्यमोदकभरग्रासेन पूर्णोदरः ।
न्यासे प्रस्खलितः पदोः कृतपरीहासे विधौ यः सदा
ह्रासेनामुमयोजयन्मम रिपुत्रासे स सन्नह्यतु ॥ ७३ ॥

वारीशोदरसंभृतानि सहसा वारीणि यः पुष्करे-
णोरीकृत्य नभस्थले कणतयोद्गारीचकार क्षणात् ।
स्फारीभूतमदान् दुरासदमुखान्योऽरीरिषद्दानवान्
भीरीढारहितानसावुदयतां पारीन्द्रवाहो हृदि ॥ ७४ ॥

आपातालविसारितोयभरितं पापाशयं यः पुरा-
कूपाकार[कूपारस्थ]महासुरं कलितसन्तापातिरेकं नृणाम् ।
कोपादन्तरुदं चिराय गमयन् व्यापादयामास यः
सोऽपायानवधूय पातु सततं नीपालयानन्दनः ॥ ७५ ॥

---

1. मेषाधिरूढं महः = वह्निः 2. अथ भजन्

रुद्राणीभुजमण्डलाहितशिरा निद्रामशेषावनो-
न्निद्रामाश्रितनैजभोगजनितां मुद्रापयन् यः पुरा ।
छिद्रान्वेषणतत्परं दिवि जवाद्विद्राणमभ्याहनत्
सद्राश्मं च मयासुरं वितनुताद्भद्राण्यमुद्राणि नः ॥ ७६ ॥

छायाकारमुपागतं कुहनया कायानुवृत्तं महो-
च्छ्रायादद्रितटात् स्वमुन्मुखमुपाधायाथ देहं पतन् ।
आयासेन विनावधीद् गिरितटे मायाविनं दानवं
पायादेष गणाधिपोऽतिविषमप्रायादपायात् स माम् ॥ ७७ ॥

क्षोणीकोणगता यदस्रकणिकाः प्राणीभवन्त्यो धनु-
र्बाणीतूणधरी यथैव स इति श्रेणीभवन्ति स्म तम् ।
शाणीघृष्टशरक्षतद्विषदसृग्वेणीं निपीयाशुग-
द्रोणीभिर्व्यजयद्रिपूनवतु शर्वाणीसुतो नश्चिरम् ॥ ७८ ॥

विप्रश्रेष्ठवरेण्यगीतनिगमानुप्रश्नसंभावित-
स्वप्रत्युक्तिसुधाढ्यमानससरोवप्रक्रियोल्लासिनम् ।
अप्रत्यक्षपरात्मभावविशयाद्यप्रत्ययोद्भावना-
द्यप्रक्षिप्तिविहारिणं गणपतिं क्षिप्रप्रसादं भजे (?) ॥ ७९ ॥

रक्षार्थं सुधियां दुरीहपरिषच्छिक्षार्थमप्येत्य य-
स्त्र्यक्षापत्यतनुं ददाह दनुजान् कक्षानिवोषर्बुधः ।
यक्षाधीशजलेश्वरान्तकसुराध्यक्षान् ररक्षार्दितान्
ऋक्षाधीशकलाधरः स भगवान् रक्षापरोक्षोऽस्तु मे ॥ ८० ॥

॥ इति श्रीचारित्रपद्धतिः ॥

---

## श्रीनतिपद्धतिः

तालाकरकाराञ्चलप्रविलसच्छूलाग्रभिन्नद्विष-
त्फालाय क्षणचूर्णितखिलमहीचेलाय लीलावशात् ।
कूलाघातविशीर्णमूलविचलद्वेलाचलाय स्वयं
व्यालामर्त्यवपुर्धराय गिरिजाबालाय तुभ्यं नमः ॥ ८१ ॥

वीणातापसगीयमानभुवनत्राणापदानाय स-
च्छ्रेणावर्पितकामनाविषयकल्याणाय भूयो नतिम् ।
एणाङ्काभंकमौलये वितनुमः शोणारविन्दोज्ज्वले
पाणावाहितमोदकाय सुमनोबाणारिडिम्भाय ते ॥ ८२ ॥

हाहाद्यैरुपवीणिताद्भुतगुणव्यूहाय वैहायसै-
व्याहारैर्निगमान्तगैर्विबुधसन्दोहाभिनन्द्यात्मने ।
बाहापङ्क्तिशिखोद्गलन्मदपरीवाहानुमिश्रश्रवो-
जाहामन्दमरन्दसौरभलसद्देहाय भूयो नमः (?) ।। ८३ ।।

रुष्टा या जगदेव भस्म कुरुते तुष्टा तु सिद्धीर्ददा-
त्यष्टावप्यथ यत्पदाब्जयुगलीजुष्टो विरक्त्या यदा ।
हृष्टास्मै वितरत्यनन्यसुलभामिष्टां गतिं शाश्वतीं
कष्टापायकृते भजे श्रुतिशिखोद्घुष्टां परां देवताम् ।। ८४ ।।

धर्माधर्मविवेचनेऽप्यचतुरो दुर्मार्गगामी सदा
कर्मापेक्षफलप्रदाननुसरन् शर्माप्नुयां किं कदा ।
नर्मालोकनमात्रतोऽस्तदुरितं निर्माय सर्वार्थदं
घर्मार्तोऽभ्रमिव व्रजामि शरणं [1]भर्माद्रिचापात्मजम् ।। ८५ ।।

विन्ध्याद्रिस्मयहारिणा घटभुवा वन्ध्यावलेपाब्धिना
यं ध्यात्वाधिगता कला न यदि को रुन्ध्याद्ततोऽन्यः पुमान् ।
सन्ध्याकारिमहागिरिं जलनिधिं बन्ध्याद्रणेशेद्दशं
तं ध्यायेम भवाब्धिमद्य भगवन् रुन्ध्याशु नागानन ।। ८६ ।।

श्रुत्वा दैत्यगणावृतं त्रिभुवनं मत्वा परावध्यतां
गत्वा काश्यपसूनुतां युगबलाद्धत्वा रिपूनञ्जसा ।
हृत्वा भूमिभरं सुरान् स्थिरपदान् कृत्वा प्रथामागम-
त्तत्त्वातीतममुं गणेशमसकृन्नत्वा भवेयं कृती ।। ८७ ।।

पूर्वाद्रेः शिखरोदितस्य रुचिरश्रीर्वासराधीशितु-
र्गौर्वारिण्यमले विभाति तु यथा दूर्वाग्रभागस्थिते ।
गीर्वाणेशखगेशमौक्तिकमणिश्रीर्वाब्जरागद्युतिः
शार्वापत्य तवाकृतिः स्फुरतु धीकार्वाहिता मेऽनिशम् (?) ।। ८८ ।।

तुच्छात्यल्पसुखावहेषु विषयेष्विच्छानुरोधाद्भ्रमन्
कच्छापेतभवाम्बवान्तरनिशप्रच्छादितात्मा चिरात् ।
इच्छातीतफलप्रदं गणपतिं गच्छामि देवं गतिं
चिच्छायामतिदिश्य संदिशतु मे तच्छाश्वतं वैभवम् ।। ८९ ।।

स्वं त्रातुं न भवाम्बुधौ निपतितं तन्त्रादिना पारये
गन्त्रा भाव्यमतोऽन्तकस्य च मया संत्रासनस्यान्तिके ।

---

1. भर्म = हेम

यन्त्रारूढमिवावशं भ्रमति यन्मन्त्राज्जगत्तं विना
कं त्रातारमुपैमि को नु भवभीतं त्रातुमीष्टे च माम् ॥ ९० ॥

सारासारविचारदूरमनसं घोरार्तिसन्दायिसं-
साराहिक्षतिजातमोहमगदंकारान्तरानाश्रितम् ।
तारानाथकलाधराद्य न चिराद्दाराच्छरण्यार्थिनं
स्फारापारकृपामृतार्णवरसेऽदूरान्निमग्नं कृथाः ॥ ९१ ॥

॥ इति श्रीनतिपद्धतिः ॥

---

## श्रीसंप्रार्थनापद्धतिः

काशाग्रग्रथिततूलजालचपलान् लेशान् सुखानां भजन्
आशावेशवशाद्गणेश विवशः क्लेशानजस्रं वहन् ।
ईशापत्य चिरात्त्वदीयचरणाभ्याशावतीर्णोऽस्म्यहं
पाशानाशु विमुच्य मे दिश गतिं या शासिता शाश्वती ॥ ९२ ॥

निर्मायावनिमण्डले जनिमदाः कर्माधिकारं ततो
धर्मादुद्गतिमप्यधोगतिमथाधर्माद्ददन्न्यायतः ।
दुर्मायावशमेत्य दारसुतभूभर्मादिलुब्धं कृतः
शर्माभासरतं कृथाः कलितनीतिर्माधिकाराच्च्युतम् ॥ ९३ ॥

वेधा मामककर्मसंक्रमवशादाधाज्जनिं यां तु तां
त्रेधा पुत्रकलत्रवित्तममताबाधाददभ्रीकृताम् ।
मेधासञ्जननेन भञ्जय जवादेधांसि वह्निर्यथा
स्वे धामन्यभिरञ्जयाद्य विषयेष्वाधावितं मे मनः ॥ ९४ ॥

बुद्धिप्रेरणतक्षणेन फलदात् सिद्धिप्रवर्षं जना
त्वद्धि प्रापुरबोधसन्तमसजां तद्धि [जातद्धी] क्षयादञ्जसा ।
यद्धित्वा शरणं न मेऽस्ति भुवने तद्धि त्वदङ्घ्रिद्वयं
विद्धि प्राप्तमिमं जनं गणपते सिद्धिप्रदो मे भव ॥ ९५ ॥

तापं भौतिकमुख्यमेत्य बहुविक्षेपं भजन्मानसं
कोपं दुर्धनिनां मदोद्धतमधिक्षेपं सदा मर्षयन् ।
भो पञ्चास्यसुत त्वमेव गतिरित्यापं भवन्तं परं
रूपं दर्शय मेऽधुना त्वमखिलव्यापन्नरक्षाक्षमम् ॥ ९६ ॥

द्वेधा कर्मणि चिन्तिते मयि कृपासाधारणी चेन्महो-
त्सेधापारभवाम्बुधेस्सपदि मां बाधाकरादुद्धर ।

क्रोधावेशवशोऽथ चेन्मयि तदा मेधाशिलासन्दितं
बोधागाधमहार्णवे झटिति मामाधाय तुष्टो भव ॥ ९७ ॥

ईहामात्रतपोभरानविरतं गेहार्तिसंपीडिता-
नूहापोहविचारणास्वकुशलानाहारमात्रार्थिनः ।
माहाभाग्यदयादृशा यदि तु नः स्नेहादुदीक्षेस्तदा
का हानिर्भवतो गणेश भविता नेहायमस्मानव ॥ ९८ ॥

अत्यन्तार्तिपरम्परोपहितसंसृत्यम्बुधौ चित्तवै-
मत्यं प्राप्य विवेचनैरविदितौचित्यं निमग्नं चिरात् ।
नित्यं मोहशतापविद्धमवशं गत्यन्तरानाश्रितं
भृत्यं मां गणनायकोद्धर तवौन्नत्यं च सत्यं कुरु ॥ ९९ ॥

अक्तं मोहमहाञ्जनेन विषयासक्तं प्रवृत्तं दिवा-
नक्तं वित्तसुतादिभिर्दृढपरिष्वक्तं च मां मायया ।
सक्तं पुण्यकणेन पापपटलीयुक्तं निषिक्तं मले
भक्तं पादनखप्रभासलिलनिर्णिक्तं गणेश क्रियाः ॥ १०० ॥

ज्यावल्लीव सरीसरीति धमनी यावत्तनौ चार्मणी
सा वध्रीव विनिश्वसत्यविकलैर्मे वश्यभावं गतैः ।
तावन्मत्करणैरकुण्ठगतिभिः स्वे वर्त्मनि स्थीयतां
जीवत्यागभयेऽप्यपैतु न मतिर्भावत्कपादाम्बुजात् ॥ १०१ ॥

॥ इति श्रीसंप्रार्थनापद्धतिः ॥

---

## श्रीमनस्तृप्तिः

ग्रस्तात्मानमपारदुःखनिचयैर्ध्वस्ताखिलार्तिं तु मां
कस्तावद्रचयिष्यतीति न हि मे प्रस्तावना कापि यत् ।
यस्तादृक्षभवाब्धिमग्नजनताहस्तावलम्बप्रदो
[1]बस्तारूढभवाग्रजोऽत्र भवति न्यस्ता समस्तापि धूः ॥ १०२ ॥

कंसारातिचतुर्मुखेन्दुशकलोत्तंसादयोऽपीश्वरा
यं सामान्यजनैः सहात्मदुरितध्वंसाशयोपासते ।
तं साक्षात्कलयिष्यसे किमिति चेत् संसारिणामग्रणी-
स्तं साधारणमागमा जगुरतः संसाधयामीप्सितम् ॥ १०३ ॥

---

1. बस्तारूढो मेषवाहनोऽग्निः ।

मोहाख्याम्बुनिधौ विचित्रविषयग्राहाकुले निर्भरो-
त्साहादल्पतरातिनश्वरसुखालेहात्प्रनष्टायुषः ।
ऊहातीतपुराणसत्कृतपरीणाहादिदानीममी
नीहाराचलकन्यकातनुभुवं गाहामहे चेतसा ॥ १०४ ॥

बालेन क्षणभङ्गुरेऽपि विषये लोलेन यद्यप्यस-
च्छीलेनाघमुपार्जितं तदुदिताभीले समासेदुषि ।
काले पादयुगे मनो व्यरचयं बालेन्दुमौलेर्यदि
प्रालेयानि रविर्यथैव विदहेज्ज्वालेव तूलं शुचेः ॥ १०५ ॥

सुत्रामप्रमुखैश्च यत्पदयुगं सत्राशनैः सेव्यते
पित्रा पुत्र इव प्रपञ्च इह चामुत्रापि येनेक्ष्यते ।
चित्राकारमिदं विभाति सकलं यत्राहितं भित्तिवत्
स त्रायीत गणेश्वरस्त्रिजगदाधित्राणदक्षः स्वयम् ॥ १०६ ॥

निद्रालस्यवशान्निशादिवसयोर्भद्राय हीनोद्यमः
क्षुद्रानित्यसुखाशया धुरि दधन्मुद्रां दरिद्राहिताम् ।
स्वद्राघिष्ठसुखावहं श्रितजनाघद्रावणं हा चिरा-
दद्राक्षं गणनाथमद्रितनयारुद्रात्मजातं विभुम् ॥ १०७ ॥

हूतिर्देवगणस्य साधुषु मखे भूतिर्भवत्वस्य ते-
ष्वीतिर्नश्यतु षड्विधा भुवि यथा स्फीतिर्भवेत् सम्पदाम् ।
जातिः स्वे चरिते युतास्तु न च दुर्नीतिर्नृपाणां न च
ज्ञातिर्द्रुह्यतु ते गणेश कृपया भीतिः क्वचिन्मा स्म भूत् ॥ १०८ ॥

फलश्रुतिः

अष्टप्रासयुतं विशिष्य पठतामिष्टप्रदं देहिनां
कष्टक्लेशविनाशनं बहुविधानिष्टव्रजच्छेदनम् ।
नष्टस्वार्थिसमर्पणं सरसविस्पष्टप्रमेयं गणे-
शाष्ट[शस्य]श्लोकशतं चिरं विजयतां तुष्टः स च स्याद्विभुः॥१०९॥

कविनाम

प्रातः पद्यशतं पठेद्यदि पुमान् जातस्पृहः प्रत्यहं
ख्यातः पुत्रकलत्रमित्रविभवोपेतश्चिरं मोदते ।
चेतस्येष यदीहते पदमदो यातश्च नातः पते
गीतः सिद्धगणैर्गणाधिपपदं नीतः सुखं विन्दते ॥ ११० ॥

पद्धतिक्रमः

शम्भावाहितचेतसो मुनिमणेः कुम्भादुदीताकृतेः
कुम्भादुद्गतया कवेरसुतया सम्भावितश्रेयसि ।
कुम्भाधीरपुरे वसन् मधुरवाग्गुम्भातिमान्यः सुधी-
जम्भारातिरचीकरच्छतमिदं श्रीयज्ञवेदेश्वरः ॥ १११ ॥

श्रीमत्कुम्भपुरे सता गणपतेर्धाम स्वयं ध्यायता
प्रेम ख्यापयता कृतं सुकविना धीमद्धुरस्वामिना ।
क्षेमस्थेमकरं गणेशशतकं नाम प्रसिद्धिं भज-
त्वामन्वन्तरमार्णवं च तदिदं कामप्रदं देहिनाम् ॥ ११२ ॥

आदौ मङ्गलशंसनं विनयवाग्गुम्भो मनोनिग्रहो
निर्वेदो विरतिः स्वरूपगुणचारित्रं नतिः प्रार्थना ।
चेतस्तुष्टिफलाभिधानकविनामानीति भिन्नक्रमं
रम्यं पद्यशतं दशाधिकमिदं भूयाद् बुधानां मुदे ॥ ११३ ॥

॥ इति श्रीविश्वामित्रकुलकलशपारावारराकासुधाकरश्रीमद्रत्नखेटश्रीनिवास-
मखिवरसन्तानपल्लवेन श्रीबालचन्द्रार्यतनूजेन यज्ञवेदेश्वरेण कृतं
गणेशाष्टोत्तरशतं [गणेशशतकम्] सम्पूर्णम् ॥

# ॥ अथ श्रीशिवस्तोत्राणि ॥

## १. ॥ अथ श्रीशिवमङ्गलस्तोत्रम् ॥

मङ्गलं भगवान् शम्भुर्मङ्गलं पुरशासनः ।
मङ्गलं सोमसूर्याग्निलोचनो मम मङ्गलम् ॥ १ ॥

यन्मङ्गलं कुमारस्य गिरिजाकल्पयत् पुरा ।
तारकं जेतुकामस्य तन्मे भवतु मङ्गलम् ॥ २ ॥

मङ्गलं पार्वतीनाथो मङ्गलं जाह्नवीधरः ।
मङ्गलं गिरिजा देवी मङ्गलं सर्वमङ्गलम [ला] ॥ ३ ॥

गिरीन्द्रस्य च मेनायास्त्रैलोक्यस्य तपःफले ।
पार्वत्या जन्मदिवसे तन्मे भवतु मङ्गलम् ॥ ४ ॥

त्रिपुरं हन्तुकामस्य दिधक्षोरन्धकासुरम् ।
भवान्या यत्कृतं भर्तुस्तन्मे भवतु मङ्गलम् ॥ ५ ॥

ईश्वराज्ञानुयातस्य वीरभद्रस्य शूलिना ।
यत्कृतं मङ्गलं कार्यं तन्मे भवतु मङ्गलम् ॥ ६ ॥

हारभूषणकेयूरलीलाभुजगभूषयोः ।
शिवयोः सदृशोद्वाहे तन्मे भवतु मङ्गलम् ॥ ७ ॥

यः शिवो नामरूपाभ्यां या देवी सर्वमङ्गला ।
तयोः संसरणात् पुंसां सर्वतो जयमङ्गलम् ॥ ८ ॥

॥ इति श्रीशिवमङ्गलस्तोत्रं सम्पूर्णम् ॥

---

## २. ॥ अथ श्रीशिवस्तवगद्यम् ॥

त्रैलोक्यस्य भवानेव निग्रहानुग्रहक्षमः ।
श्रीविश्वेश्वर मां पाहि महेश्वर [1]निरीश्वर ॥

जय जय श्रीरुद्र वीरभद्र । विरिञ्चिपञ्चमशिरःखण्डन यज्ञपुरुषशिरःखण्डन दक्षप्रजापतिशिरःखण्डन देवेन्द्रशिरःखण्डन पूषादित्यदन्तप्रहरण खगादित्यनेत्रसंहारक गीर्वाणजननीनासिकाच्छेदक सरस्वतीनासिकाच्छेदक हव्यवाहनजिह्वासमुत्पाटक ईशानादिदिक्पालकप्राणोत्पाटन पादाङ्गुष्ठातिनिष्ठुरप्रपीडितरोहिणीवल्लभ चरणदलशिरोविघातन प्रसादितगौतमकश्यपाङ्गिरसपुरोगममुनिवल्लभ पुण्डरीकलोचनोत्तमाङ्गविनिपातितसमस्तदेवताविघातन

---

1. गि

नारायणभुजस्तम्भन बादरायणभुजस्तम्भन कन्दर्पदर्पोरुविपिनदावानल त्रिपुरपयोराशिबाडवानल सनत्कुमारगर्वपर्वतभस्मसात्करणकारण नरसिंहदर्पप्रविमर्दनकारण ब्रह्मविष्णुमदाभिमाननिदानविघातन विद्युत्समानाद्यवसानकमहादहन जटिलितमहितोरुलिङ्गविग्रह कालकूटानुग्रह देव ॥ १ ॥

लीलावलोकन ललाटलोचनप्रज्वलनज्वालावलीभस्मीभूतनन्दादिगोमास्त्रसमूहदूरीभूतभक्तजनमलयातिसंहारकारणप्रवाह देव ॥ २ ॥

विद्युन्मालिकासुर-तारकासुर-अन्धकासुर-जलन्धरासुर-लालासुर - भस्मासुर-जाटासुर - रावणासुर - व्यघ्रासुर-गजासुरादिनानाजगत्कण्टकमहासुरमदप्रभञ्जन प्रेतपतिमदभञ्जन सहस्रलोकसाधारणजन्मजरामरणनिवारण । अपि च देव ॥ ३ ॥

श्रीमन्महादेवीश्रीपर्वतप्रिय कैलासप्रिय अविमुक्तप्रिय केदारप्रिय पार्वतीप्रिय कुमारप्रिय विनायकप्रिय नारायणप्रिय नन्दिकेश्वरप्रिय महाकालप्रिय कालरुद्रप्रिय वीरभद्रप्रिय भृङ्गीरिटिप्रिय चण्डेश्वरप्रिय चण्डकीर्तिप्रिय गोकर्णभद्रकर्णलम्बकर्णकुम्भकर्णवराहकर्णगजकर्णघण्टाकर्णप्रिय महालय महाव्रत माहेन्द्र महाबाहुप्रिय अतिहासाट्टहासगुहावास गुहेश्वर हाटकेश्वर भस्मेश्वर अर्धनारीश्वर प्रिय - श[त]जिह्व - शतोदर - सहस्रोदर - वज्रमध्योदर - जिह्मोदर-लम्बोदर-कुम्भोदरप्रिय हव्यवाहनसिंहूर्तकसंवर्तकमेघावर्तकप्रिय कुन्दतरुमुदकपिंपलपिङ्गलमधुपिङ्गलप्रिय विश्वरूप-विरूपाक्ष-पञ्चाक्ष-शताक्ष-सहस्राक्षप्रिय प्रपञ्चान्तक लोकान्तक यमहर मृत्युहरप्रिय यशस्विभास्कर दक्षभास्कर काष्ठकालकूटधूमकेतुप्रिय यमेहान्दोलक नीलकोकिल पूर्णभद्रसद्योजात ब्रह्मभक्षण विषभक्षण भृगुजटिलमुण्डधरशिखण्डधरप्रिय केशमहाकेशीज्वलन सूर्यवर्ण सोमवर्ण सूर्याक्ष सोमाक्ष सूर्यपेषण चन्द्रपेषण इन्द्रेन्द्र यमेन्द्र मेरुपातनविन्ध्यपातनप्रिय शतमाय महामाय लिङ्गाक्ष पिङ्गलाक्ष पर्वतास्य पिशाचास्य प्रकुन्दकुन्ददन्तराद्रिसुन्दर सर्वभूतविजृम्भणप्रिय अर्धमुण्डार्धवक्त्रार्धनासिकार्धदेहसार्ध घटनार्ध भगललाट भगनन्दन भगनासिक भगनेत्र हरप्रिय वारिवाहवराहपिप्पलायुधाङ्गारकभक्षण द्विशिखत्रिशिखपञ्चशिखदीर्घह्रस्वस्थूलसूक्ष्म गुरुलघु वज्रपाणिचक्रपाणिप्रिय श्रेष्ठविक्रमाद्रिसोम नन्दिनारायण श्रीधरश्रीपतिसर्वाङ्गशिरश्छेद नारदनागदन्तपुष्पदन्तप्रिय ओंकारवषट्कारसुगमसूत्रपीठनलोक सारयज्ञहर दक्षहर यूपोत्पाटनाग्निजिह्वासमुत्पाटन निकुम्भक्षेत्रज्ञ क्षेत्रभानुकम्पप्रिय असितवामदेवचक्रायुधकूश्माण्डकङ्कणकाकपाद-कालविमर्दनप्रिय कटकटकङ्कटसङ्कटप्रिय एकवक्त्र-बहुवक्त्रास्यवक्त्र सिंहवक्त्रशार्दूलवक्त्र-हरिणवक्त्र-कोकिलवक्त्र-वक्त्रोलकवक्त्रानेकवक्त्रप्रिय शिष्टाष्टपुष्टविश्वंभरादिकष्टविमर्दनप्रिय खण्डरुण्डाभरण चण्डाभरण फणिभूषण नानाप्रमथगणनायकप्रिय कुञ्जरमुखप्रिय षडाननप्रिय ऋभूपमन्यु . . . वागास्य श्वेतमुनिमार्कण्डेयप्रिय सनकसनन्दनसनत्कुमारप्रिय विभूतिप्रिय रुद्राक्षप्रिय पञ्चामृतप्रिय पञ्चगव्यप्रिय चन्दनकुङ्कुमगोरोचनप्रिय नीलोत्पलरक्तोत्पलमहो-

त्पलप्रिय महिषाक्षगुग्गुलुधूपप्रिय कर्पूरदीपप्रिय गीतप्रिय वाद्यप्रिय कृष्णाष्टमीप्रिय कृष्णचतुर्दशीप्रिय अवधूतप्रिय भोजराजप्रिय मलयराजप्रिय श्रीदण्डीप्रिय मेधात्रिरुद्धप्रिय भट्टत्राणप्रिय उद्भटप्रिय केशिरालप्रिय दासमय्यप्रिय वरगुण्डप्रिय अण्डवरदप्रिय मल्हणप्रिय बल्लाडप्रिय कुमरगुण्डय्यप्रिय अखिलभुवनजभक्तजनप्रिय देव ॥ ४ ॥

सुरपतिप्रमुखनिखिलप्रार्थितप्रधानपरमेश्वर देव नमस्ते नमस्तेनमस्ते नमः ॥ ५ ॥

श्रीमन्माहेश्वरः शिष्यो मल्लिकार्जुनपण्डितः ।
श्रीमुखदर्शनगद्यं हृद्यं ग्रथितवान् [मुदा] ॥

॥ इति श्रीशिवस्तवगद्यम् ॥

---

## ३. ॥ अथ श्रीशिवस्तोत्रम् ॥

जय जय शम्भो गिरिजाबन्धो शिव शिव शङ्कर भूतपते ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १ ॥

शिव सुरनायक मङ्गलविग्रह कुरु कुरु मङ्गलमाशु विभो ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ २ ॥

शरणं यामश्चरणद्वन्द्वं तव [1]यत् कमलापतिमृग्यम्[2] ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ ३ ॥

तव पदकमलादमलादन्यच्चिन्तितमपि न हि चेतसि [शं]भो ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ ४ ॥

नामैवोत्तम तव पदममलं मङ्गलदायकमङ्गलदम् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ ५ ॥

शिव वयमशिवं न भजामस्त्वयि सति सशिवे शिवमूर्तौ ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ ६ ॥

भगवन् भवता भवतापहृता न हृतं दुरितं किं नु कृतम् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ ७ ॥

सकृदपि तव हर नामस्मरणं कृतमघकुलहरमतिशुभदम् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ ८ ॥

स्मृतमपि तव हर चरणद्वन्द्वं हरति विषादं किमु दुष्टम् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ ९ ॥

---

1. पद    2. वेलम्

हर यद्यस्मत्कृतमपराधं विविधं कृपया हरसि तथा ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १० ॥

सुतमपराधिनमपि कृतशिक्षं जनकः पालयतीश यथा ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ ११ ॥

भवता सृष्टं जगदिव सृष्टानस्मानयि भव पालय नित्यम् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १२ ॥

जगतामेको जनकस्त्वमतो वयमपि जगतो न हि भिन्नाः ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १३ ॥

न हि जानीमो भवदन्यं शंकर धीरं पातारम् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १४ ॥

देव गजासुरपरिहृतविभवानस्मान् [भयद] सभवानव सदय ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १५ ॥

शरणं भव भव शरणं भव भव भव शरणं त्वं करुणाब्धे ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १६ ॥

न सुता वयमपि तव किमु शम्भो जनको न भवानस्माकम् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १७ ॥

भवता सृष्टाः सकला लोका वयमपि तद्वद्धर सृष्टाः ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १८ ॥

भव भवदन्यं न वयं यामः सकृदपि शरणं मरणे वा ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ १९ ॥

निरवधिकरुणापारावारस्त्वमतो हर हर भवदुःखम् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ २० ॥

भव भवदीयानस्माननिशं कुरु गतदुःखानतिदुःखान् ।
गिरिश महापज्जलधेरस्मानुद्धर धीर कृपाजलधे ॥ २१ ॥

॥ इति श्रीशिवस्तोत्रम् ॥

---

## ४. ॥ अथ श्रीशिवशतकम् ॥

शिवं गौरीश्लिष्टं सुरविटपिमूलस्थितमहं
सुवर्णाभं पद्मासनसहितमर्धेन्दुशिरसम् ।
कुठारत्रासानुग्रहवरगदालङ्कृतकरं
त्रिणेत्रं संसेवे गुहगजमुखोत्सङ्गमनिशम् ॥ १ ॥

मनोभूसन्दोहादपि सुवपुषं मन्दहसित-
प्रभारतोमस्थेमद्विगुणितमुखाम्भोजसुषमम् ।
वृषारूढं प्रौढामरनिकरकोटीरविलस-
त्पदद्वन्द्वं सेवे परमशिवमार्यासहचरम् ॥ २ ॥

शिवं शाणोल्लीढस्फटिकमणिशोभं शशिकला-
शुभोत्तंसं हंसादृतपदयुगं श्यामलगलम् ।
उमाश्यामार्धाङ्गं भुजगपतिभूषं सुवपुषं
जटाजूटक्रोडभ्रमदमरगङ्गं शुभवृषम् ॥ ३ ॥

निरीहं निर्मायं निरवधिसुखं निर्मलतरं
निरासङ्गं नीरागनियमिनिषेव्यं निरुपमम् ।
निराशङ्कं नित्यं निखिलगुणनिर्मुक्तमगदं
निराधारं नीडं निखिलजगतां तद्भज मनः ॥ ४ ॥

तव स्तोतुं शम्भो गुणमगणनीयं सुरगणाः
स्वतोभातश्रुत्याद्यखिलवचनार्था न कृतिनः ।
ममास्मिन्नज्ञस्याधिकृतिरहह क्वाच्युतसरो-
भवापत्याभ्यामप्यविदितपदाम्भोजमकुट ॥ ५ ॥

तथापि त्वां स्तोतुं सपदि यतते शर्व रसना
मदीया नेदीयस्सरसिरुहजन्मप्रणयिनीम् ।
प्रसाद्य प्राग्जन्माचरितसुकृतालेपसरसां
निरासाय त्रासाद्यखिलविपदां मृत्युविजयिन् ॥ ६ ॥

कथं ते वाग्गुम्भः कथमपि च वाणीचरणयोः
प्रसादः प्राचीनव्रतिजनतपोराशिसुलभः ।
भवेदित्थं प्रश्नस्तव यदि वदाम्युत्तरमहं
भवत्पादद्वन्द्वस्मरणमघहारिन् हृदि न किम् ॥ ७ ॥

तव भ्रान्ता जन्मान्तरकृतसरूपोदयजुषः
प्रगल्भन्ते शम्भो परमसुखसाम्राज्यविमुखाः ।
न विज्ञातुं द्रष्टुं भुवि कथयितुं श्रोतुमपि वा
जनाः सर्वे यत्किञ्चिदपि महिमाम्भोनिधिकणम् ॥ ८ ॥

अविद्यावैशद्यप्रकटनपराभूतमतयो
विरिञ्चादीनञ्चन्त्यहह शिव सृष्टया त्वयि विभो ।

प्रपञ्चान् किञ्चित्त्वां स्मरणपदवीं चापि न जडा
नयन्ति त्वां हित्वा तरतु भवमेषां कथय कः ॥ ९ ॥

न जानेऽहं शम्भो सकृदपि भवन्तं श्रुतिगिरा-
मभूमिं संसारभ्रमणविधिना मोहितमनाः ।
अथाप्यद्यास्तिक्यं मम बहु समीक्ष्य प्रभुमणे
प्रसीद क्षिप्रं मे निरवधिककारुण्यनिलय ॥ १० ॥

स्वकर्माद्यैः शम्भो दुरवगमतामर्थमनसां
नराणां सर्वेषां शिव तव निशम्यैव यतयः ।
निरासङ्गास्तुङ्गं श्रुतिशिखरिणां शृङ्गमभितो
गवेषन्ते त्वां ते कलुषधिषणोऽहं भुवि कियान् ॥ ११ ॥

कथञ्चित् कामारे कलुषमतयः केचन विभो
विभूतीर्भावत्का विधिशतमखाद्या मृतिजुषः ।
उपास्यैव प्रायः शिथिलितमहामोहकणिका
भवन्तं वेदान्ताध्वनि समधिगन्तुं सुकुशलाः ॥ १२ ॥

पुरारे कर्माणि प्रतिजनि शतं प्राकृतजनाः
श्रमात् कारंकारं कथमपि भुवश्चादिवमिमे ।
समुद्रम्यापत्याथ भुवमपि वा क्लेशजलधौ
निमज्जन्ति त्यागात्तव पदसमालम्बनविधेः ॥ १३ ॥

त्वदानन्दं लब्धुं त्रिपुरहर कर्माधदिममिदं[धिकर्मिदं]
निदानं तज्ज्ञात्वासुकरमिति सर्वेऽपि विजहुः ।
बहुश्रद्धाभक्तिद्रविणविरहात्तेऽपि भवतः
पदाम्भोजं स्मृत्वा सकृदिह सुखं भूरि दधते ॥ १४ ॥

निषिद्धस्य ज्ञानं भवति विहितस्यापि च न हि
श्रुतिस्मृत्यज्ञानान्मम पुनरपीषन् पशुपते ।
कथं तत्र श्रद्धा यतनमपि वा प्रत्युत कृति-
र्घटिष्यत्यत्यन्तं शरणमहह त्वं जडमतेः ॥ १५ ॥

पुलिन्दः किं विद्वानुत विहितकर्माचरणवा-
नुतस्विद्वेदादिप्रकटितनिषेधादुपरतः ।
स तावद्भक्तानां प्रथमपदवीं त्वत्करुणया
प्रणीतस्तस्मादप्यहमिह भवन्तं शिव भजे ॥ १६ ॥

कलाहीनं दीनं कलुषहृदयं कामसचिवं
शशाङ्कं निःशङ्कं शिरसि च परं गूढवपुषम् ।
विधत्से यत्तस्मादविहितविधानप्रणयिनो
ममापीश श्रीशस्तुत शरणमेकः पशुपते ॥ १७ ॥

यया लोकाः शोकाद्यखिलभवपीडापरिभवं
सहन्तो विभ्रान्ताः पुनरपि पुनः फल्गुविषये ।
रसभ्रान्त्या श्वानो विगतरुधिरक्रव्यशकले
विमुह्यन्तीवारिथन्यहह हर मायां पशुपते ॥ १८ ॥

प्रसीद त्वं प्राह्णेतनतपनभानुव्यतिकर-
स्फुटाम्भोजौपम्यं वहति हृदये मे पशुपते ।
यथा रूढं नान्यद्भवति भवदङ्घ्र्यम्बुजमृते
तथा धूतद्वैतप्रचुरतरदुर्वासनमिह ॥ १९ ॥

निरासङ्गेऽद्वैते त्वयि विरचितं शङ्कर विभा-
वनीशैर्ब्रह्माद्यैर्जगदखिलमारोप्य कुधिया ।
महास्वप्ने सृष्ट्वा भुजगमिव भीत्याद्यनुभवाः
प्रलभ्यन्ते लोकैर्हृदयगतदुर्वासनतया ॥ २० ॥

दुरालोकं लोकैरविकलहृषीकैर्नियमिभिः
कियान् द्रष्टुं श्रोतुं कथयितुमहं शङ्कर विभो ।
भवन्तं पीयूषद्युतिममरपीतं च पुनर-
प्युदीतं को वान्यो रसयितुमधीशोऽत्र सकलम् ॥ २१ ॥

मृकण्डोः सत्पुत्रं चरमसमयत्रस्तमनसं
कृतान्ताज्ञाचीटीं शिरसि विदधानैः पटुभटैः ।
द्रुतं संरक्ष्यान्यानवितुमिव भूयोऽपि चरणं
समुद्यम्याद्यापि प्रहतशमनं भर्ग जयसि ॥ २२ ॥

सुधादिभ्यः शम्भो रुचिरतरमाम्नायजलधेः
समुत्पन्नं नामामृतमखिलपेयं तव विभो ।
पुरारे कालारे कुसुमविशिखारे नियमिनः
पिबन्त्युर्व्यां भावज्वरभरनिरासप्रणयिनः ॥ २३ ॥

महामूढः किं वा विगलति दृगादीन्द्रियगणे
कफाविद्धे कण्ठे चरमपवने चोज्झिगमिषौ ।

वपुःक्लेशे सत्यप्यहह गहने चाप्यवसरे
करिष्यत्यद्यैव व्रजतु शरणं भर्गचरणम् ॥ २४ ॥

सुराणां प्राथम्यं वहसि यदनङ्गाहित विभो
ततस्ते दुग्धाब्धेः प्रथमभवमस्तु ध्रुवमिति ।
करालं सद्योऽपाययदसुरहन्ता स भगवान्
महाक्ष्वेलं तापग्लपितनिखिलस्वान्तकमलम् ॥ २५ ॥

शिवत्वात्ते शम्भो भवदुपनतानामशिवता
कुतः सर्वज्ञत्वादपि कुश[कृश]तराज्ञानमपि वा ।
मृडत्वाच्चासौख्यं शमनशमनत्वाच्च शमनात्
भयं दारिद्र्यं वा धनपतिसखत्वाच्च भगवन् ॥ २६ ॥

त्वदाख्यायामुग्र स्मृतिमुपगतायां विषमही-
रुहोंऽहस्सञ्ज्ञाख्यः सपदि परितो म्लायतितराम् ।
गलाग्रं श्लिष्यन्त्यां ज्वलति सममामूलमचिरात्
रसज्ञां प्राप्तायामपि भुवि नृणां शाम्यतितराम् ॥ २७ ॥

मया ते यत्किञ्चित् कृतमपि सपर्यादिकरणं
बहु ज्ञात्वा विप्रब्रुवमिममवाद्यैव कृपया ।
कुबेरस्निग्ध त्वं किमवसि न च स्माऽऽस्यगलितं
फलं तोयं धृत्वा शिरसि च पुलिन्दं वनभुवि ॥ २८ ॥

महत्त्वं कीदृक् ते मदनमथन क्षोणिपतयो
धनाद्यं यत् किञ्चित् शतधृतिमहेन्द्रप्रभृतयः ।
पदं स्वीयं शम्भो भवदुपकृतास्त्वच्चरणयोः
कृतासङ्गाः सन्तः सपदि ददते मुक्तिमपि ते ॥ २९ ॥

क्रियासु श्रौतीषु स्मृतिसमुदितासु त्वदभिधां
गृणन्तः सेवन्ते शतधृतिपदं च प्रतिपदम् ।
समुद्यद्वैकल्यक्षपणविधिहेतोः शिव विभो
किमु त्वत्सायुज्यं सपदि भगवन्नाम भजतः ॥ ३० ॥

दुराशान्धो जीवो जठरतलमन्धोरिव विशन्
महामोहाख्यस्य भ्रमति नतबन्धो यमरिपो ।
परिक्रन्दन्नित्याः सपदि भवतो नैव करुणा
भवेच्चेल्लोकोऽयं तरतु कथमार्तीः सुमहतीः ॥ ३१ ॥

यदालम्बादम्बा त्रिभिरपि गुणैः स्थावरचरं
प्रपञ्चं सृष्ट्वास्मिन् पशुसुतकलत्रादिवशताम् ।
प्रणीय प्रायस्तद्विषयगतदुःखानुभवतो
मनुष्यादीन् जन्तून् ग्लपयति स मेऽस्त्वत्र शरणम् ।। ३२ ।।

गिरीश स्वामिंस्ते त्रिगुणगुणिते दामनि महाऽ-
विवेकाख्ये बद्धाः पशव इव मर्त्याश्च विषयान् ।
तृणस्तम्बान् भुक्त्वा जहति सुखमात्यन्तिकमहो
प्रमत्ता आयत्ताः कुधनमदिरोन्मत्तमनसाम् ।। ३३ ।।

हृषीकाणि प्रायो विषयवशगानि प्रतिपदं
विधाय स्वान्तस्स्थं गिरिश मृगयन्ते जडधियः ।
बहिस्त्वामज्ञानस्तबकितमहामोहतिमिराः
समन्तादालम्ब्य त्वहह गलचामीकरनयम् ।। ३४ ।।

इदं जन्म ब्राह्मं कथमपि समासाद्य भगवन्
महामोहैरेव व्यवहितमनाः पश्चिमदिने ।
भवान् ध्येयो मत्वेत्यनुपदमसून् मुञ्चति जनः
कदा वा सन्तीर्णो भवति भवसिन्धुर्जनिमता ।। ३५ ।।

त्वदाविर्भावेन त्रिपुरमथन स्वान्तविषये
जरीजृम्भन्तेऽमी शममुखगुणाः सम्प्रति सताम् ।
विभो शम्भो कामप्रभृतिरिपवो धिक्कृतबलाः
पलायन्ते चिन्ताद्यखिलपरिवारैः क्वचिदिमे ।। ३६ ।।

पिशाचोऽहङ्कारो हृदयतरुमासाद्य ममता-
पिशाचीसंश्लिष्टो विषयरुधिरान्मोहनिशि च ।
निपीयेमं जीवं जनिषु बहुधाद्यापि कलयन्
त्वयि प्राप्ते चित्त त्रिपुरहर धावत्यहह सः ।। ३७ ।।

प्रसादात्ते सत्त्वः प्रभवति गुणः शङ्कर भव-
त्यनेनास्मिञ्जीवः कथमपि विमुक्तः पशुपते ।
अविद्याकाराया विगलितसमीहाख्यनिगलो
हृषीकैः स स्वान्तैरमृतविषयस्तोमकबलः ।। ३८ ।।

विधिर्वा शक्रो वा विविधमपि भाग्यं दिशतु मे
महारोग्यं वान्तःकरणगतमोहस्तु भवता ।

महादेव क्षय्यस्तिमिरनिकरस्तिग्ममहसा
निवार्यो निश्शेषं पिहितशशिनक्षत्रमहसा ॥ ३९ ॥

पुरारे कालारे कुसुमविशिखारे त्वदितरे
सुराः सर्वे स्वर्वासिन इह समुद्धर्तुमधिनम् ।
यदीत्थं जायन्ते तदिदममितध्वान्तहरणं
कुहूरात्र्या खद्योतकिरणसहस्रैः प्रसृमरैः ॥ ४० ॥

महेश त्र्यक्ष त्वच्चरणशरणा वीक्षणकणैः
कृपासान्द्रैरिच्छां प्रणतजनतायाः फलवतीम् ।
प्रकुर्वाणाः स्रष्टुस्त्रिभुवनपतेर्जङ्गजयिनो
महीपालस्यापि प्रतिभटपटुत्वं विदधते ॥ ४१ ॥

अभिव्याप्य त्रैलोक्यमपि वसतस्ते शिव विभो
शिरो धाता द्रष्टुं कथमपि समारुह्य भगवन् ।
दिवं क्षीणाटोपोऽरहयदलघुत्वं हि तरसा
कुतो वाहङ्कारी न भजति पराभूतिमधिकात् ॥ ४२ ॥

पुरस्तिस्रो लक्ष्यं शरधिरुदधिर्माधव इषु-
र्महामेरुश्चापः क्षितिरपि रथः सारथिरभूत् ।
विधिर्वेदव्यूहो हयवरसमूहः स भगवान्
पिनाकी मे भूयात् सपदि विपदां भङ्गविधये ॥ ४३ ॥

पदान्ते शोभन्ते परिणतशुभानां पशुपते
किरीटानि ब्रह्माद्यखिलसुमनोबाहुजनुषाम् ।
विपद्भङ्गायैव ह्ययमपि तवाग्रे शरणमि-
त्यजस्रं साष्टाङ्गं सदय शतकृत्वः प्रणमति ॥ ४४ ॥

स्मितं ते नीहाराचलपरसुतानायक विभो
शरज्ज्योत्स्नापूरप्रसृमरमहापाण्डिमसमम् ।
अहो सन्तापघ्नं शिशिरतरमेकान्तमनसां
कथं वाभ्रव्यापि त्रिपुरमदहत् क्षिप्रमहह ॥ ४५ ॥

विना यं वा लोको गुणिनमवनीपं स च शची-
पतिं हस्तोदस्तस्वरुमपि विना सोऽपि च विना ।
विधिं दैत्यत्रासापनयघटकं सोऽपि न लसे-
द्विना त्वामीशानाखिलभुवनजन्मादिकरणे ॥ ४६ ॥

चरित्रं ते चित्रं पुरहर पवित्रं नियमिनां
प्रवेकः सत्रादौ कलहजनिरुद्रायति सदा ।
महत्या संजातोत्पुलकमुकुलालीकखचित-
स्वकीयाङ्गं बाष्पस्तबकितदृगम्भोजयुगलम् ॥ ४७ ॥

पिनाकिन्नद्यापि प्रकटयसि किं विक्रमरमां
त्वदीयं स्थानं मे हृदयमरयो निर्दयमिमे ।
समाक्रम्यैधन्ते सरभसहृषीकालिपृतना-
गृहीतप्रस्त्यायद्विषयकबला हर्षशबलाः ॥ ४८ ॥ (?)

भवद्भक्त्या शम्भो कबलितमहामोहतिमिर-
स्तपस्वी यं पूर्वं विषयसमुदायं सुखकरम् ।
विजानीते स्मेमं गरलमधुना तत्त्रिभुवनं
ससत्यं चासत्यं तदपरमिवात्मानमपि च ॥ ४९ ॥

द्विजोत्तंसश्रीमद्धनदधनदामोघकरुण
त्रिणेत्र त्वां को वा विरहयतु भावश्रमभरः ।
द्विजन्मापि भ्रान्त्वा भुवनमभितः श्रान्तहृदयः
श्रुतिस्मृत्याद्यर्थाव्रगतिनिपुणः प्राणिषु महान् ॥ ५० ॥

विनाङ्घ्रिं जङ्घालो दृशमपि विना दर्शनपटु-
र्विना वाचं वक्ता श्रुतिमपि विना श्रोतृनिपुणः ।
विना पाणिं सर्वग्रहणनिपुणो घ्राणरहितः
समाघ्राता शम्भुर्मम हृदयसौधे विहरताम् ॥ ५१ ॥

सुराणां सर्वेषां निरवधिकमाहात्म्यविषये
तव स्थाणो शम्भो न किमपि मनाक् संशयपदम् ।
यतः कालानङ्गत्रिपुरगरला दुस्सहतराः
पराभूतास्त्राता द्रुहिणमुखदेवाश्च भवता ॥ ५२ ॥

त्वया दत्तं तेजः सरसिरुहबन्धुः प्रतिदिनं
भ्रमन् मेरोः सानौ घटयति पटुत्वं जनदृशाम् ।
ततश्चन्द्रस्तारागणहुतभुजौ रात्रिषु महो
गृहीत्वा लोकानां त्रयमपि सचक्षुर्विदधते ॥ ५३ ॥

पदाम्भोजं शम्भो यदि मनसि मे पुण्यपुरुषा-
धिरूढप्रौढिम्ना किमु विभवलाभेन करयोः ।

सकृत्किञ्चिन्मुद्रा यदि च विषया मे नयनयो-
श्छिदा[ता] किं शूली चेन्मम किमु विवस्वत्सुतजयैः ॥ ५४ ॥ (?)

अहंभावः शम्भो यदि सुमनसां त्वत्परतरा
इति ब्रह्मादीनां वयमिह मृकण्डोः प्रियसुतम् ।
ररक्षुः किं कालात् कुसुमविशिखं वा किमजयन्
पुरस्तिस्रो हासैर्युधि किमहरन्नैव भगवन् ॥ ५५ ॥

स्मितेन द्वैगुण्यं गिरिश तव शोभा श्रितवती
दधाना देवाद्यैर्मथितकलशाम्भोधिजनुषाम् ।
श्रियं डिण्डीराणामपि झटिति साक्षान्नयतु मे
पुराजातेदानीन्तनदुरितपङ्कं पशुपते ॥ ५६ ॥

तवैवेच्छा हेतुः सकलकरणे सर्वहरणे
समस्तत्राणे वा यदभजत सर्वं च करणम् ।
पुरां दाहे शैलद्रढिमगुणभाजामपि शुचि-
स्मितं त्यक्त्वेतरदिषुमुखस्येड्यपदवीम् ॥ ५७ ॥

मनोऽरण्ये भ्रान्ताः प्रसृमररजोधूसरतराः
परित्रस्यज्जीवा विगलितविवेकाः पृथुतराः ।
महेनोमत्तेभा भवथ विजिताः संप्रति मया
यतो मे पञ्चास्यो हृदि विहरते पिङ्गनयनः ॥ ५८ ॥

कृपावानप्युग्रो धनदधनदो वीतवसनः
सुमेषुप्रद्वेषी वपुषि धृतयोषिच्छुभगुणः ।
महास्तेयी शुद्धः शशिविधिशिरोभूषितवपुः
शिव त्वद्वैरूप्यं सुखमिह परत्रापि दिशतु ॥ ५९ ॥

पुरा जन्मस्वेनः कृतमनुभवामीह जनने
विदित्वापि प्रायः पिहित इव पापानि कुरुते ।
यथायं मे भिन्तां द्रुततरमहन्तां सविषया-
मशान्तां संहन्ता स सपदि पुराणामपि विभुः ॥ ६० ॥

शरः शेते सिन्धौ शरधिरपि भक्तेन तरसा
निपीतश्चापाग्रे वसति सुमनोवृन्दमखिलम् ।
शताङ्गे सन्दोहो नरतरुमुखानामसुमतां
वसत्यास्तां यस्य त्रिपुरविजयी मे स हृदये ॥ ६१ ॥

सहायीकृत्यास्मान् कुसुमशरहा चाट्टहसितै-
रसौ भस्मीचक्रे त्रयमपि पुराणामिति हरिः ।
ह्रिया शेते निद्राण इव निगमान्ताभिनिरतो
विरक्तो वा ब्रह्मा विदधति सुराः शैलवसतिम् ॥ ६२ ॥

मनोजन्माऽनङ्गः कृत इति ललाटाक्ष भवता
दिवा गच्छन् सिन्धौ निशि चरति भीत्या स्मरसखः ।
नभस्येवाम्भोजं पयसि तदिषुर्मज्जतितरां
समूहो मेर्वग्रे परिचरति तत्प्रेरणकृताम् ॥ ६३ ॥

गजस्कन्धारूढो हरिरपि वृषारूढ नमति
प्रणौति श्रीदोऽपि प्रवणहृदयो दिक्पटवर ।
तपस्वी निध्यायत्यपि विधिशिरश्छेदनपटो
महत्त्वं को ज्ञास्यत्यहह भगवन्नीदृशमिति ॥ ६४ ॥

महात्मानः शम्भो तव चरणदासाः कृतदिवा-
करापत्यानीकिन्यधिपमकुटीभङ्गविधयः ।
न मां दासं त्यक्ष्यन्त्यशरणशरण्या न च तथा
यदि प्रायस्तेऽपि श्रुतिरपि भवद्वागनृतगीः ॥ ६५ ॥

अधीता नाम्नायाः सकृदपि तदर्था न विदिता
न कर्माणि स्वीयान्यपि विरचितानि क्षितितले ।
तथाप्यन्ते शम्भो मनुजपशुनोच्चार्य भगवन्
तवाख्यामुत्तीर्णो भवसरिदधीशो भवति हि ॥ ६६ ॥

अहो पञ्चास्य त्वं कथमिभमुखं लालयसि वा
पिशाचानां नाथ त्वमवसि कुमारं कथमिव ।
श्मशानावासी त्वं नियमिजनतां पावयसि च
प्रपन्नानां कामान् वितरसि कथं कामविजयिन् ॥ ६७ ॥

तपस्तप्त्वा घोरं चिरमसुकरं भूधरसुता
महान्तं भर्तारं रमयितुमहो गोत्रविकलम् ।
अतातं तं स्थाणुं स्थविरतरदोषाकरधरं
भवन्तं संप्राप्ता कथमिह भुजङ्गैर्वलयितम् ॥ ६८ ॥

विरिञ्चाद्याः सर्वे हरसदृशतां वाञ्छथ यदि
प्रकामं दुग्धाब्धिं पुनरपि विमथ्याद्य पिबत ।

महाक्ष्वेलं चन्द्रं धरत भजतापीषदुपमा-
श्रियं नो चेत् क्वासौ क्व नु खलु भवन्तः पशुसमाः ॥ ६९ ॥

तवोपान्ते शम्भो सरसिरुहपीठोऽनृतमुखः
शिरोदेशालोके स्वयमनुभवन् गर्हणदशाम् ।
अनर्हत्वं लोकेष्वपि भजति को वा धुरि सतां
मृषावादी सौख्यं क्व नु भजतु वेदान्तविदपि ॥ ७० ॥

भुजङ्गालङ्काराम्बुजभवशिरोमण्डिततनो
कपालिन्नेकोक्षाश्रय गरलपायिन् सुमनसाम् ।
प्रणेतारस्ते त्वां शरणमुपसंगम्य च दिशा-
मधीशत्वं प्राप्ता जगति विजयन्ते हरिमुखाः ॥ ७१ ॥

गिरीश त्वज्जायावदनसमताभावनभव-
न्मनश्शल्यस्तुल्याधिकविरहिताहानिजरुजः ।
सुधांशुः सौरीभिर्द्युतिभिररुणाभिर्हृदि कृत-
प्रतापोत्थं लक्ष्मावहति हरिणाधीश कपटात् ॥ ७२ ॥

चिराधीताम्नायश्रवणमननाद्यैरुपचितै-
र्भवज्ज्ञानैः शम्भो विघटिततमःसत्त्वरजसाम् ।
मुनीनां सन्दर्शः कथमिति भवेन्मे जडमतेः
प्रसीदादायाद्य प्रणतिमसकृन्मे पशुपते ॥ ७३ ॥

शरीरं कल्पान्तस्थमिति [1]परमात्मानमिति च
प्रविज्ञायापत्याद्यखिलममताबन्धयमिताः ।
मनोराज्यं जीवाः प्रतिपदविपत्सङ्कुलहृदः
शिव त्वां सेवन्ते सकृदपि न चाहो यमरिपो ॥ ७४ ॥

पुरा देहं चात्मेत्युपचयदशायां पशुपते
शरीरं तत्पश्चादपचयदशायां विगणयन् ।
अपीषत्तस्मिंश्चाध्यसनमधुनाप्युज्झति यया
न चायं मायां तां परिहर सुखं प्रापय च माम् ॥ ७५ ॥

त्वया शम्भो भक्ताः शमनदमन प्राकृतगुणै-
र्विमुक्ता भासन्ते त्वमपि भगवन् राजसितराम् ।

1. [परमात्मेति च मुधा]

विना [सङ्गं] सर्वान्नानाविधबहुलसङ्कल्परहितैः
सदा तैरापन्नार्तिहर इति चात्मा विभुरिति ॥ ७६ ॥

श्रुतीनां तात्पर्यं पुरहर भवन्तं नृपशवः
परिज्ञातुं भक्त्यौपनिषदविचारौ हि करणम् ।
तथा सत्यज्ञानान्नयमुखमहाशास्त्रनिचयं
म्रियन्तेऽधीयाना विदधति च कर्माण्यपि सदा ॥ ७७ ॥

न कर्तुं किञ्चिद्वा विहितमपि कर्म प्रभुरहं
समस्तस्वाध्यायाध्ययनतदनुष्ठानविषये ।
कियान् किञ्चित् किञ्चित् सकृदपि तथापीश्वर विभो
त्वदाख्यां संजल्पाम्यथ भवदधीनं मदवनम् ॥ ७८ ॥

कलत्रापत्याभ्यां स्वजनसमवायेन च मुहु-
र्ज्वराद्यै रोगैश्च व्यथितमनसो दुर्गतमणेः ।
ऋते त्वां [1]मर्त्यस्याः क इह शरणं यक्षनृपति-
प्रियास्तापस्मारासुर शमितवैवस्वतमद ॥ ७९ ॥

अकुर्वन् सत्कर्माविहितमपि कुर्वन्ननुपदं
समुद्यद्दारिद्र्यान्तकभयनिरासैकहृदय ।
कथङ्कारं शम्भो तव चरणदासोऽत्र भगवन्
भविष्यामि त्वं वेत्स्यहमपि कृपावत्परिबृढ ॥ ८० ॥

महाघोरः कालः कटुरटितवाचाटितहरि-
द्भटव्यूहाटोपप्रकटितनिजाटीकन इह ।
कथङ्कारं पश्येत् पशुमपि दृशोरुज्ज्वलरुचा
मृकण्डूत्पन्नत्रायक धृतिमिति प्राप्य विहरे ॥ ८१ ॥

कुटुम्बी पार्वत्या गुहगजमुखाभ्यां तनयवान्
भुजङ्गैर्भूषावान् सितमणिकिरीटीन्दुकलया ।
भवेन्मे जङ्घालो धवलवृषभेणान्तकजय-
श्रियायुष्मान् सोऽयं यमभयनिरासाय भगवान् ॥ ८२ ॥

पुरा मारंमारं जननमतिमात्रं श्रितवता
मया किं किं पूर्वं कृतमिति न जाने यमरिपो ।

---

1. मर्त्यस्य आः इति च्छेदः ।

इदानीं वारभ्यामृतरुचिकलोत्तंस भगवन्
  भवत्पादाम्भोजस्मरणनिपुणं मां विरचय ॥ ८३ ॥

यथाहं वा चित्ते यमरिपुमनाराध्य कुमते
  महासंसाराब्धिभ्रमणपरिखिन्न क्षणमपि ।
किमर्थं यागं वा सततमुपवासादिनियमं
  करोषि ग्रावाग्रे विपिनभुवि वेश्मन्यपि च वा ॥ ८४ ॥

सुरापं ब्रह्मघ्नं गुरुजनकलत्रस्पृशमपि
  प्रकामं स्वर्णस्तेयिनमपि स्वर्णं त्वमथ वा ।
यतश्चण्डालं वा नयसि हर निर्वाणपदवीं
  समालम्बे साम्बाविरतमविलम्बं यमरिपो ॥ ८५ ॥

जगत्संहारिन् संहर मम पुराण्यद्य कृपया
  [तथा]न्ते संहर्तुं ह्रियमतितरां मा गम इह ।
महाकामक्रोधप्रमृतिपरिपूर्णं त्रयमतः
  पुराणां किं भस्मप्रचयमकरोर्नाट्टहसितैः ॥ ८६ ॥

चरित्रं श्रोत्राभ्यां त्रिपुरहर पीत्वाहमनिशं
  न चालम्बे साम्ब श्रुतिचयपुराणस्मृतिगतम् ।
यतो गङ्गाचन्द्रोरगभसितचर्माब्जजशिर-
  स्समावेशोऽयं ते वदति महिमानं गुरुतरम् ॥ ८७ ॥

प्रयाणारम्भेषु त्रिपुरहर मे प्राणमरुतां
  भजन्तां कर्णौ त्वद्वृषभगलघण्टामणिरवाः ।
कृतान्तप्राग्भागप्रसृमरविनर्दद्भटघटा-
  पिशाचानामुच्चाटनपटुतरश्रौतमनवः ॥ ८८ ॥

निजावासं शैलं भुजपरिघदण्डैश्चलयतः
  पुरा पौलस्त्यस्य स्तुतिभिरमितैः सामभिरपि ।
स्वयं तुष्टस्तस्मै प्रमथगणवर्यत्वमदिशो
  जवात्त्वं कारुण्यान्मम निरपराधस्य किमुत ॥ ८९ ॥

अनाराध्येषत्त्वां कुजनिषु पुराणे यमरिपो
  कलत्रेणापीहाधिकमवमतः किं नु कुरुताम् ।
इति क्रन्दत्यस्मिन्ननतिसुलभां दीर्घकरुणां
  निवेश्य त्वं त्रायस्व यमभयतो दुर्गतिभयात् ॥ ९० ॥

भवद्भक्तिं त्यक्त्वा भवभयनिरासप्रणयिनीं
जडाः शम्भो कुम्भोद्भवशमधनोद्गीतमहिमन् ।
क्रतुं भूयो भूयो जनिमृतिनिदानं विदधते
समादायान्यस्माद्धनमधमतो वा बत विभो ॥ ९१ ॥

भवद्भक्तिं त्यक्त्वा भवभयनिरासप्रणयिनीं
स्मरारे सक्लेशं गुरुजनमुखादागममुखाः ।
अधीत्येमे विद्या बत कुधनिनां कुट्टिमतले
कुटुम्बत्राणाय प्रकटितरदा बिभ्रतिशुचम् ॥ ९२ ॥

श्रुतीनां तात्पर्यं शिव तव महिम्नीति कतिचित्
विदित्वापि त्वामीषदपि दधते नैव मनसि ।
इति त्वं मा कुप्येस्त्रिपुरहर मे याति समतां (?)
परिज्ञायाख्यान्ते जडमतिरहं सोऽपि कथये ॥ ९३ ॥

भवद्भक्तिर्ह्येका यदि दृढतरा साम्ब भगवन्
भवाम्भोधिं तर्तुं किमिह करणैश्चापि बहुभिः ।
महादारिद्र्याब्धिं बहुलदुरितक्ष्वेलकलिलं
परिज्ञाय प्रायस्तव चरणमेवर्च्छेति मनः ॥ ९४ ॥

सुषुप्तौ स्वप्ने वा शिव तव च जाग्रत्यहमिह
ब्रवीम्युच्चैर्नाम प्रशमसमुपेतैर्मुनिगणैः ।
प्रगीतं सर्वाघक्षरणकरणं सङ्गरतले
जितारातेर्भेरीनिनदमिव धात्रीबलरिपोः ॥ ९५ ॥

सुतौ तावुत्सङ्गे गुहगजमुखाख्यौ वपुषि च
प्रियां गौरीं गङ्गामपि शिरसि पार्श्वे परिचरान् ।
विधायातिस्निग्धं शुभवृषभमारुह्य भगवान्
पिनाकी रक्षायै मम भवतु भीतस्य यमतः ॥ ९६ ॥

जगन्नाथश्रीशप्रभृतिसुरसेव्य त्रिपुरजित्
स्मरारे कालारे श्वशुरमखहारिन् पशुपते ।
गजारे भूतेश प्रमथगणनाथाद्य भगवन्
इतीह क्रन्दन्तं परमकृपया पालय विभो ॥ ९७ ॥

सुधाभानूत्तंससस्मितमुखशरच्चन्द्रवदन
प्रणम्रापङ्क्तप्रवणहृदयाम्भोजनयन ।

मृड श्रीश स्निग्धालिकनयन शुभ्राङ्ग भगवन
इतीह क्रन्दन्तं परमकृपया पालय विभो ॥ ९८ ॥

नगाधीश त्र्यक्षाखिलशुभद गङ्गाधर विभो
शिव क्ष्वेलग्रीव द्युमणिशशभृद्वह्निनयन ।
महादेव स्वच्छस्फटिकमणिसच्छाय भगवन
इतीह क्रन्दन्तं परमकृपया पालय विभो ॥ ९९ ॥

निरासङ्ग श्रीमन् निरवधिककारुण्यनिलय
प्रणामप्रीतान्तःकरणमुनिवृन्दैकशरण ।
वृषारूढ प्रौढप्रमथगणनाथाद्य भगवन्
इतीह क्रन्दन्तं परमकृपया पालय विभो ॥ १०० ॥

भूयोभूयः शरणं भूतेशोऽसौ भवाब्धिमग्नस्य ।
अवलम्बहीनमनसो हा हेति क्रोशतो ममेदानीम् ॥ १०१ ॥

दुर्गाधीश ममेदं दौर्गत्यं दूरतो निरस्यैव ।
तव नामकीर्तनं मे तारकमेकं सदा दिशानन्दम् ॥ १०२ ॥

सहजमहाराजपुरग्रामनिवासी विवेकिमूर्धन्यः ।
श्रीवीरराघवाख्यः सङ्ख्यावान् स्तोत्रमेतदतनिष्ट ॥ १०३ ॥

॥ इति श्रीशिवशतकं सम्पूर्णम् ॥

---

## ५. ॥ अथ श्रीशिवस्तोत्रम् ॥

अमरतटिनीतरङ्गमरीचिका-
चयक्रमपाटलीभवत्कचकलाप ।
समराङ्गणविवर्जितमरुद्द्विषत्कोप
कमलसम्भवमुख्यगणविनुतबहुरूप ॥ १ ॥

भूधरतनूजापयोधरतटीगन्ध-
माधुर्यमाधुर्यसाधुवचन ।
श्रीधराशिवकलानाथराजत्कलाश्रीधरा-
विनिभरा[ऽऽविर्जला]म्भोधरसमानगल (?) ॥ २ ॥

भक्तजनपालनव्यक्तकारुण्यरस-
चित्तविपुलकटाक्षश्रुतिनियुक्त ।

मुक्तामणीमहास्त्रक्ततोग्रदेह-
दिक्ताण्डवोत्सव सक्तचतुराङ्ग (?) ॥ ३ ॥

पावनाकार पुलपर्तिगोपालसख
गोवाहन भुजङ्गकुलविभूष ।
भावभवहरण मां पालय कृपानिधे
कोविदस्तवपात्र गुम्पपुरिसोमेश ॥ ४ ॥

॥ इति श्रीशिवस्तोत्रम् ॥

---

## ६. ॥ अथ श्रीशिवोत्कर्षसाक्षिपञ्चकम् ॥

गायत्रीवल्लभत्वाद्दशरथतनयस्थापिताराधितत्वात्
शौरेः कैलासयात्राव्रतमुदिततयाभीष्टसन्तानदानात् ।
नेत्रेण स्वेन साकं दशशतकमलैर्विष्णुना पूजितत्वात्
तस्मै चक्रप्रदानादपि च पशुपतिः सर्वदेवप्रकृष्टः ॥ १ ॥

कन्दर्पध्वंसकत्वाद्गरलकबलनात् कालगर्वापहृत्त्वात्
दैतेयावासभूतत्रिपुरविदलनाद्दक्षयागे जयित्वात् ।
पार्थस्य स्वास्त्रदानान्नरहरिविजयान्माधवे स्त्रीशरीरे
शास्तुः सम्पादकत्वदपि च पशुपतिः सर्वदेवप्रकृष्टः ॥ २ ॥

वाराणस्यां च पाराशरिनियमिभुजस्तम्भनात् प्राक्पुराणां
प्रध्वंसे केशवेनाश्रितवृषवपुषा धारितक्ष्मातलत्वात् ।
अस्तोकैर्ब्रह्मशीर्षैरनिशगलगतालङ्कृताऽऽभूषितत्वात्
दानात् प्रज्ञानमुक्त्योरपि च पशुपतिः सर्वदेवप्रकृष्टः ॥ ३ ॥

भूमौ लोकैरनेकैः सततविरचिताराधितत्वादमीषा-
मष्टैश्वर्यप्रदानाद्दशविधवपुषा केशवेनार्चितत्वात् ।
हंसक्रोडाङ्गधारिद्रुहिणमुरहरान्विष्टशीर्षाङ्घ्रिकत्वात्
जन्मध्वंसाद्यभावादपि च पशुपतिः सर्वदेवप्रकृष्टः ॥ ४ ॥

वैशिष्ट्ये योनिपीठायितमुररिपुसंश्लिष्टभावेन शम्भोः
स्वस्यैकार्धप्रतीकायितहरिवपुषाऽऽलिङ्गितत्वेन यद्वा ।
अप्राधान्याद्विशिष्टाद्वयसमधिगमे दानवानामरातेः
शम्भोरुत्कृष्टभावादपि च पशुपतिः सर्वदेवप्रकृष्टः ॥ ५ ॥

॥ इति श्रीशिवोत्कर्षसाक्षिपञ्चकं सम्पूर्णम् ॥

---

७ ॥ अथ श्रीरुद्रमङ्गलाशंसनम् ॥

श्रीमहादेवाय सेवकामरद्रुमाय
सोमशेखराय दिव्यसुन्दराय ।
भीमभुजबलाय दैत्यभीकराय
द्रुहिणशैलजामनोनलदिनेशाय मङ्गलम् (?) ॥ १ ॥

मङ्गलं कैलासमन्दिराय चारुसा-
रङ्गधृतकराय भक्तरञ्जनाय ।
भृङ्गिनाट्यप्रियाय त्रिपुरदानवान्तकाय
गङ्गानदीभुजङ्गाय मङ्गलम् ॥ २ ॥

साम्बशङ्कराय हेमशैलजा[चा]पधारणाय
शम्बरासुरारिगर्वसंहराय ।
अम्बुजासनादिवन्द्यनित्यताण्डवाडम्बराय
नीलकण्ठाय मङ्गलम् ॥ ३ ॥

पुण्यपूरुषाय सर्वभूतिदायकाय
कारुण्यमानसाय निटिललोचनाय ।
गण्यगुणगणाय कलुषगहनकीलाय
लावण्यदेहाय शर्वाय मङ्गलम् ॥ ४ ॥

अन्तकान्तकाय प्रत्यहं नमः शिवाय
सुमहदन्तरङ्गवासिने दिगन्तशाटिने ।
चिन्तितार्थदायिने भसितविलेपनाङ्गाय
शान्ताय श्रीगिरीशाय मङ्गलम् ॥ ५ ॥

मङ्गलं मङ्गलं मङ्गलं जयमङ्गलाय भवते ।
अङ्गजारिभुजङ्गभूषण लिङ्गवृषभतुरङ्ग जय जय ॥ ६ ॥

॥ इति श्रीरुद्रमङ्गलाशंसनम् ॥

---

८. ॥ अथ श्रीशिवषडक्षरस्तोत्रम् ॥

ओंकारसञ्जातसमस्तवेदपुराणपुण्यागमपूजिताय ।
ओंकारवर्णप्रतिपादिताय ओंकाररूपाय नमः शिवाय ॥ १ ॥

नगाधिवासाय निरामयाय भस्माङ्गरागाय भयापहाय ।
देवादिदेवाय दिगम्बराय तस्मै नकाराय नमः शिवाय ॥ २ ॥

मत्तेभचर्माम्बरभूषणाय मारान्तकाराय महेश्वराय ।
चन्द्रार्कवैश्वानरलोचनाय तस्मै मकाराय नमः शिवाय ॥ ३ ॥

शिवाय गौरीवदनारविन्दसूर्याय दक्षाध्वरनाशनाय ।
श्रीनीलकण्ठाय शिवाप्रियाय तस्मै शिकाराय नमः शिवाय ॥ ४ ॥

वागीशकुम्भोद्भवगौतमादिमुनीन्द्रवन्द्याय मुनीश्वराय ।
त्रैलोक्यनाथाय पुरान्तकाय तस्मै वकाराय नमः शिवाय ॥ ५ ॥

यज्ञस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ।
नित्याय शुद्धाय निरञ्जनाय तस्मै यकाराय नमः शिवाय ॥ ६ ॥

षडक्षरमिदं स्तोत्रं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ७ ॥

प्रातःकाले शिवं दृष्ट्वा निशापापं विनश्यति ।
मध्याह्ने कृतमाजन्म सायाह्ने सप्तजन्मसु ॥ ८ ॥

मेरुकाञ्चनदत्तानां गवां कोटिशतैरपि ।
पञ्चकोटीतुरङ्गानां तत्फलं (शिव)लिङ्गदर्शनम् ॥ ९ ॥

॥ इति श्रीशिवषडक्षरस्तोत्रम् ॥

---

## ९. ॥ अथ श्रीशिवदण्डकम् ॥

जय जय जगदीश काशीपुराधीश केशीकृताकाश संपूर्णलोकेश सुत्राम-कीनाशहस्तोल्लसत्पाश निश्शेषवित्तेशमुख्यामराधीश संसारदुष्पाशजालावलीनाश-पूर्वत्वदभ्याशवासप्रद श्रीमदुद्यद्यशोधाम फालोल्लसत्सोम देवद्विषां भीमवर्ष्मा-वहन् कामदेहं दहन् काममापूरयन् कामदेवस्त्रिया वामनेत्रालसद्वामगात्रा-सुरस्तोमवित्रासनोमाकलत्रानडुन्नाथपत्रारविन्दाभनेत्रातिमात्रं पवित्रं गुणग्रामपात्रं वदाम्येष गोत्रं मदीयं च गोत्रं यथा स्यात्पवित्रं तथाधेहि शम्भो प्रपन्नोऽह-मम्भोजपत्राक्ष दम्भोलिभर्त्रापि जम्भो हतोऽभूददम्भोक्तिनुत्यास्मि [नुत्योऽसि] डिम्भोऽस्मि ते देव कुम्भोद्भवस्तुत्य किं भोगिभूषामणे मय्युपेक्षां करोषि त्वमेतन्न जानासि किं दुःखपाथोधिमग्नं हृषीकौत्य[कौघ]भुग्नं भवत्पादलग्नं मदीयाघबृन्देन दूरीकृतोऽसि त्वमेतद्वचस्ते न युक्तं महादेव हा दैवमेतन्मदीयं यतः सर्वदेवैकवन्द्यादपि श्रैष्ठ्यमेनोगणस्येति यन्नामजापादघानां ततीनां विनाशोऽथ निन्द्यप्रचण्डापि चण्डालजातिः शिवेत्युक्तिमात्रेण निर्धूतनिस्सीमपापव्रजा स्यात् तया संवदेत् संवसेच्चेति वेदानि वाक्यान्यपि

व्यर्थतामापुरित्यादिबाहुल्यमत्याहितस्यास्य कात्यायनीकान्त भृत्यावन ब्रूहि सत्यानि चेद्वेदवाक्यानि कस्मादथ त्वं ममैनस्समूहेन दूरीकृतः केऽपि लोके न चेदुद्धृताः स्युस्त्वया नैव याचेऽहमप्यप्रसिद्धेस्तदा कुम्भजः कौशिको गीष्पतिर्भार्गवो नन्दसूनुः शुको रावणारिर्दधीचो मृकण्डोः सुतो गौतमः शक्रदुर्वासमुख्या अमी शैवमुख्याः पुराणे प्रसिद्धास्त्वयैवोद्धृता मां कुतो नोद्धरस्युग्र चेद्यत्र सूर्यो न भात्येष चन्द्रो न तारा न विद्युत् कुतो ह्यग्निरुद्यत्प्रभा-मण्डलव्याप्तसूर्यावलीकोटिकोटिप्रकाशं पदं तत्कथंकारमीष्टे भवान् द्रष्टुमित्यस्ति ते चेतसि, श्रूयतां तत्र लोके न केषामपि श्रीपदं दृष्टिगं स्यान्न चापीष्टमापादनं तद्यतःसर्वलोकैरदृष्टस्य सद्भाव एव व्यलीको भवेन्नैव मे तद्यतो ब्रह्मविष्णवा-दिभिर्दृश्यते चेत्पदं केन तत्कारणेनेति पृच्छामि तत्तप्यमानं तपस्तत्र चेत्कारणं किं तपस्तद्यदाचक्ष्व चान्द्रायणं तप्तकृच्छ्रं तथा सप्ततन्तुव्रजो भूरिवर्षेषु निर्भोजनं तत्र पृच्छामि सर्वेषु तेषु स्वकीयं मनोऽसंनिरुध्य स्थितं चेत्कुतस्तप्यमानै-स्तपोराशिभिर्नो फलं जायते चित्तरोधोऽपि चेत्तत्र हेतुस्तदा कुत्र रोधस्तदाचक्ष्व चेत्त्वत्स्वरूपे न रूपं मनोगोचरो नापि वेदोऽपि निर्वक्तुमीशो यतस्तत्र रूपं रसो नापि गन्धो न च स्पर्शशब्दौ न चक्षुर्न कर्णौ न मूर्धा न वक्त्रं न जिह्वा न पाणी न पादौ न कुक्षिर्न वक्षो न कक्षो न कण्ठो न पीनं कृशं नापि दीर्घं न खर्वं न नीचं न चोच्चं न नारी न षण्डो न नानापि नाना न चैकं न सन्नाप्यसत्त[त्त]दीदृक् स्वरूपं कथं चित्तरम्यं कथं वेदगम्यं ततः सर्वधर्मान् परित्यज्य नाम त्वदीयं सदा जप्यमेतस्य धर्मस्य सर्वेऽपि धर्माः कलां षोडशीमप्यतिक्रान्तुमीशान यद्यप्यनीशा न शम्भो महादेव शूलिन् पिनाकिन् विभो नीलकण्ठ त्रयीगम्य शीतांशुमौले भवानीकलत्र त्रिलोकीपते देवचूडामणे ! ॥ १ ॥

पुरहर हर साम्ब गङ्गाधर त्र्यम्बक क्षेमकारिन् कपर्दिन् हरे दक्षयज्ञ-प्रणाशिन् पुरारे विरूपाक्ष दन्तावलारे शिवेत्यादिनाम्नां न चान्तोऽस्त्यथापि त्वदीयैकनाम स्मरन् वापि मुक्तिं व्रजत्येव तत्ते शिवेति स्मरन्तं कथं मां पदं नेतुमीशान सन्देग्धि भूयो भवानेतदाचक्ष्व कश्चित् समस्ते समस्तेऽपि भूमण्डले नास्ति तस्मान्नमस्ते करोमि प्रसीदानुकम्पालवाल प्रभो कालकालावनी-पालसंघान......लकील......जटाजाल नेत्रस्फुरज्ज्वाल गौरीपते बालचन्द्र-स्फुरत्फाल मुण्डावलीमाल भूतावलीपाल कालानलप्रख्य हालाहलस्फीत-कोलाहलान्नाकपालादिकान् लोकपालानभित्यक्तमन्थानकान् दग्धढक्कानकान् शुष्कवक्त्राम्बुजान् त्यक्तपित्र्यव्रजान् दानवैस्ताडितान् निर्भरं पीडितान् गारलात्साध्वसात् प्रत्नलान्यपि त्यक्तुमिच्छून् पुनः स्वीयदारानपि त्यक्तुमिच्छून् निजप्राणसंरक्षणैकप्रवीणान् कृतं कर्म पूर्वं निजं निन्दतस्तात मातर्मम भ्रातरत्र

स्थितं मां विहायैव किं धावसे पश्य दीनं विषज्वालजालावृतं तात तातेति विक्रोशतोऽपि स्वकान् त्यक्तुकामान् भृशं धावमानान् विसृष्टावमानान् सुरान् भूसुरान् यक्षरक्षोगणानत्र हाहा कथं नो गतिः स्यादकूपाररूपादमुष्मात् कथं कालकूटाद्वयं याम पारं परं चिन्तयानानदः प्राह देवाधिदेवो हरिर्भो सुरा भूसुरा भूतनाथो भवो भक्तिभाजां भयं हन्त्यभीष्टं च भूयो ददाति स्वतः शङ्करस्याङ्घ्रिसत्पङ्कजातं नृणां शंकरं मन्मुखैः कौङ्कुमैश्चन्दनैः पङ्किलैर्निर्मितं पङ्कवृन्दघ्नमुद्दङ्कनं मूलतः संकटस्यातिवैशंकटस्यापि तत्कंकटीकाङ्घ्रियुग्मंकुरुध्वं हृदि क्ष्वेलकीलावलीजालनाशाय गोपालवाचामृतं तन्निशम्यैव ते संनिधिं ते विभो चिन्तयन्तः सुरा अन्तरङ्गे विषैः संतपन्तो मखस्यान्तकारिन् तव द्वारमागत्य सद्वारपालावृतं वारयोषिद्गणैः कीरवाग्भिर्युतं मारहन्तुर्गणैर्वीरभद्रादिभिर्दूरदूरे समुत्सारयद्भिः सुरास्तारयास्मानकूपारमध्यान्न इत्यारवं कुर्वतस्तारतारेण ते गारदावाग्निसन्तारणं नः कथंकारमेतद्भवेदित्यभिज्ञाय निःसारसंसारपारप्रदं नाम विज्ञाय कंजातसंजातमुख्यामरा जंजपूका विभो साम्ब शम्भो मृड त्वं प्रसीदापदब्धेरमुष्मात् झटित्युद्धरेति स्थितास्तत्परिज्ञाय सर्वान्तरङ्गज्ञ दृष्ट्वातिकष्टां दशामप्यमीषां कृपालो तदैवाविरासीद्भवांस्तत्र काकोल संज्वाल-जालावलीलीढ साद्रिद्रुमद्वीपपाथोधिमुर्वीं सफट्फड्रवं संस्फुटन्तीं भुवर्मुख्य-लोकाधिपान् कीलमालापरिम्लानवक्त्रारविन्दानपि प्रेक्ष्य वीक्षाकटाक्षामृतेनैव संशाम्य तत् क्ष्वेलवृन्दं करे बिन्दुसंकाशमावेश्य तद्भक्षयन् निर्जरान् पालयन् नीलकण्ठादिशब्दैरकुण्ठौजसा भूरिवैकुण्ठनाथादिवृन्दारकौघेन तोष्टूयमानो निजं धाम कैलाससंज्ञं तदा निर्गतस्तादृशस्यापि चापत्समूहस्य नाशो भवन्नाममात्रेण जातः शिवातस्त्वदीयेन नाम्नैव सम्यक् स्मृतेनापदम्भोदयो गोष्पदत्वं भजन्ते महादेव तत्तादृशं नाम शम्भो शिवेत्यादि तेऽनारतं वासकृद्वोचरामीति निर्धूतपापे मयि त्वं दयां धेहि भो ॥ २ ॥

इति यदि शिव शङ्कसे कश्चिदन्यं प्रपद्यस्व मत्तोऽधिकं त्वद्गतेः संप्रदातेति तत्रापि चेदं समाधानमाकर्णय त्वं यथाबुद्धि वक्ष्यामि शम्भो मदीयेन वाक्येन कोपो न तेऽस्तु त्वमेवाधिनाथस्त्वमेवासि तातस्त्वमे-वासि माता त्वमेवासि बन्धुस्त्वमेवासि मित्रं त्वमेवाखिलं यच्च भूतं च भव्यं तदित्यब्जमौले रुषा वच्मि किञ्चित्तदीश क्षमस्वेति विज्ञापयाम्यादि-तस्त्वत्त ईशान को वा त्रिलोक्यां महानस्ति तुल्योऽपि च व्यर्थमेत-द्वचस्तथ्यभिन्नं कुतो भाषसे दंधनेनामुना (?) नात्र कोऽपि भ्रमात्त्यक्तुमीष्टे पदाम्भोरुहे ते महादेव नैतादृशोऽहं सुरह्लादिनीमुख्यसेत्वन्तमानीयपायी यतोऽस्मि स्थितिर्वा मृतिर्वा भवत्वीश संसाधयाम्येव पादारविन्दद्वयं न

त्यजाम्येव चेद्दाक्षिणात्यो भवेयं त्यजेयं पुनर्विद्धि मामौत्तराहं ततस्त्वं परामृश्य दुर्दन्धनेनैव (?) मा वञ्चयस्व प्रभो किं च चार्वाकृते पञ्च-वक्त्राणि ते सञ्चितानि त्वया चंचदुद्यन्महश्चञ्चलाक्षीदृशामञ्चलैरीषदुत्कुञ्चितै राजितैश्चञ्चरीकालिवत् पञ्चवक्त्राम्बुजान्यञ्चितानीश चेत् न्यञ्चतां मादृशानां चिरं कूजतां दीनवाक्यानि किं कर्णमायान्ति ते स्वर्ण-रेतस्सदापर्णयालिङ्गिताभ्यर्णगांस्त्वद्गुणान् वर्णयानान् स्फुरद्वर्णवाणीन् नरां-स्तूर्णमायाहि चाकर्णयैषां वचः पूर्णमीशान ते पूर्णता हीयते किं मया याचितस्य प्रदानेन तद्वन्धनेनैव वाग्बन्धनं हंसि मद्बन्धनं नेक्षसेह्यन्ध एवासि किं गन्धदन्तिद्विषन् अन्धतामिस्रहन् सत्यमेतद्वचो नेति चक्षुर्द्वयं पूर्वमुक्तं मयैवेति यद्वा सहस्राक्षशब्देन संस्तूयसे किञ्च पञ्चोत्तरा पङ्क्तिरक्ष्णां तवेति त्रिनेत्रेति साहस्रशीर्षत्वतस्त्वीक्षणानां सहस्रत्रयं दृश्यते तन्मिथो वेदवाचां विरोधस्तवानेत्रतामन्तरा युज[1] ...स्तत्र कप्रत्ययः शिष्यते लुब्धकत्वं तु ते सुप्रसिद्धं विभो तत्र साक्षी पुनस्सव्यसाची भवद्भक्तियुक्ताग्रगण्योऽस्ति हा दैव हा हा बलीयोऽसि यो मेऽधिनाथः पिता तात तातश्च तस्यैव बाधिर्यधर्मेतरित्वान्ध्यमूकत्वलुब्धत्व-मुख्येन दोषव्रजेनावृतिः साम्ब दुःखादिदं वच्मि कोपो न ते कार्य इत्युक्तमेवास्ति भूयः शृणुष्वेश मे भाषितं वस्तुतस्त्वं भवान्निस्तुलः सद्गुणैरस्ति को वा दरो यस्तुलां तावकीं गन्तुमीशो मरुत्वन्मुखो देवतानां गणो विष्णुरेकोऽस्ति वेदैकवेद्यो विभुः सोऽपि धातुः क्षुतान्निर्गतस्य क्षुपाख्यस्य भूमिक्षितः पक्षपातं दधानो दधीचर्षिणा साम्बभक्तेन युद्धं चकाराथ चक्रेण नारायणास्त्रेण तं ताडयामास सर्वेऽपि देवा हरेश्चित्ततोषाय रोषाविलास्तं निजैरस्त्रजातैर्मुहुस्ताडयामासुरेतत् परिज्ञाय विप्रो गृणन्नाम यौष्माकमादाय दर्भस्य मुष्टिं शिवेत्युच्चरन् क्रुद्ध एकैकदर्भेण सर्वास्त्रजातं निजघ्ने हरेरस्त्रजातं तु हुंकारमात्रेण संस्तम्भयामास पश्चान्मुकुन्दो निजाद्देहतः शम्भुबृन्दानि ललाट-नेत्राणि चन्द्रार्धमौलीनि काकोलकण्ठानि देवासुराणां गणानप्यजो निर्ममे तन्निरीक्ष्येश भक्तस्तव स्वीयदेहाद्दराशङ्खचक्राम्बुजाभासि हस्तानि सत्कौस्तु-भोद्भासिवक्षस्स्थलानीन्दिरालिङ्गितानि स्वयं दर्शयामास गोविन्दबृन्दानि वेधो-मुखान्निर्जराणां गणानप्यदो वीक्ष्य नारायणो निर्जितो लज्जितस्तं ननाम स्तुवन् सक्षुपोऽपि स्वकीयां प्रतिज्ञां [सक्त]व्यर्थभूतां समुद्वीक्ष्य सख्ये स्थितः किं च विष्णोर्विधेरप्यभूत् संविवादो महानुत्तमत्वे हरिर्वक्त्यहं श्रेष्ठ इत्यब्जयोनिस्त्वहं श्रेष्ठ इत्याह तद्वादशान्त्यै कृपाकन्द तत्राविरासीद्भवानुत्तमत्वं

---

1. अत्र मातृकायां ग्रन्थपातः ।

मयीत्यूचिवान् तन्निशम्यैव तौ क्रुद्धरूपावभूतां भवन्मायया मोहितौ वेदवृन्दं प्रतिप्रष्टुमिच्छू गतौ तत्र वेदैश्चतुर्भिः पृथक् शम्भुरेवोत्तमः किं वृथा कत्थनं वामिति प्रोक्तमेतन्निशम्यैव तौ जातबोधौ परिभ्रष्टमोहौ भवत्पाद-युग्मेऽञ्जसा पेततुः किंच कृष्णः पुराणप्रणेता पुरा नैमिशे प्राह मौने सदस्यूर्ध्वबाहुर्हृषीकेश एवोत्तमो न त्रिनेत्रादयो निर्जरा इत्थमाकर्ण्य वैयासिकं वाक्यमाहुर्द्विजा गच्छ वाराणसीं व्यास ते विभ्रमस्तत्र विभ्रंशमेष्यत्यहो इत्यदो वाक्यमाकर्ण्य वाराणसीमागतस्तत्र पूर्वोक्तवाक्यं मुनिर्व्याहरत् तत्क्षणादेव सर्वे द्विजा यौगपद्येन तं भर्त्सयामासुरप्येष नन्दी भवत्पार्श्वगो निर्गतः स्तम्भयामास बाहुं तदीयं तथैवाविमुक्तात् बहिः कारयामास गौरीपतेर्नीचतावादिनामत्र वासो न युक्तो यतो मुक्तिदेयं पुरी मुक्तिबाह्यास्तु तेऽथो स सन्तप्तचित्तोऽस्तवीत् त्वां ततः सोऽनुजग्राह नन्दीश्वरस्तद्भवन्तं विनान्यं न पश्यामि कंचित्परं काशिकाधीश विश्वेश्वरा-लोकय त्वं कृपार्द्रेक्षणैः ॥ ४ ॥

॥ इति श्रीभास्कररायकृतं शिवदण्डकं सम्पूर्णम् ॥

---

## १०. ॥ अथ श्रीशिवशतकम् ॥

न्यस्तोदस्तादसीयप्रपदगुरुभरन्यञ्चितोदञ्चितोर्वी-
[1]प्रख्यातक्षीरसिन्धुच्छलनमुकुलनान्दोललीलाकलाभिः ।
प्रस्फारस्वापसौख्यप्रसररभसिनः शेषशय्याशयालो-
राशास्या शश्वदास्तां विषमशरमुषः श्रेयसे लास्यलीला ॥ १ ॥

चूडापीडोडुवोढृस्फुटनिटिलतटीचत्वरोदित्वरोच्चै-
र्ज्वालाजाज्वल्यमानं गलकलितमहानीलपाषाणशीलम् ।
सर्वाङ्गालिङ्गिरिङ्गन्निरुपमसुषमं वेददुर्वेदभेदं (?)
किञ्चिच्चिद्वस्तु वास्तूभवतु हृदि महानन्दसन्दोहसान्द्रम् ॥ २ ॥

आकृत्या कूर्ममर्माविधमखिलनखज्योत्स्नयोत्सारयन्तं
पुंसां हिंसातमिस्रं किसलयममलच्छायया तुच्छयन्तम् ।
बद्धस्पर्धं च सार्धं गिरिदुहितृवपुर्मार्दवोल्लासिकाभिः
वन्दे पादं विभोस्तत्कटकतटनटन्नूपुरस्तैः सयत्नम् ॥ ३ ॥

शैवोऽयं शीघ्रमङ्घ्रिर्विघटयतु सदानन्दनस्यन्दनेऽस्मिन्
गाढोन्मीलत्पदातिद्युतिकबहुतमोवारणे भव्यवाहे ।

---

1. सिन्धूचलन्

सर्वाङ्गेणानवद्ये प्रकृतिसुमधुरेऽम्भोजसाम्राज्यभाजि
भ्राजिष्णौ सत्सहाये जयति यतिमनोमण्डलं द्रागरीणाम् ॥ ४ ॥

ध्येया माधुर्यधारा विभुपदमधुनो ये यदास्वादवन्तः
सन्तः सन्तोषवन्तो मुहुरमृतभुजां श्लाघ्यभाग्यर्द्धिभाजाम् ।
तेषां पुंसां मते सा स्वगुणशतसुधाबाधिका साधुरम्भा-
रम्भस्त्रीबिम्बबिम्बाधरमधुरविधा कल्पतेऽल्पानुकल्पम् ॥ ५ ॥

तद्भद्राण्युद्रणत्कु[द्रुणात्]प्रभुवरचरणं नूनमीशोऽपि यस्मि-
न्नेवंकारं वराभीत्यनवरकरयुग्व्याजतो व्याजहार ।
ये सर्वं खर्वयन्तः प्रविशत शरणं मामकेऽस्मिन् शरण्ये
वैकुण्ठेऽकुण्ठकण्ठीरव इव खलु ते विक्रमेण क्रमध्वम् ॥ ६ ॥

पादौ तावन्धकारे हृदि वहत ययोः प्राज्यराजीवराज्यं
द्वैराज्येनोदवात्सीत्तदुपचितखिदेवात्र निद्रादरिद्रे ।
भृङ्गा झङ्कारकोलाहलमुखरदिशोऽभ्येत्यग[चा]न्तर्विशन्तः
कल्येऽप्युद्यन्मरन्दाभिधविविधधनान्यात्तवन्तोऽपयान्ति ॥ ७ ॥

अन्योन्योद्यद्गुणौघोभयसदृशतया बिभ्रदन्योन्यरागं
पादद्वन्द्वं पुरारेः सुखयति निखिलं दूरविच्छेदतुच्छम् ।
यस्मादुत्पद्यमानं प्रथितपृथुगुणैः पुष्पितं तत्त्रिवर्गी
मुक्तिश्चेति द्विकन्यं स्वयमिह वृणुते भोगिनं योगिनं च ॥ ८ ॥

शर्वाणीप्राणबन्धोः प्रणमत चरणं प्राणितप्राणिवर्गे
लक्ष्मीलीलानिवासायितनिजकटके राजराजाधिसेव्ये ।
नानानीत्या समुद्यत्तरसुजनपदे यत्र राजीवराजे
न स्थाने हन्त जाने विविधगुणनिधौ भक्तमात्रेऽप्यपेक्षा ॥ ९ ॥

योऽसावात्रानुरक्तस्त्रिजगति भजते सोऽतिमात्रं विरक्तिं
तस्मात् सर्वोत्तमं तत्पदनलिनयुगं त्रायतां सर्वशत्रोः ।
सेवाहेवाकभाजां युगपदुपनमद्दिक्पतीनां दशानां
नैतत् सीमाविभागं किमकृत कृतकादङ्गुलीनां दशानाम् ॥ १० ॥

मध्येऽध्वानं निदध्याद्धरचरणयुगं निर्यदाश्चर्यचर्यं
यस्याकृत्यां स्फुरन्त्यां मनसि मुनिजनो द्राङ्निराकारभूयम् ।
विन्देतानन्दसान्द्रं त्रुटितगुणगणो यद्गुणे भाव्यमाने
यद्रागे वीतरागः समभवदपि चाप्राकृतो यत्प्रकृत्याम् ॥ ११ ॥

ऐशौ पादप्रवालौ हृदयपरिसरे ज्ञानवृद्धावलीनां
संक्रीडेतां सहेलोल्लसितसुललितौ पथ्यनेपथ्यवन्तौ ।
यौ मुग्धस्निग्धरूपावतिमृदुलतरौ सस्पृहं दर्शनीया-
वङ्के स्वे निक्षिपन्ती परिचरति चिरं श्रीमदम्बाविलम्बात् ॥ १२ ॥

भूयो भूयो विभाव्यं त्रिभुवनविभवद्वैभवस्याङ्घ्रियुग्मं
निष्कामायात्तकामाय च वितरति यत्प्रार्थितं निर्विशेषम् ।
तत्राद्यः शुद्धबुद्धां धियमथ सहजां प्रेयसा[सी]मर्पयित्वा
यस्मै सर्वानपास्य श्रयति हि तदसावान्तरोऽन्यस्तु बाह्यः ॥ १३ ॥

कल्यं यत्पल्लवं तत्स्वशिरसि विभृयादुज्वलच्छोणशोभं
श्रीरुद्रस्यान्तरुद्यद्विततरसिराभङ्गिभागूर्ध्वरेखम् ।
मुग्धस्निग्धेन येन श्रुतियुवतिरतिप्रेमबन्धानुबद्धा
प्रीत्या प्रत्यादिशन्ती निखिलसुमनसः स्वं शिरः संस्करोति ॥ १४ ॥

शम्भोर्बोभोतु भूत्यै पदमिदमधिकं मञ्जुमञ्जीरनील-
ग्राव्णो जाग्रत्कराग्रैस्तरुणतृणगणैः शाद्वलोर्जस्वलाभम् ।
गावो वीक्ष्य क्षुधार्ता अतिकृतियतिनां तृष्णयास्मिंश्चरन्तः
तस्थुः सुस्थास्तदैव द्रुतगलितपयःपूरनिर्व्यूढभासः ॥ १५ ॥

आस्तां गत्यै पदं तन्मम भृशविपदो भूरिपादस्य शम्भोः
भक्तेभ्यः किं नु पौनर्भवविभवभरं स्वे समादाय सम्यक् ।
तेभ्योऽपौनर्भवर्द्धिं वितरति नितरां तां यदेतत्तथापि
स्वाभेदेनैव चित्रं पुनरपि हि भवं संलभन्ते परं ते ॥ १६ ॥

भर्गाङ्घ्रेस्तुङ्गभावं विमृशत मनसा दुर्गमे पुष्पवद्भ्यां
येनारोहीह यत्नात् स्थिरसुदृढपदं तस्य वैकुण्ठधाम ।
हस्तप्राप्यं किलाष्टापदगिरिरमुना लोष्टवद्दृष्ट आस्ते
तस्याधस्तात् समस्तं जगदपि वलते सोऽपि सर्वोपरि स्यात् ॥ १७ ॥

वन्दे शम्भोः पदे ते यमनियममहाभास्करैः शुष्कपङ्के
नक्षुण्णे वैरिषट्कैः सवननियमनाशुष्मणोष्मायमाणे ।
दोषौघैर्दूरशून्ये हृदयपरिसरे पारिकाङ्क्षीश्वराणां
मन्ये मान्ये किमेते चिरपथिकतयारुण्यतारुण्यपूर्णे ॥ १८ ॥

चण्डीशस्याङ्घ्रिकुण्डं दहतु मदशुभं यत्र रुक्कन्दलीभिः
प्राज्यैराज्यैः समिद्धेऽरुणमणिकिरणज्वालजिह्वालशीले ।

मञ्जीरोदञ्चिनीलोपलकरलहरीचातुरीभूमधूमे
  योगी योगस्रुवेणोद्धतषडरिमयीराहुतीः सञ्जुहोति ॥ १९ ॥

कान्तप्राग्भारभारीसुरमुकुटतटीष्वश्मरश्मिच्छटानां
  भोगाभोगोज्झितानां प्रमदयतु मनः श्रीगिरीशस्य पादः ।
सत्त्वोद्रिक्ते विविक्ते सबलहरिगुहासादिते यत्र षड्भ्यः
  शत्रुभ्यः संत्रसन्ती विशति यतिमतिः सर्वतो वीतभीतिः ॥ २० ॥

संसारारण्यजन्यज्वलनकवलनोत्तालतापाकुलानां
  निर्वाणाय क्षमाया निगमवनखिदां कल्पतेऽनल्पतृष्ण्यै ।
अस्यां ये स्नान्ति सन्तः सपदि विरजसस्ते बभुः सा गिरीश
  श्रीमत्पादाग्रजाग्रन्नखरकरझरीनिर्भरं नः पुनातु ॥ २१ ॥

पुंसां संसारजीर्णालयगतविषयाकारशङ्कारवारै-
  रत्यन्तं धूसराणां तदनुशयवतां मार्ष्टये कल्यतुल्याः ।
अङ्घ्रावारोहणोद्यन्मुनिजनमनसे सम्पतत्तल्पकल्पाः
  कल्पान्तप्रान्तभाजो नखरशिशिररुग्रोचिषां पान्तु वीथ्यः ॥ २२ ॥

संसारग्रावरोहत्तरसुखशिखरिस्वैरसञ्चारभाजं
  चेतोगम्भीरवेदिद्विपमपि शनकैः शिक्षया संविनीय ।
यस्मिन् बध्नाति यत्नाद्यनुप[मसु]गुणैर्योगधाराधुरीणः
  श्रेयस्तुत्यै श्रयेताश्रितविबुधतरोश्चारुमूरुप्रकाण्डम् ॥ २३ ॥

यद्रक्षामीति साक्षादभिलषति दिवश्चक्रवर्ती यतीनां
  शक्रः संसारचक्रं भृशमपवदते यच्च निध्याय बुद्ध्या ।
चक्रीशो मूर्ध्नि धत्ते यदपि च भगवानात्तचक्रोऽप्युपास्ते
  शार्वे सर्वेच्चचक्रे जघनमिति मते मानसं संप्रणक्तु ॥ २४ ॥

योगिप्रज्ञाप्यकामा समभिसृतवती दुर्गमे योगमार्गे
  चञ्चत्काञ्चीव्युदञ्चन्मणिरजनिकरद्योतदीप्ते विविक्ते ।
यस्मिन् कृच्छ्राद्विशन्ती प्रियमिह तु समासादि सद्यो विनोद्य
  स्वैरं नैव व्यरंसीज्जघनसुपुलिनं दीनबन्धोरुपाध्वम् ॥ २५ ॥

शम्भोर्गम्भीरनाभीसरसिगतरसस्यातिशीर्यद्भवान्धोः
  पङ्कैः स्रक्चन्दनाद्यैः कलुषितवपुषः साधु गाहध्वमद्धा ।
यस्यात्रस्यन्महेन्द्रोपलपटलवलच्छृङ्खलोच्छृङ्खलोस्र-
  स्रोतःप्रोतस्य रोमावलिरुपरि परीवाहशोभामुवाह ॥ २६ ॥

मोहकुल्लोभदावज्वलजगदटवीव्याकुलीभूतचेतः
सारङ्गोत्तालजालायितविषयचयच्छेदने शस्तशस्त्री ।
ध्यानाध्वश्रान्तधावन्नियम[नसु]कृशस्यावलम्बाय यष्टिः
स्वेष्टायोत्तिष्ठतां मे शिव तव विमला श्यामला रोमराजिः ॥ २७ ॥

भाव्यास्मिन् रोमराजिर्भवगदविपदेयौषधीवल्लिरास्ते
शाम्यन्त्या अह्नि पुण्ये सुकृतिषु ... खलिनीषु ज्वलन्त्याः (?) ।
एतस्याः काञ्चिरोचिर्मयसलिलभृताचालवालाभनाभि-
र्निष्का निष्कासिभासोऽप्युपरि पगिलसत्स्वच्छगुच्छायमानाः ॥ २८ ॥

श्यामा रोमावली ते मृड मृडयतु मां नाभिकासारसारे
निर्मज्जत्सज्जनान्तःकरणबहिरिता तामसी रेखिकेव ।
काञ्चीरोचिः सभङ्गोदरसरसि सरत्कान्तकान्तिप्रवाहे
सौन्दर्योद्यत्प्रतिष्ठे मरकतघटितन्यस्तयूपाभिरूपा ॥ २९ ॥

रक्षेत् त्र्यक्षस्य वक्षस्तदखिलजगतीसावकाशाधिवास-
प्रोद्दामद्योतमानोदरकुहरपुरीगोपुरोद्यत्कवाटम् ।
स्याच्छुद्धा बुद्धिरेतत्प्रभुवरकृपयास्यान्तरानन्तरायां
योगीन्द्राणां विशेच्चेत् प्रतिगुडकमसौ लोकतेऽशेषलोकम् (?) ॥ ३० ॥

शम्भोः सर्वागमेषु प्रसृमरमहिमा बाहुकल्पद्रुमाली
सापर्णाभोगभूमिर्दृढविहितपदं रोप्यतां स्वान्तसीम्नि ।
आक्रामद्भिः शनैः स्वं त्रुटतु कलिरथो षड्भिरुच्चैरमित्रैः
विश्राम्येदेव जीवोऽपि च परमसुखं प्राप्य संत्यक्ततापः ॥ ३१ ॥

बाहाः स्युर्भद्रबाहा मदनविजयिनो हृत्तटीव्याजभाजः
संसारक्षारसिन्धुप्रतरणतरणेः पुण्यलावण्यवाराम् ।
स्रोतस्यन्तस्तरन्त्या मणिगणकिरणैस्तन्तुसन्तानकल्पै-
रोतप्रोतानुबद्धा अविरतमभितः पातुकाः के निपाताः ॥ ३२ ॥

लुण्टाकाः कण्टकानां दनुतनुजनुषां श्रेयसामायुषां वा
निश्रेणिश्रेणिरुच्चैर्दुरधिगमतमाकुण्ठवैकुण्ठधाम्नाम् ।
गीर्वाणग्रामणीनामभयमुपयतां निर्भरं निर्भिदुर्गाः
चत्वारो बाहवस्ते रतिपतिमथितुर्मङ्गलं बंहयन्तु ॥ ३३ ॥

यानालम्ब्यैव योगात् परमगतिविदः सत्पथादस्खलन्तः
प्रज्ञाचक्षुः पुमांसोऽप्यनवधिविरुधः षड्द्विषो दण्डयन्ति ।

दण्डादण्डीति युद्धं विदधति च यमेनोग्रदण्डेन तस्मा-
दुद्दण्डैर्बाहुदण्डैर्मम मदनमुषो दण्ड्यतां पापपण्डम् ॥ ३४ ॥

ताम्रानम्रांशुपात्रं करमनिशमसावूर्मिकांशूर्मिकार्णः-
पूर्णं गृह्णन्नशीर्णाक्षतवलयवलद्वारुडाश्मोस्रदर्भैः ।
युक्तं कीर्तिप्रसूनैः सुरभितमभितोऽनल्पसङ्कल्पितार्थो-
त्सृष्ट्यै कृत्स्नस्य सङ्कल्पयति भयभुजः श्रीभुजं तं भजेत ॥ ३५ ॥

शेषाधीशस्य शय्यायुगयुगलस्यानुरूपस्वरूपा
देहव्यूहप्ररोहा इव भुजगिभुजा भावनीया विनीतैः ।
स्वाराजो गर्वसर्वस्वपरिपणचतुर्दन्तदन्तीन्द्रशुण्डा-
दण्डाश्चत्वार एते तत इयमुचिता पुष्करश्रीर्यदन्ते ॥ ३६ ॥

क्रोडक्रीडन्मृडानीगलतलमिलिताः पुण्डरीकस्रगाभा
ज्ञानोन्मीलन्मुनीनां नयननिपतिताः साधु सौधप्रवाहाः ।
रूक्षोद्यद्राक्षसान्तः किरणपरिसरे कल्यशल्यायमाना
दोषो भूषाविशेषांशुभिरसमदृशोऽतीव पीवान ईड्याः ॥ ३७ ॥

वर्णानां यच्चतुर्णां युगपदपि चतुर्वर्गमुत्सर्गसिद्धं
चक्रे शक्रेडिताङ्घ्रेस्तरुणितकरुणं तच्चतुष्पाणि पातु ।
आमृष्टत्रैपुरस्त्रीनिटिलतलमिलत्सान्द्रसिन्दूरबिन्दो
रागैर्मत्वेव जुष्टं वलयसितशिलाः स्वैः करैर्यन्मृजन्ति ॥ ३८ ॥

आक्रीडक्रोडलोभप्रभृति गजगणो यूथनाथायमानं
मोहाह्वानं महेभं रयभवविधुरद्राविसत्त्वे मदीये ।
अन्तः कान्तारमध्ये चिदभिधविबुधानोकहोन्मूलनोच्चै-
र्मूलं प्रोदञ्चि पञ्चाननखरसृणिश्रेणयः स्राक् शृणन्तु ॥ ३९ ॥

आम्नायाम्नातधाम्नो निगमपरिपणं तौ पणायेत पाणी
बिभ्राणौ यौ वरं चाभयमुभयमुभौ प्राणिनां प्रीणनाय ।
ऊर्ध्वं चाधःस्थितानां सुरनरफणिनां वीक्षणक्लेशभाजां
निर्व्याजं सज्जमानौ किमु नयनपथे पुण्यकारुण्यवेगात् ॥ ४० ॥

श्रैकण्ठः श्रीकुठारो मदघवनघनीभूततां जङ्घनीता-
द्दक्षाविख्यातदीक्षां सततधृतवतः श्रीविभो रोषवह्नौ ।
योऽयं हेतासमेता सुरवरशिरसां सत्पुरोडाशभासां
हाहास्वाहाकृतीनां विदधदथ जगत्स्वच्छयत्येव सत्यम् ॥ ४१ ॥

हस्तोद्रिङ्गत्कुरङ्गः कृपयतु स विभोरीदृशालिङ्गभङ्ग्या
यो माने चापमाने समदृगनिवसन् संसरन्नेक एव ।
पुण्येऽरण्ये तरण्यंशुभिरपि जलमुग्घोरधाराभिरारात्
ताड्योऽप्यस्यद्विकारः स हि भगवदुपादेय इत्यादिशत्किम् ॥ ४२ ॥

श्रीशम्भोः कण्ठकम्बुर्भवतु भवभिदे पूतमाम्नायवर्णैः
पूर्णं लावण्यपूरैर्मनसि मुनिजनो यन्निधायार्घ्यपात्रम् ।
स्वस्मिन् संगृह्य तस्मादमृतदृगालोककल्लोलसेकैः
संस्कुर्वन् पूज्यवस्तून्यपि निकटचरप्रोक्षणीपात्रमास्ताम् ॥ ४३ ॥

तत्कण्ठोद्धट्टनोत्थज्वलनकणगणैरुल्बणं यस्तडित्वान्
तत्कान्तानां समन्तात् सकरुणरुदितैरूर्जितं चातिगर्जन् ।
तासामस्रं च वर्षन्ननवधिपरशोः संस्मरामः स्मरारे-
रुग्रक्रव्यादवर्गे प्रलयजलधरस्येव घोरायितानाम् ॥ ४४ ॥

श्रीश्रीकण्ठस्य कण्ठं परिचरत चिरं साधु लेखाभिलेख्यं
व्यानद्धं कालपाशैर्गरगिलनमिलच्छ्यामलिम्नश्छलेन ।
वात्सल्योत्सेकदर्शं निजभजनयुजां कालपाशावलीनां
योऽजस्रं स्वेन विस्रंसयति जगति तेऽस्मादपाशाः प्रथन्ते ॥ ४५ ॥

आद्याविद्याज्वरार्ता बहुविषयरसैर्निर्भरं पूर्णगर्भाः
प्रोद्यन्मिथ्याद्यपथ्याहितपरिणतयोऽनर्थवाचो विमूढाः ।
यां पीत्वा चित्तपात्रैरथ विगततृषस्त्यक्ततापाः स्वतिष्ठन्
श्रीकण्ठस्याश्रये तां भवभयभिषजः कण्ठकालोललक्ष्मीम् ॥ ४६ ॥

ग्रीवां श्रीवामदेवीं स्वहृदि कलयता ध्याननिध्यानभाजां
मध्यश्यामापदेशात् कलिकलुषमिवाच्छिद्य हृद्यावहन्तीम् ।
उद्यन्नानामतेनाङ्गजविततिभृता निर्विरोधं त्रिरेखा
चातुर्वेदेन यास्यां निजजनकभुवि स्वस्य सीमा विभक्ता ॥ ४७ ॥

तं कण्ठं शूलपाणेर्नम समुपनमन्मार्गणेऽनर्गलेन
द्राङ्निर्गच्छत्त्रिवर्गप्रसरणसरणीराददानं त्रिरेखाः ।
त्रय्या रज्ज्वा गुणानां चरणशरणिनां बन्धनं मोचयित्वा
स्वात्मन्येतां गृहीत्वा वसति किमु पुनर्बन्धनाशङ्कया यः ॥ ४८ ॥

कण्ठे तिष्ठेत मुक्त्यै मदनमदभिदः प्राङ्निलिम्पानुकम्पा-
संपातैः पारवश्याद्गरलमिव गिलन् क्षुब्धदुग्धाब्धिलब्धम् ।

भक्ताधीनोऽधुनैषां विषयविपरसान् यो भवाब्धेः प्रसूता-
नत्तीतीदं गराणां गिलनगुणनिकापाटवज्ञापटीति ॥ ४९ ॥

कण्ठः सोत्कण्ठशक्तेः परिलुठतु हठाच्चित्तपीठोपकण्ठे
कम्बोः किं वानुबिम्बः किमसमसुषमासीमविश्रामधाम ।
आलेख्यालेखरेखात्रयरुचिररुचाभूषि भूषाविशेषो
मध्योद्यच्चारुगारुत्मतमणिसमरुक्कोमलश्यामलो यः ॥ ५० ॥

गौरीगाढोपगूढैः प्रतिफलितमिदं शस्तकस्तूरिकायाः
पङ्कं शङ्के शशाङ्काभरणगलमिलन्नीलिमा शीलनीयः ।
रोलम्बानां कदम्बं मुनिनयननिभं संततामोदलाभे
लोभाद्यस्मिन् पतित्वा न खलु पुनरुपावर्तितुं कष्टमीष्टे ॥ ५१ ॥

शम्भोः शं भो दिशेद्वो भवदवविधुराः कण्ठरुग्वर्षुकाभ्रं
मुक्तास्रक्सद्बलाकेऽनवरतविलसत्पुण्यलावण्यनीरे ।
ग्रैवेयव्यग्रनानामणिकिरणगणैरिन्द्रचापाभिरूपे
यत्रोद्यद्विद्युदास्ते गिरिदुहितृपरीरम्भसंरम्भिबाहुः ॥ ५२ ॥

गुच्छावल्यन्तरच्छच्छविविभवमहानीलशैलोपले [मे] यां
मध्येकण्ठस्य कुण्ठेतरतरुणघनश्यामशोभां प्रतीमः ।
यो योगोद्योगभाजां विषदभरनसन्दिग्धदुग्धोपलब्धेः (?)
स्वान्तस्यान्तर्निलीनोऽधिगमयति निजाकारसाकारभावम् ॥ ५३ ॥

भस्मस्मेरत्रिपुण्ड्रोज्ज्वलनिटिलतटं बिम्बसंवादकोष्ठं
निर्नीकाभस्वनासाश्वसनबहुगुणं जैत्रनेत्रत्रयीकम् ।
अम्भोजाभ्यर्णघूर्णद्भ्रमरपरिकरभ्रान्तिभृच्छ्मश्रुलेखं
भो भोः शम्भोर्मुखाम्भोरुहमनुरहसं चेतसा चिन्तनीयम् ॥ ५४ ॥

ग्रैवेयोदग्रजाग्रन्मणिघृणिभिरथो मौलिमूलोपलानां
रोचिर्वीचिप्रपञ्चैः परिधिविधिरधिष्ठीयते यन्मुखेन्दौ ।
बिभ्रद् भ्रूविभ्रमाङ्कं स्मितसितलसितप्रांशुदन्तांशुराशीन्
वर्षन् पीयूषवर्षं दिशि दिशि दिशतादेष हर्षप्रकर्षम् ॥ ५५ ॥

स्वेनासीम्ना महिम्ना यदिदमुडुपतेर्मण्डलं मङ्क्षु जित्वा
जीवग्राहं गृहीत्वा तमथ सुरसरिल्लोलकल्लोलपूरैः ।
भालाक्ष्णो ज्वालजालैरपि विषमतमे (?) क्वचित् स्थापयित्वा
क्रामं क्रामं क्रमेण क्रशयति तदिहोपास्यतामैशमास्यम् ॥ ५६ ॥

पात्रं नित्यापचित्या अथ कमलवनोज्जासनो विप्रयोगे
यो यं भास्वत्स्वरूपो वहति किल सदा यामिनी रूढभासः ।
तत्तादृक्त्कारकान्तः परमहिततरोऽप्यन्धकारातिरोची
राजद्वक्त्राच्छधामा स महिमभरितस्ते मुदे द्रागुदेतु ॥ ५७ ॥

अञ्चेद्यः पञ्चकं तत्सुमतिरतिमहच्चैव वक्त्राम्बुजानां
क्वासीत्तस्य त्रसन्ती शिर उपरि नरीनृत्यते पञ्चता सा ।
संचंचत्पंचकं तद् भृशवशमयते चेद्धतामिन्द्रियाणां
दुस्साराणां शराणां तदपि शिवरिपोर्निर्जिहीते तदन्तम् ॥ ५८ ॥

स्मर्या बालेन्दुमौलेर्विशदतरसरत्सुस्मितस्यन्दि चन्द्-
त्पीयूषासारसङ्गाद् द्विगुणमधुरताधोरणी साधरस्य ।
आस्वाद्यैनां मुनीनां सवनजममृतं यज्वभोज्यं परं य-
द्दिव्यैराद्यं द्वयेऽस्मिन्नरुचिरुदयते तोषलेशावभासे ॥ ५९ ॥

तां दन्तश्रेणिमुक्तास्रजमसमदृशो हस्तसादेव कृत्वा
भक्त्यात्युच्चैर्जपन्ती मुनिवरजनता साधयेन्मोक्षलक्ष्मीम् ।
निध्यायाध्यास्यमानां हृदयपरिसरे संयमोच्चैर्धनानां
यां तत्तद्रत्नवृन्दं चपलतरमनो लज्जया निर्जिहीते ॥ ६० ॥

घोणावंशोऽस्य शस्यस्तिलकुसुमतुलामाददानोऽयमेवं
वादो लोकापवादो न हि तिलकुसुमैराप्यतेऽमुष्य गन्धः ।
यस्याम्नायात्मकानां श्वसितसुमरुतां भव्यसौरभ्यलोभाद्
यत्ता रोलम्बमाला भृशमसृणमषीचीर्णवर्णायितास्ते ॥ ६१ ॥

दृष्टिर्भव्याय भाव्या सरभसपतितां यां विभोर्भक्तिगात्रे
दृष्ट्वानन्दादमन्दोद्यतनयनजलैः कण्टकैः संकटे च ।
नार्हन्तीं क्वापि गन्तुं बुधविबुधदृशस्तत्र साजात्यहार्दा-
द्धस्तग्राहं निनीषादरभरभरिताः संभ्रमात्सम्पतन्ति ॥ ६२ ॥

देवश्रेणीषु गौरीवदन इव तमोनोदने मोदमाना-
स्तस्याश्चञ्चद् व्युदञ्चत्कुच इव सुचिरं लोलुपा भक्तपङ्क्तौ ।
किञ्चित्संचारिचेलाञ्चल इव जघनेऽकिञ्चने व्यग्रतोग्रा
नानाभावेन भव्यास्त्रिपुरहरदृशो निर्भरं भावनीयाः ॥ ६३ ॥

या सोदर्येव तौल्यान्महिमनि चतुरो वर्गसर्गान् स्वसंख्या-
वैषम्येणाविभज्यान् जनकचिरचितद्रव्यवत्पाल्यमानान् ।

साधारण्यादनार्थं वितरति नितरामग्रतः स्थायुकेभ्योऽ-
न्योन्यस्पर्धाभिगर्धादिव मदनमुपः सास्तु जैत्री त्रिणेत्री ॥ ६४ ॥

श्यामोद्यन्मध्यसीमारुणिमतरुणिमालिङ्गितापाङ्गरङ्गं
स्मर्तव्यं तत्परत्रोल्लसितसितरुचा रोचमानं त्रिचक्षुः ।
एकैकेन त्रिलोकीकृतिभृतिविहृतीः कर्तुमादायि मूर्तं
त्रैगुण्यं किं नु मन्ये नयनविलसिताधीनसर्वक्रियस्य ॥ ६५ ॥

गावो भावोपरक्तं झटिति पशुपतेः साधुबोधाधिरोधात्
शष्पैर्दुर्वासनाभिः किल कलिलतमे मामकान्तश्चरन्तु ।
अत्यच्छान् भक्तवत्सान् स्थिरसुदृढतरं यत्र संनह्य चोह्ये
या दुग्धानीव दुग्धा विविधमभिमतं योगदग्धैर्विदग्धैः ॥ ६६ ॥

दृष्टिं तां विश्वसृष्टेरतिशयललितां ध्यायतामात्मबुद्ध्या
बद्धा देवेषु सिद्धादिषु च बहुचिरं संभ्रमाद्या भ्रमन्ती ।
मूर्छामृच्छत्यतुल्यां निजजनजनकाङ्क्षे विशङ्कं पतित्वा
तत्र प्रीत्यातिहर्षाश्रुभिरथ सुखिता प्यायते प्यायतेऽच्छम् ॥ ६७ ॥

शोभाब्धेरुज्जिहानां चिरमुपचरितां चामरालीमरालै-
र्भक्तस्वान्तर्मिलिन्दस्वदितसुरचितामन्दचन्दन्मरन्दाम् ।
उच्चैर्वाचंयमानां विषयविसृमरज्ञानधारामृणालां
चक्षुर्नालीकपालीं हृदि वहत विभोस्तापशान्त्यै नितान्तम् ॥ ६८ ॥

लक्ष्मीवत्पक्ष्मलेखं श्रय विषमदृशोऽनुक्षणेनेक्षणं त-
त्सुस्निग्धश्यामधामोत्तरलतरपरिष्कारकृत्तारकं यत् ।
भास्वत्सिन्दूरकेन्दीवरवरविधया श्वेतरक्तासितेति
त्रैवर्णोदीर्णजन्यद्युतिततिविततं सर्ववर्णाश्रयोऽपि ॥ ६९ ॥

शम्भोर्नम्येत वामेतरनयनमजस्रं भवोद्दामधामा
घर्मांशुः स्वेतरैस्तैस्तरणिभिरननुष्ठेयमेवानुतिष्ठन् ।
स्वेषामन्तस्समन्ताद्विततततमतमोमर्मनिर्मन्थकर्मा
शिष्टानां विष्टपानां त्रयशयविषयान् व्यञ्जयत्यञ्जसा यः ॥ ७० ॥

दृष्टिर्भाव्यापसव्या तरणिरियमहो कर्णधारत्वमस्याः
पश्यासौ पारतीरं भवनिभजलधेः पारकांक्षित्वभाजः ।
नित्यानित्यादिसक्तानुपहृतभजनैकाग्रताकल्यमूल्यान्
धन्यानन्यानपेक्षं गमयति निगमप्रान्तराश्रान्तपान्थान् ॥ ७१ ॥

लीलालोलाञ्चलाल्पारुणिमधवलिमद्राक्चलन्निश्चलेन्द्र-
स्वाराज्यं प्राज्यधामादिभिरभिलषितस्निग्धमुग्धावलोकम् ।
रक्षेत्त्र्यक्षेन्दुनेत्रं निजजनममृतेनोक्षयाप्याययद्य-
द्योगीन्द्रानन्दसिन्धुं स्थगयति भृशमध्यात्मलेशोदयेन ॥ ७२ ॥

चण्डाग्निं दृष्टिकुण्डे स्मर निटिलतटीमण्टपे हिण्डमानं
कल्पान्तान्त्येष्टियज्वा समुदितजगतीसामिधेनीसमिद्धम् ।
यस्य ज्वालाह्वजिह्वामनु मदनमयोदीर्णपूर्णाहुतीनां
जुह्वत्प्रह्वातिभासां निजपरुषरुषां शान्तिकर्मान्तरोऽभूत् ॥ ७३ ॥

कामक्रोधादिबाधादुदियदुरुमरुद्वेपमानोऽतिमज्जन्
संसारापारवारांनिधिषु चिरमघादुच्चरद्गद्गदोक्तिः ।
जाड्येनाढ्यंभविष्णुर्यदुपगमवशादस्तजाड्यादिरास्ते
सुरथः स श्रेयसे स्तान्निटिलनयनतामाश्रयन्नाश्रयाशः ॥ ७४ ॥

लालाटी दृष्टिरिष्टं झटिति घटयतु द्रष्टृपंक्तौ सुखाना-
मद्वैतं भोक्तुमिच्छौ निजसुकृतपरीपाकपात्रानुरूपम् ।
भूयः प्रेङ्खत्कटाक्षामृतमतिविषमं व्युत्क्रमेणादधत्याः
अत्याश्चर्यं तथापि स्थितिरतितपना जागरूकास्ति यस्याः ॥ ७५ ॥

कल्पान्तोत्तालकालानलकुटिलचलज्ज्वालजिह्वाकरालं
तापार्तं शीलशीलं सजलजलमुचां शीलयद्यत्तथापि ।
तार्तीयीकेक्षणं तत्स्मरति मखमुषो दग्धकामादमुष्मा-
दाश्चर्यं वीतकामाः स्वयमपि मुनयः पूर्णकामा भवन्ति ॥ ७६ ॥

ज्योतिः सर्वातिशायिप्रभुनिटिलतटीलक्ष्मणोऽभीक्ष्णमक्ष्णो
बुद्ध्या दध्यादमुष्मिन् यतिवरदहरव्योमनि भ्राजमाने ।
क्व क्लेशार्कप्रकाशोऽपसरति विषयज्योत्स्नया वाक्यलीनं
किं वान्यद्यस्य पश्चादनुसरदवचोगोचरं ज्योतिरास्ते ॥ ७७ ॥

रौद्रे भालाक्ष्ण्यभिख्या मदनपितृवने भैरवी भावनीया
सिध्यादद्वैतवेदागमसुगममतिर्भक्तिमाद्वींकमद्यैः ।
जीवं यस्यै निवेद्यामृतमथ किमपि प्राश्य दूरे च कृत्वा
प्रावृत्याक्षेपमेतद्विषयसमुदयं विस्मरन्नेव माद्येत् ॥ ७८ ॥

अक्ष्यैरुस्रैः स्ववर्ग्यैर्व्यवहितकृपणानुग्रहव्यग्रभाव-
प्रादुर्भावाय याभूत् किल तदितरयोर्नेत्रयोरूर्ध्वमास्ते ।

केनानाम्नायधाम्ना ज्वलति जगति च श्रीप्रभोश्चोपमौलि
ग्राह्या सा भालदृष्टिः कृपयतु भवतो भीतभीतान् भवार्तैः ॥ ७९ ॥

भैमं भालाक्षि भाव्यं मुनिजनमनसां भक्तिसाम्राज्यभाजा-
माजन्माखण्डदण्डायितसुकृतशतेनाप्यमध्यू षुषां यत्
श्वेतच्छत्रायमाणा शिशिरकरकला कोटिकोटीरहीर-
ज्योतिश्चन्द्रातपाभश्चलविततकरे कुण्डले चामरे द्वे ॥ ८० ॥

खद्योतद्योतवद्योऽहनि बत विशतां शीततामागतोऽसौ
क्रूरः कालाग्निकीलो भव विभवनिभो यस्य वीर्यादशीर्यत् ।
संवर्तोद्वर्तनृत्यद्द्युमणिघृणिघृणां प्रस्तुवन्तं वितन्त्र
चन्द्रापीडे तमीडे कटुतरकुटिलं नैटिलाक्ष्णः कृशानुम् ॥ ८१ ॥

चण्डीकान्तस्य गण्डस्थलममलतलं राजतादर्शदृश्यं
नामास्तां दर्शनीयं हृदि बत यदहो यत्र योगीन्द्रचित्ते ।
यद्यासीत्सांमुखीनं क्षणमिदमुदरे देशतः कालतो वा
सोत्कर्षं विप्रकर्षन्नपि विषयचयः प्रत्यहं प्रत्यफालीत् ॥ ८२ ॥

सत्रध्रुद्दृश्रोत्रकूपं कलयत ललितं सा मनीषा मुनीनां
यत्प्रावीण्येन पूर्वं तटनिकटचरीसंसृतेः खिन्नखिन्ना ।
चातुर्यप्रेर्यमाणा यमनु निपतिता न त्यजेद्यत्समाधिं
दूरे कृत्वा कलिं तत्त्रिजगति विदितं दीर्घदर्शित्वमस्याः ॥ ८३ ॥

बालेन्दुं चन्द्रमौलेः स्मर सततमसौ शाम्भवोऽस्मीत्यहंयुः
प्रोद्यन्नास्ते ममास्तेऽप्ययमिति तरणावीर्ष्यया कर्शितांशुः ।
मुक्तिद्वाराधिकारं तदधिकमतनोद्द्वादशात्मा स चासी-
न्नानात्मा स्यामितीच्छुः स्वनतितनिकृतश्चन्द्रचूडानकार्षीत् ॥ ८४ ॥

स्वर्गाद्गङ्गाप्रवाहः सगरसुतचिताप्यायनायायमानोऽ-
शंक्यं तत्साहसिक्यं त्विदमिति विमृशन्नध्वमध्येऽप्यधीत्य ।
सन्तप्ताप्यायन यत्सविधमधिवसन् कृत्यकृत्यै समागात्
सांहःसङ्घातहत्यै रजनिकरकला शाम्भवी बोभवीतात् ॥ ८५ ॥

न व्याधिव्याधबाधा न च भवदवजा ज्वालमाला नवाला
वालाह्वा वागुरा वेति च विमृश मनःकीर रे नीडयास्याम् ।
सांनिध्यात्सिद्धसिन्धोरतिशयसुभगंभावुका भावुकानां
मूलं नानाफलानां प्रलयनटजटाजूटकूटाटवीयम् ॥ ८६ ॥

भाव्या भावाः कपर्दाः मुकुटपुटनटद्धेमरुग्वल्लिकल्पा
योगीन्द्रस्येन्द्रियाणामुपयमनकृते रज्जवः सज्जमानाः ।
ध्यानाध्वन्यध्वनीनाः क्वचिदपि न कदा संशयानाशयानां
दुःसर्पा एत एवं यदुदभवदहो नित्यनिर्बाधबोधः ॥ ८७ ॥

सर्वाखर्वाघसङ्क्रथनकृतिकृते हैमनाराचधारा
स्फोटत्कोटीरकोटिर्नटतु पटुतरं हृत्तटे धूर्जटेर्मे ।
नाडीनामेकधाटी यदियमृषिततेः प्राणसन्धारणीना-
मस्यां पश्यन्ति विश्वे प्रतिनियतमतो जीवनस्यानुबद्धम् ॥ ८८ ॥

त्रैयक्षे जूटकूटे विहरतु हृदयं ब्रह्मवद्यन्नमेयं
तत्तादृग्ब्रह्मलोकादपि परमसुखस्यास्पदं च प्रतीमः ।
यद्भक्त्या ब्रह्मलोकात् त्रिदशसरिदुपागत्वरी सत्वरेण
स्वच्छन्दं स्यन्दमाना चिरमिह परतो गन्तुमीहामहासीत् ॥ ८९ ॥

अभ्यारोहन्तु तेऽन्तःकरणतरुवरं प्राणिसत्कर्मराजी
बीजात्सञ्जायमानाः पुरविजयिजटाकल्पवल्लीमतल्ल्यः ।
यासामाबालीलावलिशशिकलया याश्च सङ्कल्पपूर्त्यै
कल्पन्ते निर्विकल्पं सकलसुमनसां चाश्रयाः सत्फलानाम् ॥ ९० ॥

श्रीपक्षीन्द्रध्वजेनादृतमहिमतते रक्षणक्लेशपक्षो
हंसोत्तंसाधिकारं मनसि बहुचिरेणेप्सितं वीप्सयामि ।
भक्त्या यं पक्षयित्वा गतिविदथ गणोऽपक्षतीनां यतीनां
धिक्कृत्वा षड्विपक्षान् सुखतरमयते तत्पदं तादृगुच्चम् ॥ ९१ ॥

ब्रह्मज्योतिर्विवर्तायितनिजसलिले जह्नुजे स्वामिशीर्ष्णो
सीमोपस्कारकारिण्यधिनिरयरयो वार्यतामार्यवर्ये ।
यत्त्वं दुर्बोधतत्त्वे भगवति भवतीं ये नमन्तीह सन्त-
स्तेषां मूर्धानमारोहसि तव तदयं दुर्विभावः स्वभावः ॥ ९२ ॥

आरोढुं ब्रह्मधाम स्फटिकमयमहोत्तानसोपानपाली
ब्रह्माण्डे ब्रह्मणा या श्रुतिसुरसुरभेर्दुग्धदुग्धायमाना ।
सम्पद्यन्ते यदेते विभुमुकुटमणे देवि ते वामदेवे
सम्बन्धस्यानुबन्धात्फलमखिलमिदं जह्नुकन्येऽद्य मन्ये ॥ ९३ ॥

यो योऽपूप्लन् सुतप्तं निजघनवृजिनैर्निर्भरं दुर्भरत्वा-
दूर्ध्वं ते यान्ति धौताखिलमललघवो यत्पृषत्स्पर्शलेशात् ।

आनन्दाद्वैतपद्या पथिकनिजजनो ब्रह्म सब्रह्मचारी
गाङ्गः पूरः पुनीतां प्रभुतनुरुचये नित्यदत्तस्वहस्तः ॥ ९४ ॥

सा त्रिस्रोताः पुनीतां त्रिभुवनजनतापावनी जीवनीया
वैकुण्ठे तन्निनीषारभसपरवशत्वाद्बहिर्भूय तस्मात् ।
ये जिह्मं ब्रह्मलोकं प्रतिजिगमिषवस्ताद्दशानां महेश-
स्याङ्घ्रेर्मूलं हि मूलायतनमिति मतेर्नूनमत्रागतास्ते ॥ ९५ ॥

गौरीभर्तुः शरीरं विमृशत सुषमासीमरत्नाकरेऽस्मिन्
संमीलद्धृष्टदृष्टिश्वसनततितदेकाग्रजाग्रन्नितान्तम् ।
मज्जन्तो दासवर्या हृषिततनुरुहाः कम्पसम्पन्नदेहा
लब्ध्वा चिन्नूत्नरत्नं कथमपि सुचिरेणैव निर्यान्ति हन्त ॥ ९६ ॥

शश्वत्कस्मैचिदस्मै दुरधिगमतमैश्वर्यभाजे नमस्ते
गौरीजानेऽर्धजाने कियदभिलपतेऽकिञ्चनानां चयाय ।
यत्त्वं सायुज्यचर्यां वितरसि तरसा सर्पकोटीकरोटी-
मालाहालाहलाद्यैर्धनवत इह ते दुर्गतत्त्वं हि बीजम् ॥ ९७ ॥

मुक्तिश्चाधूलिकेलिप्रथमसहचरीवास्ति यस्याश्च वश्या
दासीवासीत्त्रिवर्गी विधिवधुपदवी साधुसैरन्ध्रिकेव ।
त्यक्त्वातङ्कं यदङ्के दुहितृवदनिशं चेष्टते चाष्टभूतिः
सा भक्तिर्भक्तबन्धौ जगदशिवशिवे श्रीशिवे नित्यमास्ताम् ॥ ९८ ॥

पायादायासखेदक्षुभितफणिफणारत्ननिर्यत्ननिर्य-
च्छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम् ।
अभ्रान्तभ्रान्तचूडातुहिनकरकलालीकनालीकनाल-
च्छेदामोदानुधावद्द्रुहिणरथखगं धूर्जटेस्ताण्डवं वः ॥ ९९ ॥

शीर्षाणि न्यञ्चि किञ्चित्त्वयि विदधति ये तेष्ववाञ्चेद्विरिञ्चि-
र्यस्तावत् स्तावकस्ते तममरपरिषद्व्यस्तमस्ता स्तुवीतात् ।
धत्ते चित्ते प्रमत्ते य इह तव पदं तं च मध्येसमाधि
ध्यायेद्योगीन्द्रवृन्दं प्रणतसुरतरो तं भवन्तं प्रपद्ये ॥ १०० ॥

नाट्यं खट्वाङ्गपाणेर्मनसि नटयताद्विभ्रमेण भ्रमीणा-
मामूलच्छिन्नबन्धभ्रमदखिलजगदारुणं प्रस्तुतेऽस्मिन् ।
घूर्णद्भ्रूचक्रघृष्टोत्कटकमठमहापृष्ठनैष्ठुर्यनिष्ठा-
निष्ठ्यूताच्छिन्नधारज्वलनकणकणैर्दीपिकाकृत्यमासीत् ॥ १०१ ॥

उन्मीलत्कम्पसम्पच्चलदचलमिथःस्पष्टसंघट्टरुग्ण-
ग्राव्णां निर्घोषदैर्घ्यैः पटुपटहरवाडम्बरोऽपि व्यडम्बि ।
उद्वेलोद्वेल्लदब्धेः समसमयवलल्लोलकल्लोलतालै-
रुत्तालाताल्लीलाभयसमुपनमद्ब्रह्मकाकुश्च गीतिः ॥ १०२ ॥

॥ इति श्रीशिवशतकं सम्पूर्णम् ॥

---

## ११. ॥ अथ श्रीशिवस्तुतिः[1] ॥

त्रैलोक्यं सकलं त्रिकालविषयं सालोकमालोकितं
साक्षाद्येन यथास्वयं करतले रेखात्रयं साङ्गुले ।
रागद्वेषभयप्रियान्तकजरालोलत्वलोभादयो
नालं यत्पदलङ्घनाय स महादेवो मया वन्द्यते ॥ १ ॥

दग्धं येन पुरत्रयं शरभुवा तीव्रार्चिषा वह्निना
योऽपानृत्यति मत्तवत् पितृवने यस्यात्मजो वा गुहः ।
सोऽयं किं मम शङ्करो भयतृषारोषार्तिमोहक्षयं
कृत्वा यः स तु सर्ववित्तनुभृतां क्षेमंकरः शंकरः ॥ २ ॥ ?

यत्नाद्येन विदारितं कररुहैर्दैत्येन्द्रवक्षस्स्थलं
सारथ्येन धनञ्जयस्य समरे योऽमारयत्कौरवान् ।
नासौ विष्णुरनेककालविषयं यज्ज्ञानमव्याहतं
विश्वं व्याप्य विजृम्भते स च महाविष्णुर्विशिष्टो मम ॥ ३ ॥

यो जग्ध्वा पिशितं समत्स्यकबलं जीवन्ती शून्यं पदं (?)
कर्ता कर्मफलं न भुंक्त इति यो वक्ता स बुद्धः कथम् ।
यज्ज्ञानं क्षणवर्ति वस्तु सकलं ज्ञातुं न शक्तं सदा
यो जानन् युगपज्जगत्त्रयमिदं साक्षात्स बुद्धो मम ॥ ४ ॥

पूर्वस्यामुदपादि रागबहुलं चेतो यदीयं पुनः
पात्रं दण्डकमण्डलुप्रभृतयो यस्याकृतार्था स्थितिम् ।
आविर्भावयुतं भवन्ति स कथं ब्रह्मा भवेन्मादृशं
क्षुत्तृष्णाश्रमरागरोषरहितो ब्रह्मा कृतार्थोऽस्तु नः ॥ ५ ॥

---

1. इयं स्तुतिः शिवविष्णुब्रह्मबुद्धपरा, अनन्वितपदार्था च भवति ।

ब्रह्मा चर्माक्षसूत्रीसुरयुवतिरसावेशविभ्रान्तचेताः
शम्भुः खट्वाङ्गधारी गिरिपतितनयापाङ्गलीलानुबद्धः ।
विष्णुश्चक्राधिपः सन् दुहितरमगमद् गोपनाथस्य मोहा-
दस्मिन् विध्वस्तरागो जितभयमरणः कोऽयमेष्वाप्तनाथः ॥ ६ ॥

यो विश्वं वेद वेद्या जनभजलनिधेर्भङ्गिनः पारदृश्वा (?)
पौर्वापर्याविरुद्धं वचनमनुपमं निष्कलङ्कं यदीयम् ।
तं वन्दे साधु वन्द्यं सकलगुणनिधिं ध्वस्तदोषं द्विषन्तो
बुद्धं वा वर्धमानं शतदलनिलयं केशवं वा शिवं वा ॥ ७ ॥

ईशः किं छिन्नलिङ्गो यदि विगतभयः शूलपाणिः कथं स्यात्
नाथः किं भैक्षचारी यतिरिति स कथं सङ्गनः सात्मजश्च ।
आर्द्राजः किं त्वजन्मा सकलविदिति किं वेत्ति नात्मान्तरायं
संक्षेपात्सम्यगुक्तं पशुपतिमपशुः कोऽत्र धीमानुपास्ते ॥ ८ ॥

नाहङ्कारवशीकृतेन मनसा न द्वेषिणा केवलं
नैरात्म्यं प्रतिपद्य नश्यति जने कारुण्यबुद्ध्या मया ।
राज्ञः श्रीहिमशीतलस्य सदसि प्रायो विदग्धात्मनो
बौद्धौघान् सकलान् विजित्य सघटः पादेन विस्फाटितः ॥ ९ ॥

॥ इति श्रीशिवस्तुतिः सम्पूर्णा ॥

---

## १२. ॥ अथ श्रीशिवपञ्चचामरस्तोत्रम् ॥

सुवर्णपद्मिनीतटान्तदिव्यहर्म्यवासिने
सुपर्णवाहनप्रियाय सूर्यकोटितेजसे ।
अपर्णया विहारिणे फणाधरेन्द्रधारिणे
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ १ ॥

सुतुङ्गभङ्गजह्नुजासुधांशुखण्डमौलये
पतङ्गपङ्कजासुहृत्कृपीटयोनिचक्षुषे ।
भुजङ्गराजकुण्डलाय पुण्यकालिबन्धवे
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ २ ॥

चतुर्मुखाननारविन्दवेदगीतभूतये
चतुर्भुजानुजाशरीरशोभमानमूर्तये ।

चतुर्गुणद्विरष्टकप्रकारचित्रकेलये
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ३ ॥

शरन्निशाकरप्रकाशमन्दहासमञ्जुला-
धरप्रवालभासमानवक्त्रमण्डलश्रिये ।
करस्फुरत्कपालमुक्तविष्णुरक्तपायिने
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ४ ॥

सहस्रपुण्डरीकपूजनैकशून्यदर्शना-
सहस्रनेत्रकल्पितार्चनाच्युताय भक्तितः ।
सहस्रभानुमण्डलप्रकाशचक्रदायिने
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ५ ॥

सहस्रहल्लवीरभद्रसिंहनादगर्जिता
श्रुतिप्रभेददक्षयागभो...स्मना ।
. . . . . . . . .
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ६ ॥

रसारथाय रम्यपत्रभृद्रथाङ्गपाणये
धराधरेन्द्रचापशिञ्जिनीकृतानिलाशिने ।
सुसारथीकृतानुजानु वेदरूपवादिने
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ७ ॥

मृकण्डुसूनुरक्षणावधूतदण्डपाणये
सुखण्डमण्डलस्फुरत्प्रभाजितामृतांशवे ।
अखण्डभोगसम्पदर्थलोकभावितात्मने
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ८ ॥

मधुरिपुविधुशक्रमुख्यदेवै-
रपि नियमार्चितपादपङ्कजाय ।
कनकगिरिशरासनाय तुभ्यं
रजतसभापतये नमः शिवाय ॥ ९ ॥

॥ इति श्रीशिवपञ्चचामरस्तोत्रं सम्पूर्णम् ॥

## १३. ॥ अथ श्रीअरुणाचलाष्टकम् ॥

दर्शनादभ्रसदसि जननात्कमलालये ।
काश्यां तु मरणान्मुक्तिः स्मरणादरुणाचले ॥ १ ॥

करुणापूरितापाङ्गं शरणागतवत्सलम् ।
तरुणेन्दुजटामौलिं स्मरणादरुणाचलम् ॥ २ ॥

समस्तजगदाधारं सच्चिदानन्दविग्रहम् ।
सहस्ररथसोपेतं(?)स्मरणादरुणाचलम् ॥ ३ ॥

काञ्चनप्रतिमाभासं वाञ्छितार्थफलप्रदम् ।
मां च रक्ष सुराध्यक्षं स्मरणादरुणाचलम् ॥ ४ ॥

बद्धचन्द्रजटाजूटमर्धनारीकलेबरम् ।
वर्धमानदयाम्भोधिं स्मरणादरुणाचलम् ॥ ५ ॥

काञ्चनप्रतिमाभासं सूर्यकोटिसमप्रभम् ।
बद्धव्याघ्रपुरीध्यानं स्मरणादरुणाचलम् ॥ ६ ॥

शिक्षयाखिलदेवारिभक्षितक्ष्वेलकन्धरम् ।
रक्षयाखिलभक्तानां स्मरणादरुणाचलम् ॥ ७ ॥

अष्टभूतिसमायुक्तमिष्टकामफलप्रदम् ।
शिष्टभक्तिसमयुक्तान् स्मरणादरुणाचलम् ॥ ८ ॥

विनायकसुराध्यक्षं विष्णुब्रह्मेन्द्रसेवितम् ।
विमलारुणपादाब्जं स्मरणादरुणाचलम् ॥ ९ ॥

मन्दारमल्लिकाजातिकुन्दचम्पकपङ्कजैः ।
इन्द्रादिपूजितां देवीं स्मरणादरुणाचलम् ॥ १० ॥

सम्पत्करं पार्वतीशं सूर्यचन्द्राग्निलोचनम् ।
मन्दस्मितमुखाम्भोजं स्मरणादरुणाचलम् ॥ ११ ॥

॥ इति श्रीअरुणाचलाष्टकं सम्पूर्णम् ॥

---

## १४. ॥ अथ श्रीअरुणाचलस्तोत्रम् ॥

वन्दे शम्भुमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ १ ॥

वन्दे सर्वजगद्विहारमतुलं वन्दे करित्वग्धरं
वन्दे देवशिखामणिं शशिनिभं वन्दे हरेर्वल्लभम् ।
वन्दे नागभुजङ्गभूषणधरं वन्दे शिवं चिन्मयं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ २ ॥

वन्दे सोममचिन्त्यमद्वयमजं वन्देऽर्कदर्पापहं
वन्दे निर्मलमादिमूलमनिशं वन्दे मखध्वंसिनम् ।
वन्दे नित्यनमशिशवायमभयं वन्देऽतिशान्ताकृतिं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ ३ ॥

वन्दे भूरथमम्बुजाक्षविशिखं वन्दे त्रयीघोटकं
वन्दे शैलशरासनं फणिगुणं वन्देऽब्धितूणीरकम् ।
वन्दे पद्मजसारथिं पुरहरं वन्दे महाभैरवं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ ४ ॥

वन्दे पञ्चमुखाम्बुजं त्रिनयनं वन्दे ललाटेक्षणं
वन्दे व्योमकचं जटासुमकुटं वन्देन्दु[ऽब्ज]गङ्गाधरम् ।
वन्दे नागभरं त्रिपुण्ड्रनिटिलं वन्देऽष्टमूर्त्यात्मकं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ ५ ॥

वन्दे तारकपर्वताग्रनिलयं वन्दे सुराधीश्वरं
वन्दे शङ्करमप्रमेयमतुलं वन्दे यमद्वेषिणम् ।
वन्दे कुण्डलिराजकुण्डलधरं वन्दे सहस्राननं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ ६ ॥

वन्देऽनन्तशशिप्रकाशमतुलं वन्देऽर्कतेजोमयं
वन्दे पद्मजविष्णुगर्वकुलिशं वन्दे परब्रह्म ओम् ।

वन्दे शोणगिरीश्वरं स्वरमयं वन्दे त्रिमूर्त्यात्मकं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ ७ ॥

वन्दे कालहरं हरं वृषधरं वन्दे मृडं धूर्जटिं
वन्दे सर्वजगत्त्रयामृतनिधिं वन्दे नृसिंहापहम् ।
वन्दे विप्रसुरासुरार्चितपदं वन्दे भगाक्षापहं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ ८ ॥

वन्दे सूक्ष्ममनन्तमाद्यमनघं वन्देऽन्धकारापहं
वन्दे रावणबाणभृङ्गिविनुतं वन्दे सुपर्णावृतम् ।
वन्दे शैलसुतार्धभागवपुषं वन्दे त्रियम्बात्मकं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ ९ ॥

वन्दे हंसमतीन्द्रियं स्मरहरं वन्दे विरूपेक्षणं
वन्दे भूतगणेशमव्ययमजं वन्देऽ[1]र्थराजप्रियम् ।
वन्दे सुन्दरसौरभेन्द्रगमनं वन्दे त्रिशूलायुधं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ १० ॥

वन्दे मन्दकटाक्षलब्ध[दत्त]विभवं वन्दे विरिञ्चिस्तुतं
वन्देन्द्रा[ऽब्जा]च्युतपूजिताङ्घ्रिकमलं वन्दे वृषेन्द्रध्वजम् ।
वन्दे हाटकरत्नभूषणधरं वन्दे भवानीप्रियं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ ११ ॥

वन्दे पावनमम्बरात्ममलं वन्दे महादैवतं
वन्दे भक्तवराश्रयामरतरुं वन्दे नताभीष्टदम् ।
वन्देऽपीतकुचाम्बिकेशमनिशं वन्देऽरुणाधीश्वरं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥ १२ ॥

शान्तं जम्भवरापहं शुभकरं धर्मार्थकामप्रदं
धन्यं श्रेयः[पुण्य]फलप्रदं शुचिकरं दारिद्र्यदुःखापहम् ।
भूतप्रेतपिशाचराक्षसहरं पा[पघ्न]मायुष्करं
नित्यं शोणगिरेः स्तवं पठति यो मोक्षं लभेच्छाश्वतम् ॥ १३ ॥

॥ इति श्री अरुणाचलस्तोत्रं सम्पूर्णम् ॥

---

1. र्थराजो सखम्

## १५. ॥ अथ श्रीमलयराजस्तुतिः ॥

योन धियामधिगम्यस्तस्य कुतः सम्भवो गिरां वृत्तेः ।
स्तौमि तथापि भवन्तं मनोरथो यात्यभूमिमपि ॥ १ ॥
यामि मनोवाक्कायैः शरणं करुणाकरं जगन्नाथ ।
जन्मजरामरणार्णवतरणकरण्डं तवाङ्घ्रियुगम् ॥ २ ॥
सर्वत एव श्रुतिमान् सर्वगतश्चेति गीयसे सद्भिः ।
अत इदमर्हसि भगवन् स्थाणो कृपणाद्वचः श्रोतुम् ॥ ३ ॥
शरणमसि संश्रयो ह्यसि गतिरसि नाथोऽसि सर्वभूतानाम् ।
भूतेश तेन ते मयि विज्ञायातिक्षमा कार्या ॥ ४ ॥
येनाष्टधा विभज्य प्रजासु हितहेतुना तनुर्धत्ता ।
कस्तादृशं न यायात्त्वामिह करुणाकरं शरणम् ॥ ५ ॥
प्रणतजनरक्षणेन क्षणमेकं कालकाल वामेन ।
त्रिनयन समग्रदर्शिन् दासजनं चक्षुषा पश्य ॥ ६ ॥
पातालं दिवमथ वा गच्छामि पलाय्य यदि दिगन्तं वा ।
तत्रापि त्राता मे मृत्योर्नान्यस्त्वयैव विना ॥ ७ ॥
कालव्याधो धावति भगवन्नासन्नमेव हन्तुं माम् ।
क्रन्दामि त्वामीशं पाशच्छेदाय तेनार्तः ॥ ८ ॥
आसन्नमरणमशरणमुन्मार्गभ्रमणखिन्नमवसन्नम् ।
त्रायस्व शिव समाश्रितमन्धमधस्तात्पतितं माम् ॥ ९ ॥
परिलुलितकमलदलगतजललवचलमेतदायुरपयाति ।
त्वद्भक्तिश्च न सुलभा पुनरिति मत्वा प्रसीद विभो ॥ १० ॥
प्राणैर्वियोज्य जन्तुं त्यजति रिपुर्जगति पापशीलोऽपि ॥
मृतमपि न विमुञ्चति यस्त्रायस्व ततोऽरिषड्वर्गात् ॥ ११ ॥
गायन्तं च रुदन्तं शान्तं कृपणं हसन्तं च ।
रक्ष विभो मामार्तं गृहीतमाशापिशाचिकया ॥ १२ ॥
भवमरुमार्गभ्रमणश्रान्तस्य शिव प्रसीद दीनस्य ।
त्वयि [त्वन्]मानसे प्रसन्ने शाम्यति तीव्रा हि मे तृष्णा ॥ १३ ॥

यस्मिन्निपतितमेव ग्रसते रागोरगो महाभोगः ।
देहि विभो भवकूपे त्रियम्बकालम्बनं पततः ॥ १४ ॥
येनैकमेव सर्वं द्वैतेन त्वां महेश पश्यामि ।
सद्दृष्टिप्रतिबन्धं छिन्धि ममाज्ञानतिमिरं तत् ॥ १५ ॥
भगवंस्त्रिभुवनभयकृत्कृतान्तकृष्णाहिदंष्ट्रया दष्टः ।
तृष्णाभिधानया यस्त्वमेव तन्निर्विषीकुरुषे ॥ १६ ॥
मोहमहाव्याधिमिमं देव चिकित्सस्व दुश्चिकित्सं मे ।
भिषजं भैषज्यं च त्वां हि महान्तः प्रशंसन्ति ॥ १७ ॥
तं देवनरकहुतवहबहुलज्वालाकलापसन्तापम् ।
त्वद्दृष्टिर्वृष्टिरिव प्रशमयतु शिव प्रसीद विभो ॥ १८ ॥
देव महाकारुणिक प्रसीद करुणार्द्रया दृशा पश्य ।
शाम्यति यया मनो मे दुःसहदुःखानलज्वलितम् ॥ १९ ॥
शिव शिव भगवन् भगवन् अन्धमनाथं च रक्ष रक्ष विभो ।
तव पादपीठलग्नं हरति हठादेव मृत्युर्माम् ॥ २० ॥
अतिकृपणमार्तमशरणमाक्रन्दन्तं वशीकृतं पाशैः ।
आक्रान्तमन्तकभटैर्मां शिव शरणागतं रक्ष ॥ २१ ॥
शरणागतानशरणान् मरणभयाभिद्रुतान् द्रुतं दयया ।
रक्षाम्यहमिति मय्यपि कुरु प्रतिज्ञां विभो सफलाम् ॥ २२ ॥
परमात्मन् परमेश्वर वेत्थ ममान्तस्स्थमेव देव त्वम् ।
यदि तव चरणाम्बुजयोः स्वप्नेऽप्यहमन्यथाचेताः ॥ २३ ॥
सर्वेश सर्वशक्ते सर्वग सर्वज्ञ शर्व सर्वात्मन् ।
त्यक्तस्य देव भवता भविता नान्यो मम त्राता ॥ २४ ॥
कमपरमधुना याचे कश्च क्रन्दामि मन्दपुण्योऽहम् ।
कमशरणः शरणं वा व्रजामि देव त्वया त्यक्तः ॥ २५ ॥
दीनेषु दया कार्येत्यार्येषु कृता त्वयैव मर्यादा ।
आर्य त्वं त्वय्येव हि दैन्यं मय्येव हि पर्याप्तम् ॥ २६ ॥
किं त्यजसि मामनाथं नाथ कथं ते दया न मयि दीने ।
पापिनमपि शरणागतमशरणमुज्झन्ति न महान्तः ॥ २७ ॥

त्रातरि सर्वगते त्वयि शिवनामनि नाम परमकारुणिके ।
देव दिशः कथमेताः संजातास्त्राणशून्या मे ॥ २८ ॥

उभयमसम्भाव्यमिदं सुखमिह दुःखं त्वदाश्रितेऽन्यत्र ।
कः श्रद्दधाति तुहिनं दहने दाहं च शीतांशौ ॥ २९ ॥

क्रन्दन्तमेव देव त्वमपि यदीशान संश्रितं त्यजसि ।
तदशरणं शरणागतवत्सलतां हन्त निहन्त्येव ॥ ३० ॥

अभ्यर्थितः प्रसीदसि भगवन्नित्यपि ममैष कुविकल्पः ।
जगदर्थमर्थितस्त्वं कुर्वन् बहुधा तनुं केन ॥ ३१ ॥

सुचिरं मया न सेवितमिति शिव न त्रायसे न तद्घटते ।
किं सद्य एव पीतं नामृतमजरामरं कुरुते ॥ ३२ ॥

परितुष्टे किल भगवन् स्वात्मनि तुष्टिं ददासि लोकानाम् ।
तुष्टेऽपि त्वयि दुःखं न श्रुतपूर्वं कदाचिदपि ॥ ३३ ॥

त्वयि निखिलदुःखहन्तरि हृदयगते दुःखितुं न युक्तं मे ।
उदिते भगवति भास्वति तिमिरमनष्टं क वादृष्टम् ॥ ३४ ॥

क्षणमपि यत्र महान्तो वसन्ति तत्रापदो विनिघ्नन्ति ।
वससि सदा मम हृदये दुःखित्वं किमिदमाश्चर्यम् ॥ ३५ ॥

दारयति दारुणमिदं दुःखं दहतीव मे हृदयम् ।
विफलीभवति बहुफलो यद्यत्सङ्कल्पकल्पतरुः ॥ ३६ ॥

यस्येच्छयैव गच्छति जगदखिलं सम्भवं च नाशं च ।
तत्र त्वय्यपि शम्भो सति दुःखं हा हतोऽस्मि ततः ॥ ३७ ॥

तव चरणशरणगमनान्नो भग्ना नापदः सपदि यच्च ।
आत्मा तेन ममायं भगवन्निन्द्यस्त्ववन्द्यश्च ॥ ३८ ॥

चिन्तामणिमपि लब्ध्वा कष्टमभव्यो दरिद्र एवास्मि ।
शिवमपि शरणं गत्वा मरणभयाद्यन्न मुक्तोऽस्मि ॥ ३९ ॥

त्रिभुवनमप्युद्धर्तुं त्वद्भक्ताः शक्ततां गताः सर्वे ।
अहमिह पुनरवसन्नः पापी स्वयमेव संसारे ॥ ४० ॥

व्यग्रः समग्रशक्ते दासजनानुग्रहः क्वासौ ।
भवतो यतो न मां प्रति संप्रति करुणायते चेतः ॥ ४१ ॥

श्वेतहिताय कृतान्तं कृतवानसि भस्मसाद्यया सहसा ।
सा तव भगवन् करुणा निष्करुणा मयि कथं जाता ॥ ४२ ॥

पापाः पापन्नानां कृपणाः करुणार्द्रचेतसां सततम् ।
तरुणाः करुणाक्षेत्रं भवादृशां मादृशा एव ॥ ४३ ॥

दीनं दयार्द्रहृदयास्त्रायन्ते भवादृशा उपेत्य विभो ।
त्वं तु मयि याचमाने न त्राता चित्रमेतदहो ॥ ४४ ॥

नैषा कृपा कृपावन् परमेश विशेषवृत्तिना [ता]येयम् ।
दीनेषु दयावन्तः सन्तः साम्येन वर्तन्ते ॥ ४५ ॥

तव दासभावमपुनर्दास्यायैवं वदन्ति यदि सन्तः ।
लोभहतकस्य दास्यं तदिह ममाद्यापि नाथ कथम् ॥ ४६ ॥

अद्य श्वो वा मरणं त्राणं त्वत्तो न मेऽस्ति गतिरन्या ।
भ्राम्यति ताम्यति त्रुट्यति मुह्यति शुष्यति च मम चेतः ॥ ४७ ॥

धरणितलेन कलेवरमेतन्मे काष्ठवद्यावत् ।
तावत्प्रसीद सीदति न हि ते शरणागतो जगति ॥ ४८ ॥

आविशति विवशमेतच्चेतो यावन्न मोहपातालम् ।
तावत्प्रसीद सीदति न हि ते शरणागतो जगति ॥ ४९ ॥

धनिनो धनेन धन्याः सेवन्ते त्वां गुणैश्च गुणिनोऽपि ।
एतत्तु भक्तिमात्रं सर्वस्वं मे गृहाण विभो ॥ ५० ॥

पापात्मकोऽयमिति मयि विजुगुप्सां मा कृथा जगन्नाथ ।
जगति न तदस्ति पापं हरति न यत्तेऽङ्घ्रिसंस्मरणम् ॥ ५१ ॥

हुतवहनिचयो हिमतां तुहिनं दहनत्वमेतु कदाचिदपि[1] ।
न तु तव चरणस्मरणं मोघममोघस्मृतेर्भवति ॥ ५२ ॥

दिवमधिरोहतु धरणी तारानिकरोऽपि लुठतु भूमितले ।
न तु तव चरणस्मरणं मोघममोघस्मृतेर्भवति ॥ ५३ ॥

---

1. च कदाचित्

मुखकमलमभिमुखं कुरु देहि वचो जलदनादघनघोषम्।
यत्तु सदाभयदानं भीतेवोच्चैः समुच्चरसि ॥ ५४ ॥

विज्ञापयामि किं वा नाथ बहु त्वां कृतान्तभयभीतः।
नाज्ञानं ते किञ्चित् मद्भक्तेरात्मशक्तेश्च ॥ ५५ ॥

इति तरुणकरुणमुच्चैः कृपणस्याक्रन्दितं ममाकर्ण्य।
नाथ तथा कुरु कृपया कृपणेषु यथोचितं त्वत्तः ॥ ५६ ॥

जगति तव शक्तिरतुला सकलजगद्भस्मरा स्यात्सपदि।
कामोऽपि लीलयैवं नयनानलशलभतां यातः ॥ ५७ ॥

कुलिशं कुसुमति दहनस्तुहिनति वारां निधिः स्थलति।
शत्रुर्मित्रति विषमप्यमृतति शिव शिवेति प्रलपतो भक्त्या ॥ ५८ ॥

आर्तमनाथमशरणं दुस्तरभवभङ्गसागरे मग्नम्।
उद्धर रक्ष विलोकय परिपालय मां जगन्नाथ ॥ ५९ ॥

यदिदमनुचितं दयालो नाथ मयाक्रन्दितं कृतान्तभयात्।
एतत् क्षमस्व भगवन्नार्ततया किमपि न क्रियते ॥ ६० ॥

स्वल्पाभोगा भोगा भङ्गी प्रियसङ्गमो गलत्यायुः।
चलमखिलमित्यवेक्ष्य व्रजति जनः शङ्करं शरणम् ॥ ६१ ॥

आर्तेन मलयनाम्ना विज्ञप्तस्त्वं मया जगन्नाथ।
शर्वः सर्वार्तिहरस्तेन स्यात्सर्वलोकानाम् ॥ ६२ ॥

शशभृदिव शीतलत्वे शिव देव शिवस्वभाव एव त्वम्।
अभ्यर्थ्यतां प्रयातः कष्टं मन्मन्दपुण्यतया ॥ ६३ ॥

या कुपितकृतान्तमुखत्रस्तानां जगति भवति गतिरेका।
तां भक्तवत्सल विभो नमामि शम्भो भवद्भक्तिम् ॥ ६४ ॥

त्वन्नाम यथा सुलभं भगवन् भूतेश मादृशस्यापि।
मच्चेतः प्रार्थयते त्वामेतां दुर्लभां भक्तिम् ॥ ६५ ॥

विद्या यौवनमायुः प्रियस्य सङ्गो विभूतिरारोग्यम्।
युगपदपि सुलभमेतन्न पुनरुदारा भवद्भक्तिः ॥ ६६ ॥

तेन त्वामेव विभो याचे तां दुर्लभां भवद्भक्तिम्।
विफला दातरि न त्वयि वाञ्छा वल्लीव कल्पतरौ ॥ ६७ ॥

जातस्य दिव्यभवने तिर्यग्योनौ मनुष्ययोनौ वा ।
सा मे सदैव भूयात्त्वयि भक्तिरचञ्चला भगवन् ।। ६८ ।।

षड्वर्गविपिनकृन्तनसन्निशितकुठारधारया सततम् ।
सा मे सदैव भूयात्त्वयि भक्तिरचञ्चला भगवन् ।। ६९ ।।

या परमज्ञानाङ्कुरसम्पद्धनविमलबहुलजलधारा ।
सा मे सदैव भूयात्त्वयि भक्तिरचञ्चला भगवन् ।। ७० ।।

शैवजननयनमणिनिष्यन्दनचन्द्रधारा या ।
सा मे सदैव भूयात् त्वयि भक्तिरचञ्चला भगवन् ।। ७१ ।।

इति रचयति स्म भगवत इन्दुकलाशेखरस्य मलयाख्यः ।
भक्त्या भक्तिस्तोत्रं भवे भवे भक्तिरेवास्तु ।। ७२ ।।

।। इति श्रीमलयराजस्तुतिः सम्पूर्णा ।।

---

## १६. ।। अथ श्रीमातृभूतेश्वरस्तोत्रम् ।।

प्रसन्नवक्त्रमेकदन्तमादिपूज्यमीश्वरं
सुरासुरेन्द्रसेव्यमानपादपद्ममव्ययम् ।
समस्तशोकनाशकारणं सुखप्रदं नृणां
उमासुतं नमामि तं समस्तविघ्नशान्तिदम् ।। १ ।।

अजायमानमप्यनेकधा सुजायमानमुं(?)
पुराणमप्यहं युवानमादिकारणं शिवम् ।
अपाणिपादमप्यनेकपादपाणिचक्षुषं
नमामि मातृभूतसाम्बमूर्तिमेव सन्ततम् ।। २ ।।

अनन्तरूपनामधेयमप्यनामरूपकं
कपालभिक्षमप्यशेषलोकसर्वकामदम् ।
अनाथमप्यशेषलोकनाथमीशमच्युतं
नमामि मातृभूतसाम्बमूर्तिमेव सन्ततम् ।। ३ ।।

अजीवमप्यनन्तजीवरक्षकं सुजीविनं
महान्तमप्यणुं हृदि स्थितं न दृश्यमीडितम् ।
बहिःस्थितं नरामरैः स्वभक्तनेतृगोचरं
नमामि मातृभूतसाम्बमूर्तिमेव सन्ततम् ।। ४ ।।

उमावचःप्रतिप्रभाषणाक्षमप्यधीश्वरं
सुवाग्मिनामपि प्रियं जितेन्द्रियोत्तमं रतौ ।
अजय्यमप्युमामुदे सुमेषुणा विनिर्जितं
नमामि मातृभूतसाम्वमूर्तिमेव सन्ततम् ॥ ५ ॥

कुरङ्गलोचनाऽगजाविलासहर्षमानसं
गजास्यशौरिबालकेलिदर्शनातिविस्मितम् ।
सुनन्दिबाणभृङ्गिचण्डिरावणादिपूजितं
नमामि मातृभूतसाम्वमूर्तिमेव सन्ततम् ॥ ६ ॥

सुमृत्तिकाशिलादिपूधियामपीष्टदायकं (?)
सुपुत्रनीलकण्ठनामधेयवक्तुरिष्टदम् ।
मृगं हरेषुमाहरेति वक्तुराशु मुक्तिदं
नमामि मातृभूतसाम्बमूर्तिमेव सन्ततम् ॥ ७ ॥

समस्तलोकदग्धुकामकालकूटभक्षकं
भिषग्वरं त्रिविष्टपस्य मातृभूतमीश्वरम् ।
मृकण्डुसूनुरक्षणाय मृत्युदर्पभञ्जकं
नमामि मातृभूतसाम्बमूर्तिमेव सन्ततम् ॥ ८ ॥

अनाथगर्भिणीस्त्रियः शिशोः सुतस्य मे सदा
सुखप्रदं सुमातृवत् शरण्यमेव नान्यथा ।
कृपारसार्द्रमानसेशमच्युतप्रियं शिवं
नमामि मातृभूतसाम्बमूर्तिमेव सन्ततम् ॥ ९ ॥

सुगन्धिकुन्तलाम्बिकासमेतमद्रिवासिनं
समीपवर्तिरङ्गनाथजम्बुकेश्वरप्रभुम् ।
अनाथगर्भिणीवधूसुखप्रसूतिकारकं
नमामि मातृभूतसाम्बमूर्तिमेव सन्ततम् ॥ १० ॥

इयं समस्तकामदा नवप्रसूनमालिका
नृणामशेषकर्मजन्यशोककक्षपावका ।
सुदर्शनाख्यपण्डितेन भक्तियुक्तचेतसा
विलिख्यते शिवप्रसादलेशलाभवैभवात् ॥ ११ ॥

या कृपा गर्भिणीत्राणे या कृपा मुनिनन्दने ।
मातृभूतेश्वर क्षिप्रं सा कृपा मयि दीयताम् ॥ १२ ॥

या कृपा मुनिसंत्राणे या कृपा कपिनायके ।
या विभीषणरक्षायां सा कृपा मयि दीयताम् ॥ १३ ॥

अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ ।
[1]आकर्णपूर्णधन्वानौ रक्षेतां रामलक्ष्मणौ ॥ १४ ॥

॥ इति श्रीमातृभूतेश्वरस्तोत्रं सम्पूर्णम् ॥

---

## १७. ॥ अथ श्रीनमस्कारदशकस्तोत्रम् ॥

नमः शिवाभ्यां जगदीश्वराभ्यां
जगत्पतिभ्यां जयविग्रहाभ्याम् ।
जम्भारिमुख्यैरभिवन्दिताभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ १ ॥

नमः शिवाभ्यां जटिलालकाभ्यां
जरामृतित्राणविचक्षणाभ्याम् ।
जनार्दनाब्जोद्भवपूजिताभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ २ ॥

नमः शिवाभ्यां कलिनाशकृद्भ्यां
कारुण्यकल्याणवपुर्धराभ्याम् ।
कैलासशैलाख्यनिकेतनाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ३ ॥

नमः शिवाभ्यां वृषवाहनाभ्यां
विरिञ्चिविश्वंभरपूजिताभ्याम् ।
विभूतिपाधीरविलोचनाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ४ ॥

नमः शिवाभ्यामतिसुन्दराभ्याम्
अत्यन्तमासक्तवपुर्धराभ्याम् ।
अशेषलोकैकशिवङ्कराभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ५ ॥

---

1. अधश्चोर्ध्वं च रक्षेतां रामकृष्णौ धुनुर्धरा इति वा पाठः

नमः शिवाभ्यां रविलोचनाभ्यां
रवीन्दुवैश्वानरलोचनाभ्याम् ।
राकाशशिस्तोममुखाम्बुजाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ६ ॥

नमः शिवाभ्यां शशिशेखराभ्यां
समस्तसम्पत्परिपूरिताभ्याम् ।
समस्तविद्याभिरुपासिताभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ७ ॥

नमः शिवाभ्यां नयनोत्सुकाभ्यां
नमस्कृताभीष्टवरप्रदाभ्याम् ।
नारायणेनार्चितपादुकाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ८ ॥

नमः शिवाभ्यां नवयौवनाभ्यां
परस्पराश्लिष्टवपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां
नमो नमः शङ्करपार्वतीभ्याम्[1] ॥ ९ ॥

नमः शिवाभ्यामशिवापहाभ्यां
अशेषकल्याणविशेषिताभ्याम् ।
असम्भवाभ्यां श्रुतिसम्भवाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ १० ॥

नमस्कारात्मकं स्तोत्रं व्यासेन परिकीर्तितम् ।
यः पठेच्छ्रावयेद्भक्त्या सर्वान् कामानवाप्नुयात् ॥ ११ ॥

॥ इति श्रीवेदव्यासकृतं नमस्कारदशकस्तोत्रं सम्पूर्णम् ॥

---

## १८. ॥ अथ श्रीवालिशैलाधिनाथत्रयम् ॥

अजं वेदसारं भुजङ्गेन्द्रहारं
निजाराधनोद्यत्प्रजाहृद्विहारम् ।
गजेशार्चितं शैलजाचित्तचोरं
भजे शङ्करं वालिशैलाधिनाथम् ॥ १ ॥

---

1. श्रीमच्छङ्करभगवत्पादकृतसौन्दर्यलहर्यामादिमः श्लोकोऽयम् ।

जटामण्डले नानटद्दिव्यगङ्गा-
झरीतुङ्गवीचिच्छटादीप्यमानम् ।
पटीभूतकृत्तिं [1]नटालीवरेण्यं
भजे शङ्करं वालिशैलाधिनाथम् ॥ २ ॥

दलत्कुन्दमन्दारकर्पूरगौरं
गलद्भस्मरेखाविजृम्भल्ललाटम् ।
बलारिस्तुतं बालबालेन्दुमौलिं
भजे शङ्करं वालिशैलाधिनाथम् ॥ ३ ॥

॥ इति श्रीवालिशैलाधिनाथत्रयं सम्पूर्णम् ॥

---

## १९. ॥ अथ श्रीवीरभद्राष्टकम् ॥

दक्षाध्वरध्वंसविधानदक्षं
दम्भोलितुल्यायतबाहुवृन्दम् ।
फालोज्ज्वलन्नेत्रहुताशनेन
भस्मीकृतारिं भज वीरभद्रम् ॥ १ ॥

कङ्कालदण्डं कठिनोग्रदंष्ट्रं
कपालमालं[ला]कमनीयहारम् ।
कन्दर्पदर्पापहसर्पहारं
भस्माङ्गलेपं भज वीरभद्रम् ॥ २ ॥

भूतेशमीशं भुजगाभिरामं
भस्मीकृताशेषपुरप्रतापम् ।
उन्निद्रपद्मायतनेत्रपद्मं
श्रीवीरभद्रं भज वीरभद्रम् ॥ ३ ॥

कालाञ्जनश्यामलकोमलाङ्गं
कण्ठान्तरस्थापितकालकूटम् ।
भागीरथीचुम्बितमौलिभागं
फालाग्निनेत्रं भज वीरभद्रम् ॥ ४ ॥

---

1. कृत्यं

निशाटकोटीपटुसेव्यमानं
नीलाञ्जनाभं निहतारिलोकम् ।
पाटीरवाटं वटमूलवासं
भद्राक्षमालं भज वीरभद्रम् ॥ ५ ॥

जगत्प्रवीरं जगतामधीशं
बालेन्दुजूटं फणिराजभूषम् ।
सहस्रबाहुं सनकादिवन्द्यं
चक्राभिरामं भज वीरभद्रम् ॥ ६ ॥

मञ्जीरपुञ्जारवमञ्जुपादं
कुञ्जामराम्भोजमणीन्द्रहारम् । (?)
कञ्जातसञ्जातविराजमानं
विकासिनेत्रं भज वीरभद्रम् (?) ॥ ७ ॥

कालस्य कालं कनकाद्रिचापं
वीरेश्वरं निर्विषयान्तरङ्गम् ।
निरीहमेकं निगमान्तमृग्यं
निर्वाणहेतुं भज वीरभद्रम् ॥ ८ ॥

भद्राष्टकं [पापहरं] पठेद्यः
प्रभातकाले पितृसूतिकाले ।
सुखी भवेत्सम्पद्वान् सुभोगी
सुरूपवान् सुस्थिरपुद्धितस्य। [बुद्धियुक्तः] (?) ॥ ९ ॥

॥ इति श्रीवीरभद्राष्टकं सम्पूर्णम्॥

---

## २०. ॥ अथ श्रीअगस्त्याष्टकम् ॥

अद्य मे सफलं जन्म अद्य मे सफलं तपः ।
अद्य मे सफलं ज्ञानं शम्भो त्वत्पाददर्शनात् ॥ १ ॥

कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहं न संशयः ।
अद्य ते पादपद्मस्य दर्शनाद्भक्तवत्सल ॥ २ ॥

शिवे भक्तिः शिवे भक्तिः शिवे भक्तिर्भवे भवे ।
सदा भूयात्सदा भूयात्सदा भूयात्सदा मम ॥ ३ ॥

आजन्ममरणं यस्य महादेवो न दैवतम् ।
मा जनिष्ठा न नो वन्ने जातो वाग्निं प्रपद्यताम् ॥ ४ ॥ (?)

जातस्य जायमानस्य गर्भस्थस्यापि देहिनः ।
मा भून्मम कुले जन्म यस्य शम्भुर्न दैवतम् ॥ ५ ॥

वयं धन्या वयं धन्या वयं धन्या जगत्त्रये ।
आदिदेवो महादेवो यदस्मत्कुलदैवतम् ॥ ६ ॥

हर शम्भो महादेव विश्वेशामरवल्लभ ।
हरिकेश विरूपाक्ष त्राहि मां पापसंहर [पापसञ्चयात्] ॥ ७ ॥

अगस्त्याष्टकमिदं पुण्यं यः पठेच्छिवसंनिधौ ।
तस्य मृत्युभयं नास्ति शिवेन सह मोदते ॥ ८ ॥

॥ इति श्रीअगस्त्याष्टकं सम्पूर्णम् ॥

---

## २१. ॥ अथ श्रीगिरीशाष्टकम् ॥

क्षीराम्भोराशितूणं धृतपरशुधनुःशूलदीव्यत्कृपाणं
गौरीकान्ताभिरामं निटिलहुतवहज्वालनिर्दग्धकामम् ।
तारक्ष्माभृद्विहारं सकलभुवनभृन्नागराट्कण्ठहारं
वीरं रौद्राधिदैवं शरणशिवकरं श्रीगिरीशं भजेऽहम् ॥ १ ॥

सत्यानन्दस्वरूपं कनकमणिगणप्रस्फुरन्मेरुचापं
कृत्याकृत्यादिदूरं चिदमृतसरसीवीचिकान्तविहारम् ।
श्रुत्यन्तस्तूयमानं नतजनसदनासन्नचञ्चन्निधानं
प्रत्यद्रि क्रीडमानं प्रणवमयरथं श्रीगिरीशं भजेऽहम् ॥ २ ॥

कैलासग्रावतुल्योज्ज्वलवृषभकुलाध्यक्षसन्नद्धकेतुं
लोलद्दुग्धप्रवाहार्गलमकुटतटीवेष्टिताहीन्द्रसेतुम् ।
पञ्चाशद्वर्णधातुं हरिकमलभवोत्पत्तिनिष्पत्तिहेतुं
पञ्चास्यं श्रुत्युपास्यं निरवधियशसं श्रीगिरीशं भजेऽहम् ॥ ३ ॥

भीमं सोमं शिवं शङ्करमभवमजं विश्वलोकैकबीजं
रुद्रं मुद्रीकृताघं पशुपतिगमनं वीरभद्रं विनिद्रम् ।
शर्वं सर्वंसहामण्डलमहितरथं सत्पथं निर्विरोधं
नादं वेदाविभेदं वरदमभयदं श्रीगिरीशं भजेऽहम् ॥ ४ ॥

ज्योतीरूपं दुरापं विलयजलधरोद्दण्डचण्डाट्टहासं
विद्युद्वल्लीमतल्लीरुचिरपटुजटानद्धमुग्धेन्दुखण्डम् ।

प्राग्द्वारे भृङ्गिलासं [लास्य] प्रतिदिशगणकोलाहलापूर्णकर्णं
वर्णप्राकारमध्यरिथतमणिसदनं श्रीगिरीशं भजेऽहम् ॥ ५ ॥

चिद्विद्यामूलकन्दं रदनरुचिपरिष्कासितारण्यकुन्दं
मृद्वीगोक्षीरपूरामृतरसमधुराम्नायगेयं यजेय ।
विद्वत्पालीसदापूजितपदकमलं निर्मलं निर्विकल्पं
व्यालाकल्पं चिरायुर्मुनिसुतविनुतं श्रीगिरीशं भजेऽहम् ॥ ६ ॥

षट्त्रिंशत्तत्त्वशृङ्गोत्तरपदविचरत्सूक्ष्मचित्स्थाणुरूपं
सप्ताधोलोकबाह्यान्तरकुहरतमः खण्डनोद्दण्डहासम् ।
सौम्यं गम्यादिगम्यं शरणजनमनोहारिशय्यान्तरस्थं
सम्यक्सौभाग्यरेखाञ्चितपदयुगलं श्रीगिरीशं भजेऽहम् ॥ ७ ॥

न्यग्रोधक्ष्माजमूले स्फटिकमणिमयस्वच्छपीठाधिवासं
सर्वज्ञं भक्तबन्धुं प्रविमलकरुणासारवद्दुग्धसिन्धुम् ।
प्रत्यक्षाद्दष्टमूर्तिं दशदिगधिपतिं विश्वकृद्दिव्यमूर्तिं
ज्योतिर्लिङ्गं निरङ्गं निरवधिमपरं श्रीगिरीशं भजेऽहम् ॥ ८ ॥

गिर्यष्टकमिदं पुण्यं यः पठेत्सततं नरः ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ९ ॥

॥ इति श्रीगिरीशाष्टकं सम्पूर्णम् ॥

---

## २२. ॥ अथ श्रीवीरभद्रभुजङ्गप्रयातस्तोत्रम् ॥

गुणादोषभद्रं सदा वीरभद्रं
मुदा भद्रकाल्या समाश्लिष्टमुग्रम् ।
स्वभक्तेषु भद्रं तदन्येष्वभद्रं
कृपाम्भोधिमुद्रं भजे वीरभद्रम् ॥ १ ॥

महादेवमीशं स्वदीक्षागताशं
विबोध्याशुदक्षं नियन्तुं समक्षे ।
प्रमार्ष्टुं च दाक्षायणीदैन्यभावं
शिवाङ्काम्बुजातं भजे वीरभद्रम् ॥ २ ॥

सदस्यानुदस्याशु सूर्येन्दुबिम्बे
कराङ्घ्रिप्रपातैरदंतासिताङ्गौ[ङ्गे] ।
कृतं शारदाया हृतं नासभूषं
प्रकृष्टप्रभावं भजे वीरभद्रम् (?) ॥ ३ ॥

सतन्द्रं महेन्द्रं विधायाशु रोषात्
कृशानुं निकृत्ताग्रजिह्वं [प्रधाव्य] ।
. . . . कृष्णवर्णं बलाद्भासभानं
प्रचण्डाट्टहासं भजे वीरभद्रम् ॥ ४ ॥

न रक्षोऽधिकः सप्ततन्तौ समुद्रं
पुरोडाशभागं . . . . ।
. . . प्रदेशे . . .
कृतं तन्त्रभूतं भजे वीरभद्रम् ॥ ५ ॥

जलाधीश्वरोऽसौ कृशानुप्रदेशे
यथा वर्तते चेत्तथाग्निः प्रशान्तः ।
भवेदित्यलं वार्धि
. . . विक्षिप्य हृष्टं भजे वीरभद्रम् ॥ ६ ॥

गगत्प्राण[मा]शाधिपानां प्रपञ्चे
महान्तं मृगारूढमुक्त्वा सरोषम् ।
कुबेरं च वैरूप्यदृष्टिं च कृत्वा
सपाण्डुङ्गमीशं भजे वीरभद्रम् ॥ ७ ॥

तथान्यान् दिगीशान् सुरानुग्रदृष्ट्या
ऋषीनल्पबुद्धीन् धरादेवबृन्दान् ।
विनिर्भर्त्स्यं हुत्वानले त्रिगणौघै-
रघोरावतारं भजे वीरभद्रम् ॥ ८ ॥

विधातुः कपालं कृतं पानपात्रं
नृसिंहस्य कायं (?) च शूलाङ्गभूषम् ।
गले कालकूटं स्वचिंह्नं च धृत्वा
महौद्धत्यभूषं भजे वीरभद्रम् ॥ ९ ॥

महादेव मद्भाग्यदेव प्रसिद्ध [प्रसीद]
प्रकृष्टारिबाधामलं संहराशु ।
प्रयत्नेन मां रक्ष रक्षेति यो वै
वदेत्तस्य देवं भजे वीरभद्रम् ॥ १० ॥

महाहेतिशैलेन्द्र . . . . धिकास्ते
करासक्तशूलासिबाणासनानि ।
शरास्ते युगान्ताशनिप्रख्यशौर्या
भवन्तीत्युपास्यं भजे वीरभद्रम् ॥ ११ ॥

यदा त्वत्कृपापात्रजन्तुस्वचित्ते
महादेव वीरेश मां रक्ष रक्ष।
विपक्षानमून् भक्ष भक्षेति यो वै
वदेत्तस्य मित्रं भजे वीरभद्रम् ॥ १२ ॥

अनन्तश्च शङ्खस्तथा कम्बलोऽसौ
वमत्कालकूटश्च कर्कोटकाहिः ।
तथा तक्षकश्चारिसङ्घान्निहन्या-
दिति प्रार्थ्यमानं भजे वीरभद्रम् ॥ १३ ॥

गलासक्तरुद्राक्षमालाविराज-
द्विभूतित्रिपुण्ड्राङ्कफालप्रदेशः ।
सदा शैवपञ्चाक्षरीमन्त्रजापी
भवे भक्तवर्यः स्मरन् सिद्धिमेति ॥ १४ ॥

भुजङ्गप्रयातैर्महारुद्रमीशं
सदा तोषयेद्यो महेशं सुरेशम् ।
स [भूत्वा] धरायां समग्रं च भुक्त्वा
विपद्भयो विमुक्तः सुखी स्यात्सुरः स्यात् ॥ १५ ॥

॥ इति श्रीवीरभद्रभुजङ्गप्रयातस्तोत्रं सम्पूर्णम् ॥

---

## २३. ॥ अथ श्रीषड्वर्णमन्त्राष्टकम् ॥

धनुर्धरित्रीधरसार्वभौमः
मौर्वी च दर्वीकरसार्वभौमः ।
शरस्तु सर्वामरसार्वभौमः
पायात्स नो दैवतसार्वभौमः ॥ १ ॥

वेदान्ततत्त्वमथितं नवनीतसारं
चिद्रूपदत्वपरमशैवरहस्यमन्त्रम् ।
ज्योतिर्मयोज्ज्वलनिरञ्जनरूपमन्त्रं
वन्दे षडक्षरसदाशिवनाममन्त्रम् ॥ २ ॥

अश्रान्तदुष्कृतिसमुद्रतरीशमन्त्रं
पापाम्बुराशिबडबानलतुल्यमन्त्रम् ।
ब्रह्माच्युतेन्द्रसुरमौनिजपैकमन्त्रं
वन्दे षडक्षरसदाशिवनाममन्त्रम् ॥ ३ ॥

कामादिवर्गविपिनप्रलयाग्निमन्त्रं
दुर्दोषशैलकुलिशाधिकभीममन्त्रम् ।
मायान्धकारपरिशोषित[शोषण]भानुमन्त्रं
वन्दे षडक्षरसदाशिवनाममन्त्रम् ॥ ४ ॥

अत्रष्ट योऽष्टपुरवायुविकारकोश-
क्लेशाष्टपाशबहुदुःखविनाशमन्त्रम् । (?)
दुश्चिन्तदुर्व्यसनधातुविभेदमन्त्रं(?)
बन्दे षडक्षरसदाशिवनाममन्त्रम् ॥ ५ ॥

पञ्चप्रसादमहिताक्षरबीजमन्त्रं
मन्त्राग्रगण्यभुवनस्तुतमन्त्रराजम् ।
सर्वोऽपि मन्त्रजनकप्रणवात्ममन्त्रं
वन्दे (?) षडक्षरसदाशिवनाममन्त्रम् ॥ ६ ॥

ओंकारबिन्दुसहिताधिकशक्तिबीजं
पञ्चाक्षरत्रितयवर्णकमेकवर्णम् ।
एकादशाक्षरसमन्वितहंसमन्त्रं
वन्दे षडक्षरसदाशिवनाममन्त्रम् ॥ ७ ॥

श्रीसज्जनात्मबहिरन्तर वित्कटाग्र
क्ष्माभागर्जितनिरन्तरघोषमन्त्रम् ।
षट्चक्रमण्डपविहारविशुद्धमन्त्रं
वन्दे षडक्षरसदाशिवनाममन्त्रम् ॥ ८ ॥

षड्वर्णमन्त्राष्टकमद्भुतार्थं
सर्वागमप्रोक्तजगत्प्रकाशम् ।
यः संपठेन्मुक्तिसमस्तभोगान्
प्राप्नोति सत्यं सति सिद्धमन्त्रम् ॥ ९ ॥

॥ इति श्रीषड्वर्णमन्त्राष्टकं सम्पूर्णम् ॥

---

## २४. ॥ अथ श्रीनमश्शिवाष्टकम् ॥

संसारदावानलशामकाय
मृत्युंजयायामितविक्रमाय ।
सुरासुरौघार्चितपादुकाय
शिवासमेताय नमः शिवाय ॥ १ ॥

कुन्देन्दुशङ्खस्फटिकोपमाय
महेश्वरायाश्रितवत्सलाय ।
श्रीनीलकण्ठाय यमान्तकाय
शिवासमेताय नमः शिवाय ॥ २ ॥

भुजङ्गचक्राधिपभूषणाय
नानामणिभ्राजितकुण्डलाय ।
कर्पूरगौराय सुरेश्वराय
शिवासमेताय नमः शिवाय ॥ ३ ॥

घोराधिकाघौघनिवारणाय
स्वर्गापवर्गादिफलप्रदाय ।
निरामयायान्धकसूदनाय
शिवासमेताय नमः शिवाय ॥ ४ ॥

त्रिकाग्निकालाय मनोन्मनाय
त्रियम्बकाय त्रिपुरान्तकाय ।
कालाग्निरुद्राय जगन्मयाय
शिवासमेताय नमः शिवाय ॥ ५ ॥

दयासमुद्राय निधीश्वराय
धनेशमित्राय सुधामयाय ।
कारुण्यरूपाय मनस्कराय
शिवासमेताय नमः शिवाय ॥ ६ ॥

ब्रह्मेन्द्रविष्णवादिसुरार्चिताय
देवादिदेवाय दिगम्बराय ।
अनन्तकल्याणगुणार्णवाय
शिवासमेताय नमः शिवाय ॥ ७ ॥

वेदान्तवेद्याय जगन्मयाय
कैलासवासाय शिवाधराय ।
शिवस्वरूपाय सदाशिवाय
शिवासमेताय नमः शिवाय ॥ ८ ॥

इति स्तुत्वा महादेव सर्वव्यापिनमीश्वरम् ।
पुनः पुनः प्रणम्याथ स्कन्दस्तस्थौ कृताञ्जलिः ॥ ९ ॥

॥ इति श्रीनमश्शिवाष्टकं सम्पूर्णम् ॥

## २५. ॥ अथ श्रीनमश्शिवाष्टकम् ॥

आद्याय सर्वजगतामखिलेष्टदाय
  नित्याय निर्जितसुरासुरवैभवाय ।
कुन्देन्दुगौरवपुषे कुसुमास्त्रहन्त्रे
  देवाय भक्तवरदाय नमः शिवाय ॥ १ ॥

गङ्गाधराय गरुडध्वजवन्दिताय
  गौरीसखाय करूणामृतसागराय ।
उद्गातने (?) कुसुमकर्बुरकन्धराय
  पूर्णाय पुष्करकचाय नमः शिवाय ॥ २ ॥

संसारसागरसमुत्तरणप्लवाय
  सोमानलार्कनयनाय सुरार्चिताय ।
दुष्कर्मघर्मजलदाय दुरासदाय
  दुष्टात्मनां पुरहराय नमः शिवाय ॥ ३ ॥

वेदाय वेदनिलयाय विदां वराय
  विज्ञानमात्रवपुषे विविधात्मकाय ।
यज्ञान्तकाय यजतामभयप्रदाय
  यज्ञार्चिताय गिरिशाय नमः शिवाय ॥ ४ ॥

यन्नाम जन्तुरवशोऽपि गृणन् कदाचित्
  यामीं न याति भयदामिह यातनालिम् ।
तस्मै जरामरणजन्मभयातिगाय
  गन्धर्वगीतयशसेऽस्तु नमः शिवाय ॥ ५ ॥

नान्तं च मध्यमथवादिमजः स चाहं
  विष्णुस्तथैव यमितेन्द्रियचेतसोऽपि ।
जानन्ति सन्मुनिवराश्च तथामरेशाः
  गन्धर्वगीतयशसेऽस्तु नमः शिवाय ॥ ६ ॥

भूतेश्वराय भुजगेन्द्रविभूषणाय
  भूतित्रयाय भुवनाधिपवन्दिताय ।
पीताम्बरप्रियसखाय पिनाकदोष्णे
  नानाविचित्रगतयेऽस्तु नमः शिवाय ॥ ७ ॥

रुद्राय भद्रचरिताय महोक्षगाय
शूलाभयानि मृगचर्मपराङ्कुशाय (?) ।
पादानतार्तिदलनाय पलाशिहन्त्रे
मृत्युंजयाय विजयाय नमः शिवाय ॥ ८ ॥

॥ इति श्रीनमश्शिवाष्टकं सम्पूर्णम् ॥

---

२६. ॥ अथ श्रीनमःशिवायरगडा ॥

श्रीकराय दन्तिचर्मचेलिने नमः शिवाय ।
भाकराय भक्तलोकपालिने नमः शिवाय ॥ १ ॥

कारणादिकारणात्मकाय ते नमः शिवाय ।
दारुणासुरेन्द्रगर्वदाय ते नमः शिवाय ॥ २ ॥

भूतनायकाय लिप्तभूत ते नमः शिवाय ।
सूतकार्यकृत्पयोजसूत ते नमः शिवाय ॥ ३ ॥

पाहि मां महेश शर्व भर्ग ते नमः शिवाय ।
वाहनाय मानवेदवर्ग ते नमः शिवाय ॥ ४ ॥

साम्ब नीलकण्ठ देवशरण ते नमः शिवाय ।
साम्बजनकवन्द्यमानचरण ते नमः शिवाय ॥ ५ ॥

काशिनाथ वरद रक्षकाय ते नमः शिवाय ।
काशमल्लिकाप्रकाशकाय ते नमः शिवाय ॥ ६ ॥

राजताचलेन्द्रमन्दिराय ते नमः शिवाय ।
राजखण्डभृच्छिखान्तराय ते नमः शिवाय ॥ ७ ॥

मोक्षदायकाय धन्य[दैव]मुख्य ते नमः शिवाय ।
साक्षिमात्रकाय [विष्णुसख्य] ते नमः शिवाय ॥ ८ ॥

भृङ्गिताण्डवप्रियाय भीम ते नमः शिवाय ।
गाङ्गवारिमस्त वीथिकाण्ड[वीतकाम]ते नमः शिवाय ॥ ९ ॥

जातरूपभूत रुद्र [भूधरेन्द्र]चाप ते नमः शिवाय ।
सूतकालहस्तिवरदरूप ते नमः शिवाय ॥ १० ॥

गिरिश वारिवाहमार्गकेश ते नमः शिवाय ।
गरलकण्ठ सत्य चित्प्रकाश ते नमः शिवाय ॥ ११ ॥

अम्बराम्बराय भुजगहार ते नमः शिवाय ।
अम्बुजाक्षधीरताप्रहार ते नमः शिवाय ॥ १२ ॥

पङ्कजोदरार्चनार्हपाद ते नमः शिवाय ।
किङ्किणीकृतप्रदानकाद ते नमः शिवाय ॥ १३ ॥

सुरसरित्तरङ्गसङ्गिजूट ते नमः शिवाय ।
गुरुशिरोधिसंस्थ कालकूट ते नमः शिवाय ॥ १४ ॥

दक्षसवनहरणकार्यदक्ष ते नमः शिवाय ।
पक्षिवाहनेत्रगर्भपक्ष ते नमः शिवाय ॥ १५ ॥

वारणासुरारिवस्त्रशर्म ते नमः शिवाय ।
सारघोरतरहरास्त्रशस्त्र ते नमः शिवाय ॥ १६ ॥

करसरोरुहप्रभासकमल ते नमः शिवाय ।
गरुडवाहनेत्रपादकमल ते नमः शिवाय ॥ १७ ॥

हरिणभानुलपनमन्दहास ते नमः शिवाय ।
वरमुनीन्द्रहृदयपद्मवास ते नमः शिवाय ॥ १८ ॥

दारुकाटवीविटप्रदार[प्रचार] ते नमः शिवाय ।
तारकेश्वरार्धचन्द्रधार ते नमः शिवाय ॥ १९ ॥

आजवन्द्यवदनदावहारिणे नमः शिवाय ।
काजलाभिषेकसौख्यकारिणे नमः शिवाय (?) ॥ २० ॥

दासदोषदुःखगहनदहन ते नमः शिवाय ।
वासदुदर[वासवादि]लोकजालवहन ते नमः शिवाय ॥ २१ ॥

कञ्जभवकपालमालिकाय ते नमः शिवाय ।
कञ्जभवभवादिगीतकाय ते नमः शिवाय ॥ २२ ॥

रतिरलीशकोटिसुन्दराय ते नमः शिवाय ।
नतसुरारिभिद्गिरिश्वनाय ते नमः शिवाय ॥ २३ ॥

निरतकृतनिशामुखोरुनृत्य ते नमः शिवाय ।
धरधरीगुहास्तदुष्टदैत्य ते नमः शिवाय ॥ २४ ॥

हर शिवाभवान्धकापहार ते नमः शिवाय ।
दुरितजननमरणदुःखदूर ते नमः शिवाय ॥ २५ ॥

शैवचित्पुरस्थपारिजात ते नमः शिवाय ।
सावधानतादितेयजात ते नमः शिवाय ॥ २६ ॥

हंसकोटिकोटिसुप्रभाङ्ग ते नमः शिवाय ।
कंसवैरिसेव्यमस्तकाङ्ग ते नमः शिवाय ॥ २७ ॥

श्रीदमित्रपुरसुरारिशिक्ष ते नमः शिवाय ।
[1]साधकामृतस्फुरत्कटाक्ष ते नमः शिवाय ॥ २८ ॥

दिनकरेन्दुवह्निमुख्यदेह ते नमः शिवाय ।
वनजभवमुखादिवृषभवाह ते नमः शिवाय ॥ २९ ॥

नीरजाप्तवह्निसोमनेत्र ते नमः शिवाय ।
नीरदोपमानकृत्तिनेत्र ते नमः शिवाय ॥ ३० ॥

श्वेतभीतभीतिमेघवात ते नमः शिवाय ।
भूतपञ्चकादिहेतुभूत ते नमः शिवाय ॥ ३१ ॥

शीतपातचन्द्रिकावदात ते नमः शिवाय ।
शातशूलहस्तवारिजात ते नमः शिवाय ॥ ३२ ॥

भूरिकलुषकाण्डवातपोत ते नमः शिवाय ।
स्मेरमुखगणादिसुतसमेत ते नमः शिवाय ॥ ३३ ॥

दुरितहरण परमहंसरूप ते नमः शिवाय ।
तरुणहरिणलाञ्छनावतंस ते नमः शिवाय ॥ ३४ ॥

पार्वतीनिवासवामभाग ते नमः शिवाय ।
पूर्वनाथदत्तयोग्यभोग्य ते नमः शिवाय ॥ ३५ ॥

भावसम्भवावलेपभङ्ग ते नमः शिवाय ।
सावधानहृदयहृदयसङ्ग ते नमः शिवाय ॥ ३६ ॥

सुजनहृदयवारिजातसूर ते नमः शिवाय ।
भजनशीलभवसमुद्रपार ते नमः शिवाय ॥ ३७ ॥

भल्लहाभिधानदारबाल ते नमः शिवाय ।
सल्ललितकपित्थकान्तिजाल ते नमः शिवाय ॥ ३८ ॥

वरकरारविन्दहरिण[2]पाक ते नमः शिवाय ।
सुरगिरीन्द्रनिलय वीतशोक ते नमः शिवाय ॥ ३९ ॥

सुरुचिराद्रिजामनोऽर्धचोर ते नमः शिवाय ।
परिहृतानघालिभेदभार ते नमः शिवाय ॥ ४० ॥

---

1. सादरा 2. थाक

कम्बलाश्वतरविचित्रगान ते नमः शिवाय ।
साम्ब जूटबन्ध जलविहार ते नमः शिवाय ॥ ४१ ॥

अभयवरदटङ्कपरशुहस्त ते नमः शिवाय ।
सभयपूर्वदेवताप्रशस्त ते नमः शिवाय ॥ ४२ ॥

पट्टुविलासरजतकाण्डभाण्ड ते नमः शिवाय ।
कटिविराजमानचर्मखण्ड ते नमः शिवाय ॥ ४३ ॥

चटुलभ्रस्तघटितबालचन्द्र ते नमः शिवाय ।
चटुलभुवनकीर्तिसान्द्रचन्द्र ते नमः शिवाय ॥ ४४ ॥

शमदमादियुक्तभक्तसक्त ते नमः शिवाय ।
प्रमथवचनरचनसानुरक्त ते नमः शिवाय ॥ ४५ ॥

उरुतराश्वभावगतमहोक्ष ते नमः शिवाय ।
परितभस्मपूर्ण गरलभक्ष ते नमः शिवाय ॥ ४६ ॥

अम्बुराशिमेखलाश्चिताङ्ग ते नमः शिवाय ।
शम्बहस्तसुरवरप्रसङ्ग ते नमः शिवाय ॥ ४७ ॥

कपटनाटकप्रबोधकाय ते नमः शिवाय ।
तपनमण्डलान्तरस्थिताय ते नमः शिवाय ॥ ४८ ॥

अजगवाख्यचापसङ्ग्रहाय ते नमः शिवाय ।
कजभवादिसेव्यपादुकाय ते नमः शिवाय ॥ ४९ ॥

सकलनिष्कलामृतद्रुसाल ते नमः शिवाय ।
प्रकटवीतिहोत्रनीलफाल ते नमः शिवाय ॥ ५० ॥

नलिनबन्धुकदनभञ्जनाय ते नमः शिवाय ।
कलितवीरभद्रनामकाय ते नमः शिवाय ॥ ५१ ॥

अखिलजनभयङ्करात्तहास ते नमः शिवाय ।
अखिलसेवकौघसुखदहास ते नमः शिवाय ॥ ५२ ॥

लयविलूनपवनमित्ररसन ते नमः शिवाय ।
लयभयामृतामरात्मरसन ते नमः शिवाय ॥ ५३ ॥

नरहरिप्रकृष्टगर्वहरण ते नमः शिवाय ।
शरभसालुवस्वरूपभरण ते नमः शिवाय ॥ ५४ ॥

श्रीपञ्चाक्षरमन्त्रमष्टशतसङ्ख्याकस्तवं सर्वदा
ये शृण्वन्ति पठन्ति पावनजनास्तेषां तु रोगौषधम् ।
वेदान्तोद्भवचिद्विशिष्ट[1]वचसामप्यूहतां दुर्लभं
विन्दन्तीन्दुकलाधरं च सुतरां सायुज्यमुक्तिं मुदा ॥ ५५ ॥

॥ इति श्रीनमश्शिवायरगडा सम्पूर्णा ॥

---

## २७. ॥ अथ श्रीबाणाष्टकम् ॥

श्रीमत्कपर्दितटिनीतटशोभनाय
शीतांशुरेखपरिकल्पितशेखराय ।
नित्याय निर्मलगुणाय निरञ्जनाय
नीहारहारधवलाय नमः शिवाय ॥ १ ॥

डिण्डीरपिण्डपरिपाण्डुरविग्रहाय
दीव्यज्जटापटलमण्डितमस्तकाय ।
नागेन्द्रकृत्तिवसनाय निरामयाय
नारायणप्रियतमाय नमः शिवाय ॥ २ ॥

दर्वीकराकलितकुण्डलमध्यमानं [मण्डयमान]
गण्डाय चण्डसुरशात्रवदण्डनाय ।
आखण्डलादिसुरमण्डलमध्यमान [वन्द्यमान]
पादाम्बुजाय वरदाय नमः शिवाय ॥ ३ ॥

कालान्तकाय कमलासनपूजिताय
कल्याणशैलपरिकल्पितकार्मुकाय ।
कन्दर्पदर्पदहनाय कलाधराय
कारुण्यपुण्यनयनाय नमः शिवाय ॥ ४ ॥

विश्वेश्वराय वृषभोत्तमवाहनाय
विध्वस्तदक्षविहरा[विहिता]ध्वरविभ्रमाय ।
गङ्गाधराय गजदानवमर्दनाय
दोर्दण्डदण्डविभवाय नमः शिवाय ॥ ५ ॥

सोमानलार्कपरिकल्पितलोचनाय
सोमार्कवह्निमुनिपुङ्गवसेविताय ।
भूतेश्वराय भुवनत्रयनायकाय
भूत्यङ्गरागशुभदाय नमः शिवाय ॥ ६ ॥

---

1. मनसामप्यूह्यतां

नानाविधागमरहस्यविबोधकाय
स्वीयानुभावपरिकल्पितभावनाय ।
भक्ताय भक्तिविवशान्मलनाशनाय
स्वर्गापवर्गसुखदाय नमः शिवाय ॥ ७ ॥

लोकत्रयाध्व[घ]हरणोत्सुकमानसाय
लोकत्रयार्चितपदाय जगन्मयाय ।
श्रीभट्टबाणकविसूक्तिविराजिताय
कैवल्यदाननिपुणाय नमः शिवाय ॥ ८ ॥

॥ इति श्रीबाणाष्टकं सम्पूर्णम् ॥

---

## २८. ॥ अथ श्रीमल्लिकार्जुनस्तोत्रम् ॥

श्रीकण्ठादिसमस्तरुद्रनमितो वामार्धजानिः शिवः
प्रालेयाचलहारहीरकुमुदक्षीराब्धितुल्यप्रभः ।
विष्वक्सेनविघातमस्तमकुटीरत्नप्रभाभास्वरः
श्रीमत्पर्वतमल्लिकार्जुनमहादेवः शिवो मे गतिः ॥ १ ॥

इन्द्राद्यामरयातुधानकरवल्लीवेल्लिताशीविषा-
धीशाकर्षितमन्दरागमथिताम्भोराशिजातस्फुर-
त्कीलासंहितविस्फुलिङ्गगरलग्रासैकशाम्यद्भयः
श्रीमत्पर्वतमल्लिकार्जुनमहादेवः शिवो मे गतिः ॥ २ ॥

उद्यद्भासुरकासरासुरभुजादर्पाद्रिदम्भोलिभृ-
त्पाटीरामरधेनुनायककुद्विन्यस्तहस्ताम्बुजः ।
नीहाराचलकन्यकावहनपादद्वन्द्वपादोरुहः
श्रीमत्पर्वतमल्लिकार्जुनमहादेवः शिवो मे गतिः ॥ ३ ॥

नीरेजासनमुख्यनिर्जरशिरःप्रच्छन्नपादद्वयः
सर्वज्ञस्त्रिपुरासुराहितगणाम्भोदौघझञ्झानिलः ।
मार्कण्डेयमहामुनीश्वरनुतप्रख्यातचारित्रकः
श्रीमत्पर्वतमल्लिकार्जुनमहादेवः शिवो मे गतिः ॥ ४ ॥

सद्भक्तावलिमानसाम्बुरुहचञ्चच्चञ्चरीको मृडः
क्रीडाबन्धुरपाणिहृत्कमलपोतः कर्णगोकर्णराट् ।
चक्री चक्रसमस्तभूषणगणः कोलासुरध्वंसकः
श्रीमत्पर्वतमल्लिकार्जुनमहादेवः शिवो मे गतिः ॥ ५ ॥

कल्याणाचलकार्मुकप्रथितदुग्धाम्भोधिकन्यामनः-
कञ्जातभ्रमरायमाणविलसद्गोविन्दसन्मार्गणः ।
धात्रीस्यन्दनभासमाननलिनीजात[प्र]त्रयीसैन्धवः
श्रीमत्पर्वतमल्लिकार्जुनमहादेवः शिवो मे गतिः ॥ ६ ॥

गोराजोत्तमवाहनः शशिकलालङ्कारजूटः सदा
पद्मानायकसायकस्त्रिभुवनाधीशः पशूनां पतिः ।
भक्ताभीष्टफलप्रदानचतुरः कारुण्यपाथोनिधिः
श्रीमत्पर्वतमल्लिकार्जुनमहादेवः शिवो मे गतिः ॥ ७ ॥

पातालामरवाहिनीवरजलक्रीडासमेतः सदा
रम्भाकननवाटिकाविहरणोद्युक्तस्त्रयीगोचरः ।
फालाक्षो भ्रमराम्बिकाहृदयपङ्केजातपुष्पन्धयः
श्रीमत्पर्वतमल्लिकार्जुनमहादेवः शिवो मे गतिः ॥ ८ ॥

॥ इति श्रीमल्लिकार्जुनस्तोत्रं सम्पूर्णम् ॥

---

## २९. ॥ अथ श्रीमार्कण्डेयेश्वरेशस्तवः ॥

सर्वेषां दैवतानां सकलसुखफलप्राप्तये पूजकानां
कार्याधीशो गणेशो नगवरतनयानन्दचेष्टाभिरामः ।
यस्य श्रीशेश्वरस्य प्रथितगुणगणालङ्कृतस्यात्मजस्तं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ १ ॥

वैकुण्ठाधीशमायामयसुखगवधूरूपसंदर्शनाद्यो
मोहात्सम्भ्रान्तमान[म्यमाण]स्सहगमनकलाचातुरीयुक्तचित्तः।
तन्मायास्त्रीशरीरे वटुकमजनयद्भासते यः शिवस्तं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ २ ॥

यस्याङ्गे[ग्निः]फालभागे सुललितनयनं सव्यभागे भवानी
हस्ते ब्रह्मोत्तमाङ्गं सगरलसुगले ब्रह्मशीर्षालिमाला ।
अङ्गेऽनङ्गाङ्गभूतिः पदकमलयुगे विष्णुनेत्राम्बुजातं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ ३ ॥

यस्य श्रीमौलिभूषा कुमुदहितकलाभासमानोत्तमाङ्गे
विद्युत्पुञ्जाभकान्ते विलसितसुजटामण्डले व्योमगङ्गा ।
कण्ठे वत्रासिनीलोपलनिभगरलं भासते यः शिवस्तं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ ४ ॥

हस्ताब्जैर्भासमानैर्निशितमुखयुतैः शूलमुख्यायुधैः सं-
दीप्ताङ्गः सर्वशत्रून् खररणसमये निर्जयन् यो बलाढ्यः।
मार्ताण्डाग्नीन्दुनेत्रत्रययुतसुमुखैः पञ्चभिः संयुतस्तं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ ५ ॥

शान्तं चन्द्रायुताभं शशियुतमकुटं पञ्चवक्त्रं त्रिनेत्रं
भास्वत्केयूरहाराङ्गदकटकमुखाशेषभूषाभिरामम् ।
गौरीगङ्गासमेतं प्रमथगणयुतं स्कन्दविघ्नेशसेव्यं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ ६ ॥

मार्कण्डेयर्षिवर्यः शमनभटभयाद्यस्य पादारविन्द-
द्वन्द्वं संश्रित्य भक्त्या शिव भव शरणं ते नमः पालयेति।
उक्त्वा मृत्युं वि[च]जित्वा चिरमतुलसुखं प्राप्तवांस्तं यमारिं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ ७ ॥

सर्वैर्देवासुरेन्द्रैः प्रमथितकलशाम्भोधिमध्ये फणीन्द्र-
स्यास्यानीके सुरोषाद्विगलितगरलं रुद्रनेत्राग्नितुल्यम् ।
लोकानीकावनार्थं [1]कवलितसुमतिर्यो महेशः शिवस्तं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ ८ ॥

ब्रह्माद्यैर्लोकपालैः प्रणमितचरणाः प्रार्थनाकृष्टचित्त-
स्तान् कारुण्येन वीक्ष्य त्रिपुरदितिसुतानेकबाणेन दग्धुम् ।
सर्वोपायैः समर्थः ससुररिपुपुरीदाहको यः शिवस्तं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ ९ ॥

नन्दीशानन्दनाट्यप्रियमखिलकलाकोविदं सर्वविद्या-
साम्राज्यानन्दपीठस्थितपरमशिवं सुन्दरं मन्दहासम् ।
छन्दोगुह्यार्थतत्त्वात्मकमभयमजानन्दकन्दं मुकुन्दं
मार्कण्डेयेश्वरेशं पशुपतिमनिशं पार्वतीशं भजेऽहम् ॥ १० ॥

मार्कण्डेयेश्वरस्य स्तवमिदमघतूलाद्रिवैश्वानराभं
नित्यं यो भक्तियुक्तः पठति स पुरुषः पापसङ्घाद्विमुक्तः।
सद्भूमौ सर्वभोगैरनवरतसुखं प्राप्तवान् [प्राप्नुयात्] सर्वदेवैः ।
सन्मान्यः श्लाघनीयः स भवति भगवान् श्रीगुरोः सत्प्रसादात् ॥११ ॥

॥ श्रीमार्कण्डेयेश्वरेशस्तवः सम्पूर्णः ॥

---

1. कवलयति

## ३०. ॥ अथ श्रीअष्टप्रासाष्टकम् ॥

शक्राद्यामरसंनुताङ्घ्रियुगलं चक्रायुधाद्यर्चितं
नक्रग्रस्तशिशुप्रदानचतुरं शुक्राविसोमाक्षिकम् ।
विक्रान्तं श्रुतिमस्तकेषु चरणाब्जाक्रान्तयम्याशयं
चक्रारिष्टरसाशताङ्गसुमहच्चक्रं ? महेशं भजे ॥ १ ॥

धृष्टात्मानमपारसंसृतिदवप्लुष्टात्मनां शान्तिदं
शिष्टान्विष्टपदारविन्दमुमया श्लिष्टाङ्गमत्याशया ।
दिष्टान्तानभियुक्तमौनितनयं कष्टापहं सेवता-
मिष्टं सज्जनसंहतेर्विधिसमादिष्टात्मकाङ्घ्रिं भजे ॥ २ ॥

शृङ्गारामितलोलमद्रिसुतया सङ्गं वृषे गामिनं
गङ्गाचन्द्रजटाविराजिमकुटं पिङ्गाननातिप्रियम् ।
अङ्गासङ्गितमन्मथा बहुकृपापाङ्गं त्रिशूलायुधं
लिङ्गार्चापरदत्तसर्वपुरुषार्थं गेयवीर्यं भजे ॥ ३ ॥

कुण्ठं भक्तजनाहितस्य परमोत्कण्ठास्पदं स्वस्त्रियः
कण्ठालङ्कृतनागमाशुगि[जि]तवैकुण्ठाधिपं शङ्करम् ।
कण्ठस्थापितकालकूटविषमुत्कण्ठादिषट्कापहं
कुण्ठात्मानभिगम्यमानचरितं कण्ठातिनीलं भजे ॥ ४ ॥

अण्डानामखिलस्य नाथमुडुराट्कुण्डं कृपासागरं
शुण्डावक्त्रमुखोग्रपाण्ड्यजनकं दण्डायुधारिं शिवम् ।
काण्डाकारितवेदफेरु[रूप]ममरोद्दण्डं पुरद्वेषिणं
चण्डीप्राणपतिं सुधाशनपतेः शुण्डावदर्च्यं भजे ॥ ५ ॥

हिक्कामुख्यगदाधितापपटलीधिक्कारिदिव्याह्वयं
ढक्कादुन्दुभिकाहलाद्यविरमसृक्काबृहत्कुक्षिखम् (?) ।
ढक्कामद्रुहमीशितारमतसी सृक्कालिमग्रीवमुं
त्वक्कायच्छदमीदृशं खनिजभान्यक्कारिदेहं भजे (?) ॥ ६ ॥

भर्गाख्यं परमेश्वरं त्रिजगतां सर्गादिहेतुं मृडं
दुर्गाधीशमनन्तमेकमजरं दुर्गापहं ध्यायताम् ।
गर्गागस्त्यवसिष्ठमुख्यसुतपद्वर्गान्तरङ्गालयं
स्वर्गानोकहमर्थिनां पशुपतिं स्वर्गामिवन्द्यं भजे ॥ ७ ॥

वित्ताधीशसखं विशालनिटिलं सत्तामयं शाश्वतं
चित्तादत्म्यददिव्यनामविभवं चित्ताधिजाताहितम् ।
मत्तानेकपगामिनं प्रणवसंवित्तास्वरूपं भवं
मत्ताहीनसुबोधगोचरमलं मत्तापहाङ्घ्रिं भजे ॥ ८ ॥

अष्टप्रासाष्टकं शम्भोरिष्टं भक्त्या पठन्ति ये ।
इष्टा भवन्ति श्रीगन्धपुष्टिकाननवासिनः ॥ ९ ॥

॥ इति श्रीअष्टप्रासाष्टकं सम्पूर्णम् ॥

---

## ३१. ॥ अथ श्रीत्यागराजाष्टकम् ॥

चन्द्रार्धचूडाय सदाशिवाय साम्बाय लक्ष्मीपतिसेविताय ।
भक्तानुरक्षा[क्ता]य महेश्वराय त्यागाधिराजाय नमः शिवाय ॥ १ ॥

सुमेरुचापाय सुशोभनाय ब्रह्मेन्द्रनारायणवन्दिताय ।
वाचामतीताय मनोन्मनाय त्यागाधिराजाय नमः शिवाय ॥ २ ॥

देवादिदेवाय जगत्त्रयाय जन्मादिहीनाय निरञ्जनाय ।
राजाधिराजाय सुरेश्वराय त्यागाधिराजाय नमः शिवाय ॥ ३ ॥

वेदान्तवेद्याय विभूषणाय विराजमानाय सुरस्मिताय ।
शुद्धान्तसूक्ष्माय सुरार्चिताय त्यगाधिराजाय नमः शिवाय ॥ ४ ॥

रत्नादिभूषाय जटाधराय कल्पान्तहीनाय कलाधराय ।
कालान्तकायाखिलनायकाय त्यगाधिराजाय नमः शिवाय ॥ ५ ॥

पञ्चाननाय फणिराजविभूषणाय
स्वर्गापवर्गफलदाय विमोक्षदाय ।
मीमांसकादिभुवनत्रयपालकाय
त्यागाधिराजरसिकाय नमः शिवाय ॥ ६ ॥

मुक्ताय लोकस्य परात्पराय पञ्चाक्षरीपाठक[जापक]मोक्षदाय ।
त्रेताधिरूपाय जगज्जनित्रे त्यागाधिराजाय नमः शिवाय ॥ ७ ॥

सिंहासनस्थाय दिगम्बराय शीतांशुवर्णाय जटाधराय ।
श्रीपार्वतीशाय सदाशिवाय त्यागाधिराजाय नमः शिवाय ॥ ८ ॥

नमः शिवायेति सकृज्जपित्वा[जपेन] पापं महद्घोरमुपैति नाशम् ।
भूम्यन्तरिक्षात्परिपूर्णकाष्ठं स्वल्पाग्निना दग्धमुपैति नाशम् ॥ ९ ॥

॥ इति श्रीत्यागराजाष्टकं सम्पूर्णम् ॥

---

## ३२. ॥ अथ श्रीअगस्त्येशलिङ्गाष्टकम् ॥

श्रीमत्पर्वतपुत्रिकाश्रितलसद्वामाङ्गमिन्दूज्ज्वल-
त्कोटीरं कनकाद्रिकार्मुकधरं कल्पद्रुमालावली-
सत्कोरःस्थलमन्तकान्तकमनन्ताहीन्द्रसद्भूषणं
श्रीगुण्टूरिपुराधिवासमतुलागस्त्येशलिङ्गं भजे ॥ १ ॥

भक्ताभीष्टफलप्रदं भवहरं पापौघविच्छेदनं
शक्राद्यष्टदिगीशसंनुतपदं शुम्भद्गणाधीश्वरम् ।
गङ्गोत्तुङ्गतरङ्गिणीयुतजटाजूटं मुनीन्द्रार्चितं
श्रीगुण्टूरिपुराधिवासमतुलागस्त्येशलिङ्गं भजे ॥ २ ॥

मार्कण्डेयमुनीन्द्ररक्षणमजं मृत्युञ्जयं शाश्वतं
मत्तामर्त्यविरोधिगर्वनगगीदम्भोलिधारायितम् ।
वित्ताधीशसखं वियत्तललसत्केशं त्रिलोकेश्वरं
श्रीगुण्टूरिपुराधिवासमतुलागस्त्येशलिङ्गं भजे ॥ ३ ॥

भूम्यापोऽग्निसमीरणा[1]म्बरलसत्सोमार्कयज्वा[2]भिधै-
रष्टैरिष्टवरप्रदानचतुरैः स्पष्टैः स्वरूपैः सदा ।
भास्वन्तं जगतीतले गजहरं कर्पूरगौरं शिवं
श्रीगुण्टूरिपुराधिवासमतुलागस्त्येशलिङ्गं भजे ॥ ४ ॥

सूर्याग्नीन्दुविलोचनं सुरवरं फालाग्निभस्मीकृत-
प्रद्युम्नं परमेश्वरं गुरुवरं कालाग्निरुद्रं हरम् ।
कण्ठाकल्पविलासभासुरमहाहालाहलं शङ्करं
श्रीगुण्टूरिपुराधिवासमतुलागस्त्येशलिङ्गं भजे ॥ ५ ॥

श्रीमद्भूमिरथं विरिञ्चिविलसत्सूतं नगाधीशस-
च्चापं विष्णुशरं रथाङ्गयुगलीभूतार्कचन्द्रं शिवम् ।
पूर्वामर्त्यपुरत्रयान्तकरणोद्युक्तं शिवालिङ्गितं
श्रीगुण्टूरिपुराधिवासमतुलागस्त्येशलिङ्गं भजे ॥ ६ ॥

दक्षाक्षुद्रमखागतामरगणान् तत्रत्यऋत्विग्वरान्
चन्द्रं तच्छ्वशुरं भगं मुनिगणानग्निं च दक्षं लसत् ।
स्वेदोद्भूतविनीलदेहरुचिना वीरेण संत्रासितं[त्रासकं]
श्रीगुण्टूरिपुराधिवासमतुलागस्त्येशलिङ्गं भजे ॥ ७ ॥

---

1. प्रभञ्जना    2. स्वात्मा

श्रीलक्ष्मीशविरिञ्चिपूजितपदं शुंभत्त्रिशूलायुधं
श्रीमद्भृङ्गिकुमारनन्दिगणपश्रीवीरभद्रादिभिः ।
सर्वैर्भक्तियुतैर्महागणवरैः संसेव्यमानं सदा
श्रीगुण्टूरिपुराधिवासमतुलागस्त्येशलिङ्गं भजे ॥ ८ ॥

श्रीकोप्पराजकुलवार्धिनिशाकरेण
स्तोत्रं कृतं जगति सुब्बयनामभाजा-
गस्त्येश्वरस्य निजभक्तजनावनस्य
यो वै पठेल्लभति सोऽपि सदा विमुक्तिम् ॥ ९ ॥
॥ इति श्रीअगस्त्येशलिङ्गाष्टकं सम्पूर्णम् ॥

---

## ३३. ॥ अथ श्रीदशश्लोकी ॥

यद्यत्प्रसादविमुखेन पुरा न लब्धं
लब्धं यदद्य च गुरो भवतः प्रसादात् ।
विज्ञापयामि तदिदं कुतुकातिरेक-
संप्रेरितः परशिवाद्वयबोधनाख्यम् ॥ १ ॥

न त्वां स्मरामि न भजामि यजामि नान्त-
र्नो वा बहिर्न च शिवं न च दैवमन्यत् ।
नाहं भवामि न च नाहमहं भवामि
किं वा भवामि तदहं न हि वक्तुमीशे ॥ २ ॥

साक्षादहं स परमः शिव एव जातो
जातोऽधुना स परमोऽपि शिवोऽहमेव ।
आवां पुरा चिरमभूव तमःप्रकाश-
क . . . परस्परयु . . . . पयसे इवाद्य ॥ ३ ॥

मत्तस्तदेतदखिलं जगदाविरस्ति
मत्तश्च जीवति लयं च तथा [तथैव] मत्तः ।
मत्तः स्थिरो भवति मुक्तिमुपैति मत्तो
मत्तो न चैतदमुतोऽपि च नाहमन्यः ॥ ४ ॥

आधारये क्षितिरहं सततं पयोऽहं
संप्लावये परिपचामि च पावकोऽहम् ।
आन्दोलयामि पवनोऽहमिहावकाशं
मुञ्चामि चाम्बरमहं स्थितये ममैव ॥ ५ ॥

मायामरुद्भिरभितः क्षुभितो भवामि
ब्रह्माण्डखण्डनवबुद्बुदजाललोलः ।
संहृत्य सर्वमथ शक्तितरङ्गडोला-
केलिक्षयादहमसौ स्तिमितश्चिदब्धिः ।। ६ ।।

लोकास्त्रिविष्टपमुखा निरयावसाना
ये सर्व एव त [इ] मे मम केलिरेखाः ।
नैवाहमेषु मम केतुवशं वदन्ति
मद्धाम्नि नार्कशशिनौ न च पावकोऽयम् ।। ७ ।।

यस्यां वसामि च स किं ननु नैव काशी
विश्वेश्वरः स च यमीशधिया स्पृशामि ।
यद्व्याहरामि सकलं प्रणवस्तदेव
मुक्ताश्च ते सहचरन्ति मया क्षणं ये ।। ८ ।।

निर्बन्धनोऽपि निजरूपमवेक्ष्य बद्धो
मुच्येत् किलैतदथ वीक्ष्य च नित्यमुक्तः ।
धामत्रयातिचकितो गतिभोक्तृभोग्य-
भोगान्वयोऽस्मि स परः शिव एव सोऽहम् ।। ९ ।।

इत्थं भवाब्धिमतिलङ्घ्य भवत्प्रसादात्
धन्यस्य मे यदुदभूच्छिवसामरस्यम् ।
आपिण्डविच्युति गुरो सुखमेतदीयं
दिव्यं त्वदङ्घ्रिसरसीरुहसात्करोति ।। १० ।।

।। इति श्रीविद्याधरचक्रवर्तिरचिता दशश्लोकी सम्पूर्णा ।।

---

## ३४. ।। अथ श्रीचिदम्बरनटनम् ।।

सदञ्चितमुदञ्चितनिकुञ्चितपदार्पितजलञ्झलितमञ्जुकटकं
पतञ्जलिदृगञ्जनमचञ्चलपदं जननभञ्जनकरं गलरवम् ।
कदम्बरुचिमम्बरवसं परममम्बुदकदम्बकविडम्बनकरं
चिदम्बुधिमणिं बुधहृदम्बुजरविं वरचिदम्बरनटं हृदि भजे ।। १ ।।

हरं त्रिपुर[भञ्जनमनन्तकृत]कङ्कणमखण्डदयमन्तरहितं
विरिञ्चिसुरसंहतिपुरन्दरविचिन्तितपदं तरुणचन्द्रमकुटम् ।
परं परमखण्डितयमं भसितमण्डिततनुं मदनभञ्जनकरं
चिरन्तनमिमं प्रणतसञ्चितनिधिं वरचिदम्बरनटं हृदि भजे ।। २ ।।

अनन्तनवरत्नविलसत्कनककिङ्किणिझलंझलझलंझलरवं
मुकुन्दविधिहस्तगतिमद्दललयध्वनिधिमिद्धिमितनर्तनपदम् ।
शकुन्तरथबर्हिरथनन्दिमुखदन्तिमुखभृङ्गिरिटिसङ्घनिकटं
सनन्दसनकप्रमुखवन्दितपदं वरचिदम्बरनटं हृदि भजे ॥ ३ ॥

अनन्तमहसं त्रिदशवन्द्यचरणं मुनिहृदन्तरवसन्तममलं
कबन्धवियदावनिकगन्धवहवह्निमखिचन्द्ररविमञ्जुवपुषम् ।
अनन्तविभवं त्रिजगदन्तरमणिं त्रिणयनं त्रिपुरखण्डनपरं
सनन्दननिनन्दितपदं सकरुणं वरचिदम्बरनटं हृदि भजे ॥ ४ ॥

अचिन्त्यमलिवृन्दरुचिबन्धुगलमन्तकभुजङ्गमविहङ्गमपतिं
मुकुन्दसुरवृन्दबलहन्तृकृतवन्दनलसन्तमहिकुण्डलधरम् ।
अकम्पमनुकम्पनरतिं गलनिषङ्गिगरलं भवमतङ्गजहरिं
पतञ्जलिधनं प्रणतसञ्चितनिधिं वरचिदम्बरनटं हृदि भजे ॥ ५ ॥

अवन्तमखिलं जगदभङ्गगुणतुङ्गमवतंसितविधुं सुरसरि-
त्तरङ्गनिकुरुम्बधृतलम्बनजटं शमनडम्भहरणं भवहरम् ।
शिवं दशदिगन्तरनिरन्तरविजृम्भितकरं करलसन्मृगशिशुं
भवं शशिधनञ्जयपतङ्गनयनं वरचिदम्बरनटं हृदि भजे ॥ ६ ॥

परं पुरहरं सुरवरं पशुपतिं जनितदन्तिमुखषण्मुखविभुं
मृडं कनकपिङ्गलजटं सनकपङ्कजरविं शमितसंयमिशुचिम् ।
शिवं कलभचर्मवसनं जलधिजन्मगरलं कबलयन्तममलं
दृढं प्रणवकन्दमभयं करपदं वरचिदम्बरनटं हृदि भजे ॥ ७ ॥

अजक्षितिरथं भुजगपुङ्गवगुणं कनकशृङ्गधनुषं करलस-
त्कुरङ्गपृथुटङ्कपरशुं रुचिरकुङ्कुमरुचिं डमरुकं च दधतम् ।
मुकुन्दविशिखं प्रणतवृन्दफलदं निगमतुङ्गतुरगं निरुपमं
सुगन्धितमहं झटिति संहृतपुरं वरचिदम्बरनटं हृदि भजे ॥ ८ ॥

अनङ्गपरिपन्थिनमजं क्षितिधुरंधरमलं करुणयन्तममलं
ज्वलन्तमनलं दधतमन्तकरिपुं सततमिन्द्रसुरवन्दितपदम् ।
उदञ्चितरवह्निरुचिगन्धमरविन्दकुलबन्धुरुचिसङ्घवपुषं
पतञ्जलिधनं प्रणतसञ्चितनिधिं वरचिदम्बरनटं हृदि भजे ॥ ९ ॥

अखण्डविधुमण्डलमुखं डमरुमण्डितकरं कनकमण्डपगृहं
स्वगण्डतलकुण्डलितकुण्डलिपमण्डलितमण्डलपिचण्डमतुलम् ।

मृकण्डुसुतचण्डतरदण्डधरलुण्ठनपरं हृदयमण्डपरशुं
शिखण्डशशिखण्डमणिमण्डनपरं वरचिदम्बरनटं हृदि भजे ॥ १० ॥

भस्मानि पान्तु परमेश्वरदिव्यदेह-
सम्पर्कसौरभपवित्रकराणि चास्मान् ।
रोगारिपापभय . . . . . . ?
रक्षाकराण्यखिललोकवशीकराणि ॥ ११ ॥

॥ इति श्रीचिदम्बरनटनं सम्पूर्णम् ॥

## ३५. ॥ अथ श्रीचिदम्बराष्टकम्[1] ॥

चित्तजान्तकं चित्स्वरूपिणं चन्द्रमृगधरं चर्मप्रिय[चर्मभी]करम् ।
चतुरभाषणं चिन्मयं गुरुं भज चिदम्बरं भावनास्थितम् ॥ १ ॥

दक्षमर्दनं दैवशासनं द्विजहिते रतं दोषभञ्जनम् ।
दुःखनाशनं दुरितशासनं भज चिदम्बरं भावनास्थितम् ॥ २ ॥

बद्धपङ्कजं बहुलशोभितं बुधवरैर्नुतं भस्मभूषितम् ।
भावयुक्स्तुतं बन्धुभिः स्तुतं भज चिदम्बरं भावनास्थितम् ॥ ३ ॥

दीनतत्परं दिव्यवचनदं दी[र]क्षितापदं दिव्यतेजसम् ।
दीर्घशोभितं देहतत्त्वदं भज चिदम्बरं भावनास्थितम् ॥ ४ ॥

क्षितितलोद्भवं क्षेमसंभवं क्षीणमानवं क्षिप्रसद्यवम् ।
क्षेमदात्रवं क्षेत्रगौरवं भज चिदम्बरं भावनास्थितम् ॥ ५ ॥

तक्षभूषणं तत्त्वसाक्षिणं यक्षसागणं भिक्षुरूपिणम् ।
भस्मपोषणं व्यक्तरूपिणं भज चिदम्बरं भावनास्थितम् ॥ ६ ॥

यस्तु जापिकं चिदम्बराष्टकं पठति नित्यकं पापहं सुखम् ।
कठिनतारकं घटकुलाधिकं भज चिदम्बरं भावनास्थितम् ॥ ७ ॥

॥ इति श्रीचिदम्बराष्टकं सम्पूर्णम् ॥

## ३६. ॥ अथ श्रीचिदम्बरेशस्तुतिः ॥

कल्याणमूर्तिं कनकाद्रिचापं
कान्तासमाक्रान्तनिजार्धदेहम् ।
कालान्तकं कामरिपुं पुरारिं
चिदम्बरेशं हृदि भावयामि ॥ १ ॥

1. सप्तैव श्लोकाः मातृकायां सन्ति ।

विश्वाधिकं विष्णुमुखैरुपास्यं
त्रिलोचनं चन्द्रकलावतंसम् ।
उमापतिं पापहरं प्रशान्तं
चिदम्बरेशं हृदि भावयामि ॥ २ ॥

विश्वेश्वरं नित्यमनन्तरूपं
बालेन्दुचूडं सुरवन्द्यपादम् ।
पतिं पशूनां हृदि सन्निविष्टं
चिदम्बरेशं हृदि भावयामि ॥ ३ ॥

विशालनेत्रं परिपूर्णगात्रं
गौरीकलत्रं सुरवैरिशत्रुम् ।
कुबेरमित्रं जगदेकपात्रं
चिदम्बरेशं हृदि भावयामि ॥ ४ ॥

कैलासवासं जगतामधीशं
मुरारिमित्रं पुरुहूतवन्द्यम् ।
महेशमूर्तिं सुरसेव्यमानं
चिदम्बरेशं हृदि भावयामि ॥ ५ ॥

कर्पूरगात्रं कमनीयपात्रं
कंसारिमित्रं कमलेन्दुवक्त्रम् ।
कन्दर्पशत्रुं कमलेशमित्रं
चिदम्बरेशं हृदि भावयामि ॥ ६ ॥

त्वमेव बन्धुस्त्वयि भाति सर्वं
अनेकरूपं परमन्त्रमेकम् ।
पिनाकपाणिं भयनाशहेतुं
चिदम्बरेशं हृदि भावयामि ॥ ७ ॥

कृपासमुद्रं सुमुखं त्रिणेत्रं
जटाधरं पार्वतिवामभागम् ।
सदाशिवं रुद्रमनन्तरूपं
चिदम्बरेशं हृदि भावयामि ॥ ८ ॥

॥ इति श्रीचिदम्बरेशस्तुतिः सम्पूर्णा ॥

३७. ॥ अथ श्रीचिदम्बरपञ्चचामरस्तोत्रम् ॥

कदम्बकाननप्रियं चिदम्बया विहारिणं
मदेभकुम्भगुम्फितस्वडिम्भलालनोत्सुकम् ।
सदम्भकामखण्डनं सदम्बुवाहिनीधरं
हृदम्बुजे जगद्गुरुं चिदम्बरं विभावये ॥ १ ॥

समस्तभक्तपोषणस्वहस्तबद्धकङ्कणं
प्रशस्तकीर्तिवैभवं निरस्तसज्जनापदम् ।
करस्थमुक्तिसाधनं शिरःस्थचन्द्रमण्डनं
हृदम्बुजे जगद्गुरुं चिदम्बरं विभावये ॥ २ ॥

जटाकिरीटमण्डितं निटाललोचनान्वितं
पटीकृताष्टदिक्तटं पटीरपङ्कलेपनम् ।
नटौघपूर्वभाविनं कुठारपाशधारिणं
हृदम्बुजे जगद्गुरुं चिदम्बरं विभावये ॥ ३ ॥

कुरङ्गशावशोभि[तं] चिरं गजाननार्चितं
पुराङ्गनाविचारदं वराङ्गरागरञ्जितम् ।
खराङ्गजातनाशकं तुरङ्गमीकृतागमं
हृदम्बुजे जगद्गुरुं चिदम्बरं विभावये ॥ ४ ॥

अमन्दभाग्यभाजनं सुमन्दहाससन्मुखं
सुमन्दमन्दगामिनीगिरीन्द्रकन्यकाधवम् ।
शमं दमं दयालुताममन्दयन्तमात्मनो
हृदम्बुजे जगद्गुरुं चिदम्बरं विभावये ॥ ५ ॥

करीन्द्रचर्मवाससं गिरीन्द्रचापधारिणं
सुरेन्द्रमुख्यपूजितं खगेन्द्रवाहनप्रियम् ।
अहीन्द्रभूषणोज्ज्वलं नगेन्द्रजाविलासिनं
हृदम्बुजे जगद्गुरुं चिदम्बरं विभावये ॥ ६ ॥

मलापहारिणीतटे सदा विलासकारिणं
बलारिशापभञ्जनं ललामरूपलोचनम् ।
लसत्फणीन्द्रहारिणं ज्वलत्त्रिशूलधारिणं
हृदम्बुजे जगद्गुरुं चिदम्बरं विभावये ॥ ७ ॥

शशाङ्कभानुवीतिहोत्रराजितत्रिलोचनं
विशालवक्षसं सुदीर्घबाहुदण्डमण्डितम् ।

दिगम्बरोल्लसद्वपुर्धरं धरारथान्वितं
हृदम्बुजे जगद्गुरुं चिदम्बरं विभावये ॥ ८ ॥

सदन्तरङ्गसज्जनौघपापसङ्घनाशने
मदान्धयुक्तदुर्जनालिशिक्षणे विचक्षणः ।
चिदम्बराख्यसद्गुरुस्वरूपमेत्य भूतले
सदाशिवो विराजते सदा मुदान्वितो हरः ॥ ९ ॥

चिदम्बराख्यसद्गुरोरिदं सदा विलासिनं
मुदा लिखन्ति ये सकृत् सदोपमानमष्टकम् ।
सदा वशे[से]त्तदालये हरिप्रिया तदानने
विधिप्रिया च निश्चला जगद्गुरोरनुग्रहात् ॥ १० ॥

॥ इति श्रीचिदम्बरपञ्चचामरस्तोत्रं सम्पूर्णम् ॥

---

## ३८. ॥ अथ श्रीताण्डवस्तोत्रम् ॥

नमस्कृत्य रामं महादेवदेवं
भवानीकटाक्षेक्षणानन्दजालम् ।
तदालोकलोलं महानृत्यलीलं भजे
पार्वतीशं महाताण्डवेशम् ॥ १ ॥

भवान्तं भजे तं हृदन्ते महान्तं
भवाब्धि तरन्तेन्दुकुन्दावभासम्
[भवाब्धेस्तरन्तीं[1] दुकूलावभासम् ] ।
तमीशं रमेशार्चिताङ्घ्रि[द्वयाब्जं]
भजे पार्वतीशं महाताण्डवेशम् ॥ २ ॥

जटाजूटसोमं ललाटाक्षभीमं
नटाचार्यवामं सदा पूर्णकामम् ।
सदावामभामं हृदानन्दरामं
भजे पार्वतीशं महाताण्डवेशम् ॥ ३ ॥

धराश्रीशवागीशनागेशमुख्यैः
सुरैः सेवितं तालवीणादिहस्तैः ।
पदाघातसङ्घातसङ्घृष्टदैत्यं
भजे पार्वतीशं महाताण्डवेशम् ॥ ४ ॥

---

1. तरन्ती = नौका ।

रणन्नूपुरद्वन्द्वहारि स्वकीयाङ्घ्रि-
पद्मद्वयाम्भोरुहापूर्णविश्वम् ।
नमन्मध्यसाचीकृतस्वाङ्घ्रिपद्मं
भजे पार्वतीशं महाताण्डवेशम् ॥ ५ ॥

शिवाशेषबन्धो कृपापूर्णसिन्धो
शिवानन्दसन्दोहसन्धानबन्धो ।
महाश्चर्यनृत्योल्लसत्पादपद्मं
भजे पार्वतीशं महाताण्डवेशम् ॥ ६ ॥

कटिप्रान्तसम्बन्धिसौवर्णसूत्रं
प्रलम्बप्रकीर्णोरुघण्टानिनादम् ।
महासिंहनादं प्रभिन्नाब्दजालं
भजे पार्वतीशं महाताण्डवेशम् ॥ ७ ॥

भ्रमद्बाहुदण्डं गदापूर्णरत्नं
प्रभो क्षिप्रमार्ताण्डकोटिप्रकाशम् ।
महाहीशभूषं सुरेशं महेशं
भजे पार्वतीशं महाताण्डवेशम् ॥ ८ ॥

महानृत्यसंजातभीमाट्टहासं
महायोगिहृत्पद्मकोशावभासम् ।
महानागयज्ञोपवीतावभासं
भजे पार्वतीशं महाताण्डवेशम् ॥ ९ ॥

भवानीश भूतेश भर्गासुरारे
भवारे पुरारे सुरेशार्चिताङ्घ्रे ।
न जानाति युष्मत्स्वरूपं जनोऽयं
भजे पार्वतीशं महाताण्डवेशम् ॥ १० ॥

मुकुन्दाब्जहस्तोल्लसत्त्रासनादं [ द्वेत्रनादैः]
नमद्देववृन्दं सुहृद्योगिवृन्दम् ।
लसत्कुन्ददन्तं शिवानन्दकन्दं
भजे पार्वतीशं महाताण्डवेशम् ॥ ११ ॥

जटाजूटगङ्गातरङ्गोर्मिचञ्च-
त्सहस्रांशु[म्बु]जाताघृताकाशमीशम् ।

शरच्चन्द्रहासं सुकर्पूरभासं
भजे पार्वतीशं महाताण्डवेशम् ॥ १२ ॥

स्फुरन्मुद्रिकारत्नराजत्कराङ्घ्रिं
रणत्स्वर्णकोटीरराजद्भुजौघम् ।
लसन्मध्यसम्बद्धपट्टाभिरामं
भजे पार्वतीशं महाताण्डवेशम् ॥ १३ ॥

स्फुरन्तं नदन्तं महान्तं दिगन्तं
वसन्तं महाश्चर्यवासो नितान्तम् ।
अनन्तं भवान्तं भवनीहृदन्तं
भजे पार्वतीशं महाताण्डवेशम् ॥ १४ ॥

महादेव देवादिदेवेश शम्भो
भवन्तं विना देवमन्यं न जाने ।
क्षणाराधनेनाशुतोषं महेशं
भजे पार्वतीशं महाताण्डवेशम् ॥ १५ ॥

नमस्ते नमस्ते शिवानन्दकीर्ते
नमस्ते नमस्ते भवानन्दमूर्ते ।
नमस्ते नमस्ते शरण्यैकमूर्ते
नमस्ते नमस्ताण्डवाडम्बराय ॥ १६ ॥

नमस्ते नमस्ते जगज्जन्मकर्त्रे
नमस्ते नमस्ते नमः फालनेत्र ।
नमस्ते नमस्ते हरायाग[घ]हर्त्रे
नमस्ते नमस्ताण्डवाडम्बराय ॥ १७ ॥

नमः पार्वतीप्राणनाथाय तुभ्यं
नमः सर्वलोकैकनाथाय तुभ्यम् ।
नमो विष्णुहृत्पद्मकोशाय तुभ्यं
नमस्ते नमस्ताण्डवाडम्बराय ॥ १८ ॥

नमो दिव्यकैलासवासाय तुभ्यं
नमो दिव्यरत्नाहिभूषाय तुभ्यम् ।
नमः सर्वयज्ञोपवीताय तुभ्यं
नमस्ते नमस्ते नमः शङ्कराय ॥ १९ ॥

नमः शम्भवे टङ्कवज्राङ्किताय
नमो भक्तलोकैकपालाय तुभ्यम् ।
इदं धूर्जटेस्ताण्डवस्तोत्रराजं
[प्रभाते] पठन्ति प्रसन्नाञ्जनेकः [न्तरङ्गाः] ।
सुरेन्द्रादिभोगानिहैवास्य भुक्त्वा
तदन्ते लभन्ते शिवानन्दलोकम् ॥ २० ॥

॥ इति श्रीताण्डवस्तोत्रं सम्पूर्णम् ॥

---

३९. ॥ अथ श्रीताण्डवस्तोत्रम् ॥

चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः ॥ १ ॥

पदप्रचुरकिङ्किणीकिणिकिणिध्वनिभ्राजितं
हरिप्रमुखदेवताद्दतलसन्मृदङ्गादिकम् ।
धिधिंधिमितधैतधैतधरवानुसारिक्रमं
सदा तिमिति मङ्गलं दिशतु शाम्भवं ताण्डवम् ॥ २ ॥

धिंधिमिधिमिधिमिशब्दैर्बन्धुरपदमन्दरं नटन्तम् ।
झंझणझणझणरावारञ्जितमणिमण्डनं शिवं सेवे ॥ ३ ॥

तक्तोधिक्तोतातथातैतथै
तोंगदद्मांगधिन्नत्तशब्दान्मुहुः ।
उच्चरन् हासविन्यासचञ्चन्मुखः
संननर्त स्वयं श्रीभवानीपतिः ॥ ४ ॥

तापसांस्तापसानन्तरा देवता
देवता देवताश्चान्तरा तापसाः ।
एवमाद्दत्य वागीश्वरादिस्थितौ[धिष्ठितः]
संननर्त स्वयं श्रीभवानीपतिः ॥ ५ ॥

॥ इति श्रीताण्डवस्तोत्रं सम्पूर्णम् ॥

---

## ४०. ॥ अथ श्रीकालहस्तीश्वराष्टकम् ॥

श्रीलसद्विलासलोलशेषतल्पसायकं
शैलकन्यकास्यचन्द्रचन्द्रिकाचकोरकम् ।
फालनेत्रवह्निदग्धपञ्चबाणरूपकं
कालहस्तिनायकं सुखप्रदायकं भजे ॥ १ ॥

कालकूटभीकराग्निकण्ठमध्यधारणं
कालकर्मखाम्बुकाशखण्डनोग्रहारिणम् । (?)
कालमृत्युगर्ववल्लिकासमूलदारणं
कालहस्तिनायकं सुखप्रदायकं भजे ॥ २ ॥

स्थूलसूक्ष्मनित्यसत्यशोभितं शुभोदितं
बालचन्द्रशेखरं कृपासुधारसाकरम् ।
लालितव्रतार्थिलोकबालकर्णमूलकं (?)
कालहस्तिनायकं सुखप्रदायकं भजे ॥ ३ ॥

बालिकावियोगियोगिभावपद्मवासितं
धालधल्यकोटिशीतधामसुप्रकाशितम् ।
कीलसंनिभाग्रशातशूलवृद्धगाशितं (?)
कालहस्तिनायकं सुखप्रदायकं भजे ॥ ४ ॥

भ्रूलतानिरीक्षणप्रभूतलोकजालकं
लोलताद्रिजालसत्कपोल[कन्धरं शिवम् ] ।
खेलसत्प्रकल्पितेन्द्रजालतन्त्रकीलकं
कालहस्तिनायकं सुखप्रदायकं भजे ॥ ५ ॥

व्यालमक्षिकाग्ररत्नमातृकाविभूषणं
कालसिन्धुकासुरारिपङ्क[रूप]भूषणम् ।
शीलवर्तनप्रयुक्तशिष्टभक्तपोषणं
कालहस्तिनायकं सुखप्रदायकं भजे ॥ ६ ॥

नीलदेहसेवितामरालदेहप्रापितं
मूलमन्त्रकर्णमूर्तिमोचनं त्रिलोचनम् ।
शूलिनं सुवर्णसिन्धुमौलिनं कपालिनं
कालहस्तिनायकं सुखप्रदायकं भजे ॥ ७ ॥

क्षालितप्रभक्तकर्मजातरोगकर्दमं
क्षालिकासनाथमिन्द्रशैलराजकर्दमम् ।
ज्वालितात्मरोषभीषकेलिदक्षनिर्दमं
कालहस्तिनायकं सुखप्रदायकं भजे ॥ ८ ॥

॥ इति श्रीकालहस्तीश्वराष्टकं सम्पूर्णम् ॥

---

## ४१. ॥ अथ श्रीकालहस्तीश्वराष्टकम् ॥

गङ्गाधराय गरुडध्वजसंनुताय
माङ्गल्यदाय महितोरगभूषणाय ।
सङ्गीतलोलहृदयाय सदाशिवाय
श्रीकालहस्तिनिलयाय नमः शिवाय ॥ १ ॥

कन्दर्पदर्पदहनाय कृपाकराय
[1]मन्दारसुन्दरसुरद्रुवरप्रदाय ।
मन्दारजप्रसवमञ्जुलमस्तकाय
श्रीकालहस्तिनिलयाय नमः शिवाय ॥ २ ॥

डिण्डीरडुण्डुभरपाण्डुरविग्रहाय
[2]चण्डासुरप्रहरणाय विशारदाय ।
कुण्डल्यधीशसमुदार्चित[समुदञ्चित]कुण्डलाय
श्रीकालहस्तिनिलयाय नमः शिवाय ॥ ३ ॥

हालाहलग्रहणलालसमानसाय
नीलाम्बुजाय निज[जातनिभ]संनुतकन्धराय ।
एलाधिपत्रिपुरराक्षससंहराय
श्रीकालहस्तिनिलयाय नमः शिवाय ॥ ४ ॥

लक्ष्मीभवाय[तनूभव]हराय [शिवा]युताय
दक्षाध्वराय विकलोत्कटवैभवाय ।
वक्षोविलम्बिसुमनोहरमौक्तिकाय
श्रीकालहस्तिनिलयाय नमः शिवाय ॥ ५ ॥

---

1. [मन्दारसान्द्रसुरवन्द्यवरप्रदाय]
2. [चण्डाशिरप्रकरणाय]

चर्माम्बराय शरणागतरक्षणाय
धर्मासनाय धरणीपरिपूजिताय ।
धर्माङ्ककोटिसदृशाय (?)कलाधराय
श्रीकालहस्तिनिलयाय नमः शिवाय ॥ ६ ॥

शूलायुधाय सुरसंनुतविक्रमाय
कालान्तकाय कमलासनवन्दिताय ।
भालाम्बकाय भवदुःखविनाशना[का]य
श्रीकालहस्तिनिलयाय नमः शिवाय ॥ ७ ॥

रामार्चिताय रजनीकरभूषणाय
संभूत्यनाथकुलसंनुतकङ्कणाय । (?)
गौरीपयोधरयुगग्रहकार्मुकाय [कामुकाय]
श्रीकालहस्तिनिलयाय नमः शिवाय ॥ ८ ॥

कालहस्त्यष्टकं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ९ ॥

॥ इति श्रीकालहस्तीश्वराष्टकं सम्पूर्णम् ॥

## ४२. ॥ अथ श्रीशङ्करकवचम् ॥

ऐश्वरं परमं तत्त्वमादिमध्यान्तवर्जितम् ।
आधारं सर्वभूतानामनाधारमविक्रियम् ॥ १ ॥

अनन्तानन्दबोधाम्बुनिधिमद्भुतविक्रमम् ।
अम्बिकापतिमीशानमनीशं प्रणमाम्यहम् ॥ २ ॥

एकदा मुनयः सर्वे द्वारकां द्रष्टुमागताः ।
वासुदेवं च सोत्कण्ठाः कृष्णदर्शनलालसाः ॥ ३ ॥

ततः स भगवान् प्रीतः पूजां चक्रे यथाविधि ।
तेषामाशीस्ततो गृह्य बहुमानपुरःसरम् ॥ ४ ॥

तैः पृष्टः कथयामास कुमारप्रभवं च यत् ।
चरितं भूमिभारघ्नं लोकानन्दकरं परम् ॥ ५ ॥

मार्कण्डेयमुखाः सर्वे माध्याह्निकक्रियोत्थिताः ।
कृष्णः स्नानमथो चक्रे मृदक्षतकुशादिभिः ॥ ६ ॥

सूर्योपस्थानसन्ध्यां च स्मृतिधर्ममनुस्मरन् ।
शिवपूजां ततः कृष्णो गन्धपुष्पाक्षतादिभिः ॥ ७ ॥

चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम् ।
जय शङ्कर सोमेश रक्ष रक्षेति चाब्रवीत् ॥ ८ ॥

जजाप शिवसाहस्रं भक्तिमुक्तिप्रदं विभोः ।
अनन्यमानसः शान्तः पद्मासनगतः शुचिः ॥ ९ ॥

ततस्ते विस्मयापन्ना दृष्ट्वा कृष्णविचेष्टितम् ।
मार्कण्डेयोऽवदत् कृष्णं बहुशो मुनिसंमितम् ॥ १० ॥

मार्कण्डेयः—

त्वं कृष्ण कमलाकान्तः परमात्मा जगद्गुरुः ।
भवत्पूज्यः कथं शम्भुरेतत्सर्वं वदस्व मे ॥ ११ ॥

श्रीकृष्ण उवाच—

साधु साधु मुने पृष्टं हिताय सकलस्य च ।
अज्ञातं तव नास्त्येव तथापि च वदाम्यहम् ॥ १२ ॥

दैवतं सर्वलोकानां सर्वकारणकारणम् ।
ज्योतिर्यत्परमानन्दं सावधानमतिः शृणु ॥ १३ ॥

विश्वसाधनमीशानं गुणातीतमजं परम् ।
जगतस्तस्थुषो ह्यात्मा मम मूलं महामुने ॥ १४ ॥

यो देवः सर्वदेवानां ध्येयः पूज्यः सदाशिवः ।
स शिवः स महादेवः शङ्करश्च निरञ्जनः ॥ १५ ॥

तस्मान्नान्यः परो देवस्त्रिषु लोकेषु विद्यते ।
सर्वज्ञः सर्वगः शक्तः सर्वात्मा सर्वतोमुखः ॥ १६ ॥

पठ्यते सर्वसिद्धान्तैर्वेदान्तैर्यो मुनीश्वर ।
तस्मिन् भक्तिर्महादेवे मम धातुश्च निर्मल ॥ १७ ॥

महेशः परमं ब्रह्म शान्तः सूक्ष्मः परात्परः ।
सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ॥ १८ ॥

निर्विकल्पो निराभासो निःसङ्गो निरुपद्रवः ।
निर्लेपः सकलाध्यक्षो महापुरुष ईश्वरः ॥ १९ ॥

तस्य चेच्छाभवत् पूर्वं जगत्स्थित्यन्तकारिणी ।
वामाङ्गादभवं तस्य सोऽहं विष्णुरिति स्मृतिः ॥ २० ॥

जनयामास धातारं दक्षिणाङ्गात् सदाशिवः ।
मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ॥ २१ ॥

तपस्तपन्तु भो वत्सा अब्रवीदिति तान् शिवः ।
स्तुत्वा तु विधिवत् स्तोत्रैः प्रणम्य च पुनः पुनः ।
ततस्ते शिवमात्मानं प्रोचुः संयतमानसाः ॥ २२ ॥

ब्रह्मविष्णुरुद्रा ऊचुः—

तपः केन प्रकारेण कर्तव्यं परमेश्वर ।
ब्रूहि सर्वमशेषेण स्वात्मानं वेत्सि नापरः ॥ २३ ॥

महादेव उवाच—

कायेन मनसा वाचा ध्यानपूजाजपादिभिः ।
कामक्रोधादिरहितं तपः कुर्वन्तु भो सुराः ॥ २४ ॥

देवा ऊचुः—

त्वया यत्कथितं शम्भो दुर्ज्ञेयमजितात्मभिः ।
सौम्योपायमथो ब्रह्मन् वद कारुण्यवारिधे ॥ २५ ॥

शङ्कर उवाच—

शृणुध्वं सर्वपापघ्नं भुक्तिमुक्तिप्रदं नृणाम् ।
सहस्रनाम सद्विद्यां जपन्तु मम सुव्रताः ॥ २६ ॥

यया संसारमग्नानां मुक्तिर्भवति शाश्वती ।
शृण्वन्तु तद्विधानं तु महापातकनाशनम् ॥ २७ ॥

पठतां शृण्वतां सद्यो मुक्तिः स्यादनपायिनी ।
ब्रह्मचारी कृतस्नानः शुक्लवासा जितेन्द्रियः ॥ २८ ॥

भस्मधारी मुनिर्मौनी पद्मासनसमन्वितः ।
ध्यात्वा मां सकलाधीशं निराकारं निरीश्वरम् ॥ २९ ॥

पार्वतीसहितं शम्भुं जटामकुटमण्डितम् ।
वसानं चर्म वैयाघ्रं चन्द्रार्धकृतशेखरम् ॥ ३० ॥

त्र्यम्बकं वृषभारूढं कृत्तिवाससमुज्ज्वलम् ।
सुरार्चितपदद्वन्द्वं दिव्यभोगं सुसुन्दरम् ॥ ३१ ॥

बिभ्राणं सुप्रसन्नं च कुठारवरदाभयम् ।
दुरन्तं कमलासीनं नागयज्ञोपवीतिनम् ॥ ३२ ॥

विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम् ।
सहस्रशिरसं शम्भुमनन्तकरसंयुतम् ॥ ३३ ॥

सहस्रचरणं दिव्यं सोमसूर्याग्निलोचनम् ।
जगद्योनिमजं ब्रह्म शिवमाद्यं सनातनम् ॥ ३४ ॥

दंष्ट्राकरालं दुष्प्रेक्ष्यं सूर्यकोटिसमप्रभम् ।
निशाकरकराकारं भेषजं भवरोगिणाम् ॥ ३५ ॥

पिनाकिनं विशालाक्षं पशूनां पतिमीश्वरम् ।
कालात्मानं कालकालं देवदेवं महेश्वरम् ॥ ३६ ॥

ज्ञानवैराग्यसंपन्नं नित्यानन्दमयं परम् ।
शाश्वतैश्वर्यसंपूर्णं महायोगीश्वरेश्वरम् ॥ ३७ ॥

समस्तशक्तिसंपन्नं पुण्यकायं दुरासदम् ।
तारकं ब्रह्म संपूर्णमणीयांसं महत्तरम् ॥ ३८ ॥

यतीनां परमं ब्रह्म यतीनां तपसः फलम् ।
संयमीहृत्समासीनं तपस्विजनसंवृतम् ॥ ३९ ॥

विधीन्द्रविष्णुनमितं मुनिसिद्धनिषेवितम् ।
महादेवं महानन्दं देवानामपि दैवतम् ॥ ४० ॥

शान्तं पवित्रमोङ्कारं ज्योतिषां ज्योतिरुत्तमम् ।
शंकरो मे शिरः पातु ललाटं फाललोचनः ॥ ४१ ॥

विश्वचक्षुर्दृशौ पातु रुद्रः पातु भ्रुवौ मम ।
गण्डौ पातु महेशानः श्रुती रक्षतु पूर्वजः ॥ ४२ ॥

कपोलौ मे महादेवः पातु नासां सदाशिवः ।
मुखं पातु हविर्भोक्ता ओष्ठौ पातु महेश्वरः ॥ ४३ ॥

दन्तान् रक्षतु देवेशस्तालू सोमकलाधरः ।
रसनां परमानन्दः पातु शङ्खौ शिवाप्रियः ॥ ४४ ॥

चुबुकं पातु मे शम्भुः श्मश्रुं शत्रुविनाशनः ।
कुचं पातु भवः कण्ठं नीलकण्ठोऽवतु ध्रुवम् ॥ ४५ ॥

स्कन्धौ स्कन्दपतिः पातु बाहू पातु महाभुजः ।
उपबाहू महावीर्यः करौ विबुधसत्तमः ॥ ४६ ॥

अङ्गुलीः पातु पञ्चास्यः पर्वाणि च सहस्रपात् ।
हृदयं पातु सर्वात्मा स्तनौ पातु पितामहः ॥ ४७ ॥

उदरं हुतभुक् पातु मध्यं मे मध्यमेश्वरः ।
कुक्षिं पातु भवानीशः पृष्ठं पातु कुलेश्वरः ॥ ४८ ॥

प्राणान् मे प्राणदः पातु नाभिं भीमः कटिं विभुः ।
सक्थिनी पातु मे भर्गो जानुनी जनताधिपः ॥ ४९ ॥

जङ्घे पुररिपुः पातु चरणौ भवनाशनः ।
शरीरं पातु मे शर्वो बाह्यमाभ्यन्तरं शिवः ॥ ५० ॥

इन्द्रियाणि हरः पातु सर्वत्र जयवर्धनः ।
पूर्वे दिशि मृडः पातु दक्षिणे यमसूदनः ॥ ५१ ॥

वारुण्यां सलिलाधीश उदीच्यां मे महीधरः ।
ऐशान्यां पातु भूतेश आग्नेय्यां रविलोचनः ॥ ५२ ॥

नैर्ऋत्यां भूतभृत् पातु वायव्यां बलवर्धनः ।
ऊर्ध्वं पातु मखद्वेषी ह्यधः संसारनाशनः ॥ ५३ ॥

सर्वतः सुखदः पातु बुद्धिं पातु सुलोचनः ।
एवं न्यासादिकं कृत्वा साक्षाच्छम्भुमयो भवेत् ॥ ५४ ॥

नमो हिरण्यबाह्वादि पठेन्मन्त्रं तु भक्तिमान् ।
सद्योजातादिभिर्मन्त्रैर्नमस्कुर्यात्सदाशिवम् ॥ ५५ ॥

॥ इति श्रीशङ्करकवचं सम्पूर्णम् ॥

---

## ४३. ॥ अथ श्रीकालहस्तीश्वरस्तोत्रम् ॥

महेश्वरं महोन्नतं महेश्वरं सदानम-
द्गणेश्वरं गुणान्वितं गणेश्वरं जगन्नुतम् ।
अनीश्वरं वृषाश्वरंहसाश्वरुद्रगामिनं (?)
सदा भजामि कालहस्तिसाम्बमूर्तिमीश्वरम् ॥ १ ॥

निटालविस्फुटैकदृक्तटालवह्निचिच्छटा-
लसद्ध्वनिप्रकुज्जटालनिष्ठहैमनम् ।
घटीभवादिमौनिहृत्कुटीभवत्पदं त्रिगुं [विभुं]
सदा भजामि कालहस्तिसाम्बमूर्तिमीश्वरम् ॥ २ ॥

घनाघनादियज्ञभुग्घनाघनप्रचारकृद्-
द्युनाघनामहरसुहृद्दृढासुहृद्धनुस्स्वनम् ।
घनाघनव्यपेटिकाघनाघनप्रभञ्जनं
सदा भजामि कालहास्तिसाम्बमूर्तिमीश्वरम् ॥ ३ ॥

जटाकुटीरधन्यधुन्यभङ्गभङ्गसङ्कटा-
घुमंघुमंघुमंघुमद्ध्वनिध्वनद्दरीस्फुटम् ।
कटीतटीघटीकृतोत्कटाजिनं ककुप्पटं
सदा भजामि कालहस्तिसाम्बमूर्तिमीश्वरम् ॥ ४ ॥

सुधाशनाधिराट्पुरीसुगह्वरीजमञ्जरी-
स्फुरन्मरन्दनिर्झरीधुराधुराधुरीणगीर्गणम् ।
विराट्तुरङ्गमार्गणं विशेषविष्णुमार्गणं (?)
सदा भजामि कालहस्तिसाम्बमूर्तिमीश्वरम् ॥ ५ ॥

॥ इति श्रीकालहस्तीश्वरस्तोत्रं सम्पूर्णम् ॥

---

## ४४. ॥ अथ श्रीअपराधस्तवः ॥

शम्भो शङ्कर शान्त शाश्वत शिव स्थाणो भवोमापते
भूतेश त्रिपुरान्तक त्रिनयन श्रीकण्ठ कालान्तक ।
शर्वोग्राभय भर्ग भीम जगतां नाथाक्षय श्रीनिधे
रुद्रेशान महेश्वरेश्वर महायोगीशतुभ्यं नमः ॥ १ ॥

स्वामिन् सर्वजगद्गुरो हर महालीलाक्षमाक्षेत्रस-
च्चिद्रूपाखिलभूतभाव्यजगतां नाथ प्रपन्नार्तिहन् ।
पापघ्नाशुभपाशदुःखभयहृद्भक्तेष्टद ज्ञानद
श्रीदातर्क्य षडङ्ग मोक्षण महायोगीश तुभ्यं नमः ॥ २ ॥

क्रूरं कष्टतरं विनष्टहृदयं भ्रष्टं शठं निष्ठुरं
निर्लज्जं कृपणं कृतघ्नमशुचिं बह्वाशिनं हिंसकम् ।
आशापाशशतप्रबद्धमनसं दुष्कीर्तिभाजं जडं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ३ ॥

मूर्खं बालमतिं स्वधर्मरहितं धर्मार्थहीनं खलं
कामान्धं क्षणिकं कदर्थनपरं दौश्शील्यजन्मस्थलम् ।

अज्ञं लुब्धमसत्यनिष्ठमधमं प्रज्ञायशोवर्जितं
कारुण्याकरवारिधे भवपितर्दोषाकरं पाहि माम् ॥ ४ ॥

क्षुद्रं दुर्भगमल्पसत्त्वमलसं भग्नव्रतं रागिणं
भीरुं डाम्भिकमीर्ष्यकं व्यसनिनं पापात्मकं सूतकम् ।
आधिव्याधिनिपीडितं जडधियं सद्भिः सदा निन्दितं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ५ ॥

आकाङ्क्षाश्रयमार्यवर्तिविमुखं क्षीणं गुणद्वेषिणं
धूर्तं दुर्गुणमत्यशुद्धहृदयं सर्वत्र संदेहिनम् ।
दीनं पापरतं समस्तविषयेष्वासक्तमन्यायिनं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ६ ॥

अश्रद्धं गतपौरुषं कुपथगं जाज्वल्यमानं द्रुषा
संसारार्णवमग्नमूर्मितरलं नीचप्रियं निर्दयम् ।
वैराग्यानतिदानयोगनियमद्वेष्टारमुन्मादिनं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ७ ॥

द्वन्द्वग्रस्तसमस्तवृत्तिकुशलं सत्सङ्गविद्वेषिणं
दुःसङ्गप्रियमप्रतिष्ठवचनं कामातुरं तस्करम् ।
शैवज्ञानपराङ्मुखं खलजनव्यापारपारङ्गतं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ८ ॥

दुर्मत्यावमतिप्रवृद्धरजसं सद्वृद्धसेवारिपुं
सद्धर्मेष्वसमुत्सुकं गुरुजने मान्येषु चात्युद्धतम् ।
शिष्टाशिष्टकरप्रियं च सततं दुष्टस्य तुष्टिप्रदं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि मान् ॥ ९ ॥

स्वप्नेऽप्युत्तमगन्धपुष्पनिकरैरीशार्चनावर्जितं
ध्यानाध्यानविचारणागुणरिपुं तुच्छं मदोच्छृङ्खलम् ।
दारिद्र्यास्पदमात्मवैरिवशगं तापत्रयस्याश्रयं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ १० ॥

आत्मातिस्तुतिकारिणं परमहानिन्दाकरं निन्दितं
लुण्टाकं पतितं विपर्ययगतस्वान्तं सदा याचकम् ।
व्याक्रोशाद्विहतस्वकार्यनिचयं सर्वापदां सञ्चयं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ११ ॥

कृत्याकृत्यविचारवर्जितमतिं व्रात्यं महावञ्चकं
दुर्बुद्धिं मदमानमत्सरनिधिं दुर्वृत्तवृत्त्याश्रयम् ।
मिथ्याज्ञानिनमार्यकण्टकमलं लोकत्रये दूषितं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ १२ ॥

दुष्कर्मप्रचये प्रहृष्टहृदयं क्लेशैश्च संपीडितं
चार्वाकं कुमतिं कुचेलमलसं कार्पण्यजन्मस्थलम् ।
भार्यापुत्रगृहादिसक्तमनसं गाम्भीर्यधैर्यच्युतं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ १३ ॥

चित्तक्षोभकरं कलङ्कहृदयं शोकास्पदं लोलुपं
सारासारविचारहीनमनसं नीचप्रियं नीरसम् ।
मत्तोन्मत्तनिकृष्टनष्टचकितं शून्यं हृदालापिनं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ १४ ॥

आत्मज्ञानविहीनमात्मविमुखं सर्वात्मभावद्विषं
सङ्कल्पैर्बहुभिर्विभिन्नहृदयं दैत्यप्रसक्तं सदा ।
मर्माविद्वचनं कठोरहृदयं मित्रद्रुहं चुम्बकं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ १५ ॥

वेदोक्ताचरणाशिवात्मचरितं स्वेच्छाप्रवृत्तिं सदा
सच्छास्त्रेष्वपरागिणं प्रियतमालक्ष्मीगुणावेष्टितम् ।
दाक्षिण्यप्रतिपन्नताविरहितं स्वार्थैकदृष्टिं सदा
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ १६ ॥

सत्यत्यागदयाक्षमाशमदमाद्यर्थानभिज्ञात्मकं
देवब्राह्मणगोत्रजातिथिपितृज्ञानात्मकापूजकम् ।
विश्वस्तेष्वपकारवञ्चनपरं मैत्रीरिपुं दुर्जनं
कारुण्याकरवारिधे भव पितर्दोषकरं पाहि माम् ॥ १७ ॥

कृत्वाधर्ममतिं कथंचिदपरः को मत्समोऽस्मिन्भवे-
दित्येवं बहुजल्पिनं कुपुरुषं भ्रान्त्याश्रयं राक्षसम् ।
दृष्टादृष्टसुखैषिणं बत मुदा मुक्त्वा शिवाराधनं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ १८ ॥

मार्जालाखुबकाश्वकुक्कुटकपिक्रोडाहिवृत्तिं सदा
तीर्थध्वाङ्क्षमनर्थकं परसुखे सन्तापिनं दुःसहम् ।

त्यक्तोपायममेयकाङ्क्षिणमहो शुण्ठं च चोरोपमं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ १९ ॥

अस्पृश्यं विकलं कुधैर्यमखिले दोषे स्वकीये गुणं
पश्यन्तं चलमात्मकार्यनिरतं पूज्यं विषादात्मकम् ।
चिन्ताशोकपरीतचेतसमलं सर्वाशुभानां पदं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ २० ॥

दुष्पूरस्वककुक्षिपूरणपरं भारं भुवः केवलं
दासीमेषखरस्वभावमपटुं संमानने भाजने ।
रिक्तं बालकदीर्घसूत्रिणमलं हृच्छल्यशीलं सदा
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ २१ ॥

अत्यादेशिनमुत्तमस्थितिमतां संत्यागिनं नास्तिकं
रन्ध्रान्वेषिणमन्धमूकबधिरं शम्भोस्तु विश्वात्मनः ।
माहात्म्य श्रवणस्तुतीक्षणविधौ माहेश्वरा वत्सलं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ २२ ॥

दुष्कार्यालघुभारवाहनपशुं तृष्णातृणग्राहिणं
संसारार्णवदुःखपङ्कपतितं यान्तं सदाधो भृशम् ।
स्वत्वाहन्त्वममत्वमोहमकरैराकृष्यमाणं सदा
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ २३ ॥

भ्रष्टं सर्वजुगुप्सितं परहितव्याघातिनं तामसं
संभ्रान्तं चपलं विधानविहितव्यापारविद्वेषिणम् ।
शम्भो त्वत्पदभक्तिहीनमदृढं संमूढमात्मद्विषं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ २४ ॥

ज्येष्ठावासमतिप्रमादितमतिं क्षुत्तृड्जराद्यर्दितं
स्वप्नेऽप्यन्यपरोपकाररहितं सर्वाहितं दुर्लभम् ।
लोके सत्परिहार्यनिन्दितमहो दुःखप्रदेशक्रियं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् २५ ॥

त्वक्चुक्कान्त्रसिरातनूरुहमयं काराख्यरन्ध्रस्थितं
नानापायपतिष्णु कालशिखिना पापच्यमानं भृशम् ।
दृष्ट्वापि स्वकलेबरं कृशतरं तत्रापि रक्तं पशुं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ २६ ॥

किं वाचा बहुविस्तरेण भगवन् मत्संनिभो भूतले
नाभून्नास्ति च नो भविष्यति पुमान् निर्भाग्यचूडामणिः ।
तस्मादीदृशमात्मवञ्चकमहो त्रैलोक्यचूडामणे
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ २७ ॥

सर्वश्रेष्ठ गुणैकभाजन विभो सत्त्वोत्तमेषूत्तमा-
संख्येयावगुणैकभाजनमलं कष्टातिकष्टक्रियम् ।
श्रीशाश्रीशमतीन्द्रियेन्द्रियवशं निस्सङ्गिनं सङ्गिनं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहिमाम् २८ ॥

विण्मूत्रकृमिमांसशोणितमयं मेदोऽस्थिमज्जात्मकं
निर्गन्धैकनिधिं जरापरिगतं वातादिदोषात्मकम् ।
दृष्ट्वा तु स्वशरीरमत्र तु सदा वैराग्यहीनं पशुं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि मात् ॥ २९ ॥

विष्ठामूत्रकुजन्त्वनिष्टमशुभं स्वाभाव्यतो नश्वरं
कृष्णक्षैण्यविषूचिकाज्वरशिरश्शूलादिरोगास्पदम् ।
ज्ञात्वा तु स्वशरीरमत्र तु सदा वैराग्यहीनं पशुं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ३० ॥

पङ्गुत्वान्ध्यजरित्वमौर्ख्यखलताबाधिर्यजन्मस्थलं
क्लेद्यच्छेद्यविशोष्यदाह्यकृशतास्थौल्यस्वभावात्मकम् ।
संपश्यन्नपि दोषमत्र तु सदा संप्रीतियुक्तं पशुं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ३१ ॥

देहक्षालनलेपनादिविधिना संस्पर्शयोग्यं त्वचा
दन्नं (?) छिन्नमहार्णवं व्रणमुखैर्नित्यं स्रवन्तं मलम् ।
तं दृष्ट्वाप्यविरागिणं च नरके शून्तं सरागं पशुं
कारुण्याकरवारिधे भव पितर्दोषाकरं पाहि माम् ॥ ३२ ॥

॥ इति श्रीअपराधस्तवः सम्पूर्णः ॥

---

## ४५. ॥ अथ श्रीचन्द्रमौलिपञ्चकम् ॥

सदा मुदा मदीयके मनःसरोरुहान्तरे
विहारिणेऽघसञ्चयं विदारिणे चिदात्मने ।
निरस्ततोयतोयमुग्निकायकायशोभिते
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ १ ॥

नमो नमोऽष्टमूर्तये नमो नमानकीर्तये
नमो नमो महात्मने नमः शुभप्रदायिने ।
नमो दयार्द्रचेतसे नमोऽस्तु कृत्तिवाससे
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ २ ॥

पितामहाद्यवेद्यकस्वभावकेवलाय ते
समस्तदेववासवादिपूजिताङ्घ्रिशोभिने ।
भवाय शक्ररत्नसद्गलप्रभाय शूलिने
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ ३ ॥

शिवोऽहमस्मि भावये शिवं शिवेन रक्षितः
शिवस्य पूर्णवर्चसः समर्चये पदद्वयम् ।
शिवात्परं न विद्यते शिवे जगत् प्रवर्तये
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ ४ ॥

मरन्दतुन्दिलारविन्दसुन्दरस्मिताननो-
न्मिलन्मिलिन्दवृन्दनीलनीलकुन्तलां शिवाम् ।
कलाकलापसारिणीं शिवां च वीक्ष्य तोषिणीं [णे]
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ ५ ॥

॥ इति श्रीचन्द्रमौलिपञ्चकं सम्पूर्णम् ॥

---

## ४६. ॥ अथ श्रीचन्द्रमौलिपञ्चकम् ॥

शिवाननारविन्दसन्मिलिन्दभावभाङ्मनो-
विनोदिने दिनेशकोटिकोटिदीप्ततेजसे ।
स्वसेवलोकसादरावलोकनैकवर्तिने
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ १ ॥

जटातटीलुठद्वियद्धुनीधलद्धलध्वन-
द्धनौघगर्जितोत्थबुद्धिसंभ्रमच्छिखण्डिने ।
विखण्डितारिमण्डलप्रचण्डदोस्त्रिशूलिने
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ २ ॥

प्रहृष्टहृष्टतुष्टपुष्टदिष्टविष्टपाय सं-
नमद्विशिष्टभक्तविष्टरार्त[प्र]येऽष्टमूर्तये (?) ।
विदायिने धनाधिनाथसाधुसख्यदायिने
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ ३ ॥

अखर्वगर्वदोर्विजृम्भदम्भकुम्भदानव-
च्छिदासदाध्वनत्पिनाकहारिणे विहारिणे ।
सुहृत्सुहृत्सुहृत्सुहृत्सुहृत्स्मयापहारिणे
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ ४ ॥

अखण्डखण्डबाहुदण्डदण्डितोग्रडिण्डिम-
प्रधिं धिमिंधिमिंधिमिंध्वनिक्रमोत्थताण्डवम् ।
अखण्डवैभवाहिनाथमण्डितं चिदम्बरं
नमः शिवाय साम्बशङ्कराय चन्द्रमौलये ॥ ५॥

॥ इति श्रीचन्द्रमौलिपञ्चकं सम्पूर्णम् ॥

---

## ४७. ॥ अथ श्रीमहादेवस्तुतिः ॥

रुद्राय शितिकण्ठाय सुरूपाय सुवर्चसे ।
कपर्दिने करालाय हर्यक्ष्णे वरदाय च ॥ १ ॥

तृष्णे (?)पूष्णे दशभिदे देवानामधिपाय च ।
क्षेम्या[य] हरिनेत्राय स्थाणवे पुरुषाय च ॥ २ ॥

हरिकेशाय मुण्डाय क्रोधायोत्तारणाय च ।
भास्वराय सुतीर्थाय देवदेवाय रंहसे ॥ ३ ॥

उष्णीषिणे सुवक्त्राय पशुहस्ताय पार्षिणे ।
हिरण्यबाहवे राजन्योग्राय पतये दिशाम् ॥ ४ ॥

पशूनां पतये चैव भूतानां पतये नमः ।
वृषाय मातृभक्ताय सेनान्ये मध्यमाय च ॥ ५ ॥

महात्मने चानङ्गाय सर्वाङ्गाय प्रमाथिने ।
तथा रुद्राणिपतये पृथवे कृत्तिवाससे ॥ ६ ॥

कपालभूषिणे नित्यं सुवर्णमकुटाय च ।
महादेवाय कृष्णाय त्र्यम्बकाय हराय च ॥ ७ ॥

क्रोधनायानृशंसाय मृत्यवे बाहुशालिने ।
दण्डिने दप्ततपसे तथैवाक्रूरकर्मिणे ॥ ८ ॥

सहस्रशिरसे चैव सहस्रचरणाय च ।
विरूपाय सुरूपाय महारूपाय दंष्ट्रिणे ॥ ९ ॥

पिनाकिनं महादेवं महाभोगिनमव्ययम् ।
त्रिशूलपाणिं वरदं त्र्यम्बकं भुवनेश्वरम् ॥ १० ॥

त्रिपुरघ्नं त्रिणयनं त्रिलोकेशं महौजसम् ।
प्रभवं सर्वभूतानां धातारं धरणीधरम् ॥ ११ ॥

ईशानं शङ्करं शर्वं शिवं विश्वेश्वरं भवम् ।
उमापतिं पशुपतिं विश्वरूपं महेश्वरम् ॥ १२ ॥

विरूपाक्षं दशभुजं विष्यद्वङ्गं वृषध्वजम् ।
उग्रं स्थाणुं शिवं घोरं शर्वं गौरीशमीश्वरम् ॥ १३ ॥

शितिकण्ठमजं शुभ्रं पृथुं विधुहरं हरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ १४ ॥

प्रणम्य शिरसा देवं नागाङ्गदधरं हरम् ।
शरण्यं शरणं यामि महादेवं चतुर्मुखम् ॥ १५ ॥

विरोचमानं वपुषा दिव्याभरणभूषितम् ।
अनाद्यन्तमजं शम्भुं सर्वव्यापिनमीश्वरम् ॥ १६ ॥

निस्त्रैगुण्यं निरुद्योगं निर्मलं निधिमोजसाम् ।
प्रणम्य प्राञ्जलिः शर्वं प्रयामि शरणं हरम् ॥ १७ ॥

निष्कलं निर्मलं नित्यमकारणमलेपनम् ।
अध्यात्मवेदमासाद्य प्रयामि शरणं मुहुः ॥ १८ ॥

यस्य नित्यं विदुः स्थानं मोक्षमध्यात्मचिन्तकाः ।
योगीशं तत्त्वमार्गस्थाः कैवल्यपदमक्षरम् ॥ १९ ॥

यं विदुः सङ्गनिर्मुक्ताः सामान्यं समदर्शिनः ।
तं प्रपद्ये जगद्योनिमयोनिं निर्गुणात्मकम् ।। २० ।।

असृजद्यस्तु भूतादीन् सप्तलोकान् सनातनान् ।
स्थितः सत्योपरि स्थाणुं तं प्रपद्ये सनातनम् ।। २१ ।।

भक्तानां सुलभं तं तु दुर्लभं दूरपातिनाम् ।
अदूरस्थममुं देवं प्रकृतेः परतः स्थितम् ।
नमामि सर्वलोकस्थं व्रजामि शरणं शिवम् ।। २२ ।।

।। इति श्रीमहाभारते आश्वमेधिके पर्वणि संवर्तमरुत्तसंवादे मञ्जवद्गिरिवासमहादेवस्तुतिर्नाम सप्तमाध्यायः सम्पूर्णः ।।

---

## ४८. ।। अथ श्रीज्ञानामृतरसायनम् ।।

श्रीपार्वत्युवाच —

भगवन् देवदेवेश सर्वपापप्रणाशनम् ।
सर्वकामफलस्तोत्रं ज्ञानामृतरसायनम् ।। १ ।।

महेश्वरं महादेवमीशानं शङ्करं हरम् ।
रुद्रं भद्रं शिवं विष्णुं नीलकण्ठं पितामहम् ।। २ ।।

उग्रं भीमं शिवं स्थाणुं स्वयम्भूं शम्भुशूलिनम् ।
पुरुषं गौरीश्वरं चन्द्रं चन्द्रमौलिं जटाधरम् ।। ३ ।।

उमापतिं पशुपतिं विरूपाक्षं वृषध्वजम् ।
वृषं गङ्गाधरं शङ्करं[शर्वं]श्रीकण्ठं वृषवाहनम् ।। ४ ।।

पिङ्गाक्षजटिलं कृत्तिवाससं गृहाधरम् [च गुहाशयम्] ।
ऊर्ध्वनेत्रं सहस्राक्षं सहस्रभुजशीर्ष[क]म् ।। ५ ।।

मृगाङ्कचिह्नं भस्माङ्गं दशबाहुं त्रिलोचनम् ।
त्रिनेत्रं त्रिषु लोकेषु त्र्यम्बकं त्रिपुरान्तकम् ।। ६ ।।

कालं कामाङ्गदहनं मन्त्रकं दैत्यघातकम् ।
[ब्रह्मणः] पञ्चमशिरोदक्षयज्ञविनाशनम् ।। ७ ।।

पूषदन्तहरं साक्षात्तारकास्यनिपातनम् ।
ऊर्ध्वलिङ्गं महालिङ्गं चारुलिङ्गं त्रिलिङ्गिनम् ।। ८ ।।

वाचस्पतिं दिव्यचक्षुं ब्रह्मस्कन्धाय देशिकम् (?) ।
ऊर्ध्वरेतं वीतरागं ततो धर्मदृढव्रतम् ॥ ९ ॥

जर्झरीडिण्डिमुण्डं च त्रिदण्डिलकुलीजटम् (?) ।
गजचर्मपरीधानं पललाजिनवाससम् ॥ १० ॥

विश्वाननं महावासं मृतवासं चतुष्कलम् ।
चर्यारूढं [वि]मानस्थं वानप्रस्थं च शूलिनम् ॥ ११ ॥

कपालखट्वाङ्गहस्तं कङ्कमालाशिरोधरम् ।
व्यालोपवीतनिलयं महाकुण्डलिनूपुरम् ॥ १२ ॥

महादंष्ट्रं महाकायं महाशीर्षसुशोभनम् ।
महासिद्धं महावीरं सन्नद्धं वीरवन्दितम् ॥ १३ ॥

अघोरं घोरसंशिष्टं घोराद्घोरतरं तथा ।
हिरण्यवर्णं देवादिं ब्रह्मण्यमभवं भवम् ॥ १४ ॥

पञ्चाक्षरं पञ्चबीजं पञ्चवक्त्रं सदाशिवम् ।
षड्वक्त्रं महागुह्यं कालाग्नि रुद्रतेजसम् ॥ १५ ॥

अष्टधा नवधा चैवं दशधा शतधा स्मृतम् ।
बहुरूपं महारूपं विश्वरूपं जगद्गुरुम् ॥॥ १६ ॥

कलितं . . . . कालोत्पत्तिकुलेश्वरम् ।
धन्वन्तरिं ब्रह्मविदं पुण्डरीकं प्रजापतिम् ॥ १७ ॥

वेद्यवेदविधात्रर्थं योगज्ञानविचक्षणम् ।
ध्यानं ध्येयं च तत्पूज्यं परस्य ज्ञानमुत्तमम् ॥ १८ ॥

स्वाहास्वधावषट्कारं [हेमपार्श्वं] हुताशनम् ।
यज्ञतीर्थं . . . . सर्वतोमुखम् (?) ॥ १९ ॥

सकलं निष्कलं शून्यं स्थूलं सूक्ष्मं परापरम् ।
अनन्तं ध्येयरहितं तारद्वारवधान्तिकम् ॥ २० ॥

बिन्दुनादकलाक्रान्तं प्राणापानप्रवाहनम् ।
परिपूर्णं हताराातिमूर्ध्वमध्यव्यवस्थितम् ॥ २१ ॥

मात्रार्थकं मात्रपदमदध्वाध्वा परापरम् (?) ।
अस्वतन्त्रो स्वतन्त्रोऽयमस्तु नास्तु जयापरम् (?) ॥ २२ ॥

अविदित्वा तु विदितमप्रमाणप्रमाणकम् ।
निस्संशयं निरापेक्षं निधानस्थं निरेपनम् ॥ २३ ॥

निर्विकल्पं निष्प्रपञ्चमद्वैतं केवलं प्रभुम् ।
व्योमातीतं मनुश्चार्यमनन्तमजमव्ययम् (?) ॥ २४ ॥

अष्टोत्तरं द्वादशान्तं धनाख्यं शून्यवाचकम् (?) ।
विष्णुधर्मं विनिष्ठान्तं निस्तरङ्गं निरामयम् ॥ २५ ॥

नकिञ्चित् किञ्चिदानन्दं परमात्मानुलेपनम् ।
पराभ्यां रत्नमारूढं [पराभ्यन्तरमारूढं] अधिकं तत्परापरम् ॥ २६ ॥

देवानां परमं देवं प्रणमेयं महेश्वरम् ।
संसारदुःखदहनमायुरारोग्यनिर्मितम् ॥ २७ ॥

सर्वपापक्षयकरं सर्वरोगनिबर्हणम् ।
सन्ततं शृणु तं ह्यस्तु ज्ञानामृतरसायनम् ॥ २८ ॥

तीर्थकोट्यस्तु यज्ञानां मन्त्रकोट्यस्तु यज्ञकम् । (?)
...व्रतं पुण्यं स्वाध्यायं मन्त्रनायकम् ॥ २९ ॥

विश्वेशं च त्रिकालज्ञमणिमादिगुणाष्टकम् ।
परापरं परावाप्तिस्वर्गमोक्षप्रदायकम् ॥ ३० ॥

अमृताक्षं मृत्युजयमनाढ्यं तं शुभं वृषम् (?) ।
परमाक्षरमोङ्कारं षडङ्गं मन्त्रनायकम् ॥ ३१ ॥

अवाप्तं मन्त्रदेशाख्यं व्योमरुध्यचतुष्कलम् ।
दशबीजं महावज्रं वैदिकं रौद्रवैष्णवम् ॥ ३२ ॥

आरूढं तौङ्किकं सौरं भैरवं पापदक्षिणम् ।
गोपितं संह्यलं मन्त्रः सर्वमन्त्रप्रवर्तकम् ॥ ३३ ॥

एकं पञ्चाशद्वर्णानां मूलकं वर्णभेदकम् (?) ।
पञ्चमात्रस्थूलभेदमेकाशीतिदलास्तकम् ॥ ३४ ॥

अष्टात्रिंशत्कलाधारं त्रिषष्टिभेदसंस्थितम् ।
अनाहतं चतुष्षष्टिकलाभिश्चैकमक्षरम् ॥ ३५ ॥

नित्यस्थितं हंसगर्भं शिवभक्तिं शिवात्मकम् ।
आद्यन्तमध्यनिलयं स्तुतिं मिश्रामनोपमम् ॥ ३६ ॥

जाग्रत्स्वप्नसुषुप्तिस्थं पूरकं कुम्भरेचकम् ।
अविभक्तमनेकैकं नाभूतं च पृथक् पृथक् ॥ ३७ ॥

अनेकाधारवदनं मन्त्रशास्त्राङ्गमालयम् ।
इच्छाज्ञानंक्रियाशक्तिमन्त्रशक्त्यात्मनोदयम् ॥ ३८ ॥

दक्षिणोत्तरमध्यस्थं ... ... ... ... ... ... ।
हेमकोटीस्तु यो दद्यात्कपिलाकोटयो ददेत् ।। ३९ ।।

महीं काञ्चनसम्पूर्णां रत्नानां सप्तसागरात् ।
कुरुक्षेत्रे कनखले चन्द्रसूर्यग्रहे वरे ।। ४० ।।

एतत्सर्वेषु दानेषु यत्पुण्यं फलते फलम् ।
तत्फलं लभते मर्त्यः स्तवस्यास्यानुकीर्तनात् ।। ४१ ।।

कुलकोटिं समुद्धृत्य शिवलोके महीयते ।
सर्वपापविशुद्धात्मा मुक्तिरेव न संशयः ।। ४२ ।।

।। इति श्रीज्ञानामृतरसायनं सम्पूर्णम् ।।

---

## ४९. ।। अथ श्रीअघोरस्तवः ।।

सकलभुवननाथं सर्वदं सर्ववन्द्यं
सहमनु मनुनाथं पूजयित्वा सशक्तिम् ।
परमशिवमघोराख्याख्यमन्त्राधिराजं
परिमितविषयाभिर्वाग्भिरभ्यर्चयामः ।। १ ।।

यत्पाशसंहृतिषु पाशुपतं महास्त्रं
ग्रन्थिप्रभेदनविधौ क्षुरिकास्त्रमाहुः ।
विघ्नस्तुतौ च शकलीकरणे शिवास्त्रं
वन्दे तदस्त्रमहमैशमघोरसंज्ञम् ।। २ ।।

यस्ते बिभर्ति निजमूर्धनि मन्त्रचक्रं
यो वा बिभर्त्यवयवेषु तदक्षराणि ।
[सोऽयं[1]] निरस्य निखिलग्रहभूतरोगान्
जित्वास्त्रनायकरिपूनतिवृद्धिमेति ।। ३ ।।

वज्रं शक्तिर्दण्डखड्गाहिपाशान् [:]
वायोरस्त्रं सा गदा ... च त्रिशूलम् ।
पद्मं चक्रं साधयन्ति स्वकृत्यं
लब्ध्वाज्ञां ते दिग्भृतामायुधानि ।। ४ ।।

न भवति विषपीडा नारिपीडा न चाधिः
न खलु निखिलरोगा नापि भूतग्रहार्तिः ।
न धनहरणभीतिर्नाभिचारस्य तेषां
सकृदपि भुवने त्वां येऽस्त्रराजं स्मरन्ति ।। ५ ।।

---

1. हेयं

मन्त्री जपाकुसुमसंनिभभीममूर्तिं
त्वां घोरमूर्धपरिपिङ्गलकेशपङ्क्तिम् ।
दंष्ट्राकरालवदनं तटिदाभजिह्वं
व्यात्ताननं रविशशिज्वलनोग्रनेत्रम् ॥ ६ ॥

नागेन्द्रभूषणकपालकृताङ्कमाला-
शोभान्वितं भ्रुकुटिभङ्गकरालवक्त्रम् ।
धूम्राम्बरं मुखरनूपुरमष्टबाहुं
ध्यायन् प्रसिध्यति झणत्कणकिङ्किणीकम् ॥ ७ ॥

त्वां दक्षिणैः करतलैरसिशूलमूल-
शक्तिं[क्तीः] डमड्डमरुकं चषकं दधानम् (?) ।
खेटं त्रिशूलनृकपालसुरेन्द्रशस्त्रा-
ण्यारब्धयात्रमरिमर्दनमाश्रितोऽस्मि ॥ ८ ॥

कर्णद्वये करयुगे भुजयोश्च युग्मे
पार्श्वद्वये पदयुगे कटिमण्डले च ।
कुक्षौ गले शिरसि नाथ चतुर्दशाहीन्
तत्तद्विभूषणकृतात्मतनूर्बिभर्षि ॥ ९ ॥

वामे शूलदले स्थितस्तव हरिः श्रीनीलरुद्रः पुन-
र्मध्ये दक्षिणतो विधिः सुफलके गौरी गुहः कुम्भके ।
दण्डाग्रे गणनायको दिनकरो दण्डेऽस्य मूले स्मरः
तेनाघाहिगलग्रहोन्मदरिपूनत्रेश निर्नाशय ॥ १० ॥

त्वां सात्त्विकं धवलरूपमुपास्य मोक्षं
संप्राप्नुवन्ति मनुजाः सुखसंनिविष्टम् ।
आरक्तवर्णमद[थ]राजसमुद्धताङ्ग-
मा[साद]यन्ति सकलाभिमतार्थसिद्धिम् ॥ ११ ॥

शत्रुक्षयाय सकलामयनाशनाय
सर्वोपसर्गहतये च तवातिरौद्रम् ।
कृष्णं कृपानिलयतामसमेव शस्तं
यानोद्यतं यतिवराः कथयन्ति रूपम् ॥ १२ ॥

यद्वा दमद्दमरुकासिपिशाचशूल-
मूलानि दक्षिणकरैरवरैः कपालम् ।

त्वां खेटकेन वरघण्टिकया च शूल-
मध्यं दधानमहमष्टभुजं नमामि ॥ १३ ॥

आकर्षणे निखिलरोगहृतौ रिपूणां
स्तम्भे वशीकरणमोहनदीपनेषु ।
युद्धोद्यतं तव पुर[वपु]स्तटिदंशुभीमं
स्मृत्वोग्रदंष्ट्रमचिरेण फलं लभन्ते ॥ १४ ॥

कृष्णप्रभं त्रिनयनं त्रिभुजं त्रिपादं
भीमं महाशनिरवं विकटाट्टहासम् ।
त्वां सूचिमुष्टिहननैरहिभूषिताङ्गं
ध्यायन्ति धावनपरं रिपुमारणादौ ॥ १५ ॥

त्वां षड्भुजं त्रिनयनं शशिकान्तरूपं
पद्माननं विधृतभूषणमूर्धकेशम् ।
वामे कपालधनुषी दधतं सखेटं
शूलं शरं च परतः प्रणतोऽस्मि सासिम् ॥ १६ ॥

व्याधादरि[वरि]प्रमथने सति भूमिकम्पे
दाहे दिशां प्रचुरवृष्टिषु चण्डवाते ।
पापक्षये सकलवृद्धिषु शान्तिकादौ
भीतौ च देव तव रूपमिदं स्मरन्ति ॥ १७ ॥

सजलघनघनाभं भीमदंष्ट्रं त्रिनेत्रं
भुजगधरमघोरं रक्तवस्त्राङ्गरागम् ।
परशुडमरुखड्गान् खेटकं बाणचापौ
त्रिशिखनरकपाले बिभ्रतं भावयामि ॥ १८ ॥

शूलं मूलं पिशाचं शरमसिसृणियुक्टङ्कयुग्भिण्डिपालं
वज्रं तत्स्थूलमध्यं डमरुकमपरैर्घण्टिकां चापखेटौ ।
पाशं चक्रं च दण्डं भुजगमनलकं दक्षिणैर्बाहुदण्डै-
र्मध्ये त्वां विद्युदाभं विजयिनमनिशं घोरनाथं भजामः ॥ १९ ॥

केऽप्यष्टकाधिकसहस्रकरं विदुस्त्वा-
मन्येऽपि चाष्टशतहस्तमतर्क्यवेषम् ।

केचिद्द्विपञ्चकरमष्टभुजं परेऽपि
केचिच्चतुर्भुजयुतं कतिचिद्द्विबाहुम् ।। २० ।।

केचिद्वदन्ति धृतषोडशबाहुदण्ड-
मन्ये पुनर्द्विनवसङ्ख्यकरारविन्दम् ।
त्वां सर्वतः प्रसृतपाणिपदं तु शैवं
तेजः सुदुस्सहतरं वयमामनामः ।। २१ ।।

त्वां बाहुमूलवलयीकृततक्षकाहिं
तन्मध्यवेष्टितमहादृढपूर्वपद्मम् ।
पादाब्जसंस्थकुलिकं करपद्मशोभं
दण्डे कटीघटितवासुकिमेखलाङ्कम् ।। २२ ।।

त्वां शङ्खपालभुजगेन्द्रकृतोपवीतं
जानुद्वयस्फुरदनन्तमहोरगेन्द्रम् ।
लूतादिवृश्चिकविराजिविराजिताङ्गं
कर्कोटकाहिपरिभूषितकण्ठभागम् ।। २३ ।।

त्वां प्रस्फुरच्छिखिनिभोर्ध्वकचं स्फुरन्तं
घोराननं विकृतघोरतराहिभूषम् ।
वन्दामहे वरतनुं वररूपशोभं
वक्षोल्लसच्चटचटारवरुण्डमालम् ।। २४ ।।

आम्रेडितप्रयुतसङ्ख्यतटित्कृतास्थि-
मालाधरं कहकहारवभोगिभूषम् ।
भूयो वमज्ज्वलनदीप्तललाटनेत्रं
त्वां हुंकृतेन मम घातय घातयारीन् ।। २५ ।।

चक्रोद्धृतप्रणवफट्कृतसंपुटं ते
मन्त्रोत्तमं जपति यः सममङ्गमन्त्रैः ।
अस्मात्परं मनुशतैः किमिहाल्पसारै-
रायातमिष्टमनिशं त्वयि सिद्धिमेति ।। २६ ।।

यः पञ्चषड्भिर्द्विदशाष्टयुग्मैर्वर्णैर्मनोज्ञैः परिकल्पिताङ्गः ।
ऋष्यादिकं बीजसशक्तिकीलयुक्त्यातिसञ्चिन्त्य जपेत्स धन्यः ।। २७ ।।

यो मस्तकेऽलिकतले नयनद्वये च
मध्ये भ्रुवोस्तव मनोरिह नासिकायाम् ।

कर्णद्वये हनुयुगे द्विजपङ्क्तियुग्मे
कण्ठेऽसयोश्च जठरे स्तनयोः क्रमेण ॥ २८ ॥

वर्णान्निवेशयति वक्षसि नाभिदेशे
बाहुप्रकोष्ठतलपाणिषु वामतश्च ।
स्फिज्यूरुजानुतलतश्चरणेषु तद्व-
त्पायौ सलिङ्गवृषणे चरमाङ्गदेशे ॥ २९ ॥

पार्श्वद्वये हृदि च तालुनि साधकेन्द्रः
पूजाविधौ जपविधौ च सुसम्प्रदायः ।
[सोऽयं निरस्य] निखिलार्तिमनेकसौख्या-
न्यासादयत्यनिमिषैरपि पूज्यमानः ॥ ३० ॥

त्वां शेषक्लृप्तवलयाङ्कितपाणिपद्मं
कर्कोटकाहिपरिभूषितदामशोभम् ।
वक्षःस्थलाभरणतक्षकनागशोभं
पद्माख्यनागपरिकल्पितहारभूषम् ॥ ३१ ॥

सुश्वेतपद्मपरिक्लृप्तललाटशोभं
मध्याङ्गलग्नकुलिकोदरबन्धनागम् ।
केचित्कटीघटितभूषितशङ्खपालं
कर्णावतंसवरवासुकिमामनन्ति ॥ ३२ ॥

चर्मासिचापशरवज्रपरश्वथाङ्ग-
शूलादिमव्यसृणिदण्डधरैश्च हस्तैः ।
पञ्चाननं धवलदंष्ट्रमगाधनेत्रं
त्वामञ्जनाभमरिभीषणमाश्रयामः ॥ ३३ ॥

हस्तैरभीवरपरश्वथकृष्णसार-
युक्तैश्चतुर्भिरभिशोभितमाननैश्च ।
त्वां पूजयन्निह सहस्रदलाब्जसंस्थं
वाञ्छां व्रजेद्दशभिरावरणैरुपेतम् ॥ ३४ ॥

काल्याद्याभिः परिवृततनुं शक्तिभिर्दिग्गताभि-
स्तन्मध्यस्थैः परिचिततनुं भीषणाद्यैश्च रुद्रैः ।
ब्राह्मयाद्याभिर्दिशि दिशि तनुं[वृतं] मातृभिर्लोकपालैः
साङ्गं ध्यायन् जपति सुमतिर्भूतले यः स धन्यः ॥ ३५ ॥

कृत्वा चक्रं रजोभिस्तव तदनुगुणैः कर्णिकाकेसराढ्यं
मध्ये च द्वादशारं कृतनियमविधिः षोडशारं च बाह्ये ।

मध्ये त्वां पूजयित्वा दिशि दिशि परितः केसरेष्वष्टशक्ती-
रिच्छादिद्वादशारेष्वथ यजति महास्त्राणि चत्वारि दिक्षु ॥ ३६ ॥

शेषारेष्वष्टरुद्रान्विदिगुदिततनून् भीषणाभीषणादीन्
बाह्येऽस्त्रैरात्मदिक्स्थैः सह कुलिशमुखैर्भौतिकादीनि चाष्टौ ।
तस्याधिव्याधिनाशः सकलमभिमतं शत्रुनाशश्च सद्यः-
शान्तिः पुष्टिश्च विद्या धनमपरिमितं क्षेत्रसम्पत्तिरन्ते ॥ ३७ ॥
यस्त्वां युद्धोद्यताङ्गं यजति कृतमतिर्भास्कराद्यैर्गणेशैः
क्षेत्रेशैः कोणसंस्थैः त्रिदशपतिमुखैरष्टरुद्रैः परीतम् ।
आद्ये तज्ज्ञानरूपप्रभृतिभिरपरे वीरघोषादिरुद्रै-
स्तद्बाह्यस्थैश्चतुर्थे द्रविणपतिमुखैः पञ्चमे कालमुख्यैः ॥ ३८ ॥
षष्ठे चोच्छुष्ममुख्यैरनिशमभिमुखैः सप्तमे विष्णुमुख्यै-
रन्यस्मिन् तीक्ष्णदंष्ट्रप्रभृतिभिरमरेशादिभिश्चापरस्मिन् ।
आधारे लोकपालैर्दिशि दिशि दशमे सायुधैः सेव्यमानं
भोगानास्वाद्य सर्वान् भुवि तनुविरमे मोक्षमाप्नोति सोऽयम् ॥३९॥
चक्रं स्रग्वज्रशक्तीर्डमरुपरशुघण्टाहिखड्गप्रखेटान्
बिभ्राणं दण्डपाशौ ध्वजनरशिरसी चापबाणौ भुजैश्च ।
दोर्भ्यां द्वाभ्यां महास्त्रं नियुतरविनिभं लूतमुण्डाहिभूषं
चार्काभं कुण्डलाढ्यं कुमतविहतये घोरनाथं भजामः ॥ ४० ॥
विद्युन्मालानलाभं भुजगपरिवृतं भीषणं निम्ननेत्रं
शूलं पाशं च घण्टामनलमसिमहाखेटकौ प्रज्वलन्तौ ।
सव्येऽभीशक्तिचापान् शरपरशुरुजा दक्षिणे घोरवक्त्रं
पार्श्वे घोरास्त्रमेवं नियमितमनसा संयजे सर्वसिद्ध्यै ॥ ४१ ॥
जप्त्वायुतं [तव मनूत्तम]मिष्ट[मङ्ग]युक्तं
हुत्वा सहस्र[मपकृत्य]मपाकरोति ।
संध्यासु चाष्टसहितं शतमत्र जप्त्वा
ध्यायन् कुबेरसदृशं श्रियमेति मर्त्यः ॥ ४२ ॥
आधारनाभिहृदये च गले च तालु-
भ्रूमध्यमूर्ध्न्यखिलशक्तिपदेषु देवम् ।
तेजोमयं स्मरति यः क्रमशश्च मोक्षं
यो व्युत्क्रमेण स नरः पुनरेति भोगम् ॥ ४३ ॥

यद्वैभवं तव महास्त्रमहानुभावं
स्तोतुं न मन्त्रपतयस्तदशेषमीशाः ।
का शक्तिरत्र वद तादृशमीदृशानां
कश्चैकदेशगणको गणकीर्तिमेति ॥ ४४ ॥

एतामघोरास्त्रपदानुविद्धां
यः स्त्रोत्रमालां पठति त्रिसन्ध्यम् ।
विजित्य[निर्जित्य] शत्रून् विगतामयोऽसौ
प्राप्नोत्यशेषानपि वाञ्छितार्थान् ॥ ४५ ॥
॥ इति श्रीअघोरस्तवः सम्पूर्णः ॥

---

## ५०. ॥ अथ श्रीअघोराष्टकम् ॥

कालाभ्रोत्पलकालगात्रमनलज्वालोर्ध्वकेशोज्ज्वलं
दंष्ट्राद्यस्फुटदोष्ठविम्बमनलज्वालोग्रनेत्रत्रयम् ।
रक्ताकोरकरक्तमाल्यरचितं[रुचिरं]रक्तानुलेपप्रियं
वन्देऽभीष्टफलाप्तयेऽङ्घ्रिकमलेऽघोरास्त्रमन्त्रेश्वरम् ॥ १ ॥

जङ्घालम्बितकिङ्किणीमणिगणप्रालम्बिमालाञ्चितं
[दक्षान्त्रं]डमरुं पिशाचमनिशं शूलं च मूलं करैः ।
घण्टाखेटकपालशूलकयुतं वामस्थिते बिभ्रतम्
वन्देऽभीष्टफलाप्तयेऽङ्घ्रिकमलेऽघोरास्त्रमन्त्रेश्वरम् ॥ २ ॥

नागेन्द्रावृतमूर्ध्निज[र्धज] स्थित[श्रुति]गलश्रीहस्तपादाम्बुजं
श्रीमद्दोःकटिकुक्षिपार्श्वमभितो नागोपवीतावृतम् ।
लूतावृश्चिकराजराजितमहाहाराङ्कितोरस्स्थलं
वन्देऽभीष्टफलाप्तयेऽङ्घ्रिकमलेऽघोरास्त्रमन्त्रेश्वरम् ॥ ३ ॥

धृत्वा पाशुपतास्त्रनाम कृपया यत्कुण्डलि[यत्कृन्तति]प्राणिनां
पाशान्ये क्षुरिकास्त्रपाशदलितग्रन्थिं शिवास्त्राह्वयम् (?) ।
विघ्नाकाङ्क्षिपदं प्रसादनिरतं सर्वापदां तारकं
वन्देऽभीष्टफलाप्तयेऽङ्घ्रिकमलेऽघोरास्त्रमन्त्रेश्वरम् ॥ ४ ॥

घोराघोरतराननं स्फुटदृशं संप्रस्फुरच्छूलकं
प्राज्यां[ज्यं]नृत्तसुरूपकं चटचटज्वालाग्नितेजःकचम् ।

[जानुभ्यां] प्रचटत्कृता [रिनिकरं] स्रग्मुण्डमालान्वितं
वन्देऽभीष्टफलाप्तयेऽङ्घ्रिकमलेऽघोरास्त्रमन्त्रेश्वरम् ॥ ५ ॥

भक्तानिष्टकदुष्टसर्पदुरितप्रध्वंसनोद्योगयुक्
हस्ताग्रं फणिबद्धहस्तचरणं प्रारब्धयात्रापरम् ।
स्वावृत्त्यास्थितभीषणाङ्कनिकरप्रारब्धसौभाग्यकं ?
वन्देऽभीष्टफलाप्तयेऽङ्घ्रिकमलेऽघोरास्त्रमन्त्रेश्वरम् ॥ ६ ॥

यन्मन्त्राक्षरलाञ्छितापघनवन्मर्त्याश्च[श्च] वज्रार्चिषो
भूतप्रेतपिशाचराक्षसकलानिर्घातपाता इव [दिव] ।
उत्सन्नाश्च भवन्ति सर्वदुरितप्रोच्चाटनोत्पादकं
वन्देऽभीष्टफलाप्तयेऽङ्घ्रिकमलेऽघोरास्त्रमन्त्रेश्वरम् ॥ ७ ॥

यद्ध्यानो ध्रुवपूरुषो[ध्यानोद्यतपूरुषो]षितगृहग्रामस्थिरास्थायिनो
भूतप्रेतपिशाचराक्षसप्रतिहता निर्घातपाता इव ।
यद्रूपं विधिना स्मरन् हि विजयी शत्रुक्षयं प्राप्नुते
वन्देऽभीष्टफलाप्तयेऽङ्घ्रिकमलेऽघोरास्त्रमन्त्रेश्वरम् ॥ ८ ॥
॥ इति श्रीअघोराष्टकं सम्पूर्णम् ॥

---

## ५१. ॥ अथ श्रीबिल्हणस्तवः ॥

सन्तु सहस्रं देवास्तद्गुणदोषोक्तिभिः किमस्माकम् ।
शिवमेव वर्णयामः पुनरपि शिवमेव शिवमेव ॥ १ ॥

धत्से मूर्ध्नि सुधामयूखशकलं श्लाघ्ये कपालस्रजं
वक्षस्यद्रिसुताकुचागरुरजःसान्द्रं चिताभस्मा च ।
तद्बाणादिकविप्रणीतललितस्तोत्रप्रबन्धप्रिये
त्वत्कर्णे लभतामयं मम गिरां गुम्भोऽपि सम्भावनाम् ॥ २ ॥

पञ्चब्रह्मषडङ्गबीजमुखरप्रासादपञ्चाक्षर-
व्योमव्यापिपुरःसरेषु मनुषु प्रौढिः कुतो मादृशाम् ।
ओंकारादिनमोऽन्तमुद्रितभवन्नामावलीकल्पितं
सर्वं मन्त्रतया प्रभो परिणमत्यन्तर्बहिर्यागयोः ॥ ३ ॥

सर्वेषां हृदि विद्यसे शिव ततस्त्वद्ध्यानयोगेन किं
विश्वस्योपरि वर्तसे यदि ततस्त्वत्पादमूलेन किम् ।
त्रैलोक्यं त्वयि लीयते यदि तदा त्वत्प्राप्त्युपायैरलं
सर्वं चापि तवैव तत्त्वमपरं दैवं न रोचिष्यते ॥ ४ ॥

प्रासादैस्तव किं श्मशानवसतेः स्नानैः किमस्थिस्पृशः
किं वस्त्रैश्च दिगम्बरस्य भसितालेपस्य गन्धैश्च किम् ।
किं धूपैः शवधूमधूम्रवपुषः किं कालकूटाशिनो
नैवेद्यैरपि भक्तिमात्रसुलभं त्वां देव सेवामहे ॥ ५ ॥

वदन्ति चेतश्चपलस्वभावं
जल्पन्ति दोषान् कवयो गुणाय ।
तद्यत्र कुत्रापि विलीयमानं
कदाचन त्वय्यपि धावतीति ॥ ६ ॥

एनांसि मानसिकवाचिककायिकानि
कुर्मस्तथापि चरणं शरणं ददी[दे]थाः ।
यो दोषवन्तमपि रक्षति रक्षितासौ
को[किं]वा न रक्षति निरागसमिन्दुमौले ॥ ७ ॥

आयुषि महति विलम्बो भवति भवत्पादपङ्कजप्राप्तेः ।
हीने भवदाराधन[ने ]विघात इत्युभयथापि किं कुर्मः ॥ ८ ॥

पुंसामायुर्निटलफलकेष्वक्षरैर्विद्यमानै-
र्निश्चिन्वानो विधिरवधिना पूर्यमाणं स लुम्पेत् ।
नैतत्कर्तुं प्रभवति मम त्वत्पदाम्भोजयुग्म-
प्रत्यासन्नक्षितिनति[1]विसंघृष्टफालाक्षरस्य ॥ ९ ॥

श्मशाने भूतानां पतिरिति विजानन्नपि जनो
नृणां भस्मान्यस्थीन्यपि किमिति तीर्थं नमयति [गमयति] ।
भवद्देहाश्लेषं भवदपघनारोहणमपि
[2]स्वयं लब्ध्वा स्वेषामकृतपरिपाकेन
[लब्धान्येषां सुकृतपरिपको न] भवति ॥ १० ॥ ?

प्रेततामममरतां च बिभ्रतीं
त्वद्भुजिष्यपदवीं लभामहे ।
दुष्कृतस्य सुकृतस्य चोभयो
र्नान्तरं तदपि धारयामहे ॥ ११ ॥

ब्रह्मोत्तमाङ्गलवितुर्नृकपाल[3]लेढुः
श्रीकण्ठपादकमलं वरिवस्यतां ते ।

---

1. किणामृष्ट
2. स्वयं लब्धानां कस्सुकृतपरिपाको नु भवति
3. वोढुः

हिंसाप्यशौचमपि नागसि कारणं नः
स्वामीव सेवकमिति प्रवदन्ति [1]तज्ज्ञाः ॥ १२ ॥

जटाजूटे गङ्गां निटलनिकटे शीतकिरणं
पुनर्देहे देवीं तुहिनगिरिपुत्रीं [2]पवयसि ।
ततः शङ्के लोकत्रितयपरितापापहरणं
विधातुं संनाहो वरद भवता भावित इति ॥ १३ ॥

वित्तेशस्य कुबेरता न विरता नीहारभानोः क्षयो
हेरम्बस्य महोदरं न गलितं दैत्यारिरुच्चैर्गदः ।
अङ्गं भृङ्गिरिटेश्च पाण्डु कृश[त]मित्यास्तताममीषां कथा
त्वं शूलीति विधीयसे कथमयं भक्तस्तवानामयः ॥ १४ ॥

गृह्यन्तां वसनेषु चर्म भुजगो हारेषु यानेषु गा-
धुत्तूरं कुसुमेषु नात्र रुदितुः किं तत्र [रुदिमः किं त्वत्र] कम्पामहे ।
अब्धेः कौस्तुभकामधेनुकमलाकल्पद्रमोच्चैःश्रवः-
पीयूषादिषु सत्सु तात भवता यः कालकूटग्रहः ॥ १५ ॥

उत्तरङ्गमधिमस्तकगङ्गा-
वारि धारयसि वारिजगन्धि ।
किं पयश्चुलुकबिल्वदलैस्ते
भिक्षुरुज्झति कदापि न लाभम् ॥ १६ ॥

सस्यारोपणरक्षणाक्षमतया भिक्षाटनं निर्मितं
कच्छग्रन्थिविमोचनापटुतया[3] वासो दिशः कल्पिताः ।
शाणान्वेषणघर्षणालसतया भस्माङ्गरागः कृतो
विश्वोत्पादनपालनापहरणायासस्त्वया नेक्षितः ॥ १७ ॥

धुत्तूराणि शिरःस्रजं पितृवनं वासं विषं भोजनं
[4]गर्ह्यान्याभराणि भस्म तिलकं वृद्धोक्षमारोहणम् ।
प्रेतान् पारिषदान् विधाय ममृजे दुर्मेधसो वेधसः
त्रैलोक्यानुपयोगिवस्तुरचनावैफल्यदोषस्त्वया ॥ १८ ॥

---

1. लोकाः
2. स्फुटयसि
3. लसतया, पटुतया
4. सर्पाश्चाभरणानि

वाणी पङ्करुहासनस्य गृहिणीत्यास्थायि मौनव्रतं
लक्ष्मीः सागरशायिनः प्रियतमेत्यग्राहि भिक्षाटनम् ।
इत्थं स्वामिनिषिद्धसेवकवधूसम्भोगवीभत्सया
पञ्चासेविषत त्वया धृतिदयादान्तिक्षमामुक्तयः ॥ १९ ॥

भिक्षां देहि गृहाण कीदृशमभिप्रेतं प्रतिज्ञा दृढा
बाढं पृच्छ हिमाचलं न गृहिणी भिक्षां पतिं पृच्छति ।
तद्भिक्षुस्तनयामियं त्रिनयनायत्ता प्रतिज्ञा मृषे-
त्यन्तश्छद्मपरीक्षिताचलवधूभावाय तुभ्यं नमः ॥ २० ॥

स स्वामी जगतां सखा धनपतेः सेव्यः सुराणामिति
श्रुत्वा तुभ्यमुमां प्रतिश्रुतवती मेना मुनीनां पुरः ।
त्वामाशावसनं पिशाचसुहृदं प्रेतावृतं प्राङ्गणे
दृष्ट्वा चित्रशिखण्डिभिः प्रहसितं मेने [1]नटैर्नाटितम् ॥ २१ ॥

शूलानि क्षिणु लोहकार डमरून् मातङ्गसिंहत्वचो
व्यालान् जाङ्गलिक प्रयच्छ शबर व्याघ्राजिनान्यानय ।
खट्वाङ्गान्यपि सूत्रधार घटयेत्युद्वाहकोलाहले
दण्ड्यन्ते हिमवत्पुरे भवदनुज्ञातैर्गणैः कारवः ॥ २२ ॥

श्वश्रूः सव्रीडमेषा मिषति न विहितः कङ्कणस्यापि मोक्षो
कोऽसावुद्धूलनस्यावसर इति भवान् मातृभिर्वारितोऽपि ।
निर्वृत्तो माधुपर्को विधिरिति गिरिजासिद्धिसिद्धान्तवादी
निर्वाणस्य स्वपाणि[2]ग्रहणहुतभुजो भस्मलिप्तो ननर्त ॥ २३ ॥

गङ्गा केवलमम्बु शैलतनया पत्नीत्यमुष्याः पुरः
सा गुप्ता शिरसीति केलिकलिभिः सा दर्शितास्या इति ।
सा जूटेऽर्धवपुष्यसावपि धृतेत्येकोऽनुकूलः शठो
धृष्टो दक्षिण इत्यजायत चतुर्भेदो भवान्नायकः ॥ २४ ॥

हारं त्यक्त्वाक्षसूत्रं श्रवसि मणिसरं चिह्नमौञ्जीगुणायां
कट्यां श्रीखण्डपङ्कं विगलितभसिते कक्षतुम्बीकरण्डे ।
मौलौ वृत्तां नरास्थिस्रजमपि मकुटं मुक्तभिक्षाकपाले
पाणौ शैलेन्द्रदत्तां शिव तव दधतो मुग्धता धूर्तता वा ॥ २५ ॥

---

1. नवैर्नाटितम्
2. ग्रहणजहुतभुग्भस्म ।

किं स्थानं [1]च जगत्सु सप्तसु परं हे पद्मवासे कुतो
हे पद्मासन पद्ममीश्वरशिरोऽलङ्कारमारोहताम् [रोपितम् ] ।
इत्थं तन्नियमार्चनप्रणयिभिर्माहेश्वरैर्भक्तितो[र्भर्त्सितौ]
मन्ये वार्धिशय[2]स्वभाव भवता हृन्नाभिपद्मासनौ ॥ २६ ॥

त्वत्पादयोरब्जसहस्रपूजां
नेत्राब्जपूर्णां कृतवत्युपेन्द्रे ।
त्रिनेत्र नेत्राब्जसहस्रपूजां
कुर्वन्नितेन्द्रः प्रणतो विभाति ॥ २७ ॥

नेत्रानले कामकरीषदीप्ते
कृतान्तकाष्ठज्वलिते पिनाकिन् ।
मूलाहुतीस्त्रीणि पुराणि हुत्वा
पूर्णाहुतिं विश्वमिदं जुहोषि ॥ २८ ॥

आरोप्य वायुमपि खेचरतां लभन्ते
हुत्वा हुताशमपि वासवतां भजन्ते ।
शम्भो भवच्चरणपद्ममनर्चयन्तो
मर्त्याः कथञ्चिदपि नाश्नुवते भवन्तम् ॥ २९ ॥

छिन्धि ब्रह्मशिरो यदि प्रथयसे प्रेतेषु सख्यं यदि
क्षीबः क्रीडसि मातृभिर्यदि रतिं धत्से श्मशाने यदि ।
सृष्ट्वा संहरसि प्रजा यदि तथाप्याधाय भक्त्या मनः
त्वां सेवे करवाणि किं त्रिजगतीमान्यः स एवेश्वरः ॥ ३० ॥

व्यालेभ्योऽस्तु नमः पिशाचसदसि न्यस्तः प्रणामाञ्जलि-
र्नम्राः स्मो नृकपालदामनि चिताभस्मापि वन्दामहे ।
जानुभ्यां प्रणिपत्य चारुवचनैः सन्तोषयामो वृषं
किं कुर्मः परमेश्वरस्य चरितं विज्ञाय वर्तामहे ॥ ३१ ॥

धत्तां भास्मनमङ्गरागमजिनं वस्त्रं [वस्तां] च तारक्षवं
कापालीं स्रजमाबिभर्तु कटकं चाहेयमामुञ्चतु ।
भूयश्चापि शिवेतराणि भजतां देवस्तथापि स्वयं
सत्स्वन्येष्वपि दैवतेषु शिव इत्येकः समाम्नायते ॥ ३२ ॥

---

1. न जगत्सु
2. स्य तत्र भवता स्य तावभवतां

अपि कुशलिनी प्रेतावासस्थली सहवासिनः
प्रमथपतयः कच्चिज्जीर्णः सुखी किमु शङ्करः ।
अपि च सुलभा भिक्षावृत्तिर्जगत्त्रयनाथ ते
न खलु शिथिलप्रान्तः किं ते गजाजिनकम्बलः ॥ ३३ ॥

भो भो कैतकपुष्प सौरभनिधे खेदं वृथा मा कृथाः
दृष्ट्वा मूर्ध्नि महेश्वरस्य रचितामर्कप्रसूनावलिम् ।
अस्थिष्वाभरणस्पृहां विदधतः [1]क्षारा[भस्मा]नुलिप्ताकृतेः
नग्नीभूय च नृत्यतोऽस्य चरितं सर्वं सखे तादृशम् ॥ ३४ ॥

भवद्भवनदेहलीनिकटतण्डुदण्डाहति-
त्रुटन्मकुटकोटिभिर्मघवदादिभिर्भूयते ।
भजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसम्पदं प्रमथनाथ नाथामहे ॥ ३५ ॥

अर्थानर्थनिरूपणव्यसनितामाढ्यस्तुतिव्यग्रता-
मेणाक्षीकुचलालनप्रणयितामद्यापि वर्तामहे ।
त्वद्ध्यानव्यवधानहेतुषु मनस्त्वच्चाटुविघ्नेषु वा
त्वत्पूजाविधुरेषु कर्मसु करः श्रीकण्ठ नोत्कण्ठते ॥ ३६ ॥

वासः शुभ्रमृतुर्वसन्तसमयः पुष्पं शरन्मल्लिका
धावन्तः [धानुष्कः] कुसुमायुधः परिमलः कास्तूरिकास्त्रं(?)धनुः ।
वाणी तर्करसोज्ज्वला प्रियतमा श्यामा वयो यौवनं
मार्गः शाङ्कर एव पञ्चमलया गीतिः कविर्बिल्हणः ॥ ३७ ॥

ये बिल्हणाह्वयकवीश्वरसम्प्रणीता-
मेतां स्तुतिं शिवमुदेऽन्वहमामनन्ति ।
ते [2]प्राप्नुवन्ति पुरुषायुषमात्मविद्या-
मारोग्यमष्टतनयानखिलार्थसिद्धिम् ॥ ३८ ॥

[3]एतद्ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरा-
मुल्लासैः कथयन्ति बिल्हणकविः तेष्वेव संनह्यति ।
बिन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं
कर्मेति क्रमशिक्षितान्वयकलाः ये के च तेभ्यो नमः ॥ ३९ ॥

॥ इति श्रीबिल्हणस्तवः सम्पूर्णः ॥

---

1. भस्माङ्गरागाकृतेः, रक्षानुलिप्ताकृतेः । 2. प्राप्नुवन्तु 3. नायं श्लोकः बिल्हणस्य

## ५२. ॥ अथ श्रीमहादेवगद्यम् ॥

श्रीमन् महादेव सकलदेवतानिस्तारक सामरूप सामवेद सर्वाङ्ग-भस्मारक[धारक] सनत्कुमारादिमुनिगणवन्द्य सुन्दर त्र्यम्बक त्रिशूलधर इन्द्रादित्रयस्त्रिंशत्कोटिदेवताराध्य अक्षर अनुपम अजात अपराण्ड प्रलयकाल-ताण्डवाडम्बर दिगम्बर निर्मल निरुपम नित्य जातकण्ठ[रूप] मदनान्तक प्रलयान्तक अनेककालकाल... ...ब्राह्मणराज(?)कपालमालिकाधर अन्धकासुरतारकासुरमहिषासुरकुक्कुटासुरव्याघ्रासुरगजासुरदुष्टदानवकोलाहल सकललोकोत्पत्तिस्थितिलय कालमूर्ते एकमूर्ते उग्रमूर्ते बहुमूर्ते शान्तमूर्ते मूर्तित्रय नेत्रत्रय कालत्रय नन्दिवाहन हिमकरशेखर नन्दिन् महाकाल वीरभद्र पुष्पधर-अण्डाभरण-रुण्डाभरण-डारुकरेणुक-वीरकर्ण-विजयाकर्ण-घण्टाकर्ण-गोकर्ण-लम्बकर्ण-उग्राक्ष-उग्रकेश-शतमुख-सहस्रमुख-प्रदीप्तवदन-उज्ज्वलनेत्र-भीम-रूप-क्रूररूप-क्रूरदंष्ट्र-अघोरमूर्ते श्रीमत्कैलासवास सूक्ष्मरूप स्थूलरूप अव्यक्तमार्ग आद्यन्तरहित परमात्मन् परंज्योतिः भवानीवल्लभ भक्तवत्सल शिवकर शिव नमस्ते नमस्ते नमस्ते नमः ।

॥ इति श्रीमहादेवगद्यं सम्पूर्णम् ॥

---

## ५३. ॥ अथ श्रीमहादेवगद्यम् ॥

ओं जय जय महादेव महाकाल महाकालास्पद महाकालगल नाकौकःप्रत्यनीकनाशकर नारायणप्रिय नारदोपगीयमानशुभचरित नागेन्द्र-कृत्तिनिर्वर्तितोत्तरीय त्रिभुवनभवन तिमिरहरणविशददशशतकरनिकरविकसित-तरुणतरसरसिरुहदलसदृशनयन त्रिनयन त्रिवेदमय त्रिशूलधर त्रिपुरहर त्रिपथगाम्बुचुम्बितजटाजूटकोटीरभार त्र्यम्बक अम्बिकानितम्बबिम्बस्पर्शल-म्पटकराम्बुज मण्डलीभूताण्डजपतिकुण्डलमण्डितगण्डस्थल पुण्डरीक-चर्मखण्डवसन प्रचण्डमेरुकोदण्डप्रस्फुरणप्रहसित प्रलयकालताण्डवप्रसारि-तदोर्दण्ड सहस्रमण्डलाभीरक ब्रह्माण्डखण्ड पाण्डुराङ्ग चण्डीश्वर मृड अतुलबल-दशलपनपृथुलभुजतरुवनचलितरजतगिरिशिखरसदृशककुद्रुशिततरवरवृषभललि-तगतिनिरत निशितपरशुधार शिशिरकरशकलशेखरशशिकाशसङ्काशभस्मस्निग्ध-सर्वाङ्गशरीर अनिशशिशुशरवणभव तात विश्व विश्वेश्वर शर्व शाश्वत कुशेशया सनसंस्तूयमानयशः, अक्षजाशुशिक्षणिभक्षितपञ्चबाणशरीर दक्ष-यज्ञनाशनभगाक्षहरण दक्षिणार्ह अहिमकरहुतभुक्हिमकिरणधरणीगगनपवन-

पतिसलिलात्मक सार्वभौम सकललोकपालमौलिमालालङ्कृतपादपङ्कज-पराग युगचतुष्टयप्रतिष्ठितजगत्त्रय कपटनाटकनटनपटुचाटुकर ... ... ... ... ... पटुतरघनघटाक्रीडासक्त त्रयीविष्टपाय[1] सुरमणिमकुटकोटीररत्नसङ्घटित-हाटकपादपीठ कवाटवक्षःस्थल स्वकटितटगलद्दलित [गलित] मद-जलमत्तमधुकरकुलकलरवगुणित [करि] दलविदलनसरभसमृगपतिकररुहविवर-लग्नस्थूलमुक्ताफलकुसुमावलीसुन्दर श्रीमत्कैलासनिवास वासवारिनारीवैधव्यकर विबुधयुगपतिजनानन्दकर(?) प्रणतदीनार्तिनाशन वरद वामदेव समस्त-लोकैकनाथ शिव शिव नमस्ते नमस्ते नमः ।

अपगतपापाय नमः कपिलजटामण्डलेन्दुखण्डाय नमः ।
द्विपचर्मपटाय नमस्त्रिपुरमखघ्नाय देवदेवाय ममः ॥

॥ इति श्रीमहादेवगद्यं सम्पूर्णम् ॥

---

## ५४. ॥ अथ श्रीलिङ्गपञ्चविंशतिस्तोत्रम् ॥

श्रीमत्परमशिवामृतलिङ्गं
श्रीपतिदीन[द्रुहिण]विलोकनलिङ्गम् ।
सृष्टिस्थितिलयकारणलिङ्गं
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ १ ॥

श्रीगिरिजापरमाद्भुतलिङ्गं
श्रितजनतासंरक्षणलिङ्गम् ।
शृङ्गाराङ्गमखान्तकलिङ्गम्
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ २ ॥

अखिलजगद्धितमनुपमलिङ्गं
सकलसुरासुरसेवितलिङ्गम् ।
अकलङ्कमल[अकलङ्कं च ]जटाधरलिङ्गं
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ ३ ॥

रविशशिबाडबलोचनलिङ्गं
रमणीयाण्डजकुण्डललिङ्गम् ।
रतिपत्यङ्गविभङ्गसुलिङ्गं
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ ४ ॥

---

1. अयः = शरणम्

हरिहयमणिनिभकन्धरलिङ्गं
हरिनन्दनगर्वान्तकलिङ्गम् ।
हरमद्भुतमतिनिर्मललिङ्गं
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ ५ ॥

अधिकसमानविवर्जितलिङ्गं
मधुरमनोज्ञसुभाषणलिङ्गम् ।
विधिचापापविवर्जितलिङ्गं(?)
तं भज विश्वेश्वरशिवलिङ्गम् ॥ ६ ॥

शरणागतसंरक्षणलिङ्गं
करुणारसमयलोचनलिङ्गम् ।
तरुणारुणचरणं भज लिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ ७ ॥

लोकालोकव्यापकलिङ्गं
काकोदरपतिकङ्कणलिङ्गम् ।
आकाशात्परचिन्मयलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ ८ ॥

सामादिश्रुतिसंनुतलिङ्गं
सामजवाहनसेवितलिङ्गम् ।
दामोदशरद्दतबललिङ्गं(?)
तं भज विश्वेश्वरशिवलिङ्गम् ॥ ९ ॥

अम्बरकेशमना[न]म्बरलिङ्गं
कम्बुग्रीवमगोत्रजलिङ्गम् ।
लम्बोदरगुहलालनलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ १० ॥

पक्षापक्षविवर्जितलिङ्गं
दक्षाध्वरसंरक्षित[संहारक]लिङ्गम् ।
अक्षात्परमजमक्षयलिङ्गं
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ ११ ॥

रत्नगिरीन्द्रशरासनलिङ्गं
रत्नमयोज्ज्वलभूषणलिङ्गम् ।
आत्मानन्दसुखास्पदलिङ्गं
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ १२ ॥

तत्त्वंपदवाच्याधिकलिङ्गं
तारकयोगविधायकलिङ्गम् ।
चिन्मयनित्यनिरञ्जनलिङ्गं
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ १३ ॥

दशदिग्वाससमनुपमलिङ्गं
दशकन्धरगानप्रियलिङ्गम् ।
पशुपाशत्वविमोचनलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ १४ ॥

गौरीकुचकलशाङ्कितलिङ्गं
शौरीक्षणजलजाप्रण[र्पण]लिङ्गम् (?) ।
वैरीन्द्रियनिवहान्तकलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ १५ ॥

भैरवबाहुबलाकरलिङ्गं
कैरवबन्धुकलाधरलिङ्गम् ।
कौरवशत्रुजनार्चितलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ १६ ॥

किङ्करभयनाशङ्करलिङ्गं
कुङ्कुमपङ्कविलेपनलिङ्गम् ।
शङ्करमादिनिरङ्कुशलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ १७ ॥

सनकसनन्दनसंनुतलिङ्ग-
मनघमनन्तमबाधितलिङ्गम् ।
मुनिजनमनुवनजस्थितलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ १८ ॥

मननविहीनमनोन्मनलिङ्गं
विनुतविशुद्धसनातनलिङ्गम् ।
जननविनाशमनाकुललिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ १९ ॥

स्फुटतरमोदसुरेश्वरलिङ्गं
पटुतरहठयोगप्रियलिङ्गम् ।
वटतरुमूलतटालयलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ २० ॥

उग्राकारमनुग्रहलिङ्गं
निग्रहरूपमनुग्रहलिङ्गम् ।
व्याघ्रपदार्चितमग्रजलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ २१ ॥

ईक्षणदूरनिरीक्षणलिङ्गं
सूक्ष्ममजरमनपेक्षित[क्षज]लिङ्गम् ।
पञ्चाशात्मकपौरुषलिङ्गं
पञ्चीकरणविदा[धा]यकलिङ्गम् ।
पञ्चाक्षरपञ्चाननलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ २२ ॥

पाद[पाप]विदूरमहोन्नतलिङ्गं
पालितभुवनचतुर्दशलिङ्गम् ।
पातालेशसदाशिवलिङ्गं
तं भज विश्वेश्वरशिवलिङ्गम् ॥ २३ ॥

पशुपतितुरगारोहणलिङ्गं
परमपदादिशुभप्रदलिङ्गम् ।
परमशिवाश्रमपालनलिङ्गं
तं प्रणतोऽस्मि शमीवनलिङ्गम् ॥ २४ ॥

एतत्पञ्चविंशँतिलिङ्ग-
श्लोकानि च यः पठति सकृद्वा ।
तस्य जरामृतिभयमपि न हि[नास्ति]
देहान्ते परशिवमाप्नोति ॥ २५ ॥

॥ इति श्रीलिङ्गपञ्चविंशतिस्तोत्रं सम्पूर्णम् ॥

---

## ५५. ॥ अथ श्रीनीलकण्ठस्तवः ॥

नमो भूतनाथं नमो देवदेवं
नमः कालकालं नमो दिव्यतेजः ।
नमः कालभस्मं नमः शान्तशीलं
भजे पार्वतीवल्लभं नीलकण्ठम् ॥ १ ॥

सदा तीर्थसिद्धं सदा भक्तरक्षं
सदा शैवपूज्यं सदा शुभ्रभस्मम् ।
सदा ध्यानयुक्तं सदा ज्ञानतल्पं
भजे पार्वतीवल्लभं नीलकण्ठम् ॥ २ ॥

श्मशाने शयानं महास्थानवासं
शरीरं गजानां सदा चर्मवेष्टम् ।
पिशाच[ादिनाथं]पशूनां प्रतिष्ठं
भजे पार्वतीवल्लभं नीलकण्ठम् ॥ ३ ॥

फणीनागकुण्ठे[कण्ठं]भुजङ्गाद्यनेकं[ङ्गभूषं]
गले रुण्डमालं महावीरशूरम् ।
कटिव्याघ्रचर्मं चिताभस्मलेपं
भजे पार्वतीवल्लभं नीलकण्ठम् ॥ ४ ॥

शिरश्शुद्धगङ्गं शिवावामभागं
वियद्दीर्घकेशं सदा मां[सहोमं]त्रिणेत्रम् ।
फणीनागकर्णं सदास्फाललचन्द्रं
भजे पार्वतीवल्लभं नीलकण्ठम् ॥ ५ ॥

करे शूलधारं मरा[महा]कष्टनाशं
सुरेशं परेशं महेशं जनेशम् ।
धने चारु ईशं[धनेशस्यमित्रं]ध्वजेशं गिरीशं
भजे पर्वतीवल्लभं नीलकण्ठम् ॥ ६ ॥

उदासं सुदासं सुकैलासवासं
धरानिर्झरे संस्थितं ह्यादिदेवम् ।

अजं हेमकल्पद्रुमं कल्पसेव्यं
भजे पार्वतीवल्लभं नीलकण्ठम् ॥ ७ ॥

मुनीनां वरेण्यं गुणं रूपवर्णं(?)
द्विजा संपठन्तं [द्विजैः स्तूयमानं]शिवं वेदशास्त्रैः ।
अहो दीनवत्सं कृपालुं शिवं हि[तं]
भजे पार्वतीवल्लभं नीलकण्ठम् ॥ ८ ॥

सदा भावनाथं सदा सेव्यमानं
सदा भक्तिदेवं सदा पूज्यमानम् ।
महातीर्थवासं सदा सेव्यमेकं
भजे पार्वतीवल्लभं नीलकण्ठन् ॥ ९ ॥

॥ इति श्रीनीलकण्ठस्तवः सम्पूर्णः ॥

---

## ५६. ॥ अथ श्रीभृङ्गीस्तवः ॥

शम्भो शङ्कर शान्त शाश्वत शिव स्थाणो भवोमापते
भूतेश त्रिपुरान्तक त्रिनयन श्रीकण्ठ कालान्तक ।
शर्वोग्राभय भर्ग भीम जगतां नाथाक्षर श्रीनिधे
रुद्रेशान महेश्वरेश्वर महादेवेश तुभ्यं नमः ॥ १ ॥

स्वामिन् सर्वजगद्गुरो हर महालीलाक्षमक्षेत्रस-
च्चिद्रूपाखिलभव्यभूतभवतां नाथ प्रपन्नार्तिहन् ।
पापघ्नाशुभदुःखपाशभयहृद्भक्तेष्टद ज्ञानद
श्रीदातर्क्य षडङ्गमोक्षद महायोगीश तुभ्यं ननः ॥ २ ॥

क्रूरं कष्टतमं विनष्टमनसं भ्रष्टं शठं निष्ठुरं
निर्लज्जं कृपणं कृतघ्नमशुचिं बह्वाशिनं हिंसकम् ।
आशापाशशतप्रबद्धमनसं दुष्कीर्तिभाजं जडं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३ ॥

मूर्खं बालमतं स्वधर्मचलितं धर्मार्थहीनं खलं
कामान्धं क्षणिकं कदर्थनपरं दौःशील्यजन्मस्थलम् ।
अज्ञं लुब्धमसत्यनिष्ठमधमं प्रज्ञायशोवर्जितं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४ ॥

क्षुद्रं दुर्भगमल्पसत्त्वमलसं भग्नव्रतं रागिणं
भीरुं डाम्भिकमीर्ष्यकं व्यसनिनं पापात्मकं सूचकम् ।
आधिव्याधिनिपीडितं [1]जडधियं सद्भिः सदा निन्दितं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ५ ॥

आकाङ्क्षाश्रयमार्यवृत्तिविमुखं क्षीणं गुणद्वेषिणं
धूर्तं दुर्गुणमत्यशुद्धहृदयं सर्वत्र सन्देहिनम् ।
हीनं पापरतं समस्तविषयेष्वासक्तमन्यायिनं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ६ ॥

अश्रद्धं गतपौरुषं कुपथगं जाज्वल्यमानं रुषा
संसारार्णवमग्न[2]मूर्मिनिहतं नीच[3]क्रियं निर्दयम् ।
वैराग्यव्रतदानयोगनियमद्वेष्टारमुन्मादिनं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ७ ॥

द्वन्द्वग्रस्तमशस्तवृत्तिकुशलं सत्सङ्गविद्वेषिणं
दुःसङ्गप्रियमप्रतिष्ठवचनं कामातुरं तस्करम् ।
शैवज्ञानपराङ्मुखं खलजनव्यापारपारंगतं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ८ ॥

स्वप्नेऽप्युत्तमगन्धपुष्पनिकरैरीशार्चनावर्जितं
ध्यानध्येयविचारणाकुलरिपुं तुच्छं मदोच्छृङ्खलम् ।
दारिद्र्यास्पदमात्मवैरिविशगं तापत्रयस्याश्रयं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ९ ॥

दुर्मर्यादमतिप्रवृद्धरजसं सद्वृद्धसेवारिपुं
[4]सद्धर्माध्वसमुत्सुकं गुरुजने मान्येषु चात्युद्धतम् ।
शिष्टानिष्टकरक्रियापरिचितं [5]दुष्टप्रतुष्टिप्रदं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १० ॥

आत्मातिस्तुतिकारिणं परमहानिन्दाकरं निन्दितं
लुण्टाकं पतितं विपर्ययगतस्वान्तं सदा याचकम् ।
वैफल्योपगतस्वकार्यनिचयं सर्वापदां सञ्चयं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ११ ॥

---

1. हतधियं
2. ऊर्मितरलं
3. प्रियं
4. सद्धर्मेष्वसमुत्सुकं
5. दुष्टस्य तुष्टि

कृत्याकृत्यविचारवर्जितमतिं व्रात्यं महा[1]पातकं
दुर्बुद्धिं मदमानमत्सरनिधिं दुर्वृत्तिवृत्त्याश्रयम् ।
मिथ्याज्ञानिनमार्यकण्टकमलं [2]लोकद्वये दुःखितं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १२ ॥

दुष्कर्म[3]प्रचयप्रभिन्नहृदयं क्लेशैश्च [4]संपीडितं
चार्वाकं कुमतिं कुचेल[5]मलसं कार्पण्यजन्मस्थलम् ।
भार्यापुत्रगृहादिसक्तमनसं गाम्भीर्यधैर्य[6]च्युतं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १३ ॥

चित्तक्षोभकरं कलङ्कहृदयं शोकास्पदं लोलुपं
सारासारविचारहीनमनसं नीचप्रियं नीरसम् ।
मत्तोन्मत्तनिकृष्टकष्टचरितं शून्यं वृथालापिनं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १४ ॥

आत्मज्ञानविहीनमात्मविमुखं सर्वात्मभावद्विषं
सङ्कल्पैर्बहुभिर्वि भिन्नहृदयं दैत्य[न्य]प्रसक्तं सदा ।
मर्मच्छिद्वचनं कठोरहृदयं मित्रद्रुहं चुम्बकं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १५ ॥

वेदोक्ताचरणे शिगा[ध्रुगा]त्मचरितं स्वेच्छाप्रवृत्तिं सदा
सच्छास्त्रेष्वपरागिणं प्रियतमालक्ष्मीगुणैर्वेष्टितम् ।
दाक्षिण्यप्रतिपन्नताविरहितं स्वार्थैकनिष्ठं सदा
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १६ ॥

सत्यत्यागदयाक्षमाशमदमाद्यर्थानभिज्ञात्मकं
देवब्राह्मणगोत्रजातिथिपितृज्ञानात्मकापूजकम् ।
विश्वस्तेष्वपकारवञ्चनपरं मैत्रीरिपुं दुर्जनं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १७ ॥

कृत्वाधर्ममतिं कथञ्चिदपरः को मत्समोऽस्मिन् भवे-
दित्येवं बहुजल्पिनं कुपुरुषं [7]भ्रान्त्याश्रयं राक्षसम् ।
दृष्टादृष्टसुखैषिणं बत मुधा मुक्त्वा शिवाराधनं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १८ ॥

---

1. वञ्चकम्
2. लोकत्रये दूषितम्
3. प्रचये प्रहृष्ट-
4. संपिण्डितं
5. मलिनं
6. द्विषं
7. भ्रान्त्या स्थितं

मार्जाराखुबकश्वकुक्कुटकपिक्रोडाहिवृत्तिं सदा
तीर्थध्वाङ्क्षमनर्थकं परसुखे सन्तापिनं दुःसहम् ।
त्यक्तोपायममेयकाङ्क्षिणमहो शुण्ठं च चोरोपमं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १९ ॥

अस्पृश्यं विकलं कदर्यमखिले दोषे स्वकीये गुणं
पश्यन्तं चलमात्मकार्यनिरतं त्याज्यं विषादात्मकम् ।
चिन्ताशोकपरीतचेतसमलं सर्वाशुभानां पदं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ २० ॥

दुष्पूरस्वककुक्षिपूरणपरं भारं भुवः केवलं
डासी[दासी]मेषखरस्वभावमपटुं सन्मानानाभाजनम् ।
[1]रिक्तं बालकदीर्घसूत्रिणमलं हृच्छल्यशीलं सदा
कारुण्याकर भो पितः पशुपते दोषाकरं पाहिमाम् ॥ २१ ॥

[2]कर्माख्यालघुभारवाहनपशुं तृष्णातृणग्राहिणं
संसारार्णवदुःखपङ्कपतितं यान्तं त्वधोऽधो भृशम् ।
स्वत्वाहंत्वममत्वमोहमकरैराकृष्यमाणं सदा
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ २२ ॥

भ्रष्टं सर्वजुगुप्सितं परहितव्याघातिनं तामसं
संभ्रान्तं चपलं विधानविहितव्यापारविद्वेषिणम् ।
शम्भो त्वत्पदभक्तिहीनमदृढं संमूढमात्मद्विषं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ २३ ॥

ज्येष्ठावासमतिप्रमादितमतिं क्षुत्तृड्जरार्यर्दितं
स्वप्नेऽप्यल्पपरोपकाररहितं सर्वाहितं दुर्बलम् ।
लोके सत्परिहार्यनिन्दितमहादुःखप्रदैकक्रियं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ २४ ॥

किं वाचां बहुविस्तरेण भगवन् मत्संनिभो भूतले
नाभून्नास्ति च नो भविष्यति पुमान्निर्भाग्यचूडामणिः ।
तस्मादीदृशमात्मवञ्चकमहो त्रैलोक्यचूडामणे
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ २५ ॥

---

1. तिक्तं 2. दुष्कार्या

सर्वश्रेष्ठ गुणैकभाजन विभो सर्वोत्तमेषूत्तमा-
सङ्ख्येयात्रगुणैकभाजनमलं कष्टातिकष्टक्रियम् ।
[1]श्रीशाश्रीशमतीन्द्रियेन्द्रियवशं निःसङ्ग दुःसङ्गिनं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ २६ ॥

विण्मूत्रक्रिमिमांसशोणितमयं मेदोऽस्थिमज्जात्मकं
दुर्गन्धैकनिधिं जरापरिगतं वातादिदोषात्मकम् ।
दृष्ट्वापि स्वशरीरमत्र तु सदा वैराग्यहीनं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहिमाम् ॥ २७ ॥

त्वक्शुक्लान्त्रसिरातनूरुहमयं कालास्यरन्ध्रस्थितं
नानापायपतिष्णुकालशिखिना पापच्यमानं भृशम् ।
दृष्ट्वापि स्वकलेबरं कृशतरं तत्राविरिक्तं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ २८ ॥

विष्ठामूत्रयुतं त्वनिष्टमशुभं स्वाभाव्यतो नश्वरं
कुष्ठक्षैण्यविषूचिकाज्वरशिरःशूलादिरोगास्पदम् ।
ज्ञात्वापि स्वशरीरमत्र तु सदा वैराग्यहीनं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ २९ ॥

पङ्गुत्वान्ध्यजरित्वमौर्ख्यखलताबाधिर्यजन्मस्थलं
क्लेद्यच्छेद्यविशोष्यदाह्यकृशतास्थौल्यस्वभावात्मकम् ।
संपश्यन्नपि दोषमत्र तु सदा संप्रीतियुक्तं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३० ॥

देहं क्षालनलेपनादिविधिना संस्पर्शयोग्यं त्वचा
छन्नक्लिन्नमहाव्रणं नवमुखैर्नित्यं स्रवन्तं मलम् ।
तं दृष्ट्वाप्यविरागिणं च नरके नूनं सरागं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३१ ॥

लोकेऽत्यन्तपवित्रतामुपगतं यत्पञ्चगव्यादिकं
यद्देहांशकमस्थिरोमरुधिरस्नाय्वादिसंस्पर्शतः ।
स्यादेवाशुचि तद्विबुध्य च सदा तद्देहसक्तं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३२ ॥
आत्माधारतया स्थितां निजतनुं बाल्ये तथा यौवने
वृद्धत्वेऽपि बहुप्रकारविकृतिं प्राप्तां समीक्ष्यापि च ।

---

1. श्रीशं, अतीन्द्रिय, निस्सङ्ग, इमानि सम्बोधनानि ।

तत्रानात्मविरागिणं ह्यविकृते स्वात्मन्यसक्तं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३३ ॥

स्वस्यायुर्निचयस्य मध्यत इमौ नित्यं निशावासकां[वासरौ]
जाग्रत्स्वप्नसुषुप्तिषु स्थितिमतोऽवस्थात्रये खण्डशः ।
गच्छन्तावनवबुध्य च स्वहितसत्कर्मण्यसक्तं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३४ ॥

शुद्धान्नस्य निजास्यरन्ध्रत इहान्वास्य द्रवेणाधरे(?)
विण्मूत्रान्त्रकफासृगाद्यशुचिनिक्षेपो भवेद्भोजनम् ।
स्त्रीसङ्गोऽशुचिवर्गलेपनमहो तत्रापि रक्तं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३५ ॥

सर्पिःखण्डपयोमधुप्रभृतिकं त्यक्त्वा तृणान्यत्ति गौ-
र्यद्वच्छाश्वतशान्त उत्तम[न्तिदोत्तम]महानन्दानपेक्षं तथा ।
शम्भो वैषयिके सुखेऽतिविरसे तुच्छेऽतिसक्तं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३६ ॥

देवानामपि मारुतस्य च विभो गम्यं न यत्तत्र च
स्वैरं गच्छति मन्मनो न हि कदाचिद्वा तत्र श्रीपते ।
धर्तुं तच्च नियन्तुमत्र सुखदे नैवासमर्थं पशुं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३७ ॥

गुह्ये कुङ्कुमगन्धकाङ्क्षिणमहो तोयार्थिनं वा मरौ
तैलान्वेषिणमश्मचूर्णनिचये मैत्र्यर्थिनं दुर्जने ।
निर्बुद्धिं त्रिगुणात्मके मलविधौ क्षेत्रे सुखेप्सुं पुशं (?)
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३८ ॥

वेदैरप्यखिलैर्महेश बहुशो वेदान्तशास्त्रादिभि-
र्व्यापी चिन्मय एक ईश्वर इति प्रोक्तेऽत्र यत्त्वत्पदे ।
चित्तं धर्तुमशक्तमाप्तवचने विश्वासहीनं पशुं
कारुण्यकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ३९ ॥

बुद्धिज्ञानदयाक्षमाशमदमासम्मोहयत्वा[त्रा]र्जव-
ख्यात्यख्यातिभयाभयासुखसुखाहिंसादयस्तुष्टयः ।
भूतानां तु भवत्त एव विविधा नित्यं भवन्ति प्रभो
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४० ॥

भावाभावभवाभवामृतविषासत्याः समस्ताः[विषाःसत्या असत्याः]क्रियाः
दीर्घायुष्यनिरामयत्वनिखिलाभीष्टार्थसंसिद्धयः ।
भूतानां भवदिच्छयैव भगवन् जायन्त एव प्रभो
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४१ ॥

योगैश्वर्यसमस्तदाननिरता[तिः]श्रद्धात्मभक्तिर्दृढा
वैराग्यं परमं महेश परमे धर्मे रतिश्चारुता ।
भूतानां भवतः प्रसादत इहाजस्रं भवन्ति प्रभो
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४२ ॥

वायुर्वापि[ति]तवाज्ञया शशिरवी नित्यं जगद्भासका-
वाहारं पचतीह कुक्षिसदने वह्निः सदा प्राणिनाम् ।
देवानां वहतीह हव्यमपि यः पाकं करोत्याज्ञया
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४३ ॥

ब्रह्माद्यास्तृणनिग्रहा इह महाभूतानि ते शासनात्
कुर्वन्त्यत्र समस्तदेहनिकरे प्रायस्तवाज्ञाबलात् ।
तिष्ठन्त्यध्यवसायमर्थनिकरे बुद्धिः करोत्याज्ञया
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४४ ॥

चित्तं चेतयते मनस्तु सकलं सङ्कल्पयत्याज्ञया
सर्वार्थानभिमन्यते तव महादेवाज्ञयाहङ्कृतिः ।
स्वेष्वेवेन्द्रियवर्ग एष विषयेष्वास्ते तवैवाज्ञया
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४५ ॥

ब्रह्मा सृष्टिकरो हरिः स्थितिकरो रुद्रस्तु कालात्मकः
संहर्ता जगतां श्रियं वितरति श्रीर्ब्रह्मविद्यामुमा ।
सावित्री च तवाज्ञयैव नरकात् सन्तारयत्याश्रितान्
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४६ ॥

कालं[नालं]चालयितुं तृणं च पवनः शम्भो त्वदाज्ञां विना
दग्धुं तन्न समर्थ एव दहनश्छेत्तुं तु वज्रेण तत् ।
शक्तो गोत्रभिदप्यहो जगदिदं सर्वं त्वदाज्ञावशं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४७ ॥

सेन्द्राः सर्वसुरासुरादय इह त्वच्छासने संस्थिताः
ब्रह्माण्डादिसमस्तवस्तुनिकरैः साधारणैः सन्ततम् ।
त्रैलोक्यानुगतान्यपीह सुबहून्याज्ञावशान्येव ते
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४८ ॥

भूतान्यप इहाज्ञयैव भवतः सञ्जीवयन्ति प्रभो
वाचं वाग्विपुलां दधाति जगतां धत्तेऽखिलं भूर्नभः ।
भूतानामवकाशदं जलधयो निम्ने स्थिता दुःसहाः
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४९ ॥

सूतेऽसौ महदादिकं प्रकृतिरप्याज्ञावशात्ते विभो
कालश्च प्रकृतिः परा पुरुष इत्येतद्धि सर्वं सदा ।
शम्भो देव भवत्त एव जगतो भूतं भविष्यद्भवत्
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ५० ॥

त्वन्मायातिविमोहितं भव महालीलार्थमेतत्त्वया-
त्तं त्वत्प्रेरणयैव सर्वविषयेष्वत्र प्रवृद्धिं[द्धं]च तत् ।
पापध्वान्तरवे समस्तजगतां दुःखान्तकारिन् प्रभो
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ५१ ॥

बन्धच्छेदविधौ त्वमेव भुवनेष्वेकः समर्थो ध्रुवं
तत्पाशैर्भव दैव[भवतैव]बद्धमखिलं कर्मच्छलेनापि च ।
शम्भो त्वच्छरणागतं करुणया त्वं शङ्करो येन वा
कारुण्यकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ५२ ॥

अत्यावेशिनमुत्तमस्थितिमतां संत्यागिनं नास्तिकं
रन्ध्रान्वेषिणमन्धमूकबधिरं शम्भोस्तु विश्वात्मनः ।
माहात्म्यश्रवणस्तुतीक्षणविधौ माहेश्वरावत्सलं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ५३ ॥

॥ इति श्रीभृङ्गीस्तवः सम्पूर्णः ॥

## ५७. ॥ अथ श्रीरामलिङ्गाष्टकम् ॥

वेदबृन्दवन्दितं वरेण्यरूपसुन्दरं
धेनुदुग्धदोहफेनसंनिभं सदाशिवम् ।
ध्यानध्येयमप्रमेयमप्रणे[गण]यमीश्वरं
(श्री)रामलिङ्गमाद्यमीशमीश्वरं स्मराम्यहम् ॥ १ ॥

पञ्चवक्त्रमीदृशं भुजङ्गमेशवन्दितं
भानुतारकेश्वरानलत्रिनेत्रधारिणम् ।
नागराजभूषणं विभूतिदेहधूसरं
(श्री)रामलिङ्गमाद्यमीशमीश्वरं स्मराम्यहम् ॥ २ ॥

पार्वतीपयोधरप्रभाविहारलालसं
क्रीडनाय शैलजार्धदेहभागभोगिनम् ।
उर्वशीमुखाभिरेव ताण्डवानुरञ्जितं
(श्री)रामलिङ्गमाद्यमीशमीश्वरं स्मराम्यहम् ॥ ३ ॥

घण्टिकात्रिशूलपाशयन्त्रराजधारिणं
श्रीवसन्तभैरवादिसर्वरागरागिणम् ।
बिल्वरुज्य[रुच्य]पद्ममल्लिकादिपुष्पपूजितं
(श्री)रामलिङ्गमाद्यमीशमीश्वरं स्मराम्यहम् ॥ ४ ॥

नेत्रजातवेदसा प्रसूनपञ्चबाणहं
दक्षयज्ञवेद ... मन्त्रतानुरञ्जितम् (?) ।
श्रीहरं पुरापहं सुरावलीसुखप्रदं
(श्री)रामलिङ्गमाद्यमीशमीश्वरं स्मराम्यहम् ॥ ५ ॥

धूर्जटिं त्रिलोचनं मृडाह्वयं सदाशिवं
सुन्दरं वृषाधिरूढमम्बयानुरञ्जितम् ।
शङ्करं कपर्दिनं महेश्वरं हरं शिवं
(श्री)रामलिङ्गमाद्यमीशमीश्वरं स्मराम्यहम् ॥ ६ ॥

ज्योतीरूपमिन्दुमौलिमङ्गलप्रदं हरं
विश्वसृष्टिरक्षमीषणं महेश्वरम् [रक्षणप्रणाशहेतुमीश्वरं]।
लिङ्गरूपमद्वयं[च]जाह्नवीतटी[जटा] धरं
(श्री)रामलिङ्गमाद्यमीशमीश्वरं स्मराम्यहम् ॥ ७ ॥

तथैव विश्वनाथमेव काशिकापुरे स्थितं
श्रीगिरौ च मल्लिकार्जुनेश्वरं सुरेश्वरम् ।
तथैव नर्मदातटे त्रिशूलपाणिनं शिवं
(श्री)रामलिङ्गमाद्यमीशमीश्वरं स्मराम्यहम् ॥ ८ ॥

रामलिङ्गाष्टकं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ९ ॥

॥ इति श्रीरामलिङ्गाष्टकं सम्पूर्णम् ॥

---

## ॥ अथ श्रीविष्णुस्तोत्राणि ॥

### १. ॥ अथ श्रीनाममौक्तिकमाला ॥

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥ १ ॥

श्रीनाममौक्तिकैर्माला यामुनार्येण निर्मिता ।
ऋषिसूक्ति[शुक्ति]समुद्भूतैर्निर्दोषैः श्रुतिसागरे ॥ २ ॥

आराधनाय हरये जगदानन्ददायिने ।
श्रीनाथनायकपति[मणिः]नारायणगुणान्विता ॥ ३ ॥

सर्वकल्याणजननी जगन्मङ्गलवैभवा ।
मनीषिभिर्महाभागैर्वैष्णवैर्ध्रियतामियम् ॥ ४ ॥

श्रीमन्नारायणाद्रीश श्रीमन्नञ्जनशैलप ।
श्रीमद्वृषभशैलेन्द्र श्रीमत्सिंहनगाधिप ॥ ५ ॥

श्रीशेषगोत्राभरण श्रीनिवासेति कीर्तये ।
अच्युतानन्द गोविन्द मुकुन्द गरुडध्वज ॥ ६ ॥

जगदानन्दजनक जगज्जन्मादिकारण ।
नारायण जगन्नाथ शरणागतवत्सल ॥ ७ ॥

सत्यसङ्कल्प सर्वज्ञ सत्यकाम सनातन ।
निस्समाभ्यधिक स्वस्थ स्वे महिम्नि प्रतिष्ठित ॥ ८ ॥

त्रिविक्रम त्रिलोकेश शङ्खचक्रगदाधर ।
रमानाथ [1]रसानाथ नीलानाथ निरञ्जन ॥ ९ ॥

नित्य निर्दोष निस्सीममहाविभव शाश्वत ।
त्रिगुणातीत षाड्गुण्यपरिपूर्ण परात्पर ॥ १० ॥

पुरुषोत्तम रमानाथ पुण्यश्रवणकीर्तन ।
निर्विकार निरातङ्क नित्यानन्द निरामय ॥ ११ ॥

यज्ञेश यज्ञपुरुष पुण्डरीकाक्ष माधव ।
वासुदेव विभो विष्वक्सेन वैकुण्ठ वामन ॥ १२ ॥

---

1. रसा = भूः

नीलवर्णार्णवशय श्रीवल्लभ जगत्पते ।
त्रय्यन्तगीतासङ्ख्येयसन्मङ्गलगुणाकर ॥ १३ ॥

रमारमण राजीवदलचारुविलोचन ।
नित्ययौवनसौन्दर्यशील दिव्यगुणार्णव ॥ १४ ॥

वेदवेद्य विशालाक्ष विश्वंभर धरापते ।
दाशार्ह देवदेवेश दामोदर दयानिधे ॥ १५ ॥

धरणीधारकाधारनिलयाधोक्षजाव्यय ।
योगिध्येय जगद्वन्द्य जगत्स्वामिन् जनार्दन ॥ १६ ॥

नारसिंह हयग्रीव हरे प्रह्लादवत्सल ।
लोकाधार पराधार आत्माधार धराधर ॥ १७ ॥

रथाङ्गपाणे सर्वेश सर्वलोकसमाश्रय ।
भूतभव्यभवन्नाथ वेङ्कटाचलनायक ॥ १८ ॥

कृष्ण विष्णो विशालाक्ष वैजयन्तीविराजित ।
क्षीरार्णवशयानन्त शरण्याश्रितवत्सल ॥ १९ ॥

सर्वात्मन् सर्वलोकेश सर्व सर्वात्मनायक ।
करुणाकर कालज्ञ सर्वलोकनियामक ॥ २० ॥

मुञ्जीकेश हृषीकेश केशिमर्दन केशव ।
नरकान्तक काकुत्स्थ कालात्मन् कालपाचक ॥ २१ ॥

करीन्द्रवरदानन्द श्रीधर श्रीनिकेतन ।
निरवद्य परब्रह्मन् सर्वलोकपदाश्रय ॥ २२ ॥

नाथसेव्यपदाम्भोज वकुलाभरणाश्रय ।
[1]रामारामाभिरामाङ्ग रामकृष्णेति कीर्तये ॥ २३ ॥

श्रीमद्वेङ्कटनाथमादिपुरुषं पूर्णं परं शाश्वतं
श्रीनाथं शरणागतार्तिहरणं नारायणं संश्रये ।
कृष्णं विष्णुमनन्तमच्युतमजं गोविन्दमिन्दीवर-
श्यामं नन्दकशङ्खचक्ररुचिरं ध्यायन् भजे कीर्तये ॥ २४ ॥

येनैतत्पठ्यते नाम्नामष्टाविंशोत्तरं शतम् ।
अनिष्टपक्षक्षपणमिष्टावाप्तिरवाप्यते ॥ २५ ॥

॥ इति श्रीनाममौक्तिकमाला सम्पूर्णा ॥

---

1. रामायाः आरामः श्रीनिवासः

## २. ॥ अथ श्रीदशावतारमङ्गलाशासनम् ॥

आदावम्बुजसंभवादिविनुतः शान्तोऽच्युतः शाश्वतः
संफुल्लामलपुण्डरीकनयनः पुण्यः पुराणः पुमान् ।
लोकेशः श्रुतिचोरसोमकहरो[1] मत्स्यावतारो हरिः
श्रीमान् [2]सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ १ ॥

सप्तद्वीपकुलाचलेन्द्रजलधि[3]स्तोमाभिसंक्रान्तभू-
भारालीढफणीन्द्रमन्दरधरो मन्दारमालार्चितः ।
भावज्ञो बहुचक्रलाञ्छिततनुः कूर्मावतारो हरिः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ २ ॥

लीलालोडितसर्वसागरजलः सम्पूर्णचन्द्रप्रभो
हेमाक्षासुरखण्डनो भुजगदः चक्राङ्कितः सन्ततम् ।
दंष्ट्राग्रोद्धृतमेदिनीभयहरः [4]क्रोडावतारो हरिः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ ३ ॥

कुन्देन्दुस्फटिकप्रभो बहुभुजो भूषासहस्रोज्ज्वलो
दैत्येन्द्रोदरदारणेऽतिनिपुणः स्तम्भोद्भवो भीषणः ।
प्रह्लादार्तिहरोदयो नरमृगाकारावतारो हरिः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ ४ ॥

धातृक्षालितपादपङ्कजभवस्रोतोमहा[5]शाम्बरः
प्रक्षालीकृतपादपद्मयुगलो बालो जगज्जीवनः ।
भिक्षार्थी बलिदर्पहा पटुवटुः [6]खर्वावतारो हरिः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ ५ ॥

सद्यःखण्डितराजमण्डलशरीरोद्भूतरक्तापगा-
[संसिक्ताखिलभूतलः] पितृवचःसम्पालने निष्ठितः ।
वेदज्ञो जमदग्निजः परशुभृद्रामावतारो हरिः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ ६ ॥

---

1. वेदापहारकः हैयग्रावापरनामा असुरः
2. सिंहाचलः
3. स्तोमाभ·
4. वराहावतारः
5. शांबरी = इन्द्रजालम्
6. वामनावतारः

राजेन्द्रो रणरङ्गराजविनुता[1]नेकासुराभासुरा-
कारो रावणकोटिखण्डनपटुः कोदण्डदीक्षागुरुः ।
सीतेशः सुरसज्जनामृतकरो रामावतारो हरिः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ ७ ॥

कालिन्दीजलभेदनो बहुभुजो भूषासमुद्भासुरः
प्रध्वंसी मुसलायुधो हलधरो नीलाम्बरो निर्मलः ।
लावण्या[2]ऽप्पतिरेवतीपतिरसौ रामावतारो हरिः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ ८ ॥

धर्मज्ञस्त्रिपुराधिनाथवनिताधर्मोपदेष्टा च त-
[3]त्पातिव्रत्यविशेषभञ्जनपरो वेदान्तवेद्यः सदा ।
दैत्यव्रातविनाशनादिचतुरो बुद्धावतारो हरिः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ ९ ॥

म्लेच्छव्रातविनाशकः कलियुगान्तेऽश्वाधिरूढो महा-
मायावी बहुभानुकोटिसदृशो भीमांशुचक्रायुधः ।
यश्चाङ्गीकृतकल्किरूपविभवो भूमौ भविष्यान्वयः
श्रीमान् सिंहगिरीश्वरः करुणया दद्यात्सदा मङ्गलम् ॥ १० ॥

॥ इति श्रीदशावतारमङ्गलाशासनं सम्पूर्णम् ॥

---

1. अनेकासुराणां आभां-कान्तिं अंसूंश्च राति गृह्णातीति तादृशः आकारो यस्य ।

2. अप्पतिः = अम्बुधिः

3. पुरा किल तारकपुत्राः ब्रह्मणो लब्धवराः रजतहिरण्यायोमयपुराधिनाथा दृप्ताश्च सन्तः त्रयाणमपि लोकानां महदस्वास्थ्यं चक्रुः । तेन दूयमानमानसाः सुराः मुनयश्च भगवन्तं तद्वृत्तान्तं निवेदयामासुः । तद्दण्डनाय वासुदेवः स्त्रीषु दोषं विना तद्भर्तृदण्डनमशक्यं पश्यन् उपदेशद्वारा तद्वनिताचित्तकालुष्याय बुद्धोऽवततारेत्याख्यायिकात्रानुसन्धेया ।

## ३. ॥ अथ श्रीदशावतारस्तोत्रम् ॥

यो नाम पूर्वमवतीर्य ररक्ष विश्वं
फेनावगाढचलदूर्मिभरेऽम्बुराशौ ।
केनाहमस्मि परवानरविन्दनेत्रं
मीनाकृतिं मधुनिपूदनमन्तरेण ॥ १ ॥

लोकं बिभर्ति सकलं कमठो भवन् यो
नाकं परेण परमे गगने विदीप्तः ।
साकं रमादिमहिषीगतबन्धनित्यैः
शोकं स मे हरतु संसृतिजं मुकुन्दः ॥ २ ॥

उर्वीतलोद्धरणकृत्यपटिष्ठभावा
दर्वीकराशनरथस्य घनाञ्जनाभा ।
गुर्वी तृतीयजनिरद्भुतकोलरूपा
कुर्वीत नः कुशलमिन्दुसमानदंष्ट्रा ॥ ३ ॥

[1]कायाधवे परमया कृपया प्रकोपो
माया [मये कनकनामनि दानवेन्द्रे] ।
सायाह्नकाल उदितः सरसीरुहाक्षः
पायान्नृसिंहतनुरच्युत एष भक्तान् ॥ ४ ॥

गर्वाकरेण बलिनापहृतां त्रिलोकीं
खर्वाकृतिस्तमपहृत्य तु वञ्चयित्वा ।
स्वर्वासवैरिगुरुणा प्रभवेऽमराणां
दुर्वारमस्तु भविकाय ददद्धरिर्वः ॥ ५ ॥

यो भार्गवः स्वपितृसंहरणोत्थकोपः
. . . . . . . . . . . . . ।
. . . . . . . . . . .
. . . . . .हतवान् स पातु ॥ ६ ॥
. . . . . . . . . . . . . . .

॥ इति श्रीदशावतारस्तोत्रं सम्पूर्णम् ॥

---

1. कयाधुः = हिरण्यकशिपोः भार्या, तस्याः अपत्यंपुमान् कायाधुः प्रह्लादः ।

## ४. ॥ अथ श्रीभगवन्नामरत्नावली ॥

स्वनामकीर्तनादेव सुलभं व्रजवल्लभम् ।
[1]शुकशास्त्रेश्वरं कृष्णमाश्रये जगतां पतिम् ॥ १ ॥

प्रथमस्कन्धे—

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ २ ॥

कुर्वाणा यत्र कर्माणि भगवच्छिक्षया सकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥ ३ ॥

स वाग्विसर्गो जनताघविप्लवो
यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि य-
च्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ४ ॥

नामान्यनन्तस्य गतत्रपः पठन्
गुह्यानि भद्राणि कृतानि च स्मरन् ।
गां पर्यटंस्तुष्टमना गतस्पृहो
कालं प्रतीक्षन् विमदो विमत्सरः ॥ ५ ॥

भक्त्यावेश्य मनो यस्मिन् वाचा यन्नाम कीर्तयन् ।
त्यजन् कलेवरं योगी मुच्यते कामकर्मभिः ॥ ६ ॥

कुतः पुनर्गृणतो नाम तस्य
महत्तमैकान्तपरायणस्य ।
योऽनन्तकीर्तिर्भगवाननन्तो
महागुणत्वाद्यमनन्तमाहुः ॥ ७ ॥

द्वितीयस्कन्धे—

एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥ ८ ॥

श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।
न यत्कर्णपथोपेतो जातु नाम गदाभृतः ॥ ९ ॥

---

1. = श्रीमद्भागवतम्

तदश्मसारं हृदयं बतेदं यद्गृह्यमाणे हरिनामधेये।
न विक्रियेताथ मुखे विकासो नेत्रे जलं गात्ररुहेषु हर्षः ॥ १० ॥

यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति किल्बिषं तस्मै सुभद्रश्रवसे नमो नमः ॥ ११ ॥

अन्तःसरस्युरुबलेन गृहीतपादो
ग्राहेण यूथपतिरम्बुजहस्त आर्तः ।
आहेदमादिपुरुषाखिललोकनाथ-
तीर्थश्रवश्रवणमङ्गलनामधेय ॥ १२ ॥

धन्वन्तरिश्च भगवान् स्वयमेव कीर्ति-
र्नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवावरुन्धे
आयुश्च वेदमनुशास्त्यवतीर्य लोके ॥ १३ ॥

तृतीयस्कन्धे—

यस्यावतारगुणकर्मविडम्बनानि
नामानि येऽसुविगमे विवशा गृणन्ति।
तेऽनेकजन्म[1]शमलं सहसैव हित्वा
संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १४ ॥

भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च ।
आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनाच्च मे ॥ १५ ॥

यन्नामधेयश्रवणानुकीर्तनात्
यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते
कुतः पुनस्ते भगवन्नु दर्शनात् ॥ १६ ॥

अहो बत श्वपचोऽतो गरीयान्
यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सस्नुरार्या
ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥ १७ ॥

चतुर्थस्कन्धे—

स प्रसीद त्वमस्माकमाकाङ्क्षतां
दर्शनं सम्परिभ्रष्टसत्कर्मणाम् ।

---

1. शमलं = पापं

कीर्त्यमाने नृभिर्नाम्नि यज्ञेश ते
यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः ॥ १८ ॥

औत्तानपाद भगवांस्तव शार्ङ्गधन्वा
देवः क्षिणोत्ववनतार्तिहरो विपक्षान् ।
यन्नामधेयमभिधाय निशम्य वाद्धा
लोकोऽञ्जसा तरति दुस्तरमङ्ग मृत्युम् ॥ १९ ॥

पञ्चमस्कन्धे—

नैवंविधः पुरुषकार उरुक्रमस्य
पुंसां तदङ्घ्रिरजसा जितषड्गुणानाम् ।
चित्रं विदूरविगतः सकृदाददीत
यन्नामधेयमधुना स जहाति बन्धम् ॥ २० ॥

अथ कथञ्चित् स्खलनचलनक्षुधापतनजृम्भणदुरवस्थानादिषु विवशानां नः श्रीमच्चरणारविन्दस्मरणाय ज्वरमरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवन्तु । यस्य ह वाह क्षुतपतनप्रस्खलनादिषु सकृन्नामाभिगृणन् पुरुषः कर्मबन्धनमञ्जसा विधुनोति । यस्य ह वै प्रतिबाधनं त्विह मुमुक्षवोऽन्यथैवोपलभन्ते ।

यन्नाम श्रुतमनुकीर्तयेदकस्मा-
दार्तो वा यदि पतितः प्रलम्भनाद्वा ।
हन्त्यंहः सपदि नृणामशेषमन्यं
कं शेषाद्भगवत आश्रयेन्मुमुक्षुः ॥ २१ ॥

षष्ठस्कन्धे—

दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम्
प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥ २२ ॥

निशम्य म्रियमाणस्य मुखतो हरिकीर्तनम् ।
भर्तुर्नाम महाराज पार्षदाः सहसापतन् ॥ २३ ॥

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ २४ ॥

एतेनैव ह्यघोनस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणायेति जगाद चतुरक्षरम् ॥ २५ ॥

स्तेनः सुरापो मित्रध्रुक् ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥ २६ ॥

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ २७ ॥

न निष्कृतैरुदितैर्ब्रह्मवादिभि-
स्तथा हि शुध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतै-
स्तदुत्तमश्लोकगुणोपलम्भकम् ॥ २८ ॥

नैकान्तिकं तद्धि कृतेऽघनिष्कृते
मनः पुनर्धावति चेदसत्पथे ।
तत्कर्मनिर्हारमभीप्सतां हरे-
र्गुणानुवादः खलु सत्त्वभावनः ॥ २९ ॥

अथैनं मापनयत कृताशेषाघनिष्कृतिम् ।
यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥ ३० ॥

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ ३१ ॥

पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः ।
हरिरित्यवशेनाह पुमान्नार्हति यातनाः ॥ ३२ ॥

अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत् ।
सङ्कीर्तितमघं पुंसो दहत्येधो यथानलः ॥ ३३ ॥

यथागदं वीर्यतममुपयुक्तं यदृच्छया ।
अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः ॥ ३४ ॥

अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ।
वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥ ३५ ॥

क्व चाहं कितवः पापः ब्रह्मघ्नो निरपत्रपः ।
क्व च नारायणेत्येतद्भगवन्नाम मङ्गलम् ॥ ३६ ॥

एवं स विप्लावितसर्वधर्मा
दास्याः पतिः पतितो गर्ह्यकर्मा ।
निपात्यमानो निरये हतव्रतः
सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥ ३७ ॥

नातः परं कर्मनिबन्धकृन्तनं
मुमुक्षतां तीर्थपदानुकीर्तनात् ।
न यत्पुनः कर्मसु सज्जते मनो
रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥ ३८ ॥

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥ ३९ ॥

एतावतालमघनिर्हरणाय पुंसां
संकीर्तनं भगवतो गुणकर्मनाम्नाम् ।
आक्रुश्य पुत्रमघवान् यदजामिलोऽपि
नारायणेति म्रियमाण उपैति मुक्तिम् ॥ ४० ॥

जिह्वा न वक्ति भगवन् गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदापि
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ ४१ ॥

सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ।
बुद्धीन्द्रियमनःप्राणान् पान्तु पार्षदभूषणाः ॥ ४२ ॥

ब्रह्महा पितृहा गोघ्नो मातृहाचार्यहाघवान् ।
श्वादः [1]पुल्कसको वापि मुच्येरन् यस्य कीर्तनात् ॥ ४३ ॥

न हि भगवन्नघटितं त्वद्दर्शनान्नृणामखिलपापक्षयः ।
यन्नाम्नः सकृच्छ्रवणात् [1]पुल्कसोऽपि मुच्येत संसारात् ॥ ४४ ॥

सप्तमस्कन्धे—

यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुश्च संवक्ति हरे जगत्पते
नारायणेत्यात्मरतिर्गतत्रपः ॥ ४५ ॥

तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रवाहेण समेत्यधोक्षजम् ॥ ४६ ॥

अष्टमस्कन्धे—

यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद-
तीर्थश्रवश्रवणमङ्गलनामधेय ।
आपन्नलोकवृजिनोपशमोदयाद्य
शं नः कृधीश भगवन्नसि दीननाथः ॥ ४७ ॥

---

1. "जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः ।" कुत्सितः सः ।

मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रं नामसङ्कीर्तनं तव ॥ ४८ ॥

नवमस्कन्धे—

अजानता ते महिमानुभावं
कृतं मयाघं भवतः प्रियाणाम् ।
विधेहि तस्यापचितिं विधात-
र्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ४९ ॥

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ ५० ॥

दशमस्कन्धे—

शृण्वन् गृणन् [1]संस्मरयंश्च चिन्तय-
न्नामानि रूपाणि च मङ्गलानि ते ।
क्रियासु यस्त्वच्चरणारविन्दयो-
राविष्टचित्तो न भवाय कल्पते ॥ ५१ ॥

उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः ।
सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥ ५२ ॥

यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च ।
सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥ ५३ ॥

इति ब्रुवाणा विरहातुरा भृशं
व्रजस्त्रियः कृष्णविषक्तमानसाः ।
विसृज्य लज्जां रुरुदुः स्म सुस्वरं
गोविन्द दामोदर माधवेति ॥ ५४ ॥

देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ।
यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥ ५५ ॥

हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ।
मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवे ॥ ५६ ॥

मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ।
वाचाभिधानी नाम्नां कायस्तत्प्रह्वणादिषु ॥ ५७ ॥

नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर ।
दामोदरारविन्दाक्ष गोविन्द गरुडध्वज ॥ ५८ ॥

---

1. = उपदिशन्

देवदेव जगन्नाथ गोविन्द पुरुषोत्तम ।
नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ।। ५९ ।।

तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं
विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ।
यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः
कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ।। ६० ।।

एकादशस्कन्धे—

शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः ।। ६१ ।।

एवं व्रतः स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यसौ रोदिति रौति गाय-
त्युन्मादवन्नृत्यति लोकबाह्यः ।। ६२ ।।

कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र संकीर्तनेनैव सर्वस्वार्थो हि लभ्यते ।। ६३ ।।

कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः ।
योगेश्वरानुवृत्त्या वा हन्यादशुभदान् शुभैः ।। ६४ ।।

द्वादशस्कन्धे—

यन्नामधेयं म्रियमाण आतुरः
पतन् स्खलन् वा विवशो गृणन् पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं
प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ।। ६५ ।।

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ।। ६६ ।।

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ।। ६७ ।।

श्रीकृष्ण कृष्णसख वृष्णिवृषावनिध्रु-
ग्राजन्यवंशदहनानपवर्गवीर्य ।

गोविन्द गोपवनिताव्रजभृत्यगीत-
तीर्थश्रव श्रवणमङ्गल पाहि भृत्यान् ॥ ६८ ॥

नामरत्नावलीमेतां कण्ठे धृत्वा रमापतेः ।
तद्दर्शनार्हो भवति भक्तिपूतः पुमानिह ॥ ६९ ॥

॥ इति श्रीभगवन्नामावली सम्पूर्णा ॥

---

## ५. ॥ अथ श्रीनारायणस्तोत्रम ॥

स्वं चिद्रत्नं चिरत्नं यदि समुदयते नष्टमन्वेष्टुमिच्छा
श्रेयःपात्रे तदा स्वं हृदि मिलदमलस्नेहपूरस्य पूर्णे ।
आसाद्य द्योतमानं भृशमकृशदशासंहृतांहःपतङ्गं
दध्यादध्यात्मदीपं दलिततमतमःस्तोममीशस्य धाम ॥ १ ॥

रुग्णक्लेशाटवीकं रिपुविसरसरःक्षोभवेतण्डशुण्डा-
दण्डाभं सक्थिकाण्डं कलयतु मनसा पुण्डरीकेक्षणस्य ।
बाहुः संवाहयन्त्या जलनिधिदुहितुर्यत्र गाङ्गेयगौरी
स्वर्गङ्गाम्भोजिनीव स्फुरति विकसता पाणिपाथोरुहेण ॥ २ ॥

अम्भोजाक्षस्य जम्भाहितमणिरुचिरौ पीवरावूरुरम्भा-
स्तम्भौ सन्तापशान्त्यै हृदयभुवि समारोप्य संभावनीयौ ।
आ लब्ध्वा यौ भवाब्धिप्लवघटनपटू पुण्यलावण्यपूरा-
प्लावे पारिप्लवात्मा स्पृहयति न जनस्तस्य पाराय दूरात् ॥ ३ ॥

स्थूलत्वाद्योगयोग्यौपयिकतनुगृहस्थूणसौभाग्ययोग्यं
ध्यायेदस्योरुकाण्डं निगमनिभमहाशाखिशाखाप्रकाण्डम् ।
यस्मिन् व्यायच्छमाना मुनिहृदयभिषग्वर्धमानप्रभावाः
प्रायेण प्रौढकामादरिचयविजये सांयुगीना भवन्ति ॥ ४ ॥

मध्ये लावण्यपूरं घनजघनतटच्छद्मना पद्मनाभ-
स्योच्चैरुद्भासमानं पुलिनममलिनं चिन्त्यतां चक्रचारु ।
यस्मिन् विश्रम्य सम्यङ्मतिरतिचतुरा पारकाङ्क्षीश्वराणां
पारं संसारसिन्धोः करकमलपरिप्राप्तकल्पं विवेद ॥ ५ ॥

सज्जं सिंहासनं तज्जघनमनु मनः शान्तिसाम्राज्यसुस्थं
स्थाप्यं यस्योपरिष्टाल्लसति सिततमस्पष्टरोमालिदण्डम् ।
श्रीवत्सच्छत्र[धा]रादपि मणिरशनाहारिहीराश्मरश्मि-
श्रेणिः प्रेङ्खन्मराली बिसृमरसुषमोड्डामरा चामराली ॥ ६ ॥

सारं सन्नाभिशोभं द्युमणिगणलसत्तेजसा भ्राजमानं
श्रीकान्तस्यान्तरङ्गं जघनमिति मतं चक्रमन्यद्विचिन्त्यम् ।
धारा सौदर्शनी सा जरठरिपुघटादुःसहा यत्सहाया
ग्रीवाग्राणि छिदायै भिदुरमदभिदि प्राभवत्कैटभेये ॥ ७ ॥

स्फीतं पीताम्बरस्याम्बरमपि मनसासंस्तुवीतास्त्र[स्त]साम्यं
यत्तेजःपीतभावादितरकनकरुग्वस्तुनः पीतनाम ।
यस्याभ्यर्णे सुवर्णक्षितिधरशिखरक्षेपदक्षे समित्यां
वेपेते म्लान्युपेते बत पतगपतेः स्थास्नुनी किं पतत्रे ॥ ८ ॥

जम्बूजाम्बुस्रवन्तीतटकनककनत्पङ्कशङ्कां दधानं
सिद्धानां दानवारेर्वसनमनुसरेद्यत्सकाशे चकास्ति ।
काञ्चीमाणिक्यभौघो जघननिहितयोः प्राङ्मधोः कैटभस्य
प्रायस्ताद्दक्छिरोजाम्बवयुगलगलल्लोहिताम्बुप्रवाहः ॥ ९ ॥

विस्पष्टं तद्वपुष्यावरणमनुगुणे नीचि नीलाभ्रलीले
विक्षेपं चामरीचामरमृदुपवनेनात्मनाप्याददाने ।
स्वध्यातॄणां नृणां तद्द्वयमपनुदती जीवभावे निदानं
विद्युद्विद्योतहृद्ये हृदि विहर हरेरन्तरीयोत्तरीये ॥ १० ॥

मध्यं चामुष्य काञ्चीमणिगणकिरणस्पष्टगम्भीरनाभी-
शोभं तद्रभगर्तोत्थितशितिभुभ[ज]गीभ्रान्तिभृद्रोमलेखम् ।
कालिन्दीभङ्गभङ्गीप्रवलदलिकुलासन्नराजीवराजी-
पांशू[सु](स्तू)[सोमो]पमत्विड्वसननिवसितं चिन्तनीयं तनीयः॥११॥

उन्मीलल्लोमलेखामृदुलनवलतामूलबद्धालवालं
धत्तां सिद्धादिमस्यासुनियमनविलं भूलपद्मालयस्य ।
सङ्क्षिप्तानां स्वकुक्षौ (किस) [प्रवि]लयसमये विष्टपानां प्रवेश-
द्वारं नाभिं गभीरां भुवनभयभिदश्चिन्तयेचेतसोऽन्तः ॥ १२ ॥

धत्तां चित्तेऽस्य नाभिह्रदमतिहृदयाह्लादनं यत्र पुण्यैः
स्नाता लावण्यतोयैर्भजति मुनिमतिः पूततां यन्निगूढम् ।
स्रष्टुश्चावेशनं सन्मधुपजनमनोरञ्जनायै च गञ्जा-
कञ्जं रोमालिमालानुसरति मधुनः सौरभे बद्धबुद्धिः ॥ १३ ॥

संसारक्षारवारांनिधितरणविधौ बद्धरामालिलीला-
रोमाली तुष्टियष्टिर्घनवृजिनवनीलाविनी भावनीया ।
पश्यामः श्यामसूत्रं निहितमिव समं भूमिसीमाविभागं
कर्तुं भर्तुः शरीरे किल कलहजुषायां कलत्रद्वयेन ॥ १४ ॥

मीनैः स्वान्तर्निलीनैर्मुनिहृदयमयैः श्लाघ्यगम्भीरिमश्री-
भाव्या कीर्तिप्रसूनैः सुरभिरभिनवैरब्जनाभस्य नाभिः ।
रोमालीकालियोऽसौ भजति गतिभिदः सौभरेः शापपाशात्
दुःसर्पं सर्पहन्त्रा ह्रदमिव कलयन् यं[यां]कलिन्दात्मजायाः ॥ १५ ॥

नाभ्याः सारोजनाभ्या विलसदिव बहिर्भूय गर्भाज्जनन्या
बालत्वान्नीलरोमावलिनिभनिभृतं तन्नभोऽन्तर्निभाल्यम् ।
जाने यस्यौचिती सा कविभिरभिमता श्यामता खड्गलेखो-
पज्ञं सद्यःप्रसूतार्भकभृशशिशुतोपक्रमं या गता च ॥ १६ ॥

वक्षोऽधिक्षोभपक्षं नगरिपुनगरीनागरीणां गरीयः
सौन्दर्योद्गारहृद्यं स्वहृदि भगवतो भावयेद्भक्तियुक्तः ।
विद्युल्लोलापि यस्मिन् सलिलघनघने श्यामले प्रेमवश्या
पश्याप्तस्थेमसीमाकषदृषदि लसद्धेमलेखेव लक्ष्मीः ॥ १७ ॥

श्रीवत्साङ्कस्य वक्षः स्मरतु चिरतरं भ्रातरावब्धिपुत्रौ
बिभ्रद्यत्नेन रत्ने वरमणिरमणीवर्गयुग्मप्रधाने ।
लक्ष्मीसंभोगलक्ष्मस्तनयुगललगत्कुङ्कुमं कौस्तुभोऽस्या
लज्जालोपाय यस्मिंस्तिरयति तरुणार्कांशुसंकाशभासा ॥ १८ ॥

धौतं लावण्यनीरैः शिशिरमपि रमाश्वाससंज्ञैः समीरैः
सान्द्रीभूतेन्द्रनीलैः सपटिमघटितं कुट्टिमं स्निग्धमुग्धम् ।
ध्यातव्यं माधवोरःसुरतरुसुमनःस्रक्स्फुरत्पुष्पतल्पे
यस्मिन्नानन्दनिद्रां भजति मुनिमनो विस्मृताशेषतापम् ॥ १९ ॥

दुर्धर्षं वैरिवर्गैर्विततमतिदृढं पुण्डरीकाक्षवक्षो
वीक्षेत ध्यानदृष्ट्यामरनगरमहाद्वाररक्षाकवाटम् ।
चित्रं यत्पार्श्वयोस्ता घनमपि घटिता अर्गला दोर्गणाख्या
गर्वेणानर्गलानां समिति दितिभुवां स्वर्गमार्गं दिशन्ति ॥ २० ॥

उद्यत्प्रद्योतनाभो मणिरुरसि लसन् पद्मनाभस्य भाव्यो
यद्दीप्त्याविप्रलुप्ता द्युतिरमणिशिरोरत्नखद्योतराशेः ।
किं वान्यद्दैन्यमागादहह ... महर्दीपवद्यत्समीपे
जैत्रं नेत्रं स्फुटं धूर्जटिनिटिलतटे शोचनीयस्वशोचिः ॥ २१ ॥

उद्यन्तं भानुमन्तं जननयनमुदे कौस्तुभाह्वां वहन्तं
तद्वक्षोदेशभाजं भजतु निजहृदा पद्मरागाधिराजम् ।
तेजोजालानि बालातपपटलयता दिङ्मुखोद्द्योतहेतो-
र्येन क्षीरोदशायी हरिरधिशयितोऽबोध्यसृक्सिन्धुमध्यम् ॥ २२ ॥

श्रीविष्णोः कृष्णकान्त्या मरकतहरिणीं स्वर्गवर्णां स्वमूर्तिं
भर्तुर्वक्षःस्थलस्था क्षितिरिति विदती श्रीर्यदन्तः स्फुरन्तीम् ।
रुष्टा तुष्टा च तस्यामरुणरुचिरुषा वर्णसाम्यावृतायां
च्छव्या नव्यार्कमित्रं मणिरियममला ध्यायतामायतास्थैः ॥ २३ ॥

अर्केन्द्वक्षस्य वक्षस्यधिगतसुषमं श्यामरोमालिमौलौ
श्रीवत्सं वत्सलात्मा स्मरतु धवलिमस्मेररोमाङ्कुराङ्कम् ।
यं केलीबालवीरुच्छिरसि विकसितं दोहदस्य प्रदाना-
द्दर्शं दर्शं प्रसूनस्तबकमिव नवं मोदते पद्मसद्मा ॥ २४ ॥

कुर्वत्पाथोधिमाथोद्यमसमयपयःफेनसम्पर्कतर्कं
तादृक्पीताम्बरोरोऽम्बरचरशरदच्छोदभृच्छेदहृद्यम् ।
चिन्त्यं श्रीवत्सचिह्नं चिरमुरसि कृतं रक्षणाय प्रजानां
जाले श्रीजानिना यद्गुणमतिगुणितं सात्वतैः सत्त्वसंज्ञम् ॥ २५ ॥

भावं भावं स्वचेतः कुमुदमुदुदयो वीतसोमावदातो
रोमावर्तो मुरारेरुरसिचररमाहासहृद्योऽनुमोऽदः ।
लावण्याम्भोनिधौ [धाने]वपुषि विपुषितोत्फेनिलावर्तमूर्तौ
न प्रत्यावर्तनाय प्रभवति पतितं यत्र नेत्रं मुनीनाम् ॥ २६ ॥

कस्तूरीकर्दमं श्रीकुचकलशपरीरम्भसंरम्भलग्नं
मग्नं सान्द्रेन्द्रनीलद्युतिजितनिजरुङ्निर्झरे निह्नुवानान् ।
ध्यायेद्दोष्णोऽथ विष्णोर्मधुकरनिकरैर्वर्णगन्धेन दूरा-
दाकृष्टैः सन्निकृष्टैः पुनरनधिगतो हन्त यद्वर्णगन्धः ॥ २७ ॥

सानन्दं मन्दराद्रेः क्षितियुवतिकुचोत्तुङ्गमालिङ्ग्य शृङ्गं
नानाधात्वङ्गरागच्छुरणशबलिताः शूरशृङ्गारिवेषम् ।
रोमाञ्चैर्निर्विशेषं व्यदधुरुदधिजोद्वाहकाले पुरा ये
तान् भूषाभोगभाजो भुजगशयभुजान् भावनाभिर्भजेति ॥ २८ ॥

आजानाजानुलम्बान् श्रुतिपथपथिकज्ञानवृद्धावलम्बान्
राहुद्विड्बाहुदण्डान् कलयतु चतुरः कृष्णपाषण्डदण्डान् ।
यानुज्झित्वा विवादं विषयविषरसोदन्यया धाविताानां
संरोधार्थं गवामाश्रयति यतिजनः सत्रिदण्डैकदण्डः ॥ २९ ॥

दृप्यद्दुर्दान्तदैत्यर्षभदमनसहं भूरिभारातुराया-
स्तद्वद्विश्वम्भराया द्रढिमबलमवष्टम्भयोग्यं दधानान् ।
ध्यायेद्योगर्धिसिद्ध्यै त्रियुगभुजयुगान् सांयुगीनारिहन्तुः
किं वा कालात्मनोऽस्यावयवयुग[भुज]द्वन्द्वरूपानुरूपान् ॥ ३० ॥

कम्बुश्चक्रं च पाथोरुहमथ च गदा तेषु चिन्त्यानि कान्ता-
कम्बुग्रीवानितम्बाननपृथुलतरोरुप्रकाण्डाकृतीनि ।
जानीमो यान्यजस्रं निजकरजलजैस्तत्तदङ्के प्रियाया-
श्चित्तासङ्गं दधानः कलयति कमलाकामुकः कामतातः ॥ ३१ ॥

निष्कम्पं कैटभस्याप्यतिविकटभुवो वज्रगाढप्रहारान्
सोढारो भूयसोऽब्दांस्त्रिभुवनभवनस्तम्भसम्भावनार्हान् ।
पर्याप्तं पारिहार्याङ्गदमयवलयै रत्नकीलानुविद्धै-
र्दाढ्र्याढ्यंभावुकास्ते दनुजमदभिदो बाहवो भावनीयाः ॥ ३२ ॥

दिक्पालानां प्रधानं वपुरसुवधे दीक्षितान् क्षत्त्रियाणां
जन्मक्षेत्राणि बाहून् वहत हृदि बहूकृत्य भृत्यप्रियस्य ।
लोकानां पालनायै नियममुपयतां शात्रवत्रासकानां
ज्ञातं राज्ञां स्वकीयप्रभवगुणभवो लोकपालानुभावः ॥ ३३ ॥

चिन्त्यं चक्रं प्रपीतामृतरससहितं लोहितं राहुकर्णात्
पीत्वेवाकुण्ठितायुः स्फुरति च न जराजर्जरा यस्य धारा ।
यन्मध्यं वाहिनीनां न्यविशत शतशः स्पर्धमानारिमूर्ध-
च्छद्मन्याच्छिद्य पद्मान्यमरजनमुदे स्राक् स्रजः स्रक्ष्यमाणम् ॥ ३४ ॥

चक्रं शक्रारिशत्रोर्विमृशतु मनसा लालसौल्लासलोलै-
र्ज्वालाजिह्वासहस्रैः प्रकटितविकटाटोपतर्षप्रकर्षम् ।
दैत्यासृक्सिन्धुपूरैः किल कलशभुवं जेतुमापीयमानै-
र्यस्याल्पाप्याद्रता नाभ्युदयति हृदये रोषशुष्मोपशुष्के ॥ ३५ ॥

शङ्खं तं खल्वधीयात् प्रलयघनघटागर्जितौजस्विघोषै-
र्यः कृत्वानेककृत्वोऽनुसमरमसुहृद्गार्भिणभ्रूणहत्याम् ।
प्रायश्चित्तं विधत्ते विधिविहितमरुत्पूरणेन प्रयत्नात्
प्राणायामप्रयसी प्रणवगुणनिकासादरः सूक्ष्मनादैः ॥ ३६ ॥

सौरभ्यारभ्यमाणर्धिभिरधरसुधासाधुमाधुर्यधुर्यैः
पीतैः पीताम्बरस्यास्यवनजपवनैर्निर्भरं पूर्णगर्भः ।
रूक्षासृग्विस्नरक्षोऽसुपवनपिबता(?) पीवरां बर्बरीं वा
कामं कौमोदकीं यो हसति स मनसा कम्बुरालम्बनीयः ॥ ३७ ॥

चक्रं वृक्णारिचक्रं परिचरत धिया चण्डरुङ्मण्डलाभं
कम्बुं चाडम्बरेणानिभृतममृतरुग्बिम्बसंवावदूकम् ।

ये कालिन्द्योघकल्पे हरिरुचिनिचये तस्य चक्षूभवन्तौ
स्नेहेन स्वानुबिम्बाविति किमुभयतः पश्यतः पुष्पवन्तौ ॥ ३८ ॥

ध्यातव्यं दिव्यमब्जं दितिजविजयिनो यत्सदेशस्पृशोऽब्ज-
श्रीसर्वस्वच्छिदोऽदोवदनपदजुषो भीतमम्भोजराजात् ।
नित्यं निद्रादरिद्रं विसृजति मधुनो विप्रुषोऽश्रुदबिन्दून्
बन्धुस्नेहानुबन्धात्करसरसिरुहाश्लिष्यताश्वास्यते च ॥ ३९ ॥

कञ्जं युञ्जीत चेतस्यजितकरसरोजाधिराजेन जित्वा
जीवग्राहं गृहीतं दलितमतितरां बाहुजप्रौढिभाजा ।
पुष्टाः सर्वस्वपोषं मधुरमधुभृतेरक्षमा बन्धमोक्षे
यस्यादूरे रुवत्यो भ्रमरपरिषदः संभ्रमेण भ्रमन्ति ॥ ४० ॥

पीत्वा मांसोपदंशं युधि रुधिरसुधां पात्यमानासुरोरः-
पट्टव्याघट्टघोषाट्टहसितविकटं क्षीबभावान्नटन्ती ।
या प्रीतिं प्रेतभर्तुर्व्यधित धृतवसालेपनेपथ्यरौद्री
तस्या ध्यायेदसाध्याहितहृदयगदाभोगदाया गदायाः ॥ ४१ ॥

भ्राम्यन्ती दिष्टगत्या हतवृषपिशितं प्राश्य मातङ्गकुम्भात्
पीत्वा चाजौ मदाम्भस्तदनुशययुता या नखांशुच्छलेषु ।
स्नान्ती गङ्गाजलेषु व्रतयितुमिव तद्योषितां गोपयोधुक्
प्रायश्चित्तं वहन्ती महयत महतीं तां गदां धर्मसेतोः ॥ ४२ ॥

दोर्बृन्देन्दीवरस्रक्चयचरमरचराम्भोजचातुर्यभाजां
ध्यायेच्चातुर्भुजानां विधिनिटिललिपेरुत्किराणां कराणाम् ।
क्ष्मालक्ष्म्योश्चारुगारुत्मतकनकघटाटोपवत्सु स्तनेषु
न्यस्ता ये भद्रकुम्भोपरिपरिविलसत्पल्लवत्वं भजन्ते ॥ ४३ ॥

दातुं मुक्तीश्चतस्रः स्वरुचिसमुचितं योगिने यौगपद्ये-
नोद्यच्छन्तः पुमर्थापणिकविपणयः पाणयोऽजस्य भाव्याः ।
यैर्मुष्टीमुष्टि रुष्टैरपि युधि मधुना कैटभेनापि सार्धं
ताभ्यां स्रष्टुं शिरोभ्यो वितरितुमभयं बद्धमुष्टित्वमौज्झि ॥ ३४ ॥

या बद्धा यानधोऽधो भृशमनिशमपां रत्नरोचिर्मयीनां
पूर्णा स्वर्णालवालावलिरिव कलिता भार्मणी सोर्मिकाली ।
विद्वत्पूज्यस्य रज्यन्नखमृदुलतलानङ्गुलीभक्तियुक्ता-
नारक्तान् भक्तवाञ्छाघटनसुरविटप्यङ्कुरान् संस्मरेत्तान् ॥ ४५ ॥

सोत्कर्षं कङ्कणाङ्कैः सरसिजवसतेरश्लथाश्लेषमग्नै-
वैकुण्ठाधीशकण्ठः स्फुटदरसुषमानादरो भावनीयः ।
यत्सौभाग्याभिभूतो निजनिकटचरः पाञ्चजन्योऽपि चिन्ता-
जन्यं शून्यान्तरत्वं प्रकटयतितरां पाण्डुभूयं च भूयः ॥ ४६ ॥

त्रय्याः सञ्चारपद्या इव निजवचसस्तां त्रिरेखां दधाने[नः]
सोत्कण्ठं कण्ठदेशे[शो] दशतु कलिमतिं केलिकण्ठीरवस्य ।
अध्वन्यासिन्धुकन्यादृगधिरुचितया यत्र चित्रीयमाणे
चित्रायां प्राप्य यात्रामिव न हि पुनरावर्तते मोदमाना ॥ ४७ ॥

अर्चिर्बिम्बाध्वनीनावरवचनमयान्यध्वनीनात्मनीना-
नीहन्तं यं पवित्रं विरचयति जनो दीर्घदर्श्यघपात्रम् ।
भक्तानां भागधेयाऽधितटिदिव . . . तो मुक्तिमुक्ताप्रसूते-
स्तस्यादः कण्ठकम्बोः शुभविभवभुवोऽध्येतु मध्येसमाधि ॥ ४८ ॥

मोक्षश्रीवैजयन्तीं मुनिनयनमुषः षड्द्विषस्तर्जयन्ती-
मन्तःस्वान्तं दधीतोदधिमधिशयितुर्वैजयन्तीं जयन्तीम् ।
लब्धश्रीणाङ्गसङ्गां मधुपृषतशतस्वेदसन्दोहसान्द्रां
यां वाजव्याजधूतव्यजनमलिमधूराजयो वीजयन्ति ॥ ४९ ॥

माला वैकुण्ठकण्ठग्रहमहबहलामोदमभ्युल्लसन्ती
स्मर्या सिन्धोः कुमार्यास्तुलयितुमिव दोःसौकुमार्यं प्रगल्भम् ।
यां पद्मासद्मपुष्टाः कलितकलकलाः पक्षलक्षेण पाणीन्
वारं वारं धुवत्यो मधुपयुवतयः साहसाद्वारयन्ति ॥ ५० ॥

भूतग्रामं चतुर्धा विरचयितुमलं पञ्चमूतस्वरूपां
पूज्यां दण्डैश्चतुर्भिः स्थितिचतुरतरैः पञ्चवर्णात्मिकां च ।
भेत्तुं चित्तं रमाया रतिरमणकृतां बाणसम्पूर्णतूर्णीं
मालां ध्यायेत्तमामुत्तमकुसुममयीमप्रमेयात्मशक्तेः ॥ ५१ ॥

स्मर्तव्यः सादरं स्वे मुकुटपरिसरे स्थापितः शार्ङ्गिणापि
भ्रूचापो रूपदर्पाद्रतिपति[शरधिं]मन्यमानस्तृणाय ।
संहर्तुं वैरिणः षण्मुनिहृदि गुणितं योगतः प्रस्फुरन्तं
यं पश्यन् पुष्पचापोऽपसरति चपलं ह्रीभयन्यस्तशस्त्रः ॥ ५२ ॥

त्रातुं तापत्रयार्तान् स्वचरणशरणान् छाययोच्छायभाजा
कारुण्योदञ्चिकिञ्चिद्वलितललितया संज्ञयाश्वासयन्तीम् ।

आम्नायस्वद्रुमाणां स्थगितशिखमुपस्कुर्वतीं तां त्रिधाम्नो
भ्रूनाम्नीं कल्पवल्लीं विपुलबहुफलां पालयेच्चित्तसीम्नि ॥ ५३ ॥

संयोक्तुं भोगियोगिद्वयमपि युगपद्भक्तिमुक्त्यङ्गनाभ्या-
मिष्वभ्यासार्थसज्जीकृतवितनुधनुर्युग्मकार्योचितेन ।
प्रत्याक्रष्टुं यथेष्टं विषयजनजुषं चित्तमत्तेभमिष्टे
चेष्टेत क्रूरभेदामसृणघृणियुजा त्रैयुगभ्रूयुगेन ॥ ५४ ॥

अग्नेरप्यारणिं भूषणमणिकिरणोद्दामसौदामिनीनां
राज्या नीराज्यमानं नयनपदकृतार्थीकृतार्कामृतांशुम् ।
आदित्यैर्दुर्भिदस्यान्तरचरतमसो ध्वंसकार्याय चित्ते
कुर्याद्देदीप्यमानं द्युतिमुखमखिलज्योतिषां भासकस्य ॥ ५५ ॥

चन्द्रन्मन्दस्मितेन स्फुरदधरपुटं किञ्चिदुत्फुल्लगण्डा-
भोगं भूयो विकासीक्षणकमलयुगं सान्द्रचन्द्रर्द्धिबाधि ।
श्वासामोदानुमोदानुसरदलिगणैर्गीतनासागुणौघं
स्वालेख्यालेख[सु]भ्रलतमथ वदनं दानवारेर्विभाव्यम् ॥ ५६ ॥

स्वःसोमो देवतास्मै हरिरपि हृदयं पुंप्रवृत्तिं सृजन्ती
सायातायातसंज्ञाच्छलभृदभिधया श्वासमूर्तिः श्रुतिश्च ।
तस्मा[द]क्षालिमालास्वनितनुतिपरा सन्निधिस्थार्थवादः
कुर्वीतादोमुखस्य स्मरणमखमतो मुक्तिकामाधिकारी ॥ ५७ ॥

रुद्रेण द्रुह्यमाणः किल कुसुमशरस्तत्प्रतीकारहेतो-
रस्मादुत्पत्स्यमानः सुहृदि निहितवान् जैत्रशस्त्राणि यत्र ।
राजीवे बन्धुजीवे दृगधरयुगले वज्रपुष्पं च नासां
पञ्चेषून् भ्रूधनुश्चार्पयतु मतिमिह श्रीमुकुन्दाननेन्दौ ॥ ५८ ॥

स्वस्वान्तादेव देवो यमजनयदयं वेधसो कल्पशिल्पं
भक्तानुक्रोशगर्भान्मुनिजनमनसां लीनता यत्र मु[क्तौ] ।
[व्यक्तं] यस्यानुबिम्बा हिमकरनिकराः पू[र्णि]मापूर्णबिम्बा-
स्तं सेवेतामृतीयन्नमृतकरमृतं चेतसा तन्मुखाख्यम् ॥ ५९ ॥

बिभ्रद्द्वर्हिर्मुखानां मुखमिति जनकस्यानुरूपं स्वरूपं
यद्भूर्ज्वालाह्वजिह्वः कवलयति हविर्जुह्वतां सप्तजिह्वः ।
वप्रः कव्यप्रियाणामपि लपनतया तृप्तये न्युप्तभोजी
न्यस्येदास्ये मनोऽस्मिन्नखिलमखभुजस्तस्य विश्वंभरस्य ॥ ६० ॥

दुग्धस्निग्धस्मिताभामिषविषदकृतोन्मेषपीयूषवर्षैः
स्वेषां ......दधाने धृतमधुरपरिस्पन्दने [दी]नबन्धोः ।
मन्दश्वासानिले[ङ्ग]त्तरलकिसलयश्रीगरिष्ठेऽधरोष्ठे
चिन्तां दन्तांशुसङ्गस्फुटकुसुमरजः सुप्रतिष्ठेऽनुतिष्ठेत् ६१ ॥

माधुर्योद्रेकहृद्यं विपरिणतफलं रूपसम्पल्लतायाः
श्रीप्रेष्ठस्योष्ठबिम्बं स्मरतु रुचिमदाहूतबालार्कबिम्बम् ।
यन्मृष्टत्वस्य तुष्टा निजरमणभुजापञ्जरान्तश्चरन्ती
सोत्सेकं सेकभावं कलयति कमला नारिकालीरकन्या (?) ॥ ६२ ॥

आस्येन्दुस्यन्दमानामृतविततसिराद्वारचातुर्यचौर्या
चर्या स्मर्या चिरायारुणरुचिरुचिरा श्रीधरस्याधरश्रीः ।
योगीन्द्रास्वाद्यमानामृतरसजननी या त्रिलोकीजनन्योः
कामं कामं दुहानात्यहह दहति तं बिभ्यतां देहबन्धात् ॥ ६३ ॥

पङ्क्तिद्वैधानुबन्धिश्रुतियुवतिशिरश्चारुसीमन्तसीमा
प्रव्यक्ताव्यक्तमुक्तागुणगुणनिपुणाश्चित्तमारोपणीयाः ।
वेदान्तार्थस्य दन्ताधवलिमबलिनः सान्द्रसिन्दूरधारा
सौन्दर्यं धारयन्त्यारभत यदभितः सौष्ठवं सौष्ठलेखा ॥ ६४ ॥

राजानं या द्विजानामजमुखजतया विश्रुता . . . स्वजातं
भक्त्योपास्ते च किञ्चित्स्फुरदरुणरुचं साधु सन्ध्यायमानम् ।
साधिष्ठां वर्णनिष्ठां वहति तदधरं या पुरस्कृत्य नित्यं
पूज्या राजी द्विजानां प्रणिहितमनसा सा द्विजेन्द्रध्वजस्य ॥ ६५ ॥

स्वच्छन्दं बन्धुरत्वं दधदधरदलद्वन्धुजीवानुबन्धा-
न्मौकुन्दं दन्तवृन्दं मुदितमुनिहृदिन्दीवरं दाम कौन्दम् ।
वारं वारं विभाव्यं भुवि वररसनाध्यासनौजायितायाः
पूजायै जायते यत्किल कलुषमुषः शारदादेवतायाः ॥६६ ॥

संमृष्टे भूतिजुष्टेश्चलकरनिकरैः कुण्डलोद्यन्मणीनां
यच्छेदच्छेऽस्य गण्डस्थलमुकुरतले मानसं संमुखीने ।
चित्रं यत्राभिमुख्ये प्रसरति परमानन्दसन्दोहसान्द्रं
योगीन्द्रास्ते स्वरूपं किमपि विरहिताकारमालोकयन्ति ॥ ६७ ॥

आकीर्णौ कर्णिकाग्रोचितखचितलसत्पद्मरागांशुरागै-
र्लक्षालिप्तेन्द्रनीलस्थलकलिकुपितौ तौ कृपालोः कपोलौ ।

ध्येयौ ताम्बूलपङ्कैः शबलितवपुषौ च[चु]म्बनाडम्बरोत्थै-
मत्वा यौ लाञ्छनं प्रोञ्छतु मुदितह्रियौ व्याप्रियेते प्रिये ते ॥ ६८ ॥

स्निग्धश्यामामलेन्द्रोपलविपुलतरादर्शदर्श्यं क्षतारि-
त्राताटोपं कपोलस्थलफलकयुगं धर्मपालस्य भाव्यम् ।
सद्यः प्रच्छाद्य गात्रे स्थितिचतुरतया यत्र . . . .मौ सकामा
कामौ भ्रूखड्गलेखे खलु मिलितशिखे युध्यमानौ दधाते ॥ ६९ ॥

नस्यैरुद्यत्कषायैः कषितुमिव जगत्प्राणरूपैरुपायैः
पुंसां दोषत्रिकोद्यद्भवगदविपदं योगतोऽन्तर्विशन्तीम् ।
नासां नासत्यरूपाममृतकरतया विश्रुतामाश्रयेत्तां
श्रीसंज्ञा सैन्धवी बह्वमनुत चलिताधिश्रियं यत्प्रसूताम् ॥ ७० ॥

ध्यायेद्घ्रोणां घृणाब्धेस्तिलसमतुलया सर्जयाप्यर्जयन्ती-
माकृत्यामोदमुच्चैः सकलसुमनसामुत्तमामोदकामः ।
यातायातैर्यदीयाः श्वसितसततगा वारिधारालरोलान्
रोलम्बा ...र्थसार्थाकनिशमुपगतास्तादृशास्तोषयन्ति(?) ॥ ७१ ॥

सर्वेशघ्राणवंशं समभिनिविशतां ब्राह्मधामारुरुक्षो-
रुच्चं निश्रेणिकाग्र्यां यमपि च सुषमा नाम शैलूषयोषा ।
अध्यारूढा गुणैरुच्छ्रितमतिविततैर्बिभ्रती विभ्रमर्द्धिं
लोकस्यालोकगृध्नोरपहरति चिरोपार्जितापूर्वलक्ष्मीम् ॥ ७२ ॥

अभ्यर्णे कर्णयोः किं स्खलितमतिभरान्नुत्तमुत्तंसपद्म-
द्वन्द्वं भ्राम्यन्मिलिन्दभ्रमकरतरलश्यामलस्निग्धतारे ।
दैत्यौघे धर्ममर्माविधि विरुधि क्रुद्धवच्छोणकोणे
त्रैलोक्यत्रातृनेत्रे बहिरनवहितस्वान्तमन्तर्विलोक्ये ॥ ७३ ॥

विष्णोरक्ष्णोरभीक्ष्णं स्मरतु सुमधुरः प्रोच्चलत्प्रेमधारा-
व्यात्युक्षीकेलयोऽनुक्षणसुभगतमश्रीकटाक्षच्छटाभिः ।
याभ्यां नातिस्वदन्ते भवदवविधुरान्मूर्छितात्मीयसेचं
सिञ्चद्भ्यां भक्तलोकान् स्फुरदुरुकरुणाशीतवीक्षाभिरद्भिः ॥ ७४ ॥

वक्त्रेन्दाविन्दिरायाः शिथिलरसमिव ब्रह्मशर्वात्रकाण्डे
कुर्वद्दौर्भाग्यदुःस्थावितरसुरगणप्रेक्षणेऽन्धं भविष्णू ।
एकौरस्याधिकेष्टान् शुकसनकमुखान् द्रष्टृसंमर्दनष्टान्
अन्वेष्टुं तातचारं चरदभिककुभं चक्रिचक्षुर्विचिन्त्यम् ॥ ७५ ॥

बृन्दैरिन्दीवराणां जलजकुलयुजां स्वस्वपादप्रसादात्
कादाचित्कीं श्रयद्भिः श्रियमनिशशुभा दुर्लभा यस्य सा श्रीः ।
साक्षाल्लक्ष्म्या यदीक्षा समुदयति मुदे ब्रह्मणापीष्यमाणा
चेतस्यालोचनीयं नयनयुगमदः पुष्पवल्लोचनस्य ॥ ७६ ॥

यत्सत्यं सत्यवद्यव्यवसितिविदिताख्यैकसख्यात्वकीया-
द्यां सर्वाशां सवित्रीं श्रुतिरुदितवती विश्वविश्वासपात्रम् ।
भक्तेच्छापूर्तिकैर्म. . . . कनियमवशा. . . .त कर्णप्रसिद्धिः
शुश्रूषेत श्रियाढ्यां हृदि मृदितमले तां श्रुतिं श्रीप्रियस्य ॥ ७७ ॥

अन्तः संयन्तुकामेन्द्रियगणगजतायूथनाथं मदर्थे[द्धं-]
रुद्दामानं मनोनामकमृषिजनतापेक्षते यावपाशा (?) ।
याभ्यां बद्धात्मनां न प्रभवति भवतो दुस्त्यजोऽप्यस्तजन्मा
भूयोबन्धस्य बद्धोक्षजित इव हरेस्तौ स्मरेच्छ्रोत्रपाशौ ॥ ७८ ॥

योगाध्वप्रौढतृष्णस्त्रुटितगुणपुटो जुष्टतीर्थोऽमृतर्थी
धर्मेद्धर्थे कूपकर्तुर्विशतु दृढपदं कर्णकूपे कृपालोः ।
यद्भूषाश्मांशुपूरं निजनिकटचरा दर्शिता हावभावं
दिव्यर्षीणां दिदृक्षाभरपरितृषिताः पश्य धावन्ति गावः ॥ ७९ ॥

त्रस्तौ वैधुंन्तुदारुन्तुदरदकदनात्स्वाभयं याचमानौ
यौ नूनं वेपमानावुडुपतितपनौ कर्णजाहं जिहानौ ।
प्रीत्या प्रत्युद्गतौ चायतनयनयुगेनात्ममूर्त्यन्तरत्वात्
ध्यायेद्राहुद्रुहस्ते रुचिभररुचिरे कुण्डले गण्डलोके ॥ ८० ॥

स्थाप्यः सङ्कल्पकल्पे मणिमकरमुखाकारशिल्पोऽस्य कर्णा-
कल्पोऽम्भोयन्त्रकल्पः कलयत सुधियो कल्परत्नांशुवंशः ।
त्रैलोक्यावासयोग्यामपि विपुलवपुर्वापिकां पूरयित्वा
धावल्लावण्यपूरः परिवहति बहिः साध्वनेन ध्वनेति ॥ ८१ ॥

द्रुह्यन्तौ मह्यमस्य श्रवणमलभवौ भाविनौ दानवौ तौ
निद्रां गन्तुर्युगान्ते द्रुहिणहृदि समुत्त्रासमुत्थास्नुमित्थम् ।
साक्षात्प्रक्षालयन्त्यावपि मणिकिरणैर्निर्मलं निर्मिमाणे
कर्णान्तः कर्णभूषे प्रतिभवभिषजः प्रोतचेतीबुभूषेत् ॥ ८२ ॥

वक्त्राच्छासङ्गभृङ्गीभवदलककुलाकारकालाक्षराणां
बिभ्राणां धोरणीं हृद्भुवि भुवनगुरोर्भावयेद्भालपट्टीम् ।

अभ्यस्यन्तीव यस्यां पटुमुनिवटवोऽध्येतुमध्यात्मविद्यां
...श्रद्धावधाना अपरिचिततरीं मातृकां कामपीमाम् ॥ ८३ ॥

धीशैलूषां विशाले सममसृणतलेय दीपिकाभिः
कैरीटाश्मच्छटाभिर्नटयतु निटिलोत्सङ्गरङ्गे त्रिसूर्तेः ।
यस्य त्रैलोचनं लोचनमनलमयं बाधमानस्य [भासा]
त्रासार्थं शर्वशत्रोस्तुलयति तिलको निस्तलो रोचनायाः ॥ ८४ ॥

कोटीराबद्धनानाविधमणिकिरणैरुल्बणालेख्यलक्ष्मीः
श्रीभर्तुर्भालभित्तिः स्वलवणिमसुधास्निग्धमूर्तिर्विभाव्या ।
प्रत्याहारोपवासादनुदनुजरिपुध्यानपीयूष[यू]षै-
स्तन्द्रालुः पारयित्वा श्रयति यतिमतिर्यामुपन्नां चिराय ॥ ८५ ॥

सान्द्रैरुद्वासिहासान् सुरतरुकुसुमैरिन्द्रनीलाधिनीला-
नन्तः प्राप्तप्रकाशान् रचयतु रुचिरान् श्रीहृषीकेशकेशान् ।
सार्धं स्पर्धानुबन्धादिव समुदयते व्योमकेशस्य केशै-
र्येषामभ्रान्तशुभ्रोडुनिवहनिबिडाकाशनीकाशभावः ॥ ८६ ॥

हस्तीन्द्रस्यार्ति सिन्धूद्धरणमभिहतताभीतिहस्तस्य दूरा-
दार्तत्राणस्य दूरप्रसृमरमहिमा केशहस्तो विचिन्त्यः ।
यं हस्तीकृत्य भक्त्या भवदवदहनज्वालजालैर्विहस्ताः
कुर्वन्ति स्वान्तदूरामपि दुरधिगमां हस्तसान्मोक्षलक्ष्मीम् ॥ ८७ ॥

कौटिल्यं दुष्टलोके किल सुजनजने मार्दवं वर्षुकाब्दो-
त्कर्षक्लेशार्कतप्ते विभजदिव विभोः कैश्यमन्तर्विचिन्त्यम् ।
किं नाधिस्निग्धतायास्तदुचितमुचितं मोचयद्यत्स्वबन्धून्
भक्तान् संसारबन्धात्स्वयमपि सुचिरं बन्धमङ्गीकरोति ॥ ८८ ॥

शुभ्रैरभ्रंलिहैरुन्मुखमणिकिरणैर्ब्रह्मरन्ध्रोपरिष्टा-
दर्चिर्मार्गं सुदुर्गं निजभजनमृते दर्शयद्भक्तपान्थान् ।
पश्यन्नश्यन्निमेषं मणिमयनयनैर्विस्मयेनास्य सृष्टिं
स्मर्तव्यं प्रत्नपुंसः स्फुटरुचिमुकुटं कूटवद्रत्नसानोः ॥ ८९ ॥

रत्नौघोद्यत्कराग्रैर्मुखमपि ककुभां पत्रलेखालिखन्तं
बध्नन्तं सान्द्रचन्द्रातपततिमभितो भक्तमुक्त्युत्सवाय ।
अग्रीयोदग्रभावाद्गगनतरुशिरःस्मेरताराप्रसूना-
न्युच्चानुच्चेतुकामं स्वमनसि कुरुतां कैटभारेः किरीटम् ॥ ९० ॥

रत्नौघोद्यत्कराग्रैर्मुखमपि ककुभां नीलरत्नांशुधारा-
कारान्नाराचसारानपि हरिधनुषो हीररोचिःप्ररोहान्।
तद्वीराशंसनं संसरणमभि रणे दारुणे वैरिमुख्यैः
कामाद्याख्यैर्मुनीनामुपकरणकरं संस्मरेत्तत्किरीटम् ॥ ९१ ॥

योगीन्द्राणां द्विषः षड्विषधरविषमानिच्छतां रोद्धुमद्धा
वज्रौघोत्थैर्मघोनो धनुर्भिरगणितैश्चित्र ... द्रूणैश्च (?)।
निर्वाणीभूय भूयः सफलयति मतिं यो भिया भावमूलं
नश्यद्दोषां विभूषां महयतु महितं मौलिमाम्नायमौलेः ॥ ९२ ॥

॥ इति श्रीजीवदासवंशावतंसश्रीविद्याकरपुरोहितमहापात्रकृतं
श्रीमन्नारायणप्रत्यङ्गवर्णनाशतकं
सम्पूर्णम् ॥

---

## ६. ॥ अथ श्री आर्तत्राणपरायणस्तोत्रम् ॥

वात्सल्यादभयप्रदानसमयादार्तार्ति निर्वापणा-
दौदार्यादघशोषणादगणितश्रेयःपदप्रापणात्।
सेव्यः श्रीपतिरेक एव जगतां सन्त्यत्र षट् साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ १ ॥

प्रह्लाद प्रभुरस्ति चेत्तव हरिः सर्वत्र मे दर्शय
स्तम्भे चेत्यवदद्धिरण्यकशिपुस्तत्राविरासीद्धरिः।
वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमावेदयन्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २ ॥

श्रीरामोऽत्र विभीषणोऽयमनघो रक्षोभयादागतः
सुग्रीवानय पालयामि कृपया पौलस्त्यमप्यागतम्।
इत्युक्त्वाभयमस्य सर्वविदितो यो राघवो दत्तवान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३ ॥

नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मेशदेवेश्वराः
पान्त्वित्यार्तरवं निशम्य करिणं देवेष्वशक्तेष्वपि।
मा भैषीरिति यो ररक्ष मकराच्चक्रेण तं संहरन्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४ ॥

हा कृष्णाच्युत हा कृपाजलनिधे हा पाण्डवानां सखे
क्वासि क्वासि सुयोधनाद्यपहृतां हा रक्ष मां द्रौपदीम्।
इत्युक्तेऽक्षयवस्त्रसंवृततनुं योऽरक्षदर्धक्षणात्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५ ॥

यत्पादाब्जनखोदकं त्रिजगतां पापौघविच्छेदनं
यन्नामामृतपूरमस्तु पिबतां संसारसन्तारकम् ।
पाषाणोऽपि यदङ्घ्रितो मुनिवधूरूपं परं प्राप्तवान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ६ ॥

पित्रा भ्रातरमुत्तमासनगतं भक्तोत्तमः स ध्रुवो
दृष्ट्वा तत्सममारुरुक्षुरुदितो मात्रावमानं गतः ।
यं गत्वा शरणं जगाम तपसा हेमाद्रिसिंहासनं
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ७ ॥

योऽरक्षद्वसनादिभिर्विरहितं विप्रं कुचेलाभिधं
दीनं दीनचकोरपालनविधुः श्रीशङ्खचक्रोज्ज्वलः ।
यज्जीर्णाम्बरमुष्टिमेयपृथुकानादाय भुक्त्वा क्षणात्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ८ ॥

यं कल्याणगुणाभिराममललं शास्त्राणि संचक्षते
यस्मिन् योगयुते प्रतिष्ठितमिदं विश्वं वदन्त्यागमाः ।
यो योगीन्द्रमनःसरोरुहतमःप्रध्वंसने भानुमान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ९ ॥

योऽत्रासीदरविन्दगर्भजनुषं ब्रह्माणमार्तिं गतं
भीतं कैटभराक्षसेन मधुना कल्पान्तकाले महान् ।
हत्वा तौ मधुकैटभौ रणमुखे भक्तार्तिसंशोषणात्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १० ॥

यन्नामस्मरणादघौघरहितो विप्रः पुराजामिलः
प्रायान्मुक्तिमशेषतो विरहितः संसारदावानलात् ।
सोऽयं भागवतोत्तमावन इति प्राप्तप्रतिष्ठोऽचिरात्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ११ ॥

कावेरीहृदयाभिरामपुलिने पुण्ये जगन्मण्डले
चन्द्राकाख्यसरित्तटीपरिसरे धात्रा समाराधिते ।
श्रीरङ्गे भुजगेन्द्रभोगशयने शेते सदा यः पुमान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १२ ॥

वक्त्रेन्दुद्युतिमण्डिताब्जनयनो गण्डोल्लसत्कुण्डलः
श्रीवत्सोरुमणिश्रियाप्तहृदयः स्वर्णाम्बरो यो भुजैः ।

शङ्खं चक्रगदाभयानि बिभृते पद्माङ्घ्रिरत्युन्नतो
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १३ ॥

कर्मब्रह्मनिदानवेदनिकरं हृत्वा महीमण्डलं
त्यक्त्वा निर्मितमन्दिरोऽभवदथो मध्येमहासागरम् ।
हन्तुं सोमकनामकं तमसुरं मत्स्यस्वरूपं दधा-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १४ ॥

कृत्वा मन्दरनामकं गिरिवरं मन्थानदण्डं पुरा
क्षीराब्धौ मथनं बितेनुरधिकं सर्वेऽपि देवासुराः ।
मज्जन्तं नगमुद्दिधीर्षुरभवद्यः कच्छपाकारवान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १५ ॥

भूलोकं प्रलये महार्णवजले तान्तं नितान्तं चिरं
ब्रह्माद्यैरखिलैरशक्यममरैर्धर्तुं महोपद्रवे ।
वाराही तनुरत्र धर्तुमनसा येनास्थिता लीलया
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १६ ॥

. . . . . . . . . . ॥ १७ ॥

स्वाराज्ये बलिचक्रवर्त्यपहृते दारिद्र्यसंपीडितै-
रिन्द्राद्यैरमरैरशेषमुनिभिः संस्तुत्य संप्रार्थितः ।
तानेतान् सफलान् विधातुमखिलान् यो वामनाकारवान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १८ ॥

कर्मब्रह्मविचारदक्षमनसो धर्मार्थकामेषु च
प्रोत्साहं नितरामसक्तमनसः कुर्वन्ति ये ब्राह्मणाः ।
हत्वा क्षत्त्रमपालयद् द्विजवरान् यो भार्गवाकारवान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १९ ॥

इन्द्रादीनमरांस्तथा मुनिवरान् यो रावणो बाधते
भागान् हन्ति तथैव यो दिविषदामाग्नेययागादिषु ।
जित्वा तं सकलांश्च रक्षितुमना यो रामरूपं दधा-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २० ॥

गोपालानतिपामरानविदुषो मायावृतान् रक्षितुं
यः प्रापानकदुन्दुभेश्च सदने श्रीकृष्णरूपं हरिः ।

[1]तज्ज्येष्ठो बलराम इत्यजनि यो ह्यन्वर्थनामा महान्
आर्तत्राणपरायणः स भगवान्नारयणो मे गतिः ॥ २१ ॥

इन्द्रादीनमरांस्तथा मुनिवरान् संपीडितान् राक्षसै-
[2]स्त्रातुं मन्त्रगुरूपदेशविधिना भूतानि संमोहयन् ।
नित्यं धर्मपरायणः स्वयमपि श्रीबौद्धरूपं दधा-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २२ ॥

वर्णाचारविवर्जिते कलियुगे दुष्टस्वभावैर्जनै-
र्गर्वेणोद्धतमानसैर्मुनिगणान् संपीड्यमानांस्तथा ।
[3]त्रातुं कल्क्यवतारमाप भगवान् यः सर्वसाक्षी पुमान्
आर्तत्राणपरायणः स भगवन्नारायणो मे गतिः ॥ २३ ॥

शैलारातिनियुक्तभीषणमहाकादम्बिनीमण्डले
[4]रुद्ध्वा खं विदिशो दिशोऽशनिशिलासारान् भृशं वर्षति ।
योऽरक्षद्व्रजगोकुलं करतलेनोद्धृत्य गोवर्धनं
ह्यार्तत्रणपरायणः स भगवान्नारायणो मे गतिः ॥ २४ ॥

कारावेश्मनि भीमविक्रमजरासन्धेन बन्दीकृतान्
भूपालानखिलाननन्यगतिकान् विज्ञपितस्वव्यथान् ।
[5]बन्धान्मोचयितुं प्रभञ्जनभुवा योऽजीघनत्तं समि-
त्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २५ ॥

क्षुत्तृष्णार्तसहस्रयोगिसहितं दुर्वाससं क्रोधिनं
[6]द्रौपद्या विघसाणुमभ्यवहरन् शाकं स्वहस्तार्पितम् ।
[7]तृप्त्यातर्पयदात्मनोऽस्य जगतस्तृप्तिं समावेदयन्
आर्तत्राणपराणः स भगवान्नारायणो मे गतिः ॥ २६ ॥

सीताया अपचारिणं हरिहरब्रह्मादिभिर्दुर्ग्रहं
बाणेनाभिहतं निजेन पुनरप्यायातमङ्घ्रिद्वयम् ।

---

1. लोपालोपसमर्थनार्थमनुजश्रीमद्धलाकारवान् ।
2. स्त्रातुं मन्त्रपदोपदेशकगुरुर्भूत्वा जनान् मोहयन् ।
3. त्रातुं यः कलिकावतारमकरोत्सर्वस्य संरक्षिता ।
4. नीरन्ध्रं नितरां शिलाशनिजलासारांश्च संवर्षति ।
5. तं संहृत्य मुमोच मारुतसुताद्वश्यं बलाद्बन्धनात् ।
6. द्रौपद्या सह भुक्तशोषितलवं शाकं स्वहस्तार्पितम् ।
7. भुक्त्वातर्पयदात्मतृप्तिमखिलां चावेदयन् यः पुमान् ।

काकाकारनिशाचरं करुणयारक्षद्विपन्नं भया-
दार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २७ ॥

वालिप्राप्तकलत्रराज्यविभवं दीनं कृशं निर्दशं
सुग्रीवं स्वपदग्रहैकशरणं कृत्वा कटाक्षास्पदम् ।
तद्दुःखान्यहिते सरोषमकरोद्यः स्वप्रतिज्ञाबलात्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २८ ॥

शूद्रे घोरतपस्समाचरति तद्दोषेण मृत्युं गते
कस्मिंश्चित् पृथुके तदीयजननीपित्रोर्महादुःखयोः ।
हत्वा शू द्रशिरो मृतस्य च शिशोः प्राणान् पुनर्योऽददात्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २९ ॥

यस्माद्रक्तपिपीलिकादिरचनादेवेशपर्यन्तकं
यो रक्षत्यखिलं चराचरमिदं नित्यं जगन्निर्मितम् ।
कर्मब्रह्मविचारदक्षमनसामैक्येन यो रक्षिता
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३० ॥

[1]तत्सृष्ट्वा तदनुप्रविश्य सदभूत्त्यच्चाभवद्यः पुमान्
एषा ह्येव मुखाच्छ्रुतिश्च सकला यं बोधयत्यादरात् ।
यो गृह्णाति यथोर्णनाभिरुदरे सर्वं जगन्निर्मितं
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३१ ॥

सत्यं ज्ञानमनन्तमादिसकलश्रुत्यर्थमीमांसया
सत्योऽहं चिदहं[तथान्तरहितो]ब्रह्मास्म्यहं सर्वदा ।
एवं वृत्तिभिरर्दितानविदुषो यो बोधयत्याख्यया
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३२ ॥

चिद्रूपी च समस्तभेदरहितो यश्चाभवन्निर्ममो
यः स्थूलादिशरीरबन्धरहितो यः सत्यरूपः सदा ।
कर्तुं स्वीयमुपासकं फलयुतं यः कल्पिताकारवान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३३ ॥

---

1. यस्मात्सृष्टिरियं समस्तजगतामाश्चर्यसन्दायिनी
येनोत्पन्नमिदं चराचरमथो संरक्ष्यते सर्वदा ।
यत्रैक्यं प्रलये विशन्ति नितरां सर्वे जना निर्मिता
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥

शब्दात् सर्पमृतिस्तथा गजमृतिः स्पर्शात्तथा रूपतो
नष्टोऽभूच्छलभस्तथैव रसतो मत्स्याश्च गन्धादलिः ।
सर्वैः स्वैर्विषयैर्निपीडिततनून् यः पालयत्याश्रितान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३४ ॥

भूलोकादिसमस्तलोकनिचयं कृत्वाङ्गजातं तनोः
स्वीयायाः सकलं चराचरमिदं पादादिशीर्षान्तकम् ।
यो ब्रह्माण्डसमष्टिरूपतनुभृद्वैराजनामा बभा-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३५ ॥

श्रोत्रत्वग्रसनादिधीन्द्रियचयो वागादिकर्मेन्द्रिय-
स्तोमः प्राणचयश्च सप्तदशकं लिङ्गं मनो धीरपि ।
तादृग्लिङ्गसमष्टिरूपतनुमान् हैरण्यगर्भो बभू-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३६ ॥

अव्यक्तं प्रकृतिः प्रधानमपि चाविद्या च माया तथा-
निर्वाच्या गुरुमूर्तिरादिरहिता चिच्छक्तिरित्युच्यते ।
तादृग्घेतुसमष्टिरूपतनुभृत् सर्वेश्वरो यो बभू-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३७ ॥

एको दीव्यति यश्चराचरजगद्गूढोऽखिलव्यापक-
श्चान्तर्यामितया स्थितश्च जगतां यः कर्मणामीश्वरः ।
आवासो निखिलस्य पश्यति च विद्यः केवलो निर्गुण-
श्चार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३८ ॥

यो देवो निजमायया जगदिदं निर्माय संपोषयन्
अन्ते स्वात्मनि संदधाति नितरामानन्दपूर्णो हरिः ।
सत्यात्मा विभुरादिमध्यरहितो गम्भीरकर्मा महान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३९ ॥

सर्वात्मानमजं चिदम्बरपरिज्ञेयं मनोऽगोचरं
[1]वागर्वाचि गतं [2]जराकृतितनुं चैतन्यसम्पादकम् ।
एकं नैकविधस्वरूपममलं यं वेद पङ्केजभू-
रार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४० ॥

निर्भेदं निरुपद्रवं निरुपमं निर्वाणदं निर्मलं
निष्कम्पं निरुपाधिकं निरशनं नित्यामृतोदायकम् ।

---

1. वागर्वातिगतं 2. जरावृततनोः

निर्बलं निरतोदयं निरुदयं यं वेद दुर्गाधिराट्-
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४१ ॥

सत्यं ज्योतिरनादि यश्च कलयन्नात्मन्यजस्रं जग-
न्निर्द्वैतो विचचार चारणगणैः संस्तूयमानः शुकः ।
लोको बुद्बुदतौल्यमेति किल यत्राम्भोनिधौ चाचलन्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४२ ॥

नद्यः स्यन्दनसंयुता जलनिधौ स्वे नामरूपे यथा
संत्यज्यैक्यमुपागताश्च सकलास्तद्वत् पुमान् ब्रह्मवित् ।
रूपं नाम विहाय पूर्णतनुमन्नरायणैक्यं गत-
श्चार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४३ ॥

ब्रंहिष्ठादिपिपीलिकान्तहृदये या प्रीतिरास्ते सदा
सैषार्थोऽभिमतः समस्तविदुषामाद्यस्य वाक्यस्य च ।
सैषानन्दलवो हि यस्य महतो नारायणस्य प्रभो-
रार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४४ ॥

आदित्यादिचतुर्मुखान्तहृदये या प्रीतिरास्ते सदा
सैषार्थोऽभिमतः समस्तविदुषां मध्यस्थवाक्यस्य च ।
अन्त्यास्त्वैक्यपदी ददौ सपदि या नारायणैक्यं तयो-
रार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४५ ॥

येनाघ्राणनिरीक्षणग्रहणधीर्वाग्व्याकृतिर्येन च
स्वाद्वस्वाद्विति येन विन्दति च तत्प्रज्ञानमित्युच्यते ।
प्रज्ञानं मयि तादृशं विजयते यस्य स्वरूपं विभो-
रार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४६ ॥

यच्चैतन्यमशेषदेवनिचये सर्वेषु मर्त्येष्वपि
प्राणिष्वद्य गवादिषु प्रकटितं ब्रह्मेति तत्रोच्यते ।
तादृग्ब्रह्म विराजते मयि सदा यस्यैव धाम प्रभो-
रार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४७ ॥

विद्यार्हे परिपूर्णमत्र निवसन् देवः परात्माभितो
बुद्धेः साक्षितया स्फुरन्नहमिति ज्ञेयः सदा प्रोच्यते ।
सोऽयं तादृगहं बभूव सततं यस्यैव चांशः प्रभो-
रार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४८ ॥

सर्वत्र स्वयमेव पूर्णतनुमान् देवः परात्मा विभुः
सर्वैर्ब्रह्मविदां गणैः सुमनसां ब्रह्मेति संवर्ण्यते ।
तद्ब्रह्माहमिति प्रमास्मि वदतो यः स्वानुभूतिं ददा-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४९ ॥

एकं वस्त्वितरेण शून्यमभितः संत्यक्तनाम स्वयं
रूपेणापि विवर्जितं यदभवत्तत्त्वंपदार्थं विदुः ।
श्रीनारायणमूर्तिरेव भगवान् यस्तत्पदार्थश्रुता-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५० ॥

श्रोतुः शिष्यजनादपीन्द्रियचयाद्देहत्रयाच्चापि य-
द्वस्त्वेकं नितरां विलक्षणमहो तत्त्वंपदार्थं विदुः ।
तादृक् त्वं तदसीति देशिकगिरा प्राप्नोति येनैकता-
मार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५१ ॥

नित्यं वस्तु विराजते स्वयमहो स्वस्यापरोक्षं सदा
साक्षी स्वीयतनोश्च सर्वविबुधैः सोऽयं तदात्मोच्यते ।
आत्मा योऽयमभूतपूर्वमहिमा यस्यैव लेशः स्फुरन्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५२ ॥

आत्मा यस्तु विराजतेऽस्य जगतो दृश्यस्य सर्वस्य च
स्थित्वा साक्षितया चकास्ति तमिमं ब्रह्मेति सर्वे विदुः ।
ब्रह्मात्मायमिति प्रसन्नहृदये नारायणात्मा बभा-
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५३ ॥

चिद्रूपो मधुशासनो मधुहरो मायातिगो निर्गुणो
[1]सन्तो विश्वपरः पुराणपुरुषो नित्योदितो निर्मलः ।
नित्यानन्दवपुर्भवन् भवहरो यो वासुदेवः पुमान्-
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५४ ॥

आर्तत्राणपरायणस्तवमिमं धर्मादिमोक्षप्रदं
व्यासाचार्यकृतं परं शुभकरं सर्वाघविध्वंसनम् ।
नित्यं यः पठति प्रभातसमये शृण्वन्नरो भक्तिमान्
श्रीवैकुण्ठपदं स याति विमलं योगीन्द्रलभ्यं पदम् ॥ ५५ ॥

॥ इति श्री आर्तत्राणपरायणस्तोत्रं सम्पूर्णम् ॥

---

1. [सत्यो]

## ७. ॥ अथ श्रीपरमाधवस्तुतिः ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥ १ ॥

श्रीमत्याश्रितसन्तानः श्रीशैलाग्रे कृतालयः ।
करोतु कमलाकान्तः कामितं नः फलं महत् ॥ २ ॥

रमारमण वाञ्छितं वितर दासदासाय मे
रसारमणिफालभूतिलकिताद्रिशैलालय ।
कुचेलमिव गोपिकावशग जानकीनाथ भो
विभीषणमिवाव मां विहितभक्तिपूर्तिं विभो ॥ ३ ॥

यदम्बुकणिकाश्रिताः प्रतिदशं मरुत्पोतका-
श्चलन्त इह चङ्क्रमाद्यलसचेतसः प्राणिनः ।
पुनन्ति पुरुषोत्तमाम्बुरुहिणी मनोहारिणी
पुनर्जनिभयं त्वियं हरतु मे सकृन्मज्जनात् ॥ ४ ॥

नमज्जनतमश्छटाकबलनैकबद्धादरं
नभोमणिमिवापरं नवसरोजिनीसेवितम् ।
नमाम्यहममुं मुहुर्नभसि रोचमानं सदा
नगेन्द्रमुरगाधिपाभिधमुदूढनारायणम् ॥ ५ ॥

प्रपत्तिफलकारणं प्रणमदार्तिविद्रावणम्
फणीन्द्रगिरिभूषणं भगवदङ्घ्रियुग्मार्पितम् ।
यदेतदहमिन्दिराकुचतटद्वयीलाञ्छनं
यदेव निखिलत्रयीशिखरलालयमद्याश्रये ॥ ६ ॥

विरिञ्चभवदेवराड्विहितनित्यपूजोज्ज्वलं
वियत्सरिदुपाहृतैर्विमलतोयपद्मोत्पलैः ।
विधूतशकटासुरं विहितगौतमस्त्रीसुखं
विभोः पदयुगार्पणं विजयते फणीन्द्राचले ॥ ७ ॥

विधूतविनतापदं विबुधबृन्दवन्द्यं सदा
विनौमि विनतासुतं विहगराजमेनं विभुम् ।
य एत्य युधि रावणिप्रहितघोरनागास्त्रतो
ररक्ष सहवानरैर्झटिति सानुजं राघवम् ॥ ८ ॥

यथा हरिपदावनीयुगमवर्णयत्तत्वत-
स्त्रयीशिखरदेशिकः किल सहस्रधा यत्पुरा ।
तथैव बहुधा तनुं दधदिवात्र नानाकृते-
र्विभाति जगदीशितुश्चरणरक्षणैकादरम् ॥ ९ ॥

इदं सरसिजा[लया] कमनपादरक्षाद्वयी-
शतं हरतु मे तमश्शतसहस्रजन्मार्जितम् ।
यदाश्रयतया जगत्त्रितयविक्रमैकक्षमं
बभूव परमात्मनोऽप्यनुपमस्य पादाम्बुजम् ॥ १० ॥

स्फुरत्कनकभित्तिकाघटितचित्ररत्नप्रभा-
परीतमिदमिन्दिरारमणमन्दिरं राजते ।
यदीयमिह दर्शनं भवति मुक्तिदं देहिनां
विना झटिति सत्क्रियां जननचक्रमासेदुषाम् ॥ ११ ॥

नमस्तस्मै यस्मिन् वसति परमात्मा स भगवान्
रमाभूनीलाभिः सह विहृतिलोलाभिरतुलः ।
विमानं रत्नाढ्यं जगति यदहीन्द्रक्षितिभृतः
शिरोरत्नं विष्वक् स्फुरति महदानन्दनिलयम् ॥ १२ ॥

इदं नमोऽस्मद्गुरवे च तस्मै
भूयस्तदाचार्यपरम्पराभ्यः ।
त्रय्यन्तगुर्वादियतीश्वरश्री-
शठारिसेनेशरमाधिपेभ्यः ॥ १३ ॥

वन्दे मन्दारमालाधरमिह महसां बृन्दमिन्दीवराभं
वन्द्यं वन्दारुकाणामनवधिकदयानन्दकन्दं मुकुन्दम् ।
नाम्ना त्वाम्नायवेद्यं विलसति फणिराड्भूभृदग्रे रमाभू-
नीलालीलानुकूलं विमलतरमिदं विश्वरक्षाधुरीणम् ॥ १४ ॥

वाञ्छाधिकं प्रणमतां फलमत्र दातुं
वातन्धयाद्रिशिखरे वसतो मुरारेः ।
पादद्वयं परिसरानमतो ममेद-
मुत्तंसपल्लवरुचिं विदधातु मौलौ ॥ १५ ॥

उपनतहरचूडाचन्द्रलेखाभिमुक्ता-
मृतसुरुचिरबिन्दुश्रेणिकेवेयमाशु ।

विदलितनवमुक्ताजालगौरा मुरारे-
श्चरणनखररेखा शाश्वती नः पुनातु ॥ १६ ॥

पादाभिवन्दनकृते परमात्मनो नु
श्रीनाथपादकटकाकृतिमभ्युपेत्य ।
संलक्ष्यते किमयमद्य स चित्रभानु-
र्नो चेत् कुतोऽस्य विभुविष्णुपदोपसेवा ॥ १७ ॥

जङ्घाद्वयी जगदधीशितुरस्य रम्या
जेतुः स्मरस्य जयकाहलिकायुगीव ।
आभाति चारुमणिनूपुरकान्तिचित्रा
यस्यां मनांसि यमिनां सततं रमन्ते ॥ १८ ॥

वृत्ता विचित्रवसुधारमणीनिजाङ्ग-
लावण्यदर्शनलसन्मणिदर्पणश्रीः ।
अद्यैव मे महदघौघतमिस्रमेषा
विश्वेशजानुयुगली शिथिलीकरोतु ॥ १९ ॥

सौन्दर्यसम्पदुदयाकुलपारिजातौ
संवीतपीतवसनौ सदृशाविमौ तौ ।
नीलारमावसुमतीनियतोपधाने
नेतुः श्रियः श्रयतु मे मतिरूरुकाण्डौ ॥ २० ॥

आबद्धपीतवसना नवरत्नकाञ्ची-
संवेष्टिता कटितटी कमलाधिपस्य ।।
पर्यन्तहाटकमहीव लसद्विचित्र-
रत्नद्युतिः स्फुरति सेयमिहाञ्जनाद्रेः ॥ २१ ॥

रम्या रमारमणनाभिरसौ गभीरा
राजीवजन्मजननी जगतां विधात्री ।
तद्देहकान्तियमुनासरितोऽद्भुतश्री-
रावर्तविभ्रममितो विदधाति नूनम् ॥ २२ ॥

वक्षःस्थलीविहरदम्बुधिकन्यकाया
हस्तोच्चलत्कमलरेणुकरम्बितेन ।
लिप्तं विभाति वपुरस्य सुचन्दनेन
बालातपारुणमिवाग्रतटं महाद्रेः ॥ २३ ॥

आनीलभासुरविशालभुजान्तराल-
व्योमस्फुरत्पृथुलमौक्तिकहारनद्याः ।
हेमाब्जपङ्क्तिरिव कौस्तुभकान्तिरेखा
श्रीवत्सदीधितिचलन्मधुपालिरस्य ॥ २४ ॥

शङ्खं शशाङ्कधवलाङ्गमसौ दधानो
वामे सदा करतले वरदानहस्तः ।
संलक्ष्यते खलु लसन्निजकन्धरस्य
साम्यं परीक्षितुमिवास्य च कण्ठदघ्नम् ॥ २५ ॥

हस्ताम्बुजेन विधृतं विमलं रथाङ्ग-
मालोक्यते जलधिजाधिपतेरमुष्य ।
यद्दक्षिणेन नवनीरदनीलकान्ते-
रर्कस्य मण्डलमिवोदयशैलमूर्ध्नी ॥ २६ ॥

कस्तूरिकाकलितचारुकलङ्कभाजो
मन्दस्मितद्युतिभराकुलचन्द्रिकस्य ।
चन्द्रस्य चास्य मुखचन्द्रमसः कलाभिः
पूर्णस्य कः सततमत्र वदेत साम्यम् ॥ २७ ॥

आलोमनीलकुटिलालकजालतूल-
जीमूतपङ्क्तिपरिवेष्टितमूलभागः ।
संलक्ष्यते मुररिपोर्मणिमौलिरेष
भास्वत्कराक्रमितमूर्तिरिवाद्रिराजः ॥ २८ ॥

तत्तादृक्धृतशार्ङ्गचापरुचिरो वक्षःस्थलक्ष्मीतटि-
त्कारुण्यामृतवृष्टिरद्भुतदरध्वानातिभीमारवः ।
मुक्ताहारबलाकसन्ततियुतो मूर्ध्न्यञ्जनक्ष्माभृतः
पुण्यश्रीर्वनमालया विजयते श्रीविष्णुकालाम्बुदः ॥ २९ ॥

हस्तोदञ्चितशङ्खचक्ररुचिभिः सर्वाः समुद्भासयन्
आशास्तादृगनर्घ्यरत्नरुचितैराकल्पितो भूषणैः ।
अग्रे काञ्चनमौलिकुण्डललसत्केयूरहारादिभि-
र्भाति श्रीगिरिनायकः सह मया पूर्णेन्दुबिम्बाननः ॥ ३० ॥

तं वन्दे तपनीयचेलमनघं ताराधिपार्केक्षणं
ताराजालविशुद्धमौक्तिकलसन्मालाभिरामोरसम् ।

श्रुत्यन्तप्रतिपाद्यनैजचरितः श्रीमान् दयावारिधिः
श्रीशैलाग्रनिकेतनः श्रितपरित्रातेति यो विश्रुतः ॥ ३१ ॥

श्रीमन्मीनशरीर मामव महाकूर्माङ्ग कोलाकृते
पाहि श्रीनरसिंह वामनतनो विष्णो दयावारिधे ।
भास्वद्भार्गवराम राघव कृपामूर्ते हलिन् माधव
श्रीकृष्णाखिललोकनाथ सहसा कल्किन् मुरारे विभो ॥ ३२ ॥

त्राहि त्राहि दयानिधे झटिति मां दारिद्र्यनक्राननाद्-
दन्तस्तीव्रऋणाख्यदन्तनिकरैरापीडिताङ्गं सदा ।
पद्माकामुक पादयोर्निपतितं पद्माक्ष ते त्वं जवा-
न्नो चेत् का गतिरत्र मे त्रिजगतां मध्ये त्वदन्या विभो ॥ ३३ ॥

नक्रग्रस्तपदः स नाथ करिराडाक्रुश्य मूलेति न
त्रातः किं भवता त्रिलोकपतिना तूर्णं समागच्छता ।
हा कृष्णेत्यवमानितामपि परैरग्रे कुरूणां मुहुः
क्रोशन्तीं सहसा ररक्ष भुवि कः कृष्णां त्वदन्यस्तु ताम् ॥ ३४ ॥

ख्यातिः खल्विह पर्यपालय इति हि त्वं राममूर्तिः पुरा
श्रीमन् वालिनिरस्तमात्मसचिवैरन्यं वनान्तं गतम् ।
दीनं दीनशरण्य साधु सहसा सुग्रीवमाश्वास्य तं
राज्यस्थं कलयन्निहत्य तदरिं चात्मार्थसिद्धिच्छलात् ॥ ३५ ॥

एवंप्राया महात्मन्निरवधिकदयासिन्धुना बन्धुना न
त्राता भीता जगत्यां कति कति विविधोपद्रवाद्देहभाजः ।
लोकस्यास्य त्वया श्रीरमण तदहमप्येक एवाद्य तेषां
क्षिप्रं संरक्ष पापादनितरशरणं मामिमं त्वत्कटाक्षैः ॥ ३६ ॥

विस्मृत्यास्मत्कृतानि प्रतिजननमसत्कृत्यजालान्यमेया-
न्यद्य त्वंदीनबन्धो सकृदपि रचितामानतिं वा स्तुतिं वा ।
व्याजीकृत्य प्रसन्नो यदि मयि कृपया वर्तसे तत्तव स्या-
द्युक्तं खल्वन्यथा चेदनवधिकदयापारवश्यस्य नैव ॥ ३७ ॥

सद्यः प्रसीद जगदीश यथा भवेयं
दारिद्र्यदुःखऋणसङ्कटतो विमुक्तः ।
श्रीमन्नथ प्रणतरक्षक मां प्रपन्नं
संयोजयस्व समये भवदङ्घ्रि[का]भ्याम् ॥ ३८ ॥

रमाकान्त स्वान्तं रघुवर नितान्तं मदवशात्
परिभ्रान्तं पापोन्मुखमनिशमुन्मत्तचरितम् ।
निगृह्यैतत् क्षिप्रं निरवधिदयाब्धे मम भव-
त्पदाम्भोजद्वन्द्वे कलय चिरलीलापरवशम् ।। ३९ ।।

स्वधाम्नो वैकुण्ठादपि वरमिदं पन्नगगिरेः
शिरस्तुङ्गं श्रीमन्निति यदवतीर्णोऽसि रमया ।
सुयुक्तं तत्तस्मादपि गतवतो धन्विनगरं
हरे को वा लाभस्तव कथय गोदालयमिदम् ।। ४० ।।

ततः श्रीवैकुण्ठादपि सुभगमित्येतदधुना
मृषा शेषक्षोणीधरशिखरमभ्येत्य वससि ।
यदेतत् किन्तु श्रीरमण करुणासार भगवन्
मुदा गोदापाणिग्रहणकरणायैव नियतम् ।। ४१ ।।

वन्दे तमिन्दिराकान्तं मन्देतरकृपारसम् ।
इन्दीवरदलश्याममिन्दुबिम्बसदृङ्मुखम् ।। ४२ ।।
वेदं च शास्त्रमनवद्यमधीश लक्ष्म्याः
सत्यं कुरुष्व भव सत्यवचोऽग्रणीस्त्वम् ।
दत्त्वा क्षणेन मदभीप्सितमद्य शेष-
क्षोणीभृदीश विनतं कुरु मां कृतार्थम् ।। ४३ ।।

ग्रामारामक्षितिधनपशुव्रातभूषासुभृत्य-
स्थानीयाद्यैरिह बहुविधैः साधनैश्चानपेक्षम् ।
भूयो नित्यं जयति महदाराधनं यस्य शेष-
क्षोणीभर्तुः शिरसि वसतः श्रीधरं तं प्रपद्ये ।। ४४ ।।

तस्मादद्यैव लक्ष्मीपरिबृढ सहसा दुःसहां दुर्दशां मे
छित्त्वैमां वेङ्कटक्ष्माधरनिलय हरे पूर्वपापोपलब्धाम् ।
दत्त्वा मद्वाञ्छितार्थं सकलमपि बलादैहिकामुष्मिकाख्यं
भक्तिं पादाब्जयोस्ते भवदुरितगतिध्वंसिनीं रक्ष मां त्वम् ।। ४५ ।।

इति तातयार्यकविना विनिर्मिता
मितबुद्धिनापि कृपया मुरद्विषः ।
पठतामभीष्टफलदा सतामियं
मुदमातनोतु परमाधवस्तुतिः ।। ४६ ।।

।। इति श्रीपरमाधवस्तुतिः सम्पूर्णा ।।

## ८. ॥ अथ श्रीगौतमस्तोत्रम् ॥

जय सर्वार्थसच्छील जय सद्भोग्यसद्गुण ।
जय पन्नगपर्यङ्क जय पद्मायतेक्षण ॥ १ ॥

देवेश भिन्नदैत्याङ्ग देवषिध्यानदुर्ग्रह ।
दिव्यलोक दयासिन्धो श्रीरङ्गेश नमोऽस्तु ते ॥ २ ॥

देवदेव जगन्नाथ सर्वकारणकारण ।
सर्वाधार निराधार श्रीरङ्गेश नमोऽस्तु ते ॥ ३ ॥

श्रीधराश्रितसङ्कल्प [सर्वाभीष्टप्र]दायक ।
विष्णुरूप विचित्राङ्ग श्रीरङ्गेश नमोऽस्तु ते ॥ ४ ॥

विश्रृङ्खलगते तुभ्यं चिदचिद्वस्तुशेषिणे ।
स्थिरत्रयपते तुभ्यं श्रीरङ्गेश नमोऽस्तु ते ॥ ५ ॥

वेदाय वेदरूपाय वेदरूपधराय च
वेदवेदान्तवेद्याय श्रीरङ्गेश नमोऽस्तु ते ॥ ६ ॥

यज्ञाय यज्ञरूपाय यज्ञपूरुषरूपिणे ।
यज्ञाधाराय[यज्ञेश]श्रीरङ्गेश नमोऽस्तु ते ॥ ७ ॥

विश्वेश्वराय विश्वाय विश्वरूपधराय च ।
व्यस्त [व्यसन] हस्ताय श्रीरङ्गेश नमोऽस्तु ते ॥ ८ ॥

ब्रह्मेश्वराय ब्रह्माय ब्रह्ममूर्तिर्बृहस्पते ।
बृहस्पतिविदे तुभ्यं श्रीरङ्गेश नमोऽस्तु ते ॥ ९ ॥

शिवाय शिवरूपाय शिवत्राणपराय च ।
शिवाधाराय शान्ताय श्रीरङ्गेश नमोऽस्तु ते ॥ १० ॥

सर्वेश्वराय सर्वाय सर्वशास्त्रस्वरूपिणे ।
सर्वाराध्याय मेध्याय श्रीरङ्गेश नमोऽस्तु ते ॥ ११ ॥

अब्जौकाद्यमरेशाय सच्चिदानन्दरूपिणे ।
चिन्मात्ररूपिणे नित्यं श्रीरङ्गेश नमोऽस्ते ते ॥ १२ ॥

सर्वं शरीरं भवतः शरीरी त्वं रमापते ।
अतोऽत्र भिन्नः सर्वस्मात् श्रीरङ्गेश नमोऽस्तु ते ॥ १३ ॥

इति स्तुतो जगन्नाथो गौतमं रङ्गनायकः ।
स्तोत्रेणेत्थं कृतेनेह यः स्तोष्यति सदा नरः ।
यं यं कामयते कामं तं तमाप्नोत्यसंशयः ॥ १४ ॥

॥ इति गौतमस्तोत्र सम्पूर्णम् ॥

---

## ९. ॥ अथ श्रीदधिवामनस्तोत्रम् ॥

हेमाद्रिशिखराकारं शुद्धस्फटिकसंनिभम् ।
पूर्णचन्द्रनिभं देवं द्विभुजं वामनं स्मरेत् ॥ १ ॥

पद्मासनस्थं देवेशं चन्द्रमण्डलमध्यगम् ।
ज्वलत्कोटितटित्प्रख्यं तटित्कोटिसमप्रभम् ॥ २ ॥

सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
चन्द्रमण्डलमध्यस्थं विष्णुमव्ययमच्युतम् ॥ ३ ॥

श्रीवत्सकौस्तुभोरस्कं दिव्यरत्नविभूषितम् ।
पीताम्बरमुदाराङ्गं वनमालाविभूषितम् ॥ ४ ॥

सुन्दरं पुण्डरीकाक्षं किरीटेन विराजितम् ।
षोडशस्त्रीवृतं सम्यगप्सरोगणसेवितम् ॥ ५ ॥

ऋग्यजुस्सामाथर्वाद्यैर्गीयमानं जनार्दनम् ।
चतुर्मुखादिदेवेशैर्गीयमानं मुदा सदा ॥ ६ ॥

दधिमिश्रान्नकबलं रुक्मपात्रं च दक्षिणे ।
करे तु चिन्तयेद् ध्यायेत्पीयूषममृतं सुधीः ॥ ७ ॥

साधकानां प्रयच्छन्तमन्नपानमनुत्तमम् ।
ब्राह्मे मुहूर्त उत्थाय ध्यायेद्ध्येयमधोक्षजम् ॥ ८ ॥

अत्रपुमलगात्रं रुक्मपात्रस्थमन्नं
सकलशदधिखण्डं पणिना दक्षिणेन ।
कलशममृतपूर्णं वामहस्ते दधानं
तरति सकलदुःखाद्वा[खं वा]मनं भावयेद्यः ॥ ९ ॥

अन्नदाता भवेदन्नं अन्नमन्नाद एव च ।
क्षीरमन्नं घृतं चैव आयुरारोग्यमेव च ॥ १० ॥

पुरस्तादन्नमाप्नव्यं पुनरावृत्तिवर्जितम् ।
आयुरारोग्यमैश्वर्यं लभते चान्नसम्पदम् ॥ ११ ॥

एवं स्तोत्रं पठेद्यस्तु प्रातः काले द्विजोत्तमः ।
अक्लेशादन्नसिद्ध्यर्थं ज्ञानसिद्ध्यर्थमेव च ॥ १२ ॥

॥ इति श्रीवामनपुराणे श्रीदधिवामनस्तोत्रं सम्पूर्णम् ॥

---

## १०. ॥ अथ श्रीमधुसूदनस्तोत्रम् ॥

शरणं भव करुणां मयि कुरु दीनदयालो
करुणारसवरुणालय करिराजकृपालो ।
अधुना खलु विधिना मयि सुधिया सुरफलितं
मधुसूदन मधुसूदन हर मामकदुरितम् ॥ १ ॥

घृणिमण्डलमणिकुण्डलफणिमण्डपशयन
अणिमादिसुगुणभूषण मणिमण्डपसदन ।
विनतासुतघनवाहन मुनिमानसभवन
मधुसूदन मधुसूदन हर मामकदुरितम् ॥ २ ॥

करनूपुरधर सुन्दर करशोभितवलय
सुरभूसुरभयवारक धरणीधर कृपया ।
त्वरया हर भवमीश्वर सुरवन्दितवीर्य
मधुसूदन मधुसूदन हर मामकदुरितम् ॥ ३ ॥

हरिशीकर[अरिभीकर]हरसोदर [हरसंस्तुत] परिपूर्ण सुधाब्धे
नरकान्तक नरपालक परिपालितजलधे ।
हरिसेवकनारायणवरतीर्थपरात्मन्
मधुसूदन मधुसूदन हर मामकदुरितम् ॥ ४ ॥

॥ इति श्रीमधुसूदनस्तोत्रं सम्पूर्णम् ॥

---

## ११. ॥ अथ श्रीमहापुरुषचरणारविन्दस्तोत्रम् ॥

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥ १ ॥

शोणारविन्दकलशध्वजकल्पकादि-
मीनातपत्रमकराङ्कुशवज्रशङ्खैः ।
यच्चिह्नितं परमयोगिमुनीन्द्रसेव्यं
वन्दे महापुरुष ते चरणारविन्दम् ॥ २ ॥

मुक्तिप्रदं परमयोगिमुनीन्द्रसेव्यं
तापत्रयानलनिवारणमादिभूतम् ।
बृन्दावनस्थलविहारविनोदलीलं
वन्दे महापुरुष ते चरणारविन्दम् ॥ ३ ॥

विन्यस्तमस्तमथ शस्तसमस्त-
कल्याणवैभवसुधास्पदमास[माशु]गम्यम् ।
मन्दाकिनीजननकारणहेतुभूतं
वन्दे महापुरुष ते चरणारविन्दम् ॥ ४ ॥

यत्कालियोरगफणामणिरत्नशोणं
गोपाङ्गनाकरसरोरुहयोगयोग्यम् ।
नानाविधश्रुतितिलतोत्पलमूलकन्दं
वन्दे महापुरुष ते चरणारविन्दम् ॥ ५ ॥

इति श्रीमहापुरुषचरणारविन्दस्तोत्रं सम्पूर्णम्

---

## १२. ॥ अथ श्रीशुकस्तुतिः ॥

श्रीशुकः—

नमः परस्मै पुरुषाय भूयसे
सदुद्भवस्थाननिरोधलीलया ।
गृहीतशक्तित्रितयाय देहिना-
मन्तर्भवायानुपलक्ष्यवर्तिने ॥ १ ॥

भूयो नमः सद्वृजिनच्छिदे सता-
मसम्भवायाखिलसत्त्वमूर्तये ।
पुंसां मुहुः पारमहंस्य आश्रमे
व्यवस्थितानामनुमृश्य दाशुषे ॥ २ ॥

नमो नमस्तेऽस्त्वृषभाय सात्त्वतां
विदूरकाष्ठाय मुहुः [च]योगिनाम् ।
निरस्तसाम्यातिशयेन राधसा
स्वधामनि ब्रह्मणि रंस्यते नमः ॥ ३ ॥

यत्कीर्तनं यत्स्मरणं यदीक्षणं
यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं
तस्मै सुभद्रश्रवसे नमो नमः ॥ ४ ॥

विचक्षणा यच्चरणोपसाधनात्
सङ्गं व्युदस्योभयतोऽन्तरात्मनः ।
विन्दन्ति हि ब्रह्मगतिं गतक्लमाः
तस्मै सुभद्रश्रवसे नमो नमः ॥ ५ ॥

तपस्विनो दानपरा यशस्विनो
मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति विना यदर्पणं
तस्मै सुभद्रश्रवसे नमो नमः ॥ ६ ॥

किरातहूणान्ध्रपुलिन्दपुल्कसा
आभीरकङ्का यवनाः कषादाः ।
येऽन्ये च पापा यदपाश्रयाश्रयाः
शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥ ७ ॥

स एष आत्मात्मवतामधीश्वर
त्रयीमयो धर्ममयस्तपोमयो ।
गतव्यलीकैरजशङ्करादिभि-
र्वितर्क्यलिङ्गो भगवान् प्रसीदतु ॥ ८ ॥

श्रियः पतिर्यज्ञपतिः प्रजापति-
र्धियां पतिर्लोकपतिर्धरापतिः ।
पतिर्गतिश्चान्धकवृष्णिसात्वतां
प्रसीदतां मे भगवान् सतां पतिः ॥ ९ ॥

॥ इति श्रीशुकस्तुतिः सम्पूर्णा ॥

## १३. ॥ अथ श्रीविष्णुस्तवराजः ॥

जनमेजय उवाच—

शरतल्पे शयानस्तु भरतानां पितामहः ।
कथमुत्सृष्टवान् देहं कं च योगमधारयत् ॥ १ ॥

वैशम्पायन उवाच—

शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः ।
भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः ॥ २ ॥

प्रवृत्तमात्रे त्वयन उत्तरे वै दिवाकरे ।
शुक्लपक्षस्य चाष्टम्यां माघमासस्य पार्थिव ॥ ३ ॥

प्राजापत्ये च नक्षत्रे मध्यं प्राप्ते दिवाकरे ।
समावेशयदात्मानमात्मन्येव समाहितः ॥ ४ ॥

विकीर्णांशुरिवादित्यो भीष्मः शितशरैश्चितः ।
शिश्ये परमया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ॥ ५ ॥

व्यासेन वेदविदुषा नारदेन सुरर्षिणा ।
देवरातेन वात्सेन तथा श्येनसुमन्तुना ॥ ६ ॥

तथा जैमिनिना चैव पैलवेन महात्मना ।
शाण्डिल्यदेवलाभ्यां च मैत्रेयेण च धीमता ॥ ७ ॥

असितेन वसिष्ठेन कौशिकेन महात्मना ।
हरीतरोमशाभ्यां च तथात्रेयेण धीमता ॥ ८ ॥

बृहस्पतिश्च शुक्रश्च च्यवनश्च महामुनिः ।
सनत्कुमारकपिलौ वाल्मीकिस्तुम्बुरुः कुरुः ॥ ९ ॥

मौद्गल्यो भार्गवो रामस्तृणबिन्दुर्महामुनिः ।
पिप्पलादश्च वायुश्च संवर्तः पुलहः कचः ॥ १० ॥

काश्यपश्च पुलस्त्यश्च क्रतुर्दक्षः पराशरः ।
मरीचिरङ्गिराः कण्वो गौतमो गालवो मुनिः ॥ ११ ॥

धौम्यो विभाण्डो माण्डव्यो धौम्रकृष्णानुभौतिकः ।
उलूकः परमो विप्रो मार्कण्डेयो महामुनिः ॥ १२ ॥

भास्करः पूरणः कृष्णः सूतः परमधार्मिकः ।
शैब्येन याज्ञवल्क्येन शङ्खेन लिखितेन च ॥ १३ ॥

एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः ।
श्रद्धादमपुरस्कारैर्वृतश्चन्द्र इव ग्रहैः ॥ १४ ॥

भीष्मस्तु पुरुषव्याघ्रः कर्मणा मनसा गिरा ।
शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलिः शुचिः ॥ १५ ॥

स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनम् ।
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ॥ १६ ॥

कृताञ्जलिः शुचिर्भूत्वा वाग्विदां प्रवरः प्रभुः ।
भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ॥ १७ ॥

भीष्म उवाच—

आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् ।
तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः ॥ १८ ॥

शुचिं शुचिपदं हंसं तत्पदं परमेष्ठिनम् ।
युक्त्वा सर्वात्मनात्मानं तं प्रपद्ये प्रजापतिम् ॥ १९ ॥

अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः ।
एकोऽयं वेद भगवान् धाता नारायणो हरिः ॥ २० ॥

नारायणादृषिगणास्तथा सिद्धमहोरगाः ।
देवा देवर्षयश्चैव यं विदुः परमव्ययम् ॥ २१ ॥

देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
यं न जानन्ति को ह्येष कुतो वा भगवानिति ॥ २२ ॥

यस्मिन् विश्वानि भूतानि तिष्ठन्ति च विशन्ति च ।
गुणीभूतानि भूतेशे सूत्रे मणिगणा इव ॥ २३ ॥

यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति ।
सदसद्ग्रथितं विश्वं विश्वगे विश्वकर्मणि ॥ २४ ॥

हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ।
सहस्रबाहुमुकुटं सहस्रवदनोज्ज्वलम् ॥ २५ ॥

प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ।
अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ॥ २६ ॥

गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ।
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ॥ २७ ॥

गृणन्ति सर्वकर्माणं सत्वं सत्येषु सामसु ।
चतुर्भिश्चतुरात्मानं सत्वस्थं सात्त्वतां पतिम् ॥ २८ ॥

यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः ।
यस्मिन्नित्यं तपस्तप्तं यदङ्गेष्वनुतिष्ठति ॥ २९ ॥

सर्वात्मा सर्ववित् सर्वः सर्वगः सर्वभावनः ।
यं देवं देवकी देवी वसुदेवादजीजनत् ॥ ३० ॥

भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः ।
यमनन्यो व्यपेताशिरात्मानं वीतकल्मषम् ॥ ३१ ॥

इष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मानमात्मनि ।
अतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसम् ॥ ३२ ॥

अतिबुध्दीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् ।
पुराणे पुरुषं प्रोक्तं ब्रह्म प्रोक्तं युगादिषु ॥ ३३ ॥

क्षये संकर्षणं प्रोक्तं तमुपास्यमुपास्महे ।
यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजम् ॥ ३४ ॥

नान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम् ।
यं प्राहुर्जगतः कोशं यस्मिन् संविहिताः प्रजाः ॥ ३५ ॥

यस्मिन् लोकाः स्फुरन्तीमे जले शकुनयो यथा ।
ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतः परम् ॥ ३६ ॥

अनादिमध्यपर्यन्तं न देवा नर्षयो विदुः ।
यं सुरासुरगन्धर्वससिद्धर्षिमहोरगाः ॥ ३७ ॥

प्रयता नित्यमर्चन्ति परमं दुःखभेषजम् ।
अनादिनिधनं देवमात्मयोनिं सनातनम् ॥ ३८ ॥

अप्रतर्क्यमविज्ञेयं हरिं नारायणं प्रभुम् ।
यं वै विश्वस्य कर्तारं जगतस्तस्थुषां पतिम् ॥ ३९ ॥

वदन्ति जगतोऽध्यक्षमक्षरं परमं पदम् ।
हिरण्यवर्णं यं गर्भमदितेर्दैत्यनाशनम् ।
एकं द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः ॥ ४० ॥

शुक्ले देवान् पितॄन् कृष्णे तर्पयत्यमृतेन यः ।
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः ॥ ४१ ॥

महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ ४२ ॥

यं बृहन्तं बृहत्युक्थ्ये यमग्नौ यं महाध्वरे ।
यं विप्रसङ्घा गायन्ति तस्मै वेदात्मने नमः ॥ ४३ ॥

ऋग्यजुस्सामधामानं दशार्धं हविरात्मकम् ।
यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः ॥ ४४ ॥

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः ॥ ४५ ॥

यः सुपर्णो यजुर्नाम च्छन्दोगात्रस्त्रिवृच्छिराः ।
रथन्तरबृहत्पक्षस्तस्मै स्तोत्रात्मने नमः ॥ ४६ ॥

यः सहस्रसवे सत्रे जज्ञे विश्वसृजामृषिः ।
हिरण्यवर्णः शकुनिः तस्मै तार्क्ष्यात्मने नमः ॥ ४७ ॥

पदाङ्गं सन्धिपर्वाणं स्वरव्यञ्जनभूषणम् ।
यमाहुश्चाक्षरं नित्यं तस्मै वागात्मने नमः ॥ ४८ ॥

यज्ञाङ्गो यो वराहो वै भूत्वा गामुज्जहार ह ।
लोकत्रयहितार्थाय तस्मै वीर्यात्मने नमः ॥ ४९ ॥

यः शेते योगमास्थाय पर्यङ्के नागभूषिते ।
फणासहस्ररचिते तस्मै निद्रात्मने नमः ॥ ५० ॥

यश्चिनोति सतां सेतुमृतेनामृतयोनिना ।
धर्मार्थं व्यवहारार्थं तस्मै सत्यात्मने नमः ॥ ५१ ॥

यं पृथग्धर्मचरणाः पृथग्धर्मफलेषिणः ।
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥ ५२ ॥

यतः सर्वे प्रसूयन्ते ह्यनङ्गात्माङ्गदेहिनः (?) ।
उन्मादः सर्वभूतानां तस्मै कामात्मने नमः ॥ ५३ ॥

यं तं व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः ।
क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥ ५४ ॥

यं त्रिधात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ।
प्राहुः सप्तदशं साङ्ख्यास्तस्मै साङ्ख्यात्मने नमः ॥ ५५ ॥

यं विनिद्राजितश्वासाः शान्ता दान्ता जितेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ५६ ॥

अपुण्यपुण्यः परमे यं पुनर्भवनिर्भयाः ।
शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ ५७ ॥

योऽसौ युगसहस्रान्ते प्रदीप्तार्चिर्विभावसुः ।
संक्षोभयति भूतानि तस्मै घोरात्मने नमः ॥ ५८ ॥

संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् ।
बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥ ५९ ॥

अजस्य नाभ्यां संभूतं यस्मिन् विश्वं प्रतिष्ठितम् ।
पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ॥ ६० ॥

सहस्रशिरसे चैव पुरुषायामितात्मने ।
चतुस्समुद्रपर्यङ्के योगनिद्रात्मने नमः ॥ ६१ ॥

यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ ६२ ॥

यस्मात् सर्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः ।
यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः ॥ ६३ ॥

यो निषण्णो भवेद्रात्रौ दिवा भवति विष्ठितः ।
इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्ट्रात्मने नमः ॥ ६४ ॥

अकुण्ठं सर्वकार्येषु धर्मकार्यार्थमुद्यतम् ।
वैकुण्ठस्य हि तद्रूपं तस्मै कार्यात्मने नमः ॥ ६५ ॥

विभज्य पञ्चधात्मानं वायुर्भूतशरीरगः ।
यश्चेष्टयति भूतानि तस्मै वाय्वात्मने नमः ॥ ६६ ॥

ब्रह्म वक्त्रं भुजौ क्षत्त्रं कृत्स्नमूरूदरं विशः ।
पादौ यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः ॥ ६७ ॥

युगेष्वावर्तते योगैर्दिनर्त्वयनहायनैः ।
सर्गप्रलययोः कर्ता तस्मै कालात्मने नमः ॥ ६८ ॥

यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ॥ ६९ ॥

विषये वर्तमानो यं तं वैशेषिकनिर्गुणैः ।
प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ॥ ७० ॥

अन्नपानेन्धनमयो रसप्राणविवर्धनः ।
यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥ ७१ ॥

प्राणानां धारणार्थाय योऽन्नं भुङ्क्ते चतुर्विधम् ।
अन्तर्भूतः पचत्यग्निस्तस्मै पाकात्मने नमः ॥ ७२ ॥

पिङ्गेक्षणसटं यस्य रूपं दंष्ट्रानखायुधम् ।
दानवेन्द्रान्तकरणं तस्मै दृप्तात्मने नमः ॥ ७३ ॥

रसातलगतः श्रीमाननन्तो भगवान् विभुः ।
जगद्धारयते कृत्स्नं तस्मै वीर्यात्मने नमः ॥ ७४ ॥

यो मोहयति भूतानि स्नेहपाशानुबन्धनैः ।
सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः ॥ ७५ ॥

सुतलातलमध्यस्थो हत्वा तु मधुकैटभौ ।
उद्धृता येन वै वेदास्तस्मै मत्स्यात्मने नमः ॥ ७६ ॥

ससागरनगां बिभ्रत् सप्तद्वीपां वसुन्धराम् ।
यो धारयति पृष्ठेन तस्मै कूर्मात्मने नमः ॥ ७७ ॥

एकार्णवे हि मग्नां तां वाराहं रूपमास्थितः ।
उद्धार महीं योऽसौ तस्मै क्रोडात्मने नमः ॥ ७८ ॥

नारसिंहवपुः कृत्वा यस्त्रैलोक्यभयङ्करम् ।
हिरण्यकशिपुं जघ्ने तस्मै सिंहात्मने नमः ॥ ७९ ॥

वामनं रूपमास्थाय बलिं संयम्य मायया ।
इमे क्रान्तास्त्रयो लोकास्तस्मै क्रान्तात्मने नमः ॥ ८० ॥

जमदग्निसुतो भूत्वा रामः परशुधृत् प्रभुः ।
सहस्रार्जुनहन्तैव तस्मा उग्रात्मने नमः ॥ ८१ ॥

रामो दाशरथिर्भूत्वा पौलस्त्यकुलनन्दनम् ।
जघान रावणं सङ्ख्ये तस्मै क्षत्त्रात्मने नमः ॥ ८२ ॥

वसुदेवसुतः श्रीमान् वासुदेवो जगत्पतिः ।
जहार वसुधाभारं तस्मै कृष्णात्मने नमः ॥ ८३ ॥

बुद्धरूपं समास्थाय सर्वधर्मपरायणः ।
मोहयन् सर्वभूतानि तस्मै मोहात्मने नमः ॥ ८४ ॥

हनिष्यति कलेरन्ते म्लेच्छांस्तुरगवाहनः ।
धर्मसंस्थापनार्थाय तस्मै कल्क्यात्मने नमः ॥ ८५ ॥

आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितः ।
यं ज्ञानेनाधिगच्छन्ति तस्मै ज्ञानात्मने नमः ॥ ८६ ॥

अप्रमेयशरीराय सर्वतो बुद्धिचक्षुषे ।
अपारपरमेयाय तस्मै दिव्यात्मने नमः ॥ ८७ ॥

जटिने दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ ८८ ॥

शूलिने त्रिदशेशाय त्र्यम्बकाय महात्मने ।
भस्मदिग्धोर्ध्वलिङ्गाय तस्मै रुद्रात्मने नमः ॥ ८९ ॥

चन्द्रार्धकृतशीर्षाय व्यालयज्ञोपवीतिने ।
पिनाकशूलहस्ताय तस्मा उग्रात्मने नमः ॥ ९० ॥

पञ्चभूतात्मभूताय भूतादिनिधनाय च ।
अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥ ९१ ॥

यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः ॥ ९२ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव ।
अपवर्गस्थ भूतानां पञ्चानां पुरतः स्थित ॥ ९३ ॥

नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
नमस्ते दिक्षु सर्वासु त्वं हि सर्वमयो निधिः ॥ ९४ ॥

नमस्ते भगवन् विष्णो लोकानां प्रभवाप्ययम् ।
त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः ॥ ९५ ॥

तेन पश्यामि भगवन् दिव्येषु त्रिषु वर्त्मसु ।
तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ॥ ९६ ॥

दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा ।
विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः ॥ ९७ ॥

दिशो भुजा रविश्चक्षुर्वीर्यं शुक्रः प्रजापतिः ।
सप्तमार्गा निरुद्धास्ते वायोरमिततेजसः ॥ ९८ ॥

अतसीपुष्पसङ्काशं पीतकौशेयवाससम् ।
नमस्यन्ति च गोविन्दं न तेषां विद्यते भयम् ॥ ९९ ॥

नमो नरकसंत्रासरक्षामण्डलकारिणे ।
संसारनिम्नगावर्ततरिकाष्ठाय विष्णवे ॥ १०० ॥

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ १०१ ॥

प्राणकान्तारपाथेयं संसारच्छेदभेषजम् ।
दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम् ॥ १०२ ॥

यथा विष्णुमयं सत्यं यथा विष्णुमयं जगत् ।
यथा विष्णुमयं सर्वं पापं मे नश्यतां तथा ॥ १०३ ॥

त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्षं तं ध्यायस्व सुरेश्वरम् ॥ १०४ ॥

इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ।
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥ १०५ ॥

नारायणं परं ब्रह्म नारायणपरं तपः ।
नारायणपरं चेदं सर्वं नारायणात्मकम् ॥ १०६ ॥

वैशम्पायन उवाच—

एतावदुक्त्वा वचनं भीष्मस्त्वाद्दतमानसः ।
नम इत्येव कृष्णाय प्रणाममकरोत्तदा ॥ १०७ ॥

अधिगम्य तु योगेन भक्तिं भीष्मस्य माधवः ।
त्रैलोक्यदर्शनं ज्ञानं दिव्यं दत्त्वा ययौ हरिः ॥ १०८ ॥

तस्मिन्नुपरते शब्दे ततस्ते ब्रह्मवादिनः ।
भीष्मं वाग्भिर्बाष्पकण्ठास्तमानर्चुर्महामतिम् ॥ १०९ ॥

ते स्तुवन्तश्च विप्राग्र्याः केशवं पुरुषोत्तमम् ।
भीष्मं च शनकैः सर्वे प्रशशंसुः पुनः पुनः ॥ ११० ॥

यं योगिनः प्राणविमोक्षकाले
यत्नेन चित्ते विनिवेशयन्ति ।
साक्षात्पुरस्ताद्धरिमीक्षमाणः
प्राणान् जहौ प्राप्तकालो हि भीष्मः ॥ १११ ॥

शुक्लपक्षे दिवा भूमौ गङ्गायां चोत्तरायणे ।
धन्यास्तात मरिष्यन्ति हृदयस्थे जनार्दने ॥ ११२ ॥

विदित्वा भक्तियोगं तु भीष्मस्य पुरुषोत्तमः ।
सहसोत्थाय सन्तुष्टो यानमेवान्वपद्यत ॥ ११३ ॥

केशवः सात्यकिश्चैव रथेनैकेन जग्मतुः ।
अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ ॥ ११४ ॥

भीमसेनो यमौ चोभौ रथमेकं समास्थिताः ।
कृपो युयुत्सुः सूतश्च सञ्जयश्चापरं रथम् ॥ ११५ ॥

तै रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः ।
नेमिघोषेण महता कम्पयन्तो वसुन्धराम् ॥ ११६ ॥

ततो गिरः पुरुषवरैः स्तवान्विता
द्विजेरिताः पथि सुमनाः सुशुश्रुवे ।
कृताञ्जलिं प्रणतमथापरं जनं
स केशिहा मुदितमनाभ्यनन्दत ॥ ११७ ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
धर्माध्यक्षं स्तुवन्नित्यं सर्वपापैः प्रमुच्यते ॥ ११८ ॥

इमं स्तवं यः पठति शार्ङ्गधन्वनः
शृणोति वा भक्तिसमन्वितो जनः ।
स चक्रधृत् प्रतिहतदग्धकल्मषो
जनार्दनं प्रविशति देहसंक्षये ॥ ११९ ॥

अशनिशितसुधारं यस्य चक्रं सुचारु
मणिकनकविचित्रे कुण्डले यस्य कर्णे ।
भ्रमरशतसहस्रैः सेविता यस्य माला
असुरकुलनिहन्ता प्रीयतां वासुदेवः ॥ १२० ॥

स्तवराजः समाप्तोऽयं विष्णोरद्भुतकर्मणः ।
गाङ्गेयेन पुरा गीतो महापातकनाशनः ॥ १२१ ॥

श्रीभगवानुवाच—

यः पठेत इदं स्तोत्रं मम जन्मानुकीर्तनम् ।
देवलोकमतिक्रम्य तस्य लोको यथा मम ॥ १२२ ॥

॥ इति श्रीविष्णुस्तवराजः सम्पूर्णः ॥

---

## १४. ॥ अथ श्रीसुदर्शनस्तोत्रम् ॥

श्रीमन्नारायणं देवं ब्रह्मरुद्रादिवन्दितम् ।
सर्वलोकनियन्तारं नमामि पुरुषोत्तमम् ॥ १ ॥

श्रीमद्रामानुजाचार्यपौत्रस्तत्पादसंश्रितः ।
श्रीरङ्गार्यगुरोः पुत्रः श्रीरामाह्वयदेशिकः ॥ २ ॥

श्रीवाधूलकुलोद्भूतस्तप्तचक्रविधायकम् ।
स्तोत्रं सौदर्शनं चक्रे वेदवेदान्तगोचरम् ॥ ३ ॥

पवित्रं त इति प्रोक्तं वेदेषु त्रिषु च स्थितम् ।
चरणं तैत्तिरीये तु... ... ... ... ... ... ॥ ४ ॥

लोकस्य द्वारमित्येतद्वाक्यं तत्रैव चोदितम् ।
चमूषु चेति यद्वाक्यं तत्रोक्तमृचि साम्नि च ॥ ५ ॥

मैत्रावरुणशाखायां पठ्यते सुमहात्मभिः ।
चक्रं बिभर्तीत्यृग्वेदे खिले सम्यक् प्रकीर्तितम् ॥ ६ ॥

अथर्वणोपनिषदि ह्येभिर्वयमिति स्मृतम् ।
ऋचि पौष्कलशाखायां प्रतिविष्णो इतीरितम् ॥ ७ ॥

धृतोर्ध्वपुण्ड्रमिति यदथ शाखोदितं हि तत् ।
दक्षिणे त्विति यद्वाक्यं महोपनिषदि स्थितम् ॥ ८ ॥

वषट् इति च यद्वाक्यं कठवल्ल्यां तदीरितम् ।
तापनीये तु तं प्राप्तमिति मन्त्रमुदाहृतम् ॥ ९ ॥

यज्ञोपवीतीत्यारभ्य ये वा शून्यं त इत्यपि ।
सुदर्शनोपनिषदि वेदविद्भिस्तु पठ्यते ॥ १० ॥

तस्माद्ब्राह्मणवाक्यं तु श्वेताश्वतरचोदितम् ।
तत्रोपवीतादि पञ्च कथ्यते सुमहात्मभिः ॥ ११ ॥

कात्यायनेति होवाचेत्येवं शतपथेरितम् ।
तत्रैव कथितं चक्रं द्विभुजे धार्यमित्यपि ॥ १२ ॥

तत्रैव दशपर्यायैः कथितं चक्रधारणम् ।
देवास इति वाक्यं च तत्रैव परिकथ्यते ॥ १३ ॥

विवस्वत इति ह्येतद्वाक्यं तत्रैव संस्थितम् ।
चक्रमादायेति वाक्यं स्थितं यत्तदथर्वणे ॥ १४ ॥

तथैव पाञ्चजन्यं च पठ्यते वेदवित्तमैः ।
अग्निनेति तथा वाक्यं तत्रैव परिपठ्यते ॥ १५ ॥

इत्येवं तप्तचक्रस्य धारणं श्रुतिचोदितम् ।
तस्मात् सर्वप्रयत्नेन धार्यं मोक्षफलेप्सुभिः ॥ १६ ॥

ब्रह्मचारी गृही वानप्रस्थ इत्याश्रमैस्तथा ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चापि तथा परैः ॥ १७ ॥

अनुलोमैर्विलोमैश्च भक्तिश्रद्धासमन्वितैः ।
सुवासिनीभिर्नारीभिर्विधवाभिस्तथैव च ॥ १८ ॥

विष्णोः सुदर्शनं धार्यं वेदवेदान्तगोचरम् ।
इति सौदर्शनं स्तोत्रमकरोद्रामदेशिकः ॥ १९ ॥

॥ इति श्रीसुदर्शनस्तोत्रं सम्पूर्णम् ॥

---

## १५. ॥ अथ श्रीहर्यष्टकम् ॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ १ ॥

स गङ्गा स गया सेतुः स काशी स च पुष्करः ।
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ॥ २ ॥

वाराणस्यां कुरुक्षेत्रे नैमिशारण्य एव च ।
यत् कृतं तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ ३ ॥

पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
तानि सर्वाण्यशेषाणि हरिरित्यक्षरद्वयम ॥ ४ ॥

गवां कोटिसहस्राणि हेमकन्यासहस्रकम् ।
दत्तं स्यात्तेन येनोक्तं हरिरित्यक्षरद्वयम ॥ ५ ॥

अश्वमेधैर्महायज्ञैर्नरमेधैस्तथैव च ।
इष्टं स्यात्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ ६ ॥

ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ ७ ॥

प्राणप्रयाणपाथेयं संसारव्याधिनाशनम् ।
दुःखात्यन्तपरित्राणं हरिरित्यक्षरद्वयम् ॥ ८ ॥

बद्धः परिकरस्तेन मोक्षाभिगमनं प्रति ।
सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् ॥ ९ ॥

प्रह्लादेन कृतं स्तोत्रं दुःखसागरशोषणम् ।
यः पठेत् स नरो याति तद्विष्णोः परमं पदम् ॥ १० ॥

हर्यष्टकमिदं पुण्यं प्रातरुत्थाय यः पठेत् ।
आयुष्यं बलमारोग्यं यशोवृद्धिं श्रियावहम् [श्रियं वहेत्] ॥ ११ ॥

॥ इति प्रह्लादकृतं श्रीहर्यष्टकं सम्पूर्णम् ॥

---

## १६. ॥ अथ श्रीमृन्नाथस्तोत्रम् ॥

श्रीमत[भू]समेत मृद्धीश हरे मुरारे
पादाम्बुजं विजयते परमाद्भुतं ते ।
यस्मिन् जना दृढतरात्मनिबन्धनेन
मुक्तिं प्रयान्ति सुनिरस्तसमस्तबन्धाः ॥ १ ॥

रूपाणि ते बहुविधानि विभो भवन्ती-
त्याहुः परापरविदो मुनयः शुकाद्याः ।
तेष्वेकमप्यलमबोधहताशयानाम्
अस्मादृशां नयनयोरयनं न याति ॥ २ ॥

यद्रूपदर्शनसुखानुबुभूषुलोकान्
उच्चैस्तरामनुजिघृक्षुरुपात्तहार्दः ।
हित्वा पयोजलनिधिं युतमृन्निकेतम्
अध्यूषिवानसि विभो प्रतिमामिषेण ॥ ३ ॥

तत्ते वपुर्भुवनचारु निरीक्ष्य कर्तुं
निष्पापतां वसुवतां (?) च मया न शक्यम् ।
प्राग्जन्मनिर्मितशुभेतरकर्मणा य-
द्भाग्यागतैः सुदृढसंघटितः कवाटः ॥ ४ ॥

अन्यानि पापशमनानि सुखावहानि
कर्माणि सन्त्यलमपेक्षितसाधनानि ।
तेषां विधिः पटुतरैरपि यत्नसाध्यः
कायं क वा विवशभावमुपागतोऽहम् ॥ ५ ॥

त्वद्रूपवर्णनमघान्तसुखाप्तिहेतुः
पुंसां भवेद्भुवि यथामतिवाग्विलासम् ।

इत्याहुराप्तवचसस्तदहं यतिष्ये
तत्कर्तुमत्र मयि धेहि कृपाकटाक्षम् ॥ ६ ॥

नाथ त्वदीयमकुटद्युतिनिर्जितोऽसौ
शोकातिरेकवहनेन भिदेलिमात्मा ।
भानोर्गभस्तिरुपयाति सहस्रतां यत्
तेनाभिधीयत इहैष सहस्रधामा ॥ ७ ॥

विश्रामरेश्वरनिरन्तरसन्निधान-
स्थानस्य हेममयभूमिधराधिपस्य ।
शश्वत्प्रदक्षिणमसौ विदधाति भानु-
र्देव त्वदुज्ज्वलकिरीटरुचः प्रलोभात् ॥ ८ ॥

प्रद्योतनः प्रतिदिनं भवतः किरीट-
द्युत्याग्रहाद्वसुगणान् वितरन् समन्तात् ।
यत्तच्चिरादसमवाप्तमनोरथः स-
न्नस्तं प्रयाति खलु हीनवसुः क्रमेण ॥ ९ ॥

आत्मावलोकनविधावधिकप्रमोदं
नेत्रेषु संविदधता जगतामधीश ।
त्वन्मौलिना कथमनेन तुलामुपैतु
दृक्पीडनं विरचयन्नयमुष्णतेजाः ॥ १० ॥

कैश्यं सतोयघनदेश्यमतीव हृद्यं
विश्वेश ते विजयते धृतसौरभं तत् ।
यत्रार्पणे सुमनसाममरद्रुमाणाम्
अर्थित्वमेति निवहोऽर्थिषु दत्तकामः ॥ ११ ॥

अन्तःस्थिता कुटिलता मलिनात्मता च
दोषाविति त्रिजगति प्रथितैव वार्ता ।
त एव ते चिकुरभारगते गुणौ स्तः
सूते महत्फलमहो महतां हि सेवा ॥ १२ ॥

भागीरथीं भवशिरोनिलयां विलोक्य
तादृक्पदं महितमात्मकृतेऽपि कर्तुम् ।
त्वत्पूजनं विहितवत्युपलब्धकामा
मित्रात्मजेव तव भाति कचालिरेषा ॥ १३ ॥

मन्दारपुष्पमिलितो मकुटोपनद्ध-
माणिक्यरत्नकिरणास्तरणाभिरामः ।

चन्द्रार्करश्मिनिकरच्छुरिताम्बुवाह-
च्छायस्त्वदीयचिकुरप्रकरो विभाति ॥ १४ ॥

फालेन ते भुवनमोहनमोहनेन
बालः शशी समतुलामधिरोढुमिच्छन् ।
जातश्चिरार्गल इति प्रथितस्त्रिलोक्यां
को वाप्नुयान्न जनवादमनर्हकारी ॥ १५ ॥

एष स्ववृत्तरहितश्च कलङ्कवांश्च
यातुं ललाटसमतां मम वाञ्छतीति ।
रोषस्त्वया मयि न कार्य इतीव शंसन्
बालः शशी शरणमाश्रयते पदं ते ॥ १६ ॥

यत्ते ललाटफलके तिलकं विभाति
स्मर्तुः समस्तभयहारि च हानिहारि ।
शक्राश्मपट्टलिखितामलरूप्यरेखा-
विद्वेषि मद्व्यसनमेतदपाकरोतु ॥ १७ ॥

ब्रह्मादयोऽपि च यदीयमहामहिम्ना
संमोहिता निजनिजाधिकृतौ निबद्धा ।
मायापि यच्चलनमात्रवशात् स्वकार्ये
सा गल्भते जयति सा युगली भ्रुवोस्ते ॥ १८ ॥

नेत्राभिपूर्णकरुणारसवीचिशोभाम्
आबिभ्रती मदनकार्मुकमातृका सा ।
भ्रूवल्लरी विजयते जगतीविधान-
स्थानप्रहाणचतुरा चतुराकृतिस्ते ॥ १९ ॥

पङ्केरुहाणि भवदीक्षणसाम्यलेशं
हृत्वा पुनस्तदपराधविमार्जनाय ।
पद्मां भवत्प्रणयिनीमलमर्थयित्वा
नित्यं निजान्तरगृहेषु निवासयन्ति ॥ २० ॥

यत्प्राहुराप्तवचसो महतां हि दृष्टे-
र्नो शत्रुबान्धवभिदेत्यमृषा वचस्तत् ।
चक्षुः सरोजयुगली भवतस्तथा हि
[1]कर्णं गता च [2]विजयं च गतेयमास्ते ॥ २१ ॥

---

1. श्रोत्रं राधेयं च   2. जयम् अर्जुनं च

उत्कर्षमीप्सु कुमुदादरविन्दजातं
पत्रद्वयीमुपजहार मनोहरां ते ।
आदाय तामकुरुथा निजनेत्रयुग्मं
तेनैति सर्वविबुधार्चनयोग्यतां तत् ॥ २२ ॥

अर्कात्मकं भवति दक्षिणमीक्षणं ते
वामं च सोममयमित्यमृषा वचस्तत् ।
यत्संप्रपातवशतो हृदि भक्तिभाजां
नो वा कदाप्युदयमेति तमोऽणुनापि ॥ २३ ॥

तापप्रदो दिनकरस्तव दक्षिणा दृक्
भूत्वा समस्तजनतापमपाकरोति ।
तद्वज्जडप्रकृतिरोषधिपोऽपि सव्य-
नेत्रत्वमेत्य जगतां जडतां धुनोति ॥ २४ ॥

नासा विभो तव विभाति तिलप्रसूनं
सूनं रुचा विदधती च समुन्नताग्रा ।
यस्याः समं निजकतुण्डमिति स्मरन्तः
कीरा भवन्ति बत पञ्जरबन्धयोग्याः ॥ २५ ॥

वक्त्राभिधानसरसीरुहमण्डने ते
नासाह्वये रुचिविराजिनि बीजकोशे ।
चित्ताम्बुजं लसतु मे भगवन्नजस्रं
युक्तं सजातिकमिथःपरिमेलनं स्यात् ॥ २६ ॥

उद्भिद्यमानतरुपल्लवतुल्यकल्पौ
ओष्ठाधरौ तव वरिष्ठतरौ विभातः ।
यत्पानयोग्यमतिभाग्यमुपेत्य लक्ष्मीः
श्लाघ्या भवत्यखिललोकविलासिनीषु ॥ २७ ॥

देव त्वदीयरदनच्छदपल्लवेऽस्मिन्
आरुण्यमेतदधरीकृतबिम्बशोभम् ।
लक्ष्म्या हृदन्तरनिरन्तरतोत्पतिष्णुः
पानप्रसक्त इव रागभरो विभाति ॥ २८ ॥

माधुर्यमीप्सुरधरामृतसम्भवं ते
माता जगत्त्रयभुवामरविन्दवासा ।
त्यक्त्वा पयोजलधिमाप्तवती भवन्तं
कोवोत्तरोत्तररसाभिरतिं न कुर्यात् ॥ २९ ॥

ओष्ठेन ते मृदुतरेण हरे रमायाः
शुद्धैर्द्विजैर्विरचितं क्षतमाप्यते यत् ।
एतस्य सा निरपराधनवप्रवाल-
सङ्घेषु भङ्गकरणस्य फलानुभूतिः ॥ ३० ॥

मुक्तावलेर्निजरुचा भवदीयदन्तात्
ऊनत्वमस्ति यदमु निजदोषमेषा ।
हर्तुं सदा व्यवसिता नखरच्छलेन
त्वत्पादपद्मपरिषेवणमादधाति ॥ ३१ ॥

दन्तप्रभाप्रविजितं तव पङ्कजाक्ष
कुन्दप्रसूनमतनोरिषुतामवाप्य ।
त्वन्नायकं त्रिभुवनं क्षुभितं तनोति
मानक्षये सति क एव हि जोषमास्ते ॥ ३२ ॥

मन्दस्मितं मधुरिपो मधुरं त्वदीयं
चन्द्रप्रभा मम मनोमयकैरवस्य ।
उन्निद्रतां जनयतादतितीव्रताप-
संसारभास्करविलासनिपीडितस्य ॥ ३३ ॥

यद्यम्बुजस्य विदलद्दलमण्डितस्य
मध्यं बता तुहिनदीधितिदीधितिः स्यात् ।
तर्ह्यम्बुजाक्ष भवदास्यमहोत्पले त्व-
न्मन्दस्मितद्युतिरसावुपमामुपेयात् ॥ ३४ ॥

गण्डद्वयं मकरकुण्डलमण्डितं ते
निर्णिक्तशक्रमणिदर्पणदर्पहारि ।
वर्णप्रकर्षजनितक्षणमीक्षणानाम्
अर्णोरुहाक्ष मम चेतसि संनिधत्ताम् ॥ ३५ ॥

एषा कपोलयुगली मणिकर्णिकायाः
स्नानं सदा विदधती रुचिवारिपूरे ।
नैर्मल्यमीदृगुपलब्धवतीति वक्तुं
सामर्थ्यमेतु भुवने कतमस्य जिह्वा ॥ ३६ ॥

कृत्वा समुद्रमथनं भवता किमर्थ-
मुत्थापितस्तदुरसि स्थित एष चन्द्रः ।
आ ज्ञातमात्मवदनं नितराममुष्मा-
दुत्कृष्टशोभमिति बोधयितुं जनैघान् ॥ ३७ ॥

त्वद्वक्त्रपद्मसुषमाकणिकाशतांश-
स्तेयादभून्महदघं जलजन्मनां यत् ।
स्नानेन तैरविरतं परिधूतमेतत्
संदृश्यते पयसि शैवलकैतवेन ॥ ३८ ॥

लोकत्रयेऽत्र रमणीयपदार्थसार्थान्
आतन्वतो बहुविधानरविन्दयोनेः ।
एकत्र वापि भवदास्यतुलां विधातुं
लोकेश नालमभवत् करकौशलं तत् ॥ ३९ ॥

पूर्णः कलाभिरखिलाभिरपि द्विजानां
राजापि तन्न खलु वन्द्यत एष चन्द्रः ।
यत्तावकेन वदनेन समत्सरोऽसौ
स्वात्मापकर्षकर एव महद्विरोधः ॥ ४० ॥

वेधास्त्वदीयवचनामृतभाग्यभाग-
माधुर्यलेशमुपगृह्य किमप्यकार्षीत् ।
द्राक्षां सितां मधु पयः कदलीफलं च
किं विस्तरेण वचसां मधुरं समस्तम् ॥ ४१ ॥

कण्ठेन ते परिभवं बत लम्भितास्ते
शङ्खाः सरिद्रमणवारिणि लीनवन्तः ।
आक्रन्दितेन गुरुशोकभरोत्थितेन
साहायकं विदधते जलधि[द]ध्वनीनाम् ॥ ४२ ॥

वक्षःस्थलीलसितकौस्तुभरत्नभाभिः
कण्ठप्रकाण्डमरुणीकृतमाविभाति ।
अर्कप्रभाझरनिमग्नतनोर्घनस्य
लक्ष्मीं परामनुहरन् मधुकैटभारे ॥ ४३ ॥

पद्मालयानखपदैः परिभूषितं ते
तत्कर्णनालमुपमापदवीं लभेत ।
भास्वत्पलाशमुकुलानि सुलोहितानि
स्कन्धं तमालनगमस्य यदि श्रयेयुः ॥ ४४ ॥

वक्षस्तव स्मरणशीलजनानभीष्ट-
द्वारावृतिस्थिरकवाटमिदं विभाति ।
यत्र श्रियः ससुखखेलनयोग्यगेहे
मुक्तादिरत्ननिकरा विलसन्त्यनेके ॥ ४५ ॥

देव त्वदीयहृदयं भृशकर्कशं यत्
लक्ष्म्याः स्तनद्वयसहं सुदृढोपगूढे ।
भक्तानुकम्पनविधावतिमार्दवं च
तच्चित्रमेव भगवन् हृदयं ममैति ॥ ४६ ॥

दोर्भिश्चतुर्भिरमरेऽत्र[अमरेन्द्र]मणिप्रक्लप्त-
स्तम्भैः प्रशुम्भितमुरः श्रितपुष्पमाल्यम् ।
उद्रत्नदीपमुदितांशुवितानकं तत्
पद्मालयानटनरङ्गतलं विभाति ॥ ४७ ॥

भूम्ना निजस्य महसः परिपूरिताशो
लोकेऽत्र सन्तमसमन्तगतं च तन्वन् ।
उत्थानमभ्युपगतः पयसां निधेश्च
त्वद्वक्षसि स्फुरति कौस्तुभबालकार्कः ॥ ४८ ॥

चन्द्रश्च कौस्तुभमणिश्च सहोदरौ द्वा-
वेकस्तयोर्मदनसैन्यपतित्वमागात् ।
अन्यः समेत्य भगिनीसदनं तवोरः
सम्पन्नमीश तनुते महसा निजेन ॥ ४९ ॥

हारीति वक्तुमुचितं खलु तद्वदत्र
हारेण युक्तमरविन्ददलायताक्ष ।
वक्षःस्थलेन तव योगमुपागतः सन्
हारः पुनर्भवति हारिपदाभिधेयः ॥ ५० ॥

यैषा तवोरसि विराजति वैजयन्ती
तामात्मदत्त्वमयते किमये गुणस्ते ।
यत्सा करोति सहसा सरसीरुहाक्ष
सेवानुषक्तजनतामपि वैजयन्तीम् ॥ ५१ ॥

भावत्कवक्षसि विभो परिभासमानं
श्रीवत्ससंज्ञमृषिवर्यपदाब्जचिह्नम् ।
वेधस्त्रिलोचनभवत्सु परात्मरूपं
त्वामेव सत्त्वमयमूर्तिरिति ब्रवीति ॥ ५२ ॥

स्वालङ्कृतिस्थितमहार्घमणिप्रकाण्ड-
प्रोद्यत्प्रभौघशबलाः सबला भुजास्ते ।
तापत्रयं सपदि तज्जनिकर्तृपापं
चापास्य मे ददतु मुक्तियुतं त्रिवर्गम् ॥ ५३ ॥

एकः सुधीरिव गृहीतसुदर्शनस्ते
बाहुः परो धनदवत्समुपेतशङ्खः ।
पद्मान्वितोऽन्यतम इभ्यगृहोपमश्च
शेषो महागदतयर्षभशैलतुल्यः (?) ॥ ५४ ॥

धारासहस्रकृतदानववंशदाहं
दोषानुषङ्गपरिवृद्धगुणं तवेदम् ।
चक्रं निरस्तभवचक्रमुपाश्रिताना-
मास्माकरक्षणमनुक्षणमादधातु ॥ ५५ ॥

अब्जन्मनैव न हि केवलमापदात्यात् (?)
अप्याप्तवान् सहजताममृतद्युतेर्यः ।
सोऽयं भुजाग्रवसतिस्तव पाञ्चजन्यः
श्रूयेत मन्द्रनिनदो मदसुप्रयाणे ॥ ५६ ॥

पङ्केरुहं करगतं तव पाणिपाद-
नेत्राननं युधि विजेतुमुपागतेषु ।
एकं गृहीतमिव भाति सरोरुहेषु
भीत्या प्रधाव्य पतितानि वने पराणि ॥ ५७ ॥

कौमोदकी त्वसमयेष्वपि रोषभारत्
दैत्यान् समेत्य सतृणं निहनिष्यतीति ।
मत्वा ततः किमु निरोद्धुमयि त्वयासौ
एकेन पाणिकमलेन धृता सदास्ते ॥ ५८ ॥

रोमावलिस्तव विराजति हारयष्ट्यो-
र्मध्यस्थिता विमलयोर्मधुपस्रगाभा ।
गङ्गाप्रवाहयुगलस्य गतोऽन्तरालं
ऊर्ध्वं प्रवृत्त इव [1]भानुसुताप्रवाहः ॥ ५९ ॥

अभ्यर्थितानि ददती भजतां फलानि
नाभ्यालवालत उदेत्य रुगम्बुपूर्णात् ।
आरूढवत्युदरदेशमतीत्य वक्षो
रोमालिकल्पलतिका तव भासते सा ॥ ६० ॥

नाभिप्रहिर्विमलया प्रभया पयोभि-
रापूरितस्तव विभाति गभीररूपः ।

---

1. यमुनाप्रवाहः कृष्णवर्णः

यस्मादुदञ्चितविचित्रसरोरुहेण
त्वत्प्रेरितस्त्रिभुवनं कृतवान् विधाता ॥ ६१ ॥
मध्यप्रदेशमतिसूक्ष्मतरस्वरूप-
मप्युह्यमानभुवनत्रयमण्डलं ते ।
उद्दामदाममहितोदरबन्धनद्धं
श्रद्धापुरस्सरमहर्दिवमभ्युपैमि ॥ ६२ ॥

मध्यं तवेदृशमितीश कथं ब्रवीमि
दृग्भ्यां निजानुभवतस्तनु निश्चितं यत् ।
अध्यासितं त्रिभुवनैरिति सज्जनोक्त्या
विस्तारयुक्तमतिमात्रमिति श्रुतिभ्याम् ॥ ६३ ॥

कान्तिप्रवाहि तपदेव [तव देव]नितम्बबिम्बं
काञ्चीगुणाकलितमित्यपि केचिदाहुः ।
नैते प्रमादसहिता अनुयोगयोग्या
काञ्चीप्रधानकलितं तु वयं वदामः (?) ॥ ६४ ॥

विद्योतते वरद ते स कटिप्रदेशः
लक्ष्म्या घनेन जघनेन समागमाद्यः ।
सौभाग्यमात्मसमवेतमनन्यलभ्यं
व्यक्तं ब्रवीति सकलोपरि वर्तमानम् ॥ ६५ ॥

आपादितो यदि शताङ्गपरो निजार्थः
स्यादेव ते गुरुनितम्बभरेण हास्यः (?) ।
मत्वेति मन्दमरुतं स्वरथं मनोभूः
चक्रे यदस्य तदनागतकर्तृताहो ॥ ६६ ॥

काञ्ची तवेयमरुणैः किरणैर्नितम्ब-
प्रान्तस्तमालसदृशां च रुचां प्ररोहैः ।
शोणासितं कमपि कान्तिझरं विधाय
तेनानुलिम्पत इमानि दिशां मुखानि ॥ ६७ ॥

मुक्तावलीपरिचिता सुमनोरमा च
प्रोद्योतमानमणिभूषणतां च याता ।
त्वत्काञ्चिकामहितलोचनचन्द्रिका च
भूमन् कथं न विबुधैः परिपूजनीया ॥ ६८ ॥

सन्ध्यापयोधरमनोहरमम्बरं ते
संध्यानयोग्यमनिशं [1]जनशं दधानम् ।
[2]वन्ध्येतरं जनयितुं जननप्रयासं
संधारयेमहि हृदन्तरनन्तकीर्ते ॥ ६९ ॥

पादारविन्दयुगलं भजतां जनानां
दूरीकृतं रचयितुं तरसा तमोऽन्धम् ।
बालः प्रभाकृदुदितः किमिहेति शङ्कां
पीताम्बरं वितनुते भवदीयमेतत् ॥ ७० ॥

चित्तं यथा विटजनस्य नितान्तरक्तं
विस्तारवच्च मतिवद्विदुषां जनानाम् ।
शाब्दं च शास्त्रमिव सूत्रगणैस्सहार्थैः
क्लृप्तं विराजतितरां [3]भवदुत्तरीयम् ॥ ७१ ॥

ऊरुद्वयेन भवतः कृतमत्सराय [ये]
[4][भास्वद्द्विपाधिपकरा] भुवनोत्तरेण ।
प्राणाधिका अपि गजा अपराधतोऽस्मान्
न्यूनैर्भवन्ति खलु शृङ्खलया निबद्धाः ॥ ७२ ॥

स्थूणागणाश्च भवदूरुतुलाभिलाषो-
त्कर्षादुदारमपराधमवाप्तवन्तः ।
तद्दण्डनाय विधिना विहितं शिरस्सु
नैकेतनं भरमहर्दिवमुद्वहन्ति ॥ ७३ ॥

त्वत्सक्थिसाम्यकृतदोषशमाय रम्भा
विश्राण्य ते निजफलानि जितामृतानि ।
त्वत्संप्रसादजनितान्तरमोदजातं
शैत्यं तनोर्बहिरपि प्रसृतं बहन्ति ॥ ७४ ॥

अष्ठीवतोर्द्वयमनिष्टनिरासधृष्टं
निष्ठ्यूतनिर्मलसुनीलरुचिप्रपञ्चम् ।
जङ्घोरुहाम[नाम]युतदेशयुगान्तराले
सीमावबोधनिहितोपलवद्विभाति ॥ ७५ ॥

---

1. =जनानां शं मङ्गलम्
2. =सफलम्
3. भवतोऽन्तरीयम्
4. भासन्निभाधिपकरा

पुष्पायुधो भुवनमोहविधानदक्षं
चूर्णं विधाय मणिसम्पुटकद्वयान्ते ।
विन्यस्य तन्निहितवान् किमिहेति शङ्का-
मङ्कूरयत्यजित जानुयुगं तवेदम् ॥ ७६ ॥

नात्यायते च न च वामनतामुपेते
दैत्यारिनाथमणिमण्डतुलामुपेते ।
मञ्जीरनद्धमणिदीप्तिनिमग्नरूपे
संज्ञायतां मम मनः प्रसृते गतं ते (?) ॥ ७७ ॥

दग्धः पुरा पुरभिदा पुनरात्मजस्ते
भूत्वा स पुष्पविशिखं कलयाञ्चकार ।
यद्रूपसौष्ठवमवेक्ष्य निजं निषङ्गं
जङ्घाद्वयं जयति ते जगदर्च्यमेतत् ॥ ७८ ॥

कस्यापि जात्वपि निजान्वयजस्य कण्ठ-
स्त्वज्जङ्घया समरुचिः किमुदेष्यतीति ।
ज्ञातुं महागणकमाश्रयते शिखीन्द्रः
स्कन्दं न वक्ति स च शुक्कृतितन्द्रितोऽस्य ॥ ७९ ॥

मञ्जीर एष भवतो महनीयरूपः
सद्वृत्ततामुपगतः श्रवणीयशब्दः ।
वन्द्यः सतां च भवतीति किमत्र चित्रं
तादृग्गुणो न कथमस्तु सुवर्णजन्मा ॥ ८० ॥

त्वच्चारुरूपमणिनूपुरनिस्वनस्य
सादृश्यमाकलयितुं निनदे स्वकीये ।
हंसः प्रपद्य शरणं चतुराननं तं
तत्पत्रतामनुभजन् भजतेऽनुवेलम् ॥ ८१ ॥

आकर्णनीयनिनदो भृशदृश्यरूपः
स्पर्शान्वितो रसदवर्णनतां प्रपन्नः ।
सौरभ्यवानपि विभो तव नूपुरोऽयं
सन्तर्पणो विजयते सकलेन्द्रियाणाम् ॥ ८२ ॥

पादाग्रमेतदयि ते न हि वर्णयामि
किं तन्निमित्तमिति चेदिदमुच्यते च ।
तद्वर्णने कमठजातिमुपैतु लज्जां
तद्वंशजां तु तव मूर्तिमियं न यायात् ॥ ८३ ॥

पङ्केरुहस्य भवतः पदसंज्ञितस्य
पत्राणि भान्ति परमङ्गुलिसंज्ञितानि ।
येषु क्षरन्मधुरसेषु सतां मुनीनां
चेतोऽभिधा मधुकराः सततं रमन्ते ॥ ८४ ॥

मुद्राकृताधिकरुचिस्ततिरङ्गुलीनां
मुद्राविहीनरुचिरप्यवभासते ते ।
लक्ष्मीपते भवति पल्लवहारितास्या
भक्तावलेरपि विपल्लवहारिता च ॥ ८५ ॥

आशादशाधिवसतां निजसेवकानाम्
आशानुपूरणकृतेऽङ्गुलयो दशैताः ।
त्वत्पादयोरपि च तत्तमसां विलुप्त्यै
ज्योत्स्नाकिरश्च दश तन्नखचन्द्रडिम्भाः ॥ ८६ ॥

धावल्यमस्ति नखरेषु तवेति केचित्
प्राहुर्बुधाः कतिचिदत्र तु रक्तिमेति ।
पक्षौ निसर्गरमणीयतया त्रिलोक्या
भक्तानुरागभजनादपि तौ घटेते ॥ ८७ ॥

एकस्थितिं वितनुतो न गुणौ विरुद्धौ
पादद्वये तु तव नैवममेयधामन् ।
मुक्तावलीसुखकरा नखरास्त एव
मुक्तावलीसुखहराश्च भवन्ति चित्रम् ॥ ८८ ॥

श्यामात्मनस्तव कुतो नु पदाम्बुजाभ्या-
मासादितः परमशोभन एष रागः ।
किं वा नमत्सुरकिरीटमणेरुताहो
संवाहनेषु कमलाकरपल्लवाभ्याम् ॥ ८९ ॥

दानक्रियाधरितकल्पकवृक्षमूर्ध-
न्यासेन तत्किसलयोत्करतः किमाहो ।
दैत्यारिनाथमथनक्रमणे तदास्य-
निष्यन्दमानबहलक्षतजप्रवाहात् ॥ ९० ॥

मुक्तिप्रदं महितकान्तियुतं समस्त-
सम्पत्करं च विपदां हरणप्रवीणम् ।
ऋष्यङ्गनाधनविपन्नजयाशयानां
सङ्कष्टसंकटनिवासपदं पदं ते ॥ ९१ ॥

अम्भोरुहाणि नवपादपपल्लवानि
त्वत्पादयोरभिलषन्ति सदृक्षतां यत् ।
सैषां न दोष इह किं नु वनेशयानां
स्वस्यापरस्य च विशेषनिबोधलेशः ॥ ९२ ॥

यत्पादपद्ममहिमेदृगितीश शक्यं
नो वेदितुं प्रमितिरस्ति तथा विकारि[पि कापि]।
यत्तत्परागवहनेन पुरा स्वमूर्ध्ना
शक्तोऽभवत् कमलभूर्भुवनानि कर्तुम् ॥ ९३ ॥

एतावतापि पदयोर्महिमानुमेय-
स्तोयं यदीयनखधावनपूतपूतम् ।
लोकत्रयीवृजिनकाननदाहदक्षं
दक्षारिणा शिरसि यद्ध्रियतेऽनुवेलम् ॥ ९४ ॥

रेखा विभाति चरणे तव सूक्ष्मसूक्ष्मा
स्थूलस्य मङ्गलशतस्य सदा सवित्री ।
कार्याणि कारणगुणान् दधतीति वार्ता
मिथ्येति या कथयते निजचेष्टयैव ॥ ९५ ॥

चित्रं भवोष्महरणं महदङ्कुशं च
सेवाकृतां व्यसनवारणवारणार्थम् ।
हर्षाभिषेकविधये कलशाङ्करेखा-
रूपं दधज्जयति ते पदपद्मयुग्मम् ॥ ९६ ॥

तोयं निपीय तव कान्तिमवाप्य मेघा
गर्जन्त ऊर्जितमदा दिवि सञ्चरन्तः ।
तस्मिन् गते विरुचयो लघवश्च सन्ति
शोभां लभेत भुवि कः स्वधनप्रणाशे ॥ ९७ ॥

त्वत्कान्तिलेशहरणादपराधवन्त-
स्त्रासात्तमालतरवो विपिने निलीनाः ।
सत्त्वाश्रयोऽपि च गभीरतरोऽपि सिन्धुः
शब्दायते तरलतां च मुहुः प्रयाति ॥ ९८ ॥

त्वच्चारुविग्रहगुणान् भणितुं फणीन्द्रः
शब्दान् विधाय विततान् विविधप्रमाणान् ।
जिह्वासहस्रयुगलेन निगद्य नान्तं
गच्छन्ननन्त इति नाम जगाद[म] नूनम् ॥ ९९ ॥

तत्तादृशामपि मुकुन्द भवद्गुणानां
तावत्प्रशंसनविधौ भुवि कः समर्थः ।
बुद्ध्या प्रगृह्य कवयोऽपि तदीयलेशम्
उक्त्वा सविस्तरमहो विरमन्ति वाचः ॥ १०० ॥

ईदृग्विधा तव विभो तनुरैहिकस्य
पारत्रिकस्य च सुखस्य नृणां विधात्री ।
चेतःस्थितिं मम विधाय विधूय दुःखा-
न्यानन्दभारमधिकं विदधातु नित्यम् ॥ १०१ ॥

स्तोत्रं मया कृतमिदं प्रतिवासरं ये
संकीर्तयन्ति कलयन्ति च कर्णयोर्ये ।
तेषां [श्रीभू]समेत मृदधीश भवत्प्रसादात्
एषां च सर्वमभिकाङ्क्षितमस्तु सिद्धम् ॥ १०२ ॥
॥ इति श्री श्रीयुतमृन्नाथस्तोत्रं सम्पूर्णम् ॥

---

## १७. ॥ अथ श्री[नीलाद्रिनाथ]विष्णुस्तुतिः ॥

रक्ताम्भोरुहदर्पभञ्जनमहासौन्दर्यनेत्रद्वयं
मुक्ताहारविलम्बिहेममकुटं रत्नोज्ज्वलत्कुण्डलम् ।
वर्षाम्भोदसमाननीलवपुषं ग्रैवेयहारान्वितं
शङ्खचक्रधरं प्रसन्नवदनं नीलाद्रिनाथं भजे ॥ १ ॥

नीलाद्रौ शङ्खमध्ये शतदलकमले रत्नसिंहासनस्थं
सर्वालङ्कारयुक्तं नवघनरुचिरं संयुतं [1]जाग्रतेन [चाग्रजेन] ।
भद्रा यद्वामभागे रथचरणयुतं ब्रह्मरुद्रेन्द्रवन्द्यं
वेदानां सारमीशं स्वजनपरिवृत्तं ब्रह्मदारुं स्मरामि ॥ २ ॥

उद्यन्नीरदनीलसुन्दरतनुं पूर्णेन्दुबिम्बाननं
राजीवोत्पलपत्रनेत्रयुगलं कारुण्यवारांनिधिम् ।
भक्तानां सकलार्तिनाशनकरं चिन्तार्तचिन्तामणिं
वन्दे श्रीपुरुषोत्तमं प्रतिनिधिं नीलाद्रिचूडामणिम् ॥ ३ ॥

फुल्लेन्दीवरलोचनं नवघनश्यामाभिरामाकृतिं
विश्वेशं कमलाविलोलविलसत्पादारविन्दद्वयम् ।
दैत्यारिं कमलेन्दुमण्डितमुखं श[च]क्राब्जहस्तद्वयं
वन्दे श्रीपुरुषोत्तमं प्रतिनिधिं लक्ष्मीविलासालयम् ॥ ४ ॥

---

1. जाग्रतेन ।

स्वपन् रङ्गे जाग्रद्यदुसरसि तिष्ठन् वृषगिरौ
प्रयागे संमज्जन्नथ बदरभूमीषु च जपन् ।
जगन्नाथे भुञ्जन् शतपदमयोध्यामधिवसन्
सदा द्वारावत्यां विहरति सलीलं यदुपतिः ॥ ५ ॥

कुन्दाभं द्विभुजं त्रिभङ्गिललितं शान्तं जटाकुञ्चितं
स्तब्धश्रोत्रमनिन्दितांसयुगलं पीताम्परं सुन्दरम् ।
तार्क्ष्येऽश्वे च कटीतटे कृतकरद्वन्द्वं त्रिनेत्रस्थितं
सिंहाद्रौ शीघ्रपातक्षितिपिहितपदः पातु मां नारसिंहः ॥ ६ ॥

॥ इति श्री[नीलाद्रिनाथ]विष्णुस्तुतिः सम्पूर्णा ॥

---

# ॥ श्रीरामस्तोत्राणि ॥

## १. ॥ अथ श्रीरामद्वादशनामस्तोत्रम् ॥

अस्य श्रीरामद्वादशनामस्तोत्रमहामन्त्रस्य, निटिलाक्षो भगवान् ऋषिः, अनुष्टुप् छन्दः, श्रीरामचन्द्रो देवता; श्रीरामचन्द्रप्रीत्यर्थे जपे विनियोगः ।

ओम् प्रथमं श्रीकरं नित्यं द्वितीयं[ततो] दशरथात्मजम् ।
तृतीयं रामचन्द्रं च चतुर्थं रावणान्तकम् ॥ १ ॥

पञ्चमं लोकपूज्यं च षष्ठमं[ष्ठं श्री]जानकीप्रियम् ।
सप्तमं वासुदेवं च रामचन्द्रं तथाष्टमम् ॥ २ ॥

नवमं[ततो ]दूर्वादलश्यामं दशमं लक्ष्मणाग्रजम् ।
एकादशं च गोविन्दं द्वादशं सेतुबन्धनम् ॥ ३ ॥

एतानि द्वादशनामानि [द्वादशैतानि नामानि]त्रिसन्ध्यं यः पठेन्नरः ।
दारिद्र्यदोषनिर्मुक्तो धनधान्यसमृद्धिकम् [मान् ] ॥ ४ ॥

[सर्वसंपत्प्रदं श्रेष्ठं]सर्वकार्यवशीकरम् ।
दिव्यदेहमवाप्नोति दीर्घमायुष्यवर्धनम् ॥ ५ ॥

ग्रहरोग[दोष]विनाशं च सर्वकार्यफलप्रदम् ।
अरण्ये देवसंग्रामे महाभयनिवारणम् ॥ ६ ॥

अर्धरात्रे जपेत् स्थित्वा सर्वारिष्टनिवारणम् ।
इहजन्मसुखी भूत्वा तद्विष्णोः परमं [यायाद्विष्णोः परं] पदम् ॥ ७ ॥

॥ इति श्रीब्रह्माण्डपुराणे ब्रह्मनारदसंवादे श्रीरामद्वादशनामस्तोत्रं सम्पूर्णम् ॥

---

## २. ॥ अथ श्रीरामकर्मनामाष्टाविंशत्युत्तरशतस्तोत्रम् ॥

अस्य श्रीरामकर्मनामाष्टाविंशत्युत्तरशतरहस्यस्तोत्रमन्त्रस्य, वाल्मीकिर्भगवानृषिः, अनुष्टुप् छन्दः, श्रीरामचन्द्रः पौलस्त्यविध्वंसकः परमात्मा देवता; श्रीरामचन्द्रसिद्ध्यर्थे जपे विनियोगः ।

परमात्मा परब्रह्म सच्चिदानन्दविग्रहः ।
मायामयमहालीलः स्वयंभूर्विष्णुरव्ययः ॥ १ ॥

लक्ष्मीक्षमानित्यसेव्यः शङ्खचक्रगदाधरः ।
अनन्तशयनः सर्वदेवप्रियकरः सदा ॥ २ ॥

सुरवैरिकुलध्वंसी मायामानुषविग्रहः ।
श्रीरामो रामचन्द्रश्च रामभद्र इति श्रुतः ॥ ३ ॥

प्रभुर्लक्ष्मणशत्रुघ्नकैकेयीतनयाग्रजः ।
सर्वप्रियो दाशरथिः कौसल्यानन्दवर्धनः ॥ ४ ॥

सर्वलक्षणसम्पन्नः सर्वज्ञः सद्गुणाकरः ।
विश्वामित्रानुयायी च ताटकाप्रविघातनः ॥ ५ ॥

लब्धसर्वास्त्रकौशल्यो मारीचमुखरक्षसाम् ।
शिक्षको यज्ञगोप्ता च गाधिसूनुकथारुचिः ॥ ६ ॥

विशदं पूजितोऽहल्यापावनो जनकार्चितः ।
शतानन्दकथाप्रीतः शैवकोदण्डखण्डनः ॥ ७ ॥

जानकीवल्लभः श्रीमान् कृतकौतुकमङ्गलः ।
जामदग्न्यमहादर्पदलनस्तातनन्दनः ॥ ८ ॥

वैदेहीसक्तहृदयः पितृनिर्देशकारकः ।
वनवासपरः पौरप्रजासञ्चयवञ्चकः ॥ ९ ॥

निषादाधिपसेव्यश्च भरद्वाजानुशासितः ।
चित्रकूटकृतावासः सीतासौमित्रिमोदितः ॥ १० ॥

भरतानुग्रहीता च राज्यार्थन्यस्तपादुकः ।
दृढव्रतो जयन्ताहित्रासानुग्रहकारकः ॥ ११ ॥

अनसूयाङ्गरागादिशोभिसीताभिहर्षितः ।
दण्डकारण्यसञ्चारी विराधवधपण्डितः ॥ १२ ॥

शरभङ्गार्चितः सर्वतापसौघवरप्रदः ।
सुतीक्ष्णपूजितः सीताधर्मोक्तिपरितोषितः ॥ १३ ॥

क्रमेणाध्युषिताशेषतापसाश्रममण्डलः ।
अगस्त्यसत्कृतस्तेन दत्तासिशरकार्मुकः ॥ १४ ॥

कृतपञ्चवटीवासो जटायुर्लब्धसौहृदः ।
पर्यायोदितहेमन्तप्रीतः सीतासमन्वितः ॥ १५ ॥

दुष्टशूर्पणखी[खा]नासाकर्णयुग्मनिकृन्तनः ।
राक्षसीपदवीप्राप्तदृप्तरक्षोविभेदनः ॥ १६ ॥

चतुर्दशसहस्रोग्ररक्षोबलनिषूदनः ।
त्रिशिरोदूषणारातिरुन्मत्तखरघातनः ॥ १७ ॥

मैथिलीहृदयानन्दी मायामृगविमर्दनः ।
वैदेहीमार्गणासक्तो जटायुस्सद्गतिप्रदः ॥ १८ ॥

अयोमुखीभङ्गकरः कबन्धभुजखण्डनः ।
शबरीपूजितः सम्यग्दर्शिताश्रमवैभवः ॥ १९ ॥

पम्पातीरे वनोल्लासदर्शनोल्बणमन्मथः ।
हनूमत्कृतसंवादः प्राप्तसुग्रीवसौहृदः ॥ २० ॥

सुग्रीवदत्तवैदेहीत्यक्तवस्त्रविभूषणः ।
सुग्रीवाय प्रतिज्ञातवालिनिर्वापणः स्वयम् ॥ २१ ॥

पाददंष्ट्रसमुत्क्षिप्तमाहिषास्थिसमुत्करः ।
सप्ततालप्रभेत्ता च कृतसुग्रीवलाञ्छनः ॥ २२ ॥

वालिप्रमथनो वाग्मी तारातत्त्वोपदेशकृत् ।
सुग्रीवकृतसङ्केतः सुग्रीवेप्सितराज्यदः ॥ २३ ॥

वर्षासु माल्यवद्वासी लक्ष्मणप्रतिबोधितः ।
ऋक्षवानरसङ्घाती दिक्षु प्रेषितवानरः ॥ २४ ॥

अङ्गुलीयप्रदाता च निश्चितार्थो हनूमति ।
हनुमन्मुखविज्ञातसीतोदन्तः प्रसन्नधीः ॥ २५ ॥

चूडामणिनिरस्ताधिः सीतावाक्यामृताप्लुतः ।
हनूमतः परिष्वङ्गपारितोषिकदायकः ॥ २६ ॥

रक्षोवधाभिनिर्यायी सेनानयविशारदः ।
विभीषणस्याभयदः शरणागतवत्सलः ॥ २७ ॥

समुद्रोपासिता रोषवेगक्षोभितसागरः ।
शिवलिङ्गप्रतिष्ठाता नलसेतुविधायकः २८ ॥

हनुमद्वाहनश्चैव लङ्काद्वारावरोधकः ।
दशग्रीवमहारत्नकिरीटवरभञ्जनः ॥ २९ ॥

उदीर्णकुम्भकर्णादिसर्वरक्षःकुलान्तकः ।
युद्धे रावणहन्ता च ब्रह्मादिसुरसंस्तुतः ॥ ३० ॥

सीतासमेतः शक्रादिवरोत्थापितवानरः ।
सुहृत्सौमित्रिसीताधिरूढपुष्पविमानकः ॥ ३१ ॥

भरद्वाजार्चितः सम्यग्भरतादिसमन्वितः ।
नन्दिग्रामगतः स्नातः सर्वालङ्कारभूषितः ॥ ३२ ॥

अयोध्यापुरवासी च राज्ये पट्टाभिषेचितः ।
तालवृन्तसितच्छत्रचामराद्युपशोभितः ॥ ३३ ॥

जानकीनन्दनः सर्वसुहृद्वर्गाभिहर्षणः ।
हृष्टपुष्टजनाकीर्णः पुरराष्ट्राभिरञ्जनः ॥ ३४ ॥

इत्येवं रामचन्द्रस्य कर्मनाम शुभावहम् ।
अष्टाविंशोत्तरशतं कीर्तितं परमर्षिणा ॥ ३५ ॥

गुह्याद्गुह्यतरं पुण्यं भक्त्या युक्तो नरः सदा ।
यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥ ३६ ॥

॥ इति श्रीरामनामाष्टाविंशत्युत्तरशतस्तोत्रं सम्पूर्णम् ॥

---

## ३. ॥ अथ श्रीतारावलिः ॥

श्रीवत्सवत्सचिह्नाङ्कितवक्षःस्थल धरासुताजाने ।
त्वमिह दयादृष्ट्या मन्दाक्रान्तं रक्ष मां दयाशरथे[ब्धिदाशरथे] ॥ १ ॥

कृतयत्नविफलकारिणमतिकष्टदमर्यमात्मजं मन्दम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ २ ॥

शरणागतरक्षक तव चरणद्वयभक्तिरस्तु मम हृदये ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ ३ ॥

अवमानदमापत्करमरिपक्षजयोत्सुकं सुदुःखकरम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ ४ ॥

नानापवादभयदं सदनधनद्रव्यनाशकरकुद्दालम् ।
न तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ ५ ॥

कुत्सितगुणसम्पन्नं क्रौर्यमनःसंप्रकाशितोद्योगम ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ ६ ॥

गृध्राशनमतिमलिनं निद्रालस्यादिदोषदं नृणाम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ ७ ॥

निस्तुलदारिद्र्यगुणाप्रस्तुतकार्यप्रसक्तिदं नित्यम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ ८ ॥

पुत्रकलत्रभ्रात्रा[1]खिलबन्धुविरोधजनकमतिकठिनम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ ९ ॥

नीलाञ्जननिभदेहं डोलायितमानसं विडालाक्षम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ १० ॥

कुनखयुतं कूर्मपदं कृशगात्रं शङ्कुरूपिणं च सदा ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ ११ ॥

विनिमीलितसन्मीलितलोचनयुतभुजगतोत्तमाङ्गनतम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ १२ ॥

गतलज्जाहृदयं निर्भाग्यं बृहदुदरपोषणतिलादम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ १३ ॥

आशापिशाचभोगोल्लासकरं दौर्मनस्यदमशुभदम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ १४ ॥

आनृतनिष्कृतिवैकृतिकलितमदोद्रेककारणं चाहम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ १५ ॥

नरपतिचोरहुताशनभयदानसमर्थमहितकार्यकरम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिादाशरथे ॥ १६ ॥

कुटिलगतिं कठिनमतिं स्फुटतरकटिघटितबाहुबलचेष्टम् ।
न स्तौमि तमसुरारे परिपालत मां दयाब्धिदाशरथे ॥ १७ ॥

चञ्चलचित्तसमुच्छितमुञ्छकवृत्तिं शनैः शनैर्यानम् ।
न स्तौमि तमसुरारे परिपालय मां दयाब्धिदाशरथे ॥ १८ ॥

सकलजननिन्द्यमबलं विकलाङ्गं कालिमाभमपरेशम् ।
न स्तौमि तमसुरारे परिपलिय मां दयाब्धिदाशरथे ॥ १९ ॥

विगतश्रीको विलोमभावो वीरुचिमुख्यो (?)विविधामयदः ।
किमसौ शनिरिह किं कुरुते मां त्वं परिपालय दाशरथे ॥ २० ॥

जनपददेशविदेशारण्यान्तरपर्यटनद्रुतिबलदः ।
किमसौ शनिरिह किं कुरुते मां त्वं परिपालय दाशरथे ॥ २१ ॥

---

1. अखिला एव आखिलाः

कामक्रोधाद्यरिभूरिभयाकरसञ्चारोऽस्फुटदेहः ।
किमसौ शनिरिह किं कुरुते मां त्वं परिपालय दाशरथे ॥ २२ ॥

दुर्जनवचनश्रवणप्रचुरप्रत्ययदः सत्सङ्गघ्नः ।
किमसौ शनिरिह किं कुरुते मां त्वं परिपालय दशरथे ॥ २३ ॥

आत्मानात्मविचाराभ्यन्तरदोऽवरदः परिभूतमनाः ।
किमसौ शनिरिह किं कुरुते मां त्वं परिपालय दाशरथे ॥ २४ ॥

मायामयजगदखिलभ्रान्तिकरो देहात्मज्ञानहतः ।
किमसो शनिरिह किं कुरुते मां त्वं परिपालय दाशरथे ॥ २५ ॥

तापत्रयभयदोषनिवारक भद्रगुणौघ दयाशरधे ।
किमसौ शनिरिह किं कुरुते मां त्वं परिपालय दाशरथे ॥ २६ ॥

रत्नकिरीटधराच्युत रामानन्त मुकुन्द दयाशरधे ।
किमसौ शनिरिह किं कुरुते मां त्वं परिपालय दाशरथे ॥ २७ ॥

घनतरमुक्ताफलहारमिवादरणीयेयं दाशरथे ।
तारावलिरनिशं सकलानां सौख्यं नितरां वितनोतु ॥ २८ ॥

श्रीतडकमल्लवंशोद्भवमनिशं कृष्णरायनामधरम् ।
धरणीसुरवरवन्द्यं परिपालय तं प्रभुं दाशरथे ॥ २९ ॥

॥ इति श्रीतारावलिः सम्पूर्णा ॥

---

## ४. ॥ अथ श्रीरघुनाथस्तवराजः ॥

सूत उवाच—

सर्ववेदार्थतत्त्वज्ञं व्यासं सत्यवतीसुतम् ।
धर्मपुत्रः प्रहृष्टात्मा प्रत्युवाच मुनीश्वरम् ॥ १ ॥

धर्मपुत्र उवाच—

भगवन् योगिनां श्रेष्ठ सर्वशास्त्रविशारद ।
किं तत्त्वं किं परं[जप्यं]किं ध्यानं मुक्तिसाधनम् ।
ज्ञातुमिच्छामि तत्सर्वं ब्रूहि मे मुनिसत्तम ॥ २ ॥

श्रीवेदव्यास उवाच—

धर्मराज महाभाग शृणु वक्ष्यामि तत्परम् ।
यत्परं यद्गुणातीतं यज्ज्योतिरमलं शुभम् ॥ ३ ॥

तदेव परमं नित्यं कैवल्यपदकारणम् ।
श्रीरामेति परं जप्यं तारकब्रह्मसंज्ञकम् ॥ ४ ॥

ब्रह्महत्यादिपापघ्नमिति वेदविदो विदुः ।
श्रीराम राम रामेति ये वदन्त्यपि पापिनः ॥ ५ ॥

तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः ।
स्तवराजं पुरा प्रोक्तं नारदेन महात्मना ॥ ६ ॥

तत्सर्वं संप्रवक्ष्यामि हरिध्यानपुरःसरम् ।
तापत्रयाग्निशमनं सर्वपापनिकृन्तनम् ॥ ७ ॥

दारिद्र्यदुःखशमनं सर्वसम्पत्प्रदायकम् ।
विज्ञानविमलं दिव्यं मोक्षैकफलसाधनम् ॥ ८ ॥

नमस्कृत्वा प्रवक्ष्यामि रामं कृष्णमनामयम् ।
अयोध्यानगरे रम्ये रत्नमण्डपमध्यमे ॥ ९ ॥

स्थिरे कल्पतरोर्मूले रत्नसिंहासनं शुभम् ।
तन्मध्येऽष्टदलं पद्मं नानारत्नसुशोभितम् ॥ १० ॥

स्मरेद्दाशरथिं मध्ये सहस्रादित्यतेजसम् ।
पितुरङ्कगतं राममिन्द्रनीलमणिप्रभम् ॥ ११ ॥

कोमलाङ्गं विशालाक्षं विद्युद्वर्णाम्बरावृतम् ।
भानुकोटिप्रतीकाशं किरीटेन विराजितम् ॥ १२ ॥

रत्नग्रैवेयकेयूरहारकुण्डलमण्डितम् ।
रत्नकिङ्किणिमञ्जीरकटिसूत्रैरलंकृतम् ॥ १३ ॥

श्रीवत्सकौस्तुभोरस्कं वनमालाविराजितम् ।
दिव्यरत्नसमायुक्तं मुद्रिकाद्यैरलंकृतम् ॥ १४ ॥

कर्पूरागरुकस्तूरीदिव्यगन्धानुलेपनम् ।
तुलसीकुन्दमन्दारपुष्पमाल्यैरलंकृतम् ॥ १५ ॥

राघवं द्विभुजं बालं राममीषत्स्मिताननम् ।
योगशास्त्रेष्वभिरतं योगीशं योगधारिणम् ॥ १६ ॥

सदा भरतसौमित्रिशत्रुघ्नपरिसेवितम् ।
मुनिभिः सनकाद्यैश्च योगिवृन्दैश्च सेवितम् ॥ १७ ॥

वीरं रघुवरं शान्तं धनुर्वेदविशारदम् ।
मङ्गलायतनं देवं रामं राजीवलोचनम् ॥ १८ ॥

सर्वशास्त्रार्थतत्त्वज्ञमानन्दरससुन्दरम् ।
कौसल्यातनयं रामं धनुर्बाणधरं हरिम् ॥ १९ ॥

एवं सञ्चिन्तयेद्रामं यज्ज्योतिर्ज्योतिषां परम् ।
प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः ॥ २० ॥

सर्वलोकहितार्थाय तुष्टाव रघुनन्दनम् ।
कृताञ्जलिपुटो भूत्वा चिन्तयेदद्भुतं हरिम् ॥ २१ ॥

एवं सञ्चिन्तयेद्रामं यज्ज्योतिरमलं शुभम् ।
यदेकं यत्परं नित्यं यदानन्दचिदात्मकम् ।
तदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहम् ॥ २२ ॥

विज्ञानहेतुं विमलायताक्षं प्रज्ञानसंदीप्यसुखैकहेतुम् [रूपम्] ।
श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि ॥ २३ ॥
कविं पुराणं पुरुषं पुरस्तात्परात्परं योगिनमीशितारम् ।
अणोरणीयांसमनन्तवीर्यं प्राणेश्वरं राममसौ ददर्श ॥ २४ ॥

नारद उवाच—

नारायणं जगन्नाथमभिरामं जगत्पतिम् ।
कविं पुराणं वागीशं रामं दशरथात्मजम् ॥ २५ ॥

राजराजं रघुवरं कौसल्यानन्दवर्धनम् ।
भर्गं वरेण्यं विश्वेयं रघुनाथं जगद्गुरुम् ॥ २६ ॥

सत्यं सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुम् ।
सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणम् ॥ २७ ॥

आदित्यं रविमीशानं घृणिं सूर्यमनामयम् ।
आनन्दरूपिणं सौम्यं राघवं करुणानिधिम् ॥ २८ ॥

जामदग्निं तपोमूर्तिं रामं परशुधारिणम् ।
वाक्पतिं वरदं वाच्यं श्रीपतिं पुरुषोत्तमम् ॥ २९ ॥

श्रीशार्ङ्गधारिणं देवं चिन्मयानन्दविग्रहम् ।
हलधृग्विष्णुमीशानं बलरामं कृपानिधिम् ॥ ३० ॥

श्रीवल्लभं कलानाथं जगन्मोहनमच्युतम् ।
मत्स्यकूर्मवराहादिरूपधारिणमव्ययम् ॥ ३१ ॥

वामदेवं जगद्योनिमनादिनिधनं हरिम् ।
गोविन्दं गोपतिं कृष्णं गोपीजनमनोहरम् ॥ ३२ ॥

गोपालं गोमतीवासं गोपकन्यासमावृतम् ।
विद्युत्पुञ्जप्रतीकाशं रामं कृष्णमनामयम् ॥ ३३ ॥

गोगोपिकासमासीनं वेणुनादनतत्परम् ।
कामरूपं कलावन्तं कामिनं कामदं विभुम् ॥ ३४ ॥

मन्मथं मधुरानाथं माधवं मकरध्वजम् ।
श्रीधरं श्रीकरं श्रेयः श्रीनिवासं परात्परम् ॥ ३५ ॥

भूतेशं भूरिदं भद्रं भूतिदं भूतिभूषणम् ।
सर्वदुःखहरं देवं दुष्टदानववैरिणम् ॥ ३६ ॥

श्रीनृसिंहं महाविष्णुं महसा दीप्ततेजसम् ।
चिदानन्दमयं रामं प्रणवज्योतिरात्मकम् ॥ ३७ ॥

आदित्यमण्डलगतं (निश्चिता)[सच्चिदा]त्मस्वरूपिणम् ।
भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम् ॥ ३८ ॥

कौसलेयं कलानाथं काकुत्स्थं कमलाप्रभुम् ।
सिंहासने समासीनं सत्यव्रतमकल्मषम् ॥ ३९ ॥

विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम् ।
यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम् ॥ ४० ॥

वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम् ।
नरवानरदेवैश्च सेवितं हनुमत्प्रियम् ॥ ४१ ॥

सत्यसन्धं जितक्रोधं शरणागतवत्सलम् ।
सर्वक्लेशापहरणं विभीषणवरप्रदम् ॥ ४२ ॥

दशग्रीवहरं रौद्रं केशवं केशिमर्दनम् ।
शुद्धं सूक्ष्मं परं शान्तं तारकब्रह्मसंज्ञितम् ॥ ४३ ॥

सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम् ।
सर्वकारणकर्तारं निदानं प्रकृतेः परम् ॥ ४४ ॥

निरामयं निराभासं निरवद्यं निरञ्जनम् ।
नित्यानन्दं निराकारमद्वैतं तमसः परम् ॥ ४५ ॥

परात्परतरं नित्यं सत्यानन्दं चिदात्मकम् ।
मनसा शिरसा नित्यं प्रणमामि रघूत्तमम् ॥ ४६ ॥

वेदान्तवेद्यं कविमीशितार-
मनादिमध्यान्तविहीनमाद्यम् ।
अगोचरं निर्मलमेकरूपं
नमामि रामं तमसः परस्तात् ॥ ४७ ॥

विभूतिदं विश्वसृजं विरामं
राजेन्द्रमीशं रघुवंशनाथम् ।

अचिन्त्यमव्यक्तमचिन्त्यरूपं
भजामि रामं तमसः परस्तात् ॥ ४८ ॥

तत्त्वस्य रूपं पुरुषं पुराणं
स्वतेजसा पूरितलोकनाथम् ।
राजाधिराजं रविमण्डलस्थं
विश्वेश्वरं राममहं भजामि ॥ ४९ ॥

मुनीन्द्रगुह्यं परिपूर्णमेकं
कलानिधिं कल्मषनाशहेतुम् ।
परात्परं तत्परमं पवित्रं
नमामि नित्यं महतो महान्तम् ॥ ५० ॥

अनेकवेदात्मकमादिसंज्ञ-
माद्यं हरिं राममनन्तमूर्तिम् ।
अपारसच्चित्सुखमेकरूपं
नमामि रामं महतो महान्तम् ॥ ५१ ॥

अशेषसंसारविकारहीन-
मानन्दसम्पूर्णमुखाभिरामम् ।
समस्तसाक्षिं[क्ष्यं]तमसः परस्ता-
न्नारायणं विष्णुमहं नमामि ॥ ५२ ॥

ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा ।
रुद्रादित्याश्च वसवः साध्याश्च मुनिपुङ्गवाः ॥ ५३ ॥

विप्रा वेदास्तपो यज्ञाः पुराणं धर्मसंस्थिताः ।
वर्णाश्रमास्तथा धर्मा धर्मा वर्णाश्रमास्तथा ॥ ५४ ॥

नागा यक्षाश्च गन्धर्वा दिक्पाला दिग्गजा दिशाः ।
आदित्यादिग्रह[हा]श्चैव त्वमेव रघुपुङ्गव ॥ ५५ ॥

सप्त द्वीपाः समुद्राश्च नगा नद्यस्तथा द्रुमाः ।
स्थावरं जङ्गमं चैव त्वमेव पुरुषोत्तम ॥ ५६ ॥

देवतिर्यङ्मनुष्यणां दानवानां तथैव च ।
माता पिता तथा भर्ता त्वमेव रघुनन्दन ॥ ५७ ॥

शान्तं सर्वगतं सूक्ष्मं परब्रह्मस्वरूपिणम् ।
राजीवलोचनं रामं प्रणमामि जगत्पतिम् ॥ ५८ ॥

ततः प्रसन्नः श्रीरामः प्रोवाच मुनिपुङ्गवम् ।
तुष्टोऽस्मि मुनिशार्दूल वृणीष्व वरमुत्तमम् ॥ ५९ ॥

श्रीनारद उवाच—

यदि तुष्टोऽसि सर्वज्ञ श्रीराम करुणानिधे ।
त्वन्मूर्तिदर्शनादेव कृतार्थोऽस्मि किमीप्सितम् ॥ ६० ॥

धन्योऽहं कृतकृत्योऽस्मि पुण्योऽहं पुरुषोत्तम ।
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ६१ ॥

अद्य मे सफलं सर्वमद्य मे सफलं तपः ।
अद्य मे सफलं ज्ञानं त्वत्पदाम्भोजदर्शनात् ॥ ६२ ॥

अद्वैतं विमलं ज्ञानं त्वन्नामस्मरणं तथा ।
त्वत्पदाम्भोजसद्भक्तिं देहि मे रघुनन्दन ॥ ६३ ॥

श्रीराम उवाच—

ततः परमसुप्रीतो रामः प्राह सनातनः ।
मुनिवर्य महाभाग पुनरिष्टं ददामि ते ॥ ६४ ॥

श्रीनारद उवाच—

वरं न याचे रघुनाथ युष्म-
त्पादाब्जभक्तिः सततं ममास्तु ।
इमं प्रियं राम वरं प्रयच्छ
पुनः पुनस्त्वामिदमेव याचे ॥ ६५ ॥

इत्येवमुदितो रामः प्रादात्तस्मै वरत्रयम् ।
सर्वसौभाग्यसम्पत्तिदायकं मुक्तिदं शुभम् ॥ ६६ ॥

इति श्रीरघुनाथस्य स्तवराजं महोत्तमम् ।
ब्रह्मपुत्रेण कथितं वेदानां सारमुत्तमम् ॥ ६७ ॥

गुह्याद्गुह्यतमं राजंस्तव स्नेहात् प्रकीर्तितम् ।
यः पठेच्छृणुयाद्वापि त्रिसन्ध्यं श्रद्धयान्वितः ॥ ६८ ॥

ब्रह्महत्यादिपापानि तत्समानि बहूनि च ।
सुवर्णस्तेयपापानि तत्समानि बहूनि च ॥ ६९ ॥

सुवर्णस्तेयपापानि (गुरुतल्पायुतानि) [तत्समानि बहूनि] च ।
सर्वपापैः प्रमुच्यन्ते कल्पायुतशतोद्भवैः ॥ ७० ॥

वाचिकं मानसं पापं कर्मणा समुपार्जितम् ।
श्रीरामस्मरणेनैव व्यपोहतु न संशयः ॥ ७१ ॥

गीतानामसहस्रे द्वे स्तवराजो ह्यनुस्मृतः ।
यस्य कुक्षौ तु वर्तन्ते स वै नारायणः स्मृतः ॥ ७२ ॥

श्रीरामचन्द्र रघुपुङ्गव राजवर्य
राजेन्द्र राम रघुनायक राघवेश ।
राजाधिराज रघुनन्दन राघवेश
दासोऽहमद्य भवतः शरणं गतोऽस्मि ॥ ७३ ॥

श्रीरामरामरामेति रमे रामे मनोरमे ।
सहस्रनाम तत्तुल्यं रामनाम वरानने ॥ ७४ ॥

इदं सत्यमिदं सत्यं सत्यं नैवातिरिच्यते ।
राघवश्च परब्रह्म रामात् किञ्चिन्न विद्यते ॥ ७५ ॥

तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत् ।
रामाय रामभद्राय रामचद्राय वेधसे ॥ ७६ ॥

रघुनाथाय नाथाय सीतायाः पतये नमः ।
श्रीरामचन्द्रचरणसरोरुहाभ्यां नमः ॥ ७७ ॥

॥ इति श्रीहिरण्यगर्भसंहितायां ब्रह्मनारदसंवादे
श्रीरघुनाथस्तवराजः सम्पूर्णः ॥

---

## ५. ॥ अथ श्रीरामतारावलिः ॥

तारकं ताटकारातिं तापत्रयनिवारकम् ।
तत्स्वरूपचिदानन्दं रामं वन्दे जगद्गुरुम् ॥ १ ॥

सर्वज्ञं सर्वदेवेशं सनकादिभिरर्चितम् ।
सनातनतमं देवं रामं वन्दे जगद्गुरुम् ॥ २ ॥

विश्वरूपं विश्वधरं विश्वव्यापिनमव्ययम् ।
विश्वोत्पत्तिस्थानभूतं रामं वन्दे जगद्गुरुम् ॥ ३ ॥

तुषाराद्रिसुतावन्द्यं तृणीकृतदशाननम् ।
तुलारहितरूपाढ्यं रामं वन्दे जगद्गुरुम् ॥ ४ ॥

वरदं वासुदेवाख्यं वाल्मीकिविनुतं हरिम् ।
वंशीरवानुरक्तं च रामं वन्दे जगद्गुरुम् ॥ ५ ॥

रेवतीरमणं शान्तं राकाचन्द्रनिभाननम् ।
राक्षसान्तकरं रम्यं रामं वन्दे जगद्गुरुम् ॥ ६ ॥

निर्मलं निगमाकारं नीलजीमूतसंनिभम् ।
नित्यानन्दं निराभासं रामं वन्दे जगद्गुरुम् ॥ ७ ॥

यज्ञेशं यज्ञभोक्तारं यज्ञपुण्यफलप्रदम् ।
यक्षराक्षसभेत्तारं रामं वन्दे जगद्गुरुम् ॥ ८ ॥

भर्गधर्मप्रभेत्तारं भक्तानामभयप्रदम् ।
भक्तहृद्गेहवासिनं[संवासं] रामं वन्दे जगद्गुरुम् ॥ ९ ॥

गोधनं क्रोधरहितं गोपीजनमनोहरम् ।
गोधवार्चितपादाब्जं रामं वन्दे जगद्गुरुम् ॥ १० ॥

देवेशं देवतावन्द्यं देवान्तकनिषूदनम् ।
बाधनातीतममलं रामं वन्दे जगद्गुरुम् ॥ ११ ॥

वराहरूपं वागीशं वामनाकारमच्युतम् ।
स्नेहीकृतहनूमन्तं रामं वन्दे जगद्गुरुम् ॥ १२ ॥

सर्वज्ञं सर्वदेवेशं सर्वभूतहिते रतम् ।
सर्वयज्ञाधिपं सर्वं रामं वन्दे जगद्गुरुम् ॥ १३ ॥

भीकृतारातिनिकरं प्रकृतेः परमव्ययम् ।
प्रव्यक्तममलं भव्यं रामं वन्दे जगद्गुरुम् ॥ १४ ॥

मायातीतं मौनिगम्यं माधवं मत्स्यरूपिणम् ।
मारीचमदहन्तारं रामं वन्दे जगद्गुरुम् ॥ १५ ॥

हिरण्यवर्णं सीताभिरामावामाङ्कसंस्थितम् ।
शरण्यं सर्वलोकानां रामं वन्दे जगद्गुरुम् ॥ १६ ॥

धीरं नीरधिगम्भीरं शूरं शत्रुनिबर्हणम् ।
मारकोटिशुभाकारं रामं वन्दे जगद्गुरुम् ॥ १७ ॥

ईषाशेषमृषाशेषक्षायिनं बहुमायिनम् ।
पोषिताशेषदीनौघं रामं वन्दे जगद्गुरुम् ॥ १८ ॥

नतार्तिशममानन्दमव्ययं चित्स्वरूपिणम् ।
अव्यक्तममलं भव्यं रामं वन्दे जगद्गुरुम् ॥ १९ ॥

प्रव्यक्तममलं शान्तं मध्यमं चित्स्वरूपिणम् ।
अव्यक्तमभिभेत्तारं रामं वन्दे जगद्गुरुम् ॥ २० ॥

चोदितं वेदनिकरैर्नादबिन्दुकलात्मकम् ।
आधारं सर्वभूतानां रामं वन्दे जगद्गुरुम् ॥ २१ ॥

दयासिन्धुं सुमनसां हृदयानन्दचन्दिरम् ।
सदानन्दकरं विष्णुं रामं वन्दे जगद्गुरुम् ॥ २२ ॥

यो गतिः सर्वभूतानां योगदानादिकर्मिणाम् ।
योगमायाधारभूतं रामं वन्दे जगद्गुरुम् ॥ २३ ॥

रामतारावलीमेनां प्रत्यहं यः पठेन्नरः ।
स गच्छेद्रामसायुज्यं न पुनर्लभतेऽसुखम् [जनिम् ] ॥ २४ ॥

॥ इति श्रीरामतारावलिः सम्पूर्णा ॥

---

## ६. ॥ अथ श्रीरामब्रह्मस्तुतिः ॥

ततो हि दुर्मना रामः श्रुत्वैव वदतां गिरः ।
दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ १ ॥

ततो वैश्रवणो राजा यमश्चामित्रकर्शनः ।
सहस्राक्षो महेन्द्रश्च वरुणश्च परंतपः ॥ २ ॥

षडर्धनयनः श्रीमान् महादेवो वृषध्वजः ।
कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः ॥ ३ ॥

एते सर्वे समागम्य विमानैः सूर्यसन्निभैः ।
आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम् ॥ ४ ॥

ततः सहस्ताभरणान् प्रगृह्य विपुलान् भुजान् ।
अब्रुवंस्त्रिदशश्रेष्ठा राघवं प्राञ्जलिं स्थितम् ॥ ५ ॥

कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां प्रभुः [वरः] ।
उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥ ६ ॥

कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे ।
ऋतधामा वसुः पूर्वं वसूनां त्वं प्रजापतिः ॥ ७ ॥

त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुः ।
रुद्राणामष्टमो रुद्रः साध्यानामपि [सि]पञ्चमः ॥ ८ ॥

अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी ।
अन्ते चादौ च लोकानां दृश्यसे त्वं परंतप ॥ ९ ॥

उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा ।
इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः ॥ १० ॥

अब्रवीत् त्रिदशश्रेष्ठान् रामो धर्मभृतां वरः ।
आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ॥ ११ ॥

योऽहं यस्य यतश्चाहं भगवान् प्र[तत् ]ब्रवीतु मे ।
इति ब्रुवाणं काकुत्स्थं ब्रह्मा लोकपितामहः ॥ १२ ॥

अब्रवीच्छृणु मे राम सत्यं सत्यपराक्रम ।
भवान्नारायणो देवः श्रीमांश्चक्रधरो हरिः ॥ १३ ॥

एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ।
अक्षरं ब्रह्म सत्त्वं त्वं [सत्यं च]त्वं मध्येऽन्ते च राघव ॥ १४ ॥

लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ।
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ॥ १५ ॥

अजितः खड्गभृद्विष्णुः कृष्णश्चैव बृहद्बलः ।
सेनानीर्ग्रामणीश्च त्वं त्वं बुद्धिस्त्वं क्षमा दया ॥ १६ ॥

प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ।
इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो [1]रथाङ्गभृत् ॥ १७ ॥

शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः ।
सहस्रशृङ्गो वेदात्मा शतजिह्वो महर्षभः ॥ १८ ॥

त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुः ।
सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ॥ १९ ॥

त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः परंतप ।
प्रभवं निधनं वा ते न विदुः को भवानिति ॥ २० ॥

दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च ।
दिक्षु सर्वासु गगने पर्वतेषु वनेषु च ॥ २१ ॥

सहस्रचरणः श्रीमान् शतशीर्षः सहस्रदृक् ।
त्वं धारयसि भूतानि वसुधां च सपर्वताम् ॥ २२ ॥

---

1. रणान्तकृत्

अन्ते पृथिव्याः सलिले दृश्यसे त्वं महोरगैः ।
त्रीन् लोकान् धारयन् राम देवगन्धर्वदानवान् ॥ २३ ॥

अहं ते हृदयं राम जिह्वा देवी सरस्वती ।
देवा गात्रेषु रोमाणि निर्मिता ब्रह्मणा प्रभो ॥ २४ ॥

निमेषस्तेऽभवद्रात्रिरुन्मेषस्तेऽभवद्दिवा ।
संस्कारास्तेऽभवन् वेदा न तदस्ति त्वया विना ॥ २५ ॥

जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ।
अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षण ॥ २६ ॥

त्वया लोकाः समाक्रान्ताः [1]पुराणे विक्रमैस्त्रिभिः ।
महेन्द्रश्च कृतो राजा बलिं बद्ध्वा महासुरम् ॥ २७ ॥

सीता लक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः ।
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ॥ २८ ॥

तदिदं नः कृतं कार्यं त्वया धर्मभृतां वर ।
निहतो रावणो राम [2]प्रविष्टो दिवमाक्रम ॥ २९ ॥

अमोघं बलवीर्यं ते न ते मोघः पराक्रमः ।
अमोघं दर्शनं राम न च मोघस्तव स्तवः ॥ ३० ॥

अमोघास्ते भविष्यन्ति भक्तिमन्तस्तु ये जनाः ।
ये त्वां देव ध्रुवं प्राप्ताः पुराणपुरुषोत्तमम् ॥ ३१ ॥

प्राप्नुवन्ति सदा कामानिह लोके परत्र च ।
इममार्षं स्तवं नित्यमितिहासं पुरातनम् ।
ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥ ३२ ॥

॥ इति श्रीब्रह्मस्तुतिः सम्पूर्णा ॥

---

1. पुरा स्वैः 2. प्रहृष्टो

## ७. ॥ अथ श्रीरामरत्नदशकम् ॥

वेणुनादलोलबालगोपिकाकदम्बकं
लीलयोद्धृतैकशैलगुप्तगोकदम्बकम् ।
कामरूपकेलिलोलभूविलासिनीपतिं
राम राम राम रामनाम जल्प तारकम् ॥ १ ॥

राजराजमौलिरत्नराजिताङ्घ्रिपङ्कजं
राजराजसोदरोच्छिरःसरोजभञ्जनम् ।
रामशब्दगीतयुक्तयोगिमुक्तिदायकं
राम राम राम रामनाम जल्प तारकम् ॥ २ ॥

जानकीमनःसरोजराजहंसविभ्रमं
पारिजातजातदेववन्दितोरुविक्रमम् ।
पादपद्मरेणुधौतगौतमाङ्गनार्चितं
राम राम राम रामनाम जल्प तारकम् ॥ ३ ॥

दूषणादिराक्षसेन्द्रदन्तिकेसरीश्वरं
सप्तसालभेदकृत्यदक्षदिव्यसायकम् ।
कामितप्रदानदक्षकल्पवृक्षरूपिणं
राम राम राम रामनाम जल्प तारकम् ॥ ४ ॥

शङ्करादिगीयमानपुण्यनामकीर्तनं
भानुकोटिकान्तिकान्तरत्नशेखराञ्चितम् ।
सामगानलोलचित्तभक्तलोकनायकं
राम राम राम राम नाम जल्प तारकम् ॥ ५ ॥

जातयातुधाननाशकारिकार्मुकोज्ज्वलं
पादरेणुलेशधौतगौतमप्रियानुतम् ।
जानकीविलासलोलमानसं कृपानिधिं
राम राम राम रामनाम जल्प तारकम् ॥ ६ ॥

भनुवंशवार्धिचन्द्रमिन्द्रनीलसुन्दरं
भारतीविलासनृत्तमण्टपा[युता]ननम् ।
बालभानुकोटितुल्यपीतवस्त्रसंवृतं
राम राम राम रामनाम जल्प तारकम् ॥ ७ ॥

वारिजातपारिजातसूनशोभिकन्धरं
हारिहारशोभमानबाहुमध्यसुन्दरम् ।
कामदेव[देह]कान्तिपूरसोदराङ्गवैभवं
राम राम राम रामनाम जल्प तारकम् ॥ ८ ॥

भोगिराजभोगपीनबाहुदण्डमण्डितं
राजराजसोदरास्यपद्मशीतदीधितम् ।
वालिसूनुशोकदानधीरधीरविक्रमं
राम राम राम रामनाम जल्प तारकम् ॥ ९ ॥

नारदादियोगिबृन्दवन्द्यपादपङ्कजं
वारिदावलीनिकाशकायकान्तिसुन्दरम् ।
शारदारविन्दरविन्दपत्ररम्यदीर्घलोचनं
राम राम राम रामनाम जल्प तारकम् ॥ १० ॥

पापितापजातभेदकारणं गुणान्वितं
रामदिव्यनामयुक्तवृत्तपञ्चकद्वयम् ।
भुक्तिमुक्तिदानबद्धचित्तवृत्तिमन्वहं
वक्ति यः शृणोति सोऽपि वाञ्छितं समीहते ॥ ११ ॥

॥ इति श्रीरामरत्नदशकं सम्पूर्णम् ॥

---

## ८. ॥ अथ श्रीराघवाष्टकम् ॥

कमललोचनौ काञ्चनाम्बरौ
कवचभूषणौ कार्मुकान्वितौ ।
कलुषसंहरौ कामितप्रदौ
रहसि नौमि तौ रामलक्ष्मणौ ॥ १ ॥

धृतशिखण्डिनौ दीनरक्षकौ
धृतिहिमाचलौ दिव्यविग्रहौ ।
दिविजपूजितौ दीर्घदोर्युगौ
रहसि नौमि तौ रामलक्ष्मणौ ॥ २ ॥

पवनजानुगौ पादचारिणौ
पटुशिलीमुखौ पावनाङ्घ्रिकौ ।
परमसात्त्विकौ भक्तवत्सलौ
रहसि नौमि तौ रामलक्ष्मणौ ॥ ३ ॥

वनविहारिणौ वल्कलाम्बरौ
वनफलाशिनौ वासवस्तुतौ ।
वरगुणाकरौ वानरार्चितौ
रहसि नौमि तौ रामलक्ष्मणौ ॥ ४ ॥

घनतटिन्निभौ खड्गधारिणौ
घनजटाम्बरौ खण्डितव्यथौ ।
करशिलीमुखौ खरकरप्रभौ
रहसि नौमि तौ रामलक्ष्मणौ ॥ ५ ॥

सवनरक्षकौ सत्यसङ्गरौ
समरभीकरौ साहसान्वितौ ।
सदयमानसौ सर्वपूजितौ
रहसि नौमि तौ रामलक्ष्मणौ ॥ ६ ॥

मकरकुण्डलौ मौनिसेवितौ
मनुकिरीटिनौ मानुषोत्तमौ ।
मनुकुलेश्वरौ मञ्जुभाषिणौ
रहसि नौमि तौ रामलक्ष्मणौ ॥ ७ ॥

वरगुणास्पदं राघवाष्टकं
रहसि यः पठेद्रामभक्तिदम् ।
रहितकल्मषं रामसन्निधौ
रविसमप्रभो राजते सदा ॥ ८ ॥

॥ इति श्रीराघवाष्टकं सम्पूर्णम् ॥

---

## ९. ॥ अथ श्रीरामविश्वरूपस्तवः ॥

सूत उवाच—

ततो बदरिकारण्यं पुण्यं प्राप्य सुधर्मधीः ।
व्यासं मुनिवरश्रेष्ठं नत्वा भीष्मोऽब्रवीद्वचः ॥ १ ॥

श्रीभीष्मः—

मया मुनिवरश्रेष्ठ विश्रुता हिं सहस्रशः ।
गणेशशक्तिसूर्येशचक्रिणां स्तुतयोऽमलाः ॥ २ ॥

तेषु स्तोत्रेषु किं श्रेष्ठं ब्रूहि मे तन्मुनीश्वर ।

श्रीव्यासः—

त्वया निर्दिष्टदेवानां स्तोत्रेषु च परं वरम् ॥ ३ ॥

कोटिकोटिगुणाधिक्यं ब्रह्मणा कथितं पुरा ।
वैष्णवस्तोत्रवर्येषु सर्वेष्वपि नदीसुत ॥ ४ ॥

अनन्तपुण्यफलदा रामस्येयं महास्तुतिः ।
तामहं संप्रवक्ष्यामि शृणु भीष्म शुचिव्रत ॥ ५ ॥

सर्वपापप्रशमनीं मानसेप्सितदायिनीम् ।
निहत्य रावणं सङ्ख्ये त्रिलोकीजनदुर्जयम् ॥ ६ ॥

महामोहमिवोद्रिक्तं ब्रह्मदत्तमहावरम् ।
रामः परमधर्मात्मा मायामानुषविग्रहः ॥ ७ ॥

अयोध्यानगरीं प्राप्तो वृत्रहेवामरावतीम् ।
अथ तस्मिन् दिने पुण्ये शुभलग्ने शुभान्विते ॥ ८ ॥

राघवस्याभिषेकार्थं मङ्गलं चक्रिरे जनाः ।
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ॥ ९ ॥

मार्कण्डेयश्च मौद्गल्यः पर्वतो नारदस्तथा ।
एते महर्षयस्तत्र जपहोमपुरस्सरम् ॥ १० ॥

अभिषेकं शुभं चक्रुः श्रीरामं रघुसत्तमम् ।
नानारत्नमये दिव्ये हेमपीठे शुभान्विते ॥ ११ ॥

निवेश्य सीतया तस्मिन् जनार्दनमिव श्रिया ।
सौवर्णकलशैर्दिव्यैर्नानारत्नमयैः शुभैः ॥ १२ ॥

सर्वतीर्थोदकैः पुण्यैर्मङ्गलद्रव्यसंयुतैः ।
दूर्वाग्रतुलसीपत्रगन्धपुष्पसमन्वितैः ॥ १३ ॥

मन्त्रपूतजलैः शुभ्रैर्मुनयः संशितव्रताः ।
जपन्तो वैष्णवान् मन्त्रांश्चतुर्वेदमयान् शुभान् ॥ १४ ॥

अभिषेकं शुभं चक्रुः काकुत्स्थं जगतां पतिम् ।
तस्मिन् शुभतरे लग्ने देवदुन्दुभयो दिवि ॥ १५ ॥

निनेदुः पुष्पवर्षाणि ववृषुश्च समन्ततः ।
दिव्याम्बरैर्भूषणैश्च दिव्यगन्धानुलेपनैः ॥ १६ ॥

पुष्पैर्नानाविधैर्दिव्यैर्देव्या सह रघूद्वहम् ।
अलंकृतः स शुशुभे मुनिभिर्वेदपारगैः ॥ १७ ॥

छत्रं च चामरं दिव्यं धृतवाँल्लक्ष्मणस्तदा ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तौ विवेजतुः ॥ १८ ॥

दर्पणं प्रददौ श्रीमान् राक्षसेन्द्रो विभीषणः ।
दधार पूर्णकलशं सुग्रीवो वानरेश्वरः ॥ १९ ॥

जाम्बवांश्च महातेजाः पुष्पमालां मनोरमाम् ।
वालिपुत्रस्तु ताम्बूलं सकर्पूरं ददौ प्रियात् ॥ २० ॥

हनुमान् दीपिकां दिव्यां सुषेणस्तु ध्वजं शुभम् ।
परिवार्य महात्मानं मन्त्रिणःसमुपासिरे ॥ २१ ॥

धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्धनः ।
अकोपो धर्मपालश्च सुमन्त्रश्चाष्टमः स्मृतः ॥ २२ ॥

राजानश्च नरव्याघ्रा नानाजनपदेश्वराः ।
पौराश्च नैगमा वृद्धा राजानः पर्युपासते ॥ २३ ॥

ऋक्षैश्च वानरेन्द्रैश्च मन्त्रिभिः पृथिवीश्वरैः ।
राक्षसैर्द्विजमुख्यैश्च किंकरैश्च समन्वितः ॥ २४ ॥

परव्योम्नि यथा नित्यैर्दैवतैः कमलापतिः ।
तथा नृपवरः श्रीमान् साकेते शुशुभे सदा ॥ २५ ॥

इन्दीवरदलश्यामं पद्मपत्रनिभेक्षणम् ।
आजानुबाहुं काकुत्स्थं पीतवस्त्रधरं हरिम् ॥ २६ ॥

कम्बुग्रीवं महोरस्कं विचित्राभरणैर्युतम् ।
देव्या सह समासीनमभिषिक्तं रघूत्तमम् ॥ २७ ॥

विमानस्थाः सुरगणा हर्षनिर्भरमानसाः ।
तुष्टुवुर्जयशब्दैश्च गन्धर्वाप्सरसां गणाः ॥ २८ ॥

अभिषिक्तस्तदा रामो वसिष्ठाद्यैः समन्त्रिभिः ।
शुशुभे सीतया देव्या नारायण इव श्रिया ॥ २९ ॥

अत्यमर्त्यतया रूपमुपमातीतमुज्ज्वलम् ।
दृष्ट्वा तुष्टाव हृष्टात्मा शंकरो द्रष्टुमागतः ॥ ३० ॥

कृताञ्जलिपुटो भूत्वा सानन्दो गद्गदाकुलः ।
हर्षयन् सकलान् देवान् मुनीनपि च मानवान् ॥ ३१ ॥

रुद्रः—

नमो मूलप्रकृतये नित्याय परमात्मने ।
सच्चिदानन्दरूपाय विश्वरूपाय वेधसे ॥ ३२ ॥

नमो निरन्तरानन्दमूलकन्दाय विष्णवे ।
जगत्त्रयकृतानन्दमूर्तये दिव्यमूर्तये ॥ ३३ ॥

नमो ब्रह्मेशपूज्याय सर्वदेवमयाय च ।
नमो विष्णुस्वरूपाय सर्वरूपाय ते नमः ॥ ३४ ॥

उत्पत्तिस्थितिसंहारकारिणे त्रिगुणात्मने ।
नमोऽस्तु निर्गतोपाधिस्वरूपाय मुदात्मने ॥ ३५ ॥

अनया दिव्यया देव्या सीतयोपाधिधारिणे ।
नमः पुंप्रकृतिभ्यां च युवाभ्यां जगतां कृते ॥ ३६ ॥

जगन्मातापितृभ्यां च सीतायै राघवाय च ।
नमः प्रपञ्चरूपिण्यै निष्प्रपञ्चस्वरूपिणे ॥ ३७ ॥

नमो ध्येयस्वरूपिण्यै योगिध्येयात्मधारिणे ।
परिणामापरीणामनित्याभ्यां च नमो नमः ॥ ३८ ॥

कूटस्थबीजरूपाभ्यां जानक्यै राघवाय च ।
सीता लक्ष्मीर्भवान् विष्णुः सीता गौरी भवान् शिवः ॥ ३९ ॥

सीता स्वयं हि सावित्री स्वयं ब्रह्मा चतुर्मुखः ।
सीता शची भवानिन्द्रः सीता भैमी नलो भवान् ॥ ४० ॥

सीता संहारिणी देवी यमरूपधरो भवान् ।
सीता तु मानसी देवी निर्ऋतिस्त्वं रघूत्तम ॥ ४१ ॥

सीता तु भार्गवी देवी वरुणो यादसां पतिः ।
सीता सदागतिर्देवी जगत्प्राणधरो भवान् ॥ ४२ ॥

सीता तु सर्वसम्पत्तिः कुबेरस्त्वं जगत्पते ।
सीता च देवी रुद्राणी भवान् रुद्रो महाबलः ॥ ४३ ॥

सीता तु रोहिणी देवी चन्द्रस्त्वं लोकसौख्यदः ।
सीता संज्ञा भवान् सूर्यः सीता रात्रिर्भवान् दिनम् ॥ ४४ ॥

सीता देवी महाकाली महाकालो भवान् खलु ।
स्त्रीलिङ्गं त्रिषु लोकेषु यत्तत्सर्वं हि जानकी ॥ ४५ ॥

पुंनामलाञ्छितं वस्तु यत्तत्सर्वं भवान् प्रभो ।
सर्वत्र सर्वदेहेषु सीता षट्चक्रधारिणी ॥ ४६ ॥

तथा त्वमपि च क्षान्तस्त्रीजातिर्विश्वभासिनी ।
तस्माद्विश्वमिदं प्रोक्तं युवाभ्यां परिचिह्नितम् ॥ ४७ ॥

चिह्नितं शिवशक्तिभ्यां शरीरं नान्तरा प्रभो ।
आवां राम जगत्पूज्यौ मम पूज्यौ युवां सदा ॥ ४८ ॥

त्वन्नामजापिनी गौरी त्वन्मन्त्रजपवानहम् ।
मुमुक्षोर्मणिकण्ठ्यन्धु रन्ध्रोदकनिवासिनः (?) ॥ ४९ ॥

अहं दिशामि ते मन्त्रं तारकब्रह्मवाचकम् ।
श्रीरामरामरामेतीत्येतत्तारकमुच्यते ॥ ५० ॥

अतस्त्वं जानकीनाथ परं ब्रह्मासि निश्चितम् ।
त्वन्मायामोहिताः सर्वे न त्वां जानन्ति तत्त्वतः ॥ ५१ ॥

इत्युक्तः शम्भुना रामः प्रसादप्रवणोऽभवत् ।
विश्वरूपधरः श्रीमानद्भुताकारदर्शनः ॥ ५२ ॥

तं तथारूपमालोक्य नरवानरदेवताः ।
न द्रष्टुमपि शक्तास्ते तैजसं महदद्भुतम् ॥ ५३ ॥

भयाद्वै त्रिदशश्रेष्ठाः प्रणेमुश्चातिभक्तितः ।
भीता विज्ञाय रामोऽपि नरवानरदेवताः ।
मायामानुषतां प्राप्य सर्वानेवाब्रवीद्वचः ॥ ५४ ॥

श्रीरामचन्द्रः—

शृणुध्वं देवता यो मां प्रत्यहं संस्तविष्यति ।
स्तवेन शम्भुनोक्तेन वेदतुल्येन मानवः ॥ ५५ ॥

विमुक्तः सर्वपापेभ्यो मत्सारूप्यं समश्नुते ।
रणे जयमवाप्नोति न क्वचित् परिभूयते ॥ ५६ ॥

भूतवेतालकृत्यादिग्रहैश्चापि न बाध्यते ।
अपुत्रो लभते पुत्रं पतिं विन्दति कन्यका ॥ ५७ ॥

दरिद्रः श्रियमाप्नोति स प्रभूतामनश्वराम् ।
सर्वलोकप्रियो विद्वान् सर्वभूपालपूजितः ॥ ५८ ॥

आत्मनोऽपि प्रियः स्त्रीणां जायते नात्र संशयः ।
निर्विघ्नः सर्वकार्येषु सर्वारम्भो भवेन्नरः ॥ ५९ ॥

यं यं कामयते मर्त्यः सुदुर्लभमनोरथम् ।
षण्मासात्तं तमाप्नोति स्तवस्यास्य प्रकीर्तनात् ॥ ६० ॥

सर्ववेदेषु यत्पुण्यं सर्वतीर्थवरेषु च ।
सर्वयज्ञेषु दानेषु तत्सर्वं लभते फलम् ॥ ६१ ॥

श्रीव्यासः—

इत्युक्त्वा रामचन्द्रोऽपि प्रपूज्य च महेश्वरम् ।
ब्रह्मादित्रिदशैः सर्वैर्विससर्ज समन्वितम् ॥ ६२ ॥

अर्चिता मानिताः सर्वा नरवानरदेवताः ।
विसृष्टा रामचन्द्रेण प्रीत्या परमया युताः ॥ ६३ ॥

इत्थं विसृष्टाः खलु ते च सर्वे
स्वं स्वं पदं जग्मुरतीव तुष्टाः ।
हृष्टाः पठन्तः स्तवमीश्वरोक्तं
रामं स्मरन्तो नरविश्वरूपम् ॥ ६४ ॥

॥ इति श्रीपाद्मपुराणे श्रीरामविश्वरूपसंदर्शनस्तवः सम्पूर्णः ॥

---

## १०. ॥ अथ श्रीरामसप्तर्षिस्तोत्रम् ॥

काश्यपः—

नित्यं किं धावसि चलविषयाननुभवितुं सुखलेशाभासानुरुतरदुःखानति-दुःसहानत्यन्तायासानंहोमूलानुग्रभयङ्कररौरवादिनारकगतिहेतूनेतानपि परिहर सीतापतिमाशु परिचरेशं भो चेतः श्रीरामं भज शरणम् ॥

श्रितचिन्तामणिमतिकरुणाकरमरिहरमुरुतरशरकोदण्डं भो चेतः श्रीरामं भज शरणम् ॥ १ ॥

अत्रिः—

बहुविधपापवशादिह नानायोनिषु जन्ममृतिर्यो देही दैवादुत्तममानुषपूरुष-विप्रदेहविद्यासम्पन्नोऽपि ब्रह्मणि परमे विमुखो दुःखी दुर्विषयैषी नश्यति तृणकबलस्वीकरणे काले पशुरिव रोमन्थं कुर्वन् भो चेतः श्रीरामं भज शरणम् ।

श्रितचिन्तामणिमतिकरुणाकरमरिहरमुरुतरशरकोदण्डं भो चेतः श्रीरामं भज शरणम् ॥ २ ॥

भरद्वाजः—

उपर्युपरि मनोरथजालं विद्वानपि कामयते यतते पुत्रमित्रकलत्रादिषु निर्वेदं नैति कामकामी विद्यासम्पत्कुलधनसौभगयौवनगर्वपर्वताधिरूढो मूढः पश्चादन्धे तमसि पतेदवशोऽन्धोऽन्धुमिव भो चेतः श्रीरामं भज शरणं भज रघुरामं शरणम् ॥

श्रितचिन्तामणिमतिकरुणाकरमरिहरमुरुतरशरकोदण्डं भो चेतः श्रीरामं भज शरणम् ॥ ३ ॥

विश्वामित्रः—

अरिषड्वर्गं जहि तृष्णामपि मायाविलसितमिदमिति बुद्ध्वा दुर्जनसङ्गतिमतिदूरीकुरु सज्जनमाश्रय भो परधनपरदाराभिरतिं त्यज पारलौकिकं धर्मं परिचिनु पद्मापतिपदपद्मं सेव(य)[स्व] बन्धविमुक्त्यै भो चेतः श्रीरामं भज शरणम् ॥

श्रितचिन्तामणिमतिकरुणाकरमरिहरमुरुतरशरकोदण्डं भो चेतः श्रीरामं भज शरणम् ॥ ४ ॥

गौतमः—

कर्णाकर्णय वैदेहीवरवर्णनीयगुणवन्दितचरितं नयनालोकय नयननलिनमुखसुन्दरेन्दुबिम्बं मस्तक संस्तुतमहिमानं नम कस्तूरीनिकराकारं हस्तयुगार्चय हरिपदममलं ह्यवनीपालमिनकुलरत्नं भो चेतः श्रीरामं भज शरणं भज रघुरामं शरणम् ॥

श्रितचिन्तामणिमतिकरुणाकरमरिहरमुरुतरशरकोदण्डं भो चेतः श्रीरामं भज शरणम् ॥ ५ ॥

जमदग्निः—

परापवादं परिहर जिह्वे पारुष्यं चानृतमपि मा वद सङ्कीर्तय केशव नारायण दामोदर कृष्ण नरहरे वैकुण्ठाधिप लक्ष्मीवल्लभ बुधजनमानसमन्दिर सीतानायक दशरथनन्दन इति सततं भो चेतः श्रीरामं भज शरणम् ॥

श्रितचिन्तामणिमतिकरुणाकरमरिहरमुरुतरशरकोदण्डं भो चेतः श्रीरामं भज शरणम् ॥ ६ ॥

वसिष्ठः—

नित्यानन्दं सत्यमनन्तं ब्रह्म परात्परमव्ययममलं नित्यं शुद्धं बुद्धं शाश्वतमप्रमेयमनाद्यन्तं सर्वासामुपनिषदामर्थोऽयं श्रीरामः सीतापतिरिति चतुराननशिवहैमवतीजपसर्वस्वं मन्त्रं भो चेतः श्रीरामं भज शरणं भज रघुरामं शरणम् ॥

श्रितचिन्तामणिमतिकरुणाकरमरिहरमुरुतरशरकोदण्डं भो चेतः श्रीरामं भज शरणम् ॥ ७ ॥

एवं स्तुत्वा रामचन्द्रं मुनीन्द्राः
प्रत्येकं ते भक्तिनम्रास्तदानीम् ।
आपन्नार्तिध्वान्तभानुं प्रपन्ना-
स्तूष्णीमासन् रामपादैकनिष्ठाः ॥ ८ ॥

॥ इति श्रीरामसप्तर्षिस्तोत्रं सम्पूर्णम् ॥

---

## ११. ॥ अथ श्रीरामनामस्तुतिः ॥

राशब्दोच्चारणादेव मुखान्निर्यान्ति पातकाः ।
पुनः प्रवेशनभिया मशब्दस्तु कवाटवत् ॥ १ ॥

रामेति वर्णद्वयमादरेण
सदा स्मरन् मुक्तिमुपैति जन्तुः ।
कलौ युगे कल्मषमानसाना-
मन्यत्र धर्मे खलु नाधिकारः ॥ २ ॥

जानाति राम तव नामरुचिं महेशो
जानाति गौतमसती चरणप्रभावम् ।
जानाति दोर्बलपराक्रममीशचापो
जानात्यमोघपटुबाणगतिं पयोधिः ॥ ३ ॥

जानाति राम तव चित्तगतिं हनूमान्
जानाति राम तव सख्यगतिं कपीशः ।
जानाति राम तव युद्धगतिं दशास्यो
जानाति राम तव मोक्षगतिं गजेन्द्रः [खगेन्द्रः[1]] ॥ ४ ॥

पटुतरजलधीरध्वानमादाय चापं
पवनजवनमेकं बाणमाकृष्य तूणात् ।
अभयवचनदायी सानुजः सर्वतो मे
रणहतदनुजेन्द्रो रामचन्द्रः सहायः ॥ ५ ॥

॥ इति श्रीरामनामस्तुतिः सम्पूर्णा ॥

---

1. जटायुरित्यर्थः

## १२. ॥ अथ श्रीरामसम्बोधनस्तोत्रम् ॥

मत्स्य कूर्म किटे मर्त्यसिंह वामन भार्गव ।
राम प्रलम्बहन् कृष्ण कल्किन्[कल्के]पाहि दशाकृते ॥ १ ॥

॥ बालकाण्डः ॥

राम दाशरथे रक्ष कौसल्यातनयाग्रज ।
भरतस्य च सौमित्र्योः क्रीडापर मनोहर ॥ २ ॥

अधीतवेदवेदाङ्गधनुर्वेद महामते ।
कौशिकार्थित तल्लब्धबलातिबल पाहि माम् ॥ ३ ॥

ताटकाताटकेयारे गाधिजाध्वररक्षक ।
पादरेणुकणत्राताहल्य कल्यो वने मम ॥ ४ ॥

माहेश्वरधनुर्भङ्गप्रीतवैदेहतत्सुत ।
गृहीतपाणे सीतायाः स्वतातस्य नियोगतः ॥ ५ ॥

जामदग्न्यनिरुद्धाध्वन् धनुषा तत्तपोहर ।
प्रविश्यायोध्य भुञ्जान मानुषान् भोगसञ्चयान् ॥ ६ ॥

बहूनृतन् भुविजया सार्धं तं मानसार्पितम् [सन्मानसार्चित] ।
श्रिया विष्णुरिवाजस्रं तया शोभित पाहि माम् ॥ ७ ॥

॥ अयोध्याकाण्डः ॥

राज्यदानसमुद्युक्तजनकासङ्ख्यसद्गुण ।
मन्थराहितरोषेण कैकेय्या विघ्नितोत्सव ॥ ८ ॥

संत्यक्तराज्य तत्प्रीत्यै वनवासमहोदय ।
ससीतालक्ष्मणारण्यं प्रयातोद्दिश्य तापस ॥ ९ ॥

अनुयात जनेनापि दूरं साकेतवासिना ।
पितृभ्यां तमसातीरं प्राप्त वञ्चिततज्जन ॥ १० ॥

शृङ्गिबेरपुरे लब्धनिषादक्षितिभृत्सख ।
तीर्णगङ्गासरित् भूयस्सन्निवर्तितसारथे ॥ ११ ॥

[भरद्वाजस्य] वचसा चित्रकूटमुपागत ।
सीतया प्राप्तविहृते रम्येष्वेतस्य सानुषु ॥ १२ ॥

पितुर्मरणतः पश्चान्मातुलस्य कुलात् पुरीम् ।
अयोध्यामागतेनात्मज[नकादर्शनो]द्भवात् १३ ॥

कोपात् सन्तप्तमनसा राज्यप्राप्तौ विरागिणा ।
वसिष्ठाद्यनुशिष्टेन निन्दितात्तपुरोधसा ॥ १४ ॥

भ्रात्रा शिष्येण दासेन भरतेन [मुहुर्मुहुः] ।
शिरसा याचितास्मै तु दत्तश्रीपादुकाद्वय ॥ १५ ॥

तस्मिन्निवृत्ते संत्यज्य चित्रकूटगिरिं गत ।
अत्र्याश्रमं तत्प्रिययानसूयाभिख्यया ततः ॥ १६ ॥

दिव्याम्बराङ्गरागादिवस्तुना जानकीगुणैः ।
प्रीतया मानितात्मीयदारानिन्दिततत्पद ॥ १७ ॥

॥ अरण्यकाण्डः ॥

प्रविष्टदण्डकारण्य तद्वासिमुनिसत्तमैः ।
आशासानै[र्दैत्यवधं] स्वरक्षार्थमुपस्थित ॥ १८ ॥

प्रतिश्रुतावनैतेषां भवद्विषयवासिनाम् ।
विराधमाथिन्नात्मीयपादचाराङ्किताश्रम ॥ १९ ॥

शरभङ्गादियमिनां वचसा[प्रीतमानस] ।
प्राप्तपञ्चवटीस्थान रम्ये गोदावरीतटे ॥ २० ॥

वृषस्यन्त्या शूर्पणख्या पतित्वेनार्थितार्तया ।
सौमित्रिणा छिन्ननासाकर्ण तस्याः स्वबाहुना ॥ २१ ॥

तत्क्षणेन तदार्त्युत्थखरादिरिपुभञ्जन ।
चतुर्दशसहस्रत्रियामाचरनिषूदन ॥ २२ ॥

तच्छ्रुत्वा सरुषा पङ्क्तिवदनेन तनूजतः (?) ।
सुन्दस्य स्वसहायेन मायामृगवपुर्भृता ॥ २३ ॥

विलोभितात्मदाराथ तया प्रेरित तद्गृहे ।
मारीचानुगतैतस्य प्राणहारिन्ननुद्रुत ॥ २४ ॥

जानकीवाक्यतप्तेन लक्ष्मणेन दशास्यतः ।
विजनादाश्रमपदात् गृहीतप्रिय चोरतः ॥ २५ ॥

मध्येमार्गं खगेन्द्रेण विरथेन कृताजिना ।
तत्प्राणहारिणाशोकवनिकास्थापितप्रिय ॥ २६ ॥

निवृत्तारण्यतस्सीताऽदर्शनात्तप्रमानस ।
अरण्येषु महीध्रेषु सरित्सु सरसीषु च ॥ २७ ॥

महिलाविचितोन्मत्तदशापन्न स्मरार्तिमन् ।
कृतसंस्कारगृध्रेश ब्रह्ममेधविधानतः ॥ २८ ॥

तन्मोक्षदायिन् सत्येन जितलोकप्रदानतः ।
शुश्रूषया च धनुषा जितदीनार्यशत्रुक ॥ २९ ॥

हतयोजनबाह्वाख्योदरतूरकबन्धक (?) ।
[ततः प्रस्थाय] शबरीं प्राप्त सम्पूजितैतया ॥ ३० ॥

॥ किष्किन्धाकाण्डः ॥

पम्पातीरे हनुमता सङ्गताथाग्रजन्मना ।
वालिना सूनुना भानोर्निरस्तेन समन्त्रिणा ॥ ३१ ॥

ऋश्यमूकाद्रिशिखरे कृतसख्याग्निसाक्षिकम् ।
सालभञ्जनसञ्जातप्रत्ययेन तदुक्तितः ॥ ३२ ॥

हतवालिन् पुनस्तस्मै दत्तवानरराजत ।
सहतारारुमं वर्षाकाले माल्यवदाह्वये ॥ ३३ ॥

गिरौ सीताविरहजं प्राप्त दुःखमगोचरम् ।
वाचां, कनीयसाश्वस्त कुपिते मत्तचेतसि ॥ ३४ ॥

ग्राम्यभोगरते भानुतनये स्वानुजे पुरीम् ।
किष्किन्धां याति तद्द्वारे विहितज्यारवे सति ॥ ३५ ॥

भीतेन हनुमद्वाक्यात् सुमित्रात्मजसान्त्वने ।
तारां प्रेषयता तेन कपीन् संगृह्यताखिलान् ॥ ३६ ॥

अरण्यपर्वतनदीवासानतिबलोत्कटान् ।
दिक्षु प्रेषयता सर्वास्वशेषान् वदताद्भुतान् ॥ ३७ ॥

तेभ्यो देशान् समन्विष्टवैदेहतनयात्मजे ।
वायोरर्पितकार्यत्वाद्दत्ताङ्गुलिविभूषण ॥ ३८ ॥

ताराङ्गदादियुक्तेन तत्र तत्र विचिन्वता ।
सीतां कालात्ययात्तीक्ष्णदण्डत्वाद्वानरप्रभोः ॥ ३९ ॥

भीतेनाश्वस्तमनसा सम्पातेर्वचसा पुनः ।
स्वभ्रातृवधदुःखस्य तस्मै दत्तजलाञ्जलेः ॥ ४० ॥

अशोकवनिकावाससीतादर्शिस्वचक्षुषः ।
रामसाहाय्यकरणसमुत्थितगरुत्मतः ॥ ४१ ॥

॥ सुन्दरकाण्डः ॥

महेन्द्रशैलारूढेन तूर्णं तीर्णपयोधिना ।
अनाश्वस्तेन तन्मध्ये सिंहिकाद्यनिरोधिना ॥ ४२ ॥

प्रविष्टेन पुरीं लङ्कां रात्रौ तद्देवता जिता ।
शीधुपानमदाविष्टनिद्राणस्य वधूस्ततः ॥ ४३ ॥

दशास्यस्यालोकयता निराशेनापि दर्शने ।
वैदेह्याः शिंशपामूले वसन्त्यास्तत्तरोः पुनः ॥ ४४ ॥

दलावृतेन कथिताशेषराघववृत्ततः ।
प्रत्ययार्थं सशङ्कायः सीताया भूरुहात्ततः ॥ ४५ ॥

अवतीर्णेन दत्तस्वकरभूषेण सीतया ।
आलोकितेन शस्तेन कृतसंभाषणेन च ॥ ४६ ॥

उक्तकाकादिवृत्तेन दत्तचूडाविभूषतः ।
उक्तस्वदैन्यवाक्येन स्वमुद्दिश्य तु जीवनम् ॥ ४७ ॥

अनुज्ञातेन रचिताशोककाननभङ्गतः ।
प्रासादभेदिना रम्यतोरणं समुपेयुषा ॥ ४८ ॥

दासोऽहं कोसलेन्द्रस्येत्यादि श्रावयता वचः ।
किङ्करान् पञ्च सेनेशान् सप्त मन्त्रिसुतानपि ॥ ४९ ॥

जम्बुमालिनमक्षं च युद्धे हतवता बलात् ।
वलारिजिद्विसृष्टेन ब्राह्मेणास्त्रेण बन्धनात् ॥ ५० ॥

रज्ज्वन्तराणां संसर्गाद्विमुक्तेनाञ्जसा पुनः ।
तज्ज्ञात्वापि कृतां पीडां सहमानेन राक्षसैः ॥ ५१ ॥

प्रविष्टेन दशग्रीवसभां यातुभिरावृताम् ।
कथितस्वकपीशानसख्यमुख्यप्रवृत्तिना ॥ ५२ ॥

कुपितेनारिणा हिंसां कर्तुमुद्युञ्जता पुनः ।
विभीषणवचोभङ्गीविनिवर्तितचेतसा ॥ ५३ ॥

दहतास्य प्रियं वालमित्यादिष्टवता भटान् ।
दग्धवालेन वालाग्निदग्धारिपुरवेश्मना ॥ ५४ ॥

वैदेहीकरुणावाक्यशीतलाङ्गूलवाह्निना ।
प्रस्थितेन पुनः शैलं त्रिकूटमधितिष्ठता ॥ ५५ ॥

तीर्णवारिधिना सर्वैर्नन्दितेनाङ्गदादिभिः ।
तेभ्यः प्रोक्तस्ववृत्तेन पानेऽनुमतिदायिना ॥ ५६ ॥

मधुनो वारितवता तद्वनावनवानरान् ।
दधिवक्त्रमुखानात्मसन्निधानमुपेयुषा ॥ ५७ ॥

विज्ञापितात्ममहिलादृष्टिवाक्य हनूमता ।
प्रशंसित परिष्वक्तमारुतात्मज ते नमः ॥ ५८ ॥

॥ युद्धकण्डः ॥

श्रुत्वा हनुमतो वाक्यं हरिवीरैर्वृताध्वनि ।
सुग्रीवप्रमुखैस्तीरं प्राप्त सिन्धुमहीपतेः ॥ ५९ ॥

तत्रागताय संत्यज्य पूर्वजं कालचोदितम् ।
[सत्य]वाक्यमश्रृण्वन्तं मैथिलीदानगोचरम् ॥ ६० ॥

स्वनिन्दनपरित्यक्तपुत्रदाराय धीमते ।
आत्मानं सर्वलोकानां शरण्यं भजते गतिम् ॥ ६१ ॥

सुग्रीवादीन् पुरस्कृत्य स्वाकिञ्चन्यपुरस्सरम् ।
विभीषणाय सर्वेभ्यो भूतेभ्योऽभयदायक ॥ ६२ ॥

इममाशङ्कमानानां सुग्रीवादिवनौकसाम् ।
परिहारकर स्वीयसामर्थ्यस्य प्रदर्शनात् ॥ ६३ ॥

भूयस्तदनुमत्या तमङ्गीकृत्याभिषेचनम् ।
कृतवांस्तस्य तद्वाक्यात् समुद्रं शरणागत ॥ ६४ ॥

दर्भानास्तीर्य तत्तीरे प्राङ्मुखाञ्जलिबन्धन ।
उपाधाय भुजं स्वीयं शयान प्रतिवारिधिम् ॥ ६५ ॥

तस्मिन्नदत्तवदने संत्यक्तक्षम कोपन ।
चापसंहितहैरण्यगर्भास्त्रारिमन् समागते ॥ ६६ ॥

निष्कोपोत्तरपाथोधितीरस्थासुरमर्दन ।
तेन तद्वाक्यतो बद्धनलसेतो तदम्भसि ॥ ६७ ॥

तीर्णवारिनिधे शाखामृगसङ्घैः सहाचिरात् ।
तस्य दक्षिणतीरे तु प्राप्तलङ्कापुरान्तिक ॥ ३८ ॥

अध्वयानपरिश्रान्त त्रातवानरसैन्यक ।
सुवेलशैलश्रृङ्गस्थ सुग्रीवप्रमुखैः सह ॥ ६९ ॥

दृष्टत्रिकूटमूर्धस्थलङ्कापुर समन्ततः ।
तदीशमकुटीभङ्गकृता वानरभूभृता ॥ ७० ॥

पुनः सङ्गत तत्स्तोत्रपर तत्साहसाक्षम ।
निरुद्धलङ्कानगर काननालयपुङ्गवैः ॥ ७१ ॥

शक्रजित्प्रेरितैर्नागपाशैर्बद्धाङ्ग पक्षिणाम् ।
नाथेन मुक्तगात्रास्माद्बन्धनादपि कर्कशात् ॥ ७२ ॥

हतधूम्राक्ष पुत्रेण मरुतो वालिसूनुना ।
वज्रदंष्ट्रासुहननकर मारुतसूनुना ॥ ७३ ॥

हताकम्पन नीलेन हत(कपि)सेन महीभृता ।
हतरावणसैन्येशप्रहस्ताह्वयराक्षस ॥ ७४ ॥

प्रथमायोधने पङ्क्तिमुखप्रेरितशक्तितः ।
विद्धलक्ष्मण तेनानुद्धृतावरज शत्रुणा ॥ ७५ ॥

वायुसूनोस्तु सौहार्दाद्भक्त्या परमयापि च ।
उद्धृतौ ... ...कनिष्ठाश्रितवत्सल (?) ॥ ७६ ॥

समितावधिरूढांससदागतिसुतोत्तम ।
पराजितस्वबाणार्तिमुक्तचापदशानन ॥ ७७ ॥

गत्वा विश्रम्यतां लङ्कामित्यनुज्ञाप्रदेशितुः ।
रक्षसां स्वाशुगस्मृत्या व्यथितारातिमानस ॥ ७८ ॥

तद्भयेनातिनिद्रस्योत्थापितस्यातियत्नतः ।
गिरिमात्रशरीरस्य कुम्भकर्णस्य युध्यतः ॥ ७९ ॥

कपिराजनखालूनकर्णनासस्य नर्दतः ।
वधकारिन् वालिसूनुहस्ताहतनरान्तक ॥ ८० ॥

हनुमत्संहतस्वर्गनिलयान्तक तेन च ।
हतत्रिशीर्षातिकायप्राणासंहारिलक्ष्मण ॥ ८१ ॥

रावणीरितविध्यस्त्रविवशाङ्गानुजादिभिः ।
सार्धं वायुसुतानीतदिव्यौषधविशेषतः ॥ ८२ ॥

विमुक्तपीड सुग्रीवहतकुम्भ हनूमता ।
निकुम्भप्राणहरण मकराक्षहर स्वयम् ॥ ८३ ॥

निकुम्भिलायां शक्रारिकृतहोमविघाततः ।
विभीषणवचोजातात् कुपितेनेन्द्रवैरिणा ॥ ८४ ॥

सार्धं कृताजिना नानादिव्यास्त्रज्ञेन धीमता ।
धर्मात्मेत्यादिपद्येन प्रतिज्ञां कुर्वता ततः ॥ ८५ ॥

सौमित्रिणा स्वानुजेन हतप्राणेन्द्रशात्रव ।
भिषत्सु वानरेन्द्रेषु नानामूर्तिधर स्वयम् ॥ ८६ ॥

हतमूलबलाढ्येन शौर्यवीर्यादिसम्पदा ।
नानास्त्रविदुषा देवसङ्घगर्वापकर्षिणा ॥ ८७ ॥

कृताजे पङ्क्तिवक्त्रेण स्यन्दनं जम्भभेदिनः ।
आरुह्य सूतेनानीतं दिव्यं मातलिनास्त्रतः ॥ ८८ ॥

अनेकधा विलूनारिदशशीर्ष स्वयंभुवः ।
अस्त्रेण संहृताराते पूर्वजस्योत्तरक्रियाम् ॥ ८९ ॥

कृतचित्तसमाधान न चिकीर्षोर्जुगुप्सया ।
विभीषणस्य तेनैव विहितारातिसंस्कृते ॥ ९० ॥

प्रलापवाक्यैस्तत्स्त्रीणां निजपारम्य[सूचकैः] ।
ज्ञापितोत्कर्ष सीतायां श्रुत्वा विजयमाहवे ॥ ९१ ॥

निजं हनूमद्वाक्येन सन्तुष्टौ राक्षसीगणम् ।
अपराधिनमप्यस्माद्रक्षन्त्यां दयया ततः ॥ ९२ ॥

विभूषितायां भूषाभिः स्नातायां निजमन्तिकम् ।
विभीषणेनानीतायामशोकगहनादरेः ॥ ९३ ॥

निजचारित्रसन्देहात् प्रविशन्त्यां हुताशनम् ।
समागतैर्ब्रह्ममुख्यैर्दैवतैर्विहितस्तुते ॥ ९४ ॥

तातं निजं पुरस्कृत्य दत्तसीत कृशानुना ।
शक्रादिवरलाभेन समुत्थापितवानर ॥ ९५ ॥

कृताभिषेक लङ्कायां रावणावरजस्य तु ।
यक्षनाथविमानेन पुष्पकेणाशुगामिना ॥ ९६ ॥

प्रतिप्रयात वैदेह्यै प्रोक्तस्वचरिताध्वनि ।
सुग्रीवप्रमुखैःस्साधं सहदारैः प्लवङ्गमैः ॥ ९७ ॥

भरद्वाजाश्रमं प्राप्त वर्षे पूर्णे चतुर्दशे ।
आर्ताय भरतायाथ प्रेरितानिलसम्भव ॥ ९८ ॥

अभियातामुना सार्धं वसिष्ठाद्यैः समन्त्रिभिः ।
नन्दिग्रामगत त्यक्तजट स्नात विभूषणैः ॥ ९९ ॥

भूषिताङ्गाभ्यनुज्ञातयान यक्षमहीभृते ।
स्यन्दनारूढ संप्राप्तसाकेतनगर जनैः ॥ १०० ॥

पौरैरस्माद्रत प्राप्त निजतातगृहोत्तमम् ।
वसिष्ठाद्यैः ससचिवैरभिषिक्त पितुः पदे ॥ १०१ ॥

विभीषणाय दत्तस्वकुलनाथात्मभक्तये ।
विसृष्ट भानुतनयमुखवानरसञ्चय ॥ १०२ ॥

॥ उत्तरकाण्डः ॥

वत्सरान् दशसाहस्रान् दशवर्षशतान्वितान् ।
नीतिशास्त्रप्रकारेण पालितावनिमण्डल ॥ १०३ ॥

कृताश्वमेध रचितवाजपेय पुनः पुनः ।
तथा बहुसुवर्णादिक्रत्वनुष्ठानतत्पर ॥ १०४ ॥

सामन्तराजमकुटीखचितैर्मणिमण्डलैः ।
नीराजितपदाम्भोजद्वन्द्व भूजनरञ्जन ॥ १०५ ॥

हृष्टैर्दशास्यनिधनादभिनन्दित योगिभिः ।
कुम्भोद्भवमुखैः प्रोक्तरावणादिकथागणैः ॥ १०६ ॥

अन्तर्वत्न्यां तु सीतायां वनवासरतौ पुनः ।
तद्वधाजाज्जनवार्तार्तचेतो वाल्मीकिसद्मनि ॥ १०७ ॥

लक्ष्मणस्थापितात्मीयदार तस्यामथाश्रमे ।
मुनेर्यमौ प्रसूतायां नाम्ना कुशलवौ सुतौ ॥ १०८ ॥

तयोर्वृद्धिमतोस्तेन मुनीन्द्रेणोपनीतयोः ।
अधीतसाङ्गसशिरोवेदयोर्मुनिना कृतम् ॥ १०९ ॥

तेन रामायणं वाचो विधेयं कुर्वतोः सतोः ।
क्रियमाणे वाजिमेधे जानानां पुरवासिनाम् ॥ ११० ॥

तथा जानपदानां च राज्ञां संसदि योगिनाम् ।
ताभ्यां विज्ञापितस्वीयप्रबन्ध भ्रातृभिः सह ॥ ॥ १११ ॥

श्रवणादस्य सन्तुष्टमानसाम्बुज.... ।
चरेभ्योऽप्यचरेभ्योऽपि दूर्वादिभ्यस्त्वहेतुकम् ॥ ११२ ॥

साकेतदेशवासिभ्यो दत्तमोक्ष दयानिधे ।
विजयीभव नित्यं त्वमयोध्याधिपनन्दन ॥ ११३ ॥

मङ्गलं राघवायास्तु मङ्गलं लक्ष्मणाय च ।
मङ्गलं भरतायास्तु शत्रुघ्नायापि मङ्गलम् ॥ ११४ ॥

सीतायै मङ्गलं भूयात्तनयाय सदागतेः ।
तत्सेवनपरायास्तु तद्भक्तिस्नेहराशये ॥ ११५ ॥

पुराय भूयात् साकेतनाम्ने दिव्यर्धिमीयुषे ।
अस्तूत्तराय देशाय कोसलायापि मङ्गलम् ॥ ११६ ॥

सम्बोधनमिदं स्तोत्रं सूनुना वादिभीकृतः ।
वेङ्कटेशेन रामस्य रचितं जयतात् सदा ॥ ११७ ॥

॥ इति श्रीरामसम्बोधनस्तोत्रं सम्पूर्णम् ॥

---

१३. ॥ अथ श्रीत्रैलोक्यमोहनवज्रपञ्जररामकवचम् ॥

अस्य श्रीत्रैलोक्यमोहनवज्रपञ्जरकवचस्य ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीरामचन्द्रो देवता, रां बीजं, रीं शक्तिः, रूं कीलकम् । मम समस्तप्रारब्धपरिहारद्वारा श्रीरामचन्द्रप्रीत्यर्थे जपे विनियोगः । रामित्यादि षडङ्गन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम् ।

नीलाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मकुटाङ्गदादिविलसद्रत्नोज्ज्वलाङ्गं भजे ॥ १ ॥

लमित्यादि पञ्चपूजा ।

ओं श्रीपार्वत्युवाच—

भगवन् सर्वदेश सर्वदेवनमस्कृत ।
सर्वं मे कथितं देव राममन्त्रं विशेषतः ॥ २ ॥

त्रैलोक्यमोहनं नाम कवचं पूर्वसूचितम् ।
कथयस्व महाभाग यद्यहं तव वल्लभा ॥ ३ ॥

श्री ईश्वर उवाच—

शृणु वक्ष्यामि देवेशि कवचं परमाद्भुतम् ।
अत्यन्तगोपितं गुह्यं ब्रह्ममन्त्रौघविग्रहम् ॥ ४ ॥

कवचस्य ऋषिर्ब्रह्मा गायत्री छन्द ईरितम् ।
देवता रामचन्द्रोऽस्य विनियोगोऽष्टसिद्धिषु ॥ ५ ॥

ओम् । प्रणवो मे शिरः पातु तारकब्रह्मरूपधृत् ।
अनन्तोऽग्निसहस्रेन्दुः नासां पातु रघोः पतिः ॥ ६ ॥

रां रामाय नमस्तुभ्यं षड्वर्णो भुक्तिमुक्तिदः ।
फालं पायान्नेत्रयुग्मं रामो त्र्यक्षरसंज्ञकः ॥ ७ ॥

रां रामचन्द्राय नमो भ्रूद्वयं पातु मेऽन्वहम् ।
रां रामभद्राय नमश्चुबुकं पातु मे सदा ॥ ८ ॥

क्लीं मे पायाच्छ्रोत्रयुग्मं कर्णौ मे विश्वमोहनः ।
क्लीं रामाय नमश्चेति मुखं मे परिरक्षतु ॥ ९ ॥

तारं रामचतुर्थं तु क्रोधास्त्रवह्निकल्पितम् (?) ।
अष्टार्णोऽयं परो मन्त्रो जिह्वां मे पातु सर्वदा ॥ १० ॥

गुणं बीजं तथा मायां हृद्रामाय ततश्चर ।
शिरो मां राममन्त्रोऽयं गण्डयुग्मं सदावतु ॥ ११ ॥

ओं हृद्भगवते रामचन्द्रभद्रौ च ज्ञेयता ।
अर्कानुद्विविधौ मन्त्रौ रक्षतां मम कन्धरम् ॥ १२ ॥

रां रामचन्द्राय स्वाहा षड्वर्णोऽव्याद्भुजद्वयम् ।
श्रीरामाय नमश्चासौ कक्षौ पातु खरान्तकः ॥ १३ ॥

... ... ...नृसिंहो लक्ष्मीपाशाङ्कुशस्ततः ।
वर्मास्त्राणि वधूयुक्तो रव्यर्णोऽव्यादुरःस्थलम् ॥ १४ ॥

श्रीरामचन्द्राय ततो रक्षोघ्नाय नमस्त्वयम् ।
हृदयं मे सदा पातु रघुवंशसमुद्भवः ॥ १५ ॥

रामाङ्गेतु वराहास्त्रं वह्निजायायुतं मनुः ।
वीरस्वरूपरामाभ्यां सप्तार्णो पातु पार्श्वकौ (?) ॥ १६ ॥

ओं श्रीं ह्रीं क्लीं ततो रामं च रामाय नमस्त्वयम् ।
दशाक्षरात्मो मन्त्रो मे पुरतः पृष्ठतोऽवतु ॥ १७ ॥

श्रीपूर्वं जय मध्यस्थं तद्विधा राम राम च ।
नमः पञ्चदशर्णोऽयं सदा पातु ममोदरम् ।। १८ ।।

हुं जानकीवल्लभाय स्वहाद्यावतु मध्यमम् ।
श्रीरामचन्द्राय स्वाहा नाभिमष्टाक्षरोऽवतु ।। १९ ।।

क्लीं रामचन्द्राय ततः सीतायाः पतये नमः ।
मन्वस्यः सक्थिनी पातु राक्षसेन्द्रविमर्दनः ।। २० ।।

ओं रामभद्राय नमो गुह्यं मे पातु राघवः ।
श्रीरामभद्राय नमो मम पातूरुयुग्मकम् ।। २१ ।।

प्रणवो रामचन्द्राय स्वापात्यष्टाक्षरोऽवतु ।
पादयुग्मं सदा पातु वानरेन्द्राश्रयः प्रभुः ।। २२ ।।

रामभद्र महेष्वास रघुवीर नृपोत्तम ।
दशास्यान्तक मां रक्ष देहि नः परमे[मां]श्रियम् ।। २३ ।।

द्वात्रिंशदक्षरो य[:]स्यात् सर्वाङ्गं पातु मे सदा ।
श्रीं सीतापतये नमः प्राच्यां मां सर्वदावतु ।। २४ ।।

हुं जानकीवल्लभाय स्वाहा याम्यां च सर्वदा ।
क्लीं जानकीवल्लभाय प्रतीच्यां सर्वदावतु ।। २५ ।।

श्रीरघुनन्दनाय नमः कौबेर्यां दिशि रक्षतु ।
श्रीं सीतायै ततः स्वाहा रां रामाय नमस्त्वयम् ।। २६ ।।

सीतारामाख्यमन्त्रे[न्त्रोऽयं]विदिक्षूर्ध्वमधश्च माम् ।
नमो भगवते ब्रूयाच्चतुर्थ्यां रघुनन्दनः ।। २७ ।।

रक्षो घोरदि... ...मधुरादि समीरयेत् ।
प्रसन्नवदनायेति पश्चादमितितेजसे ।। २८ ।।

बलाय पश्चाद्रामाय विष्णवे तदनन्तरम् ।
प्रणवादिनमोऽन्तोऽयं मालामन्त्र उदीरितः ।। २९ ।।

सर्वस्थानेषु कालेषु पातु मां रघुनन्दनः ।
वदेद्दाशरथायेति विद्महेति पदं ततः ।। ३० ।।

सीतापदं समुद्दत्या[समुच्चार्य]वल्लभायपदं ततः ।
धीमहीत्यथ तं नोऽथ रामश्चापि प्रचोदयात् ।। ३१ ।।

एषा स्याद्रामगायत्री सर्वावस्थासु पातु माम् ।
इति ते कथितं देवि सर्वमन्त्रौघविग्रहम् ।। ३२ ।।

त्रैलोक्यमोहनं नाम कवचं ब्रह्मरूपकम् ।
प्रातः काले पठेद्यस्तु कवचं मुक्तिसाधकम् ।। ३३ ।।

कीर्तिश्रीकान्तिमेधायुर्भूतिश्च भवति ध्रुवम् ।
राममन्त्रमथ ब्रह्मकवचं मनुचोदितम् ।। ३४ ।।

गुह्यमभ्यर्च्य विधिवत् पुनश्चर्यां समाचरेत् ।
अष्टोत्तरशतं जप्त्वा दशांशं हवनादिकम् ।। ३५ ।।

ततः सुसिद्धं कवचं सर्वकार्याणि साधयेत् ।
मन्त्रसिद्धिर्भवेत्तस्य पुरश्चर्यां विना ततः ।। ३६ ।।

लाज आज्यं च ।

गद्यपद्यमयी वाणी तस्य वक्त्रात्प्रवर्तते ।
वक्त्रे तस्य वसेद्वाणी कलाश्च निश्चला गृहे ।। ३७ ।।

पुष्पाञ्जल्यष्टकं दत्त्वा मलेनैव परे सकृत् ।
अपि वर्षसहस्राणि पूजायाः फलमाप्नुयात् ।। ३८ ।।

विलिख्य भूर्जपत्रे तु स्वर्णस्थं धारयेद्यदि ।
कर्णे च दक्षिणे बाहौ स कुर्या वतं[दवितं]जगत् ।। ३९ ।।

त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् ।
तद्गात्रं प्राप्य शास्त्राणि ब्रह्मास्त्रादीनि यानि च ।। ४० ।।

माल्यानि कुसुमानीव सुखदानि भवन्ति हि ।
सार्धमु........हवने लक्ष्मीवाणीमुखे वसेत् ।। ४१ ।।

य इदं कवचं ज्ञात्वा यो जपेद्राममन्त्रकम् ।
शतलक्षमवाप्नोति सोऽचिरान्मृत्यु [न्मुक्ति] माप्नुयात् ।। ४२ ।।

त्रैलोक्यमोहनं जप्त्वा न मन्त्रासिद्धिसाधकः ।
स शस्त्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ।
तस्मात् सर्वप्रयत्नेन कवचं धारयेद्बुधः ।। ४३ ।।

।। इति ब्रह्माण्डपुराणे पार्वतीश्वरसंवादे त्रैलोक्यमोहनवज्रपञ्जररामकवचं नाम दिव्यमन्त्रकवचं सम्पूर्णम् ।।

---

## १४. ॥ अथ श्रीरामशतकम् ॥

आपादकेशमतिसुन्दरदिव्यगात्रं
श्रीपादरेणुहृतगौतमदारशापम् ।
कोपातिरक्तनयनक्षुभिताम्बुराशिं
भूपालसूनुमवलोकय रामचन्द्रम् ॥ १ ॥

कोदण्डकोटिविनिवेशितबाहुदण्ड-
माखण्डलाद्यमरपातितपुष्पवर्षम् ।
अयोधनक्षितिरजःपरिधूसराङ्ग-
मव्याच्चिरं रघुपतेरवसन्नशत्रोः ॥ २ ॥

चन्द्रोपमं मलयचन्दनरूषिताङ्गं
मन्दारपुष्पपरिपूजितपादपद्मम् ।
ब्रह्मेन्द्रदेवमुनियोगिगणावृतं तं
वन्देऽरविन्दनयनं रघुरामचन्द्रम् ॥ ३ ॥

सम्पूर्णचन्द्रवदनं सरसीरुहाक्षं
माणिक्यकुण्डलधरं मकुटाभिरामम् ।
चाम्पेयगौरवसनं शरचापहस्तं
श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥ ४ ॥

सीतापतिं कमलपत्रविशालनेत्रं
रामं कृपाकरमनन्तगुणानुरक्तम् ।
इन्द्रादिसर्वसुरसिद्धसुपूजिताङ्घ्रिं
नित्यं भजेऽहमसुनायकमप्रमेयम् ॥ ५ ॥

एकेन बाणमितरेण करेण चापं
हारं वहन्तमुरसा शिरसा जटाश्च ।
सीतासहायमनुजेन वने चरन्तं
श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥ ६ ॥

संसारसागरसमुद्धरणैकमन्त्रं
ब्रह्मादिदेवमुनिसेवितसिद्धमन्त्रम् ।
दारिद्र्यदुःखभवरोगविनाशमन्त्रं
सेवे सदा गुणनिधिं रघुरामचन्द्रम् ॥ ७ ॥

सीतासमेतमजिनाम्बरमप्रमेयं
सौमित्रिणा नियतसेवितपादयुग्मम् ।
नीलोत्पलद्युतिमनन्तगुणं प्रशान्तं
श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥ ८ ॥

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥ ९ ॥

श्रीराघवं दशमुखान्तकमम्बुजाक्षं
सीतामनोरमणमम्बुदनीलदेहम् ।
काकुत्स्थवंशपयसांनिधिपूर्णचन्द्रं
श्रीरामचन्द्रमनिशं शिरसा नमामि ॥ १० ॥

राकाशशाङ्कवदनं रघुवंशदीपं
राजाधिराजतनयं रमणीयमूर्तिम् ।
रात्रिञ्चरान्तकमनन्तगुणं मनोज्ञं
श्रीरामचन्द्रमनिशं शरणं भजेऽहम् ॥ ११ ॥

कन्दर्पकोटिसदृशं करुणाम्बुराशिं
काकुत्स्थवंशकनकाचलरत्नदीपम् ।
कञ्जातपत्रनयनं करचापबाणं
कल्याणराममनिशं शरणं भजेऽहम् ॥ १२ ॥

विश्वाधिपं विबुधपूजितपादपद्मं
विप्रप्रियं विमलपङ्कजपत्रनेत्रम् ।
विद्यात्मकं विजितराक्षसवीरकोटिं
श्रीवीरराममनिशं शरणं भजेऽहम् ॥ १३ ॥

पद्मासनादिपुरुहूतसुरार्चितं तं
पापान्धकारतरणिं पवनात्मजेशम् ।
पङ्केरुहाक्षमखिलश्रुतिमौलिसारं
पट्टाभिराममनिशं शरणं भजेऽहम् ॥ १४ ॥

श्रीवत्सहारमकुटाङ्गदभूषिताङ्गं
श्रीभारतीविधृतचामरवीज्यमानम् ।
श्रीनायकं शिवविरिञ्चिनुताङ्घ्रिपीठं
श्रीरामचन्द्रमनिशं शरणं भजेऽहम् ॥ १५ ॥

यत्पादपङ्कजरजः श्रुतिभिर्विमृग्यं[ग्यं]
यन्नाभिपङ्कजभवः कमलासनश्च ।
यन्नामसाररसिको भगवान् पुरारिः
श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥ १६ ॥

हा राम हा रमण हा जगदेकवीर
हा नाथ हा रघुपते करुणालवाल ।
हा जानकीरमण हा जगदेकबन्धो
हा रामभद्र जनपालक पाहि नित्यम् ॥ १७ ॥

हा वीर हा दशरथात्मज मैथिलीश
हा देव हा पवनजप्रिय दीनबन्धो ।
हा धीर हा दशमुखान्तक लोकनाथ
हा भूप हा भरतपूर्वज पाहि नित्यम् ॥ १८ ॥

जानाति राम तव नामरुचिं महेशो
जानाति गौतमसती चरणप्रभावम् ।
जानाति दोर्बलपराक्रममीशचापो
जानात्यमोघपटुबाणगतिं पयोधिः ॥ १९ ॥

जानाति राम तव चित्तगतिं हनूमान्
जानाति राम तव सख्यरुचिं कपीन्द्रः ।
जानाति राम तव युद्धगतिं दशास्यो
जानाति राम [1]विमतानुज एव सत्यम् ॥ २० ॥

श्रीराम राम रघुनन्दन राम राम-
श्रीराम राम भरताग्रज राम राम ।
श्रीराम राम हनुमत्प्रिय राम राम
श्रीराम राम शरणं भव राम राम ॥ २१ ॥

श्रीरामचन्द्र करुणाकर रामचन्द्र
राजेन्द्रचन्द्र रघुवंशसमुद्रचन्द्र ।
सुग्रीवनेत्रयुगलोत्पलपूर्णचन्द्र
सीतामनःकुमुदचन्द्र नमो नमस्ते ॥ २२ ॥

वन्देन्दु[ऽब्ज]मौलिमणिशोभिपदारविन्दं
वन्दे सुचापशरशोभिकरारविन्दम् ।

---

1. बिमतस्य शत्रो रावणस्य अनुजः बिभीषणः ।

वन्दे सदा स्मितलसद्वदनारविन्दं
वन्दे कटाक्षविलसन्नयनारविन्दम् ॥ २३ ॥

वन्दे रघूत्तमकुलार्णवपूर्णचन्द्रं
वन्दे दशाननभुजङ्गविहङ्गमेन्द्रम् ।
वन्दे समर्चितकवीन्द्रसुरामरेन्द्रं
वन्दे कृपाजलनिधिं रघुरामचन्द्रम् ॥ २४ ॥

भवतिमिरपतङ्गं पापतूलस्फुलिङ्गं
प्रणवतरुविहङ्गं भक्तचित्ताब्जभृङ्गम् ।
निगमवनकुरङ्गं नीरदश्यामलाङ्गं
रघुकुलगिरिशृङ्गं नौमि सीतान्तरङ्गम् ॥ २५ ॥

सरसिजदलनेत्रं सर्वलोकैकमित्रं
दशरथवरपुत्रं नीलजीमूतगात्रम् ।
सकलजनपवित्रं सर्वदा सच्चरित्रं
विधृतकनकवस्त्रं[नेत्रं] नौमि सीताकलत्रम् ॥ २६ ॥

वदनजितनिशेशं कोटिसूर्यप्रकाशं
सकलजगदधीशं माल्यसंशोभिकेशम् ।
निखिलसुरमुनीशं दूतशाखामृगेशं
विजितनिशिचरेशं नौम्यहं जानकीशम् ॥ २७ ॥

सकलभुवनराजं सर्वशास्त्रार्थबीजं
नयनजितसरोजं सर्वदा सत्समाजम् ।
अघकरिमृगराजं सेवकामर्त्यराजं
दशरथसुतनूजं नौम्यहं राजराजम् ॥ २८ ॥

निगमविपिनकीरं वेदवेदान्तसारं
भवजलनिधिपारं कण्ठसंशोभिहारम् ।
तुहिनशिखरधीरं जानकीप्रेमदारं
रुचिरतरशरीरं नौम्यहं रामवीरम् ॥ २९ ॥

दशरथनृपबालं वेदकल्पद्रुमूलं
नतजनपरिपालं सर्वदा लोकपालम् ।
विधृतकनकचेलं वानरेन्द्रादिजालं[1]
मरतकमणिनीलं नौमि सीतानुकूलम् ॥ ३० ॥

---

1. जालम् = गर्वः

नतसुरनिकुरुम्बं वक्त्रशीतांशुबिम्बं
कलभगतिविडम्बं दीनचित्तावलम्बम् ।
सहचरविधिसाम्बं सर्वदा सत्कदम्बं
करविधृतकलम्बं नौमि सीताकुटुम्बम् ॥ ३१ ॥

रघुकुलमणिदीपं सर्वलोकैकभूपं
हृतजनपरितापं दत्तदीनादिगोपम् ।
धृतमकुटकलापं हस्तविन्यस्तचापं
कृतजलनिधिकोपं नौमि कल्याणरूपम् ॥ ३२ ॥

पवनतनयदूतं सर्वदा मन्त्रगीतं
कुशलववरतातं रावणादिप्रघातम् ।
धृतलसदुपवीतं चन्दनात्यन्तशीतं
त्रिभुवनजनपूतं नौमि सीतासमेतम् ॥ ३३ ॥

विकचकमलतुण्डं चापविद्यातिशौण्डं
करिकरभुजदण्डं कुण्डलाशोभिगण्डम् ।
नखजितशशिखण्डं हस्तसंशोभिकाण्डं
विधृतमणिशिखण्डं नौमि रामं प्रचण्डम् ॥ ३४ ॥

निगमशिरसि रत्नं सर्वलोकैकरत्नं
दशरथसुतरत्नं सीतया सेव्यरत्नम् ।
भुवनवलयरत्नं भूभुजामेकरत्नं
रघुकुलघनरत्नं पातु मां रामरत्नम् ॥ ३५ ॥

जगति विबुधमन्त्रं जानकीप्राणमन्त्रं
विबुधविनुतमन्त्रं विश्वविख्यातमन्त्रम् ।
दशरथसुतमन्त्रं दैत्यसंहारमन्त्रं
रघुपतिनिजमन्त्रं राम रामेति मन्त्रम् ॥ ३६ ॥

सजलजलदनीलं सन्मुनिस्तुत्यलीलं
निखिलनिगममूलं यातुधानान्तकालम् ।
तिलकलसितफालं सर्वदा लोकपालं
विधृतकनकचेलं नौमि सीतानुकूलम् ॥ ३७ ॥

विमलकमलनेत्रं विस्फुरन्नीलगात्रं
तपनकुलपवित्रं दानवध्वान्तमित्रम् ।
भुवनहितचरित्रं भूमिपुत्रीकलत्रं
रघुपतिवरपुत्रं नौम्यहं चन्द्रवक्त्रम् ॥ ३८ ॥

मरतकमणिनीलो मत्तमातङ्गलीलो
मधुरवचनशीलो मारुतिप्रेममूलः ।
मणिमुकुरकपोलो मैथिलीकेलिलोलो
मम हृदि रघुपालो पातु मारीचकालः ॥ ३९ ॥

त्रिदशकुमुदचन्द्रो दानवाम्भोजचन्द्रो
मरुत[दितिज]तिमिरचन्द्रो योगिनां ज्ञानचन्द्रः ।
प्रणतनयनचन्द्रो भक्तिचित्ताब्धिचन्द्रो
वदनविजितचन्द्रः पातु मां रामचन्द्रः ॥ ४० ॥

निखिलभुवननेता नित्यकल्याणदाता
त्वमिति न हि विवादस्तत्र घण्टानिनादः ।
जनयति मम हासं जातु चेतोनिवासं
मम कुरु गुणसिन्धो मैथिलीप्रणाबन्धो ॥ ४१ ॥

पटुजलधरधीराध्वानमाकृष्य चापं
पवनजवनमेकं बाणमादाय तूणात् ।
अभयवचनदायी सानुजः सर्वतो मे
रणहतदनुजेन्द्रो रामचन्द्रः सहायः ॥ ४२ ॥

कुवलयदलनीलः पीतवासा दयालु-
र्विविधरुचिरभूषाभूषितो दिव्यमूर्तिः ।
दशरथकुलनाथो मैथिलीप्राणनाथो
निवसतु मम चित्ते सर्वदा रामचन्द्रः ॥ ४३ ॥

मरतककनकाभौ मण्डलीभूतचापौ
भुवनभरणदक्षौ पुण्डरीकायताक्षौ ।
मकुटकनकभूषौ वीरलक्ष्मीसमेतौ
परिचरति मनो मे जानकीरामचन्द्रौ ॥ ४४ ॥

जयतु जयतु रामो जानकीमोदकारी
दशवदनकुलारी रम्यकोदण्डधारी ।
विविधविपिनचारी विष्णुपूर्णावतारी
सकलदनुजहारी सर्वलोकाधिकारी ॥ ४५ ॥

कनकनिकषभासा सीतयालिङ्गिताङ्गो
नवकुवलयदामश्यामवर्णाभिरामः ।
अभिनव इव विद्युन्मण्डितो मेघराशिः
शमयतु परितापं सर्वदा रामभद्रः ॥ ४६ ॥

श्रीरामचन्द्रः श्रितपारिजात-
समस्तकल्याणगुणाभिरामः ।
सीतामुखाम्भोरुहचञ्चरीको
निरन्तरं मङ्गलमातनोतु ॥ ४७ ॥

दयानिधे राघव रामचन्द्र
निरस्य पापानि ममाखिलानि ।
त्वय्येव भक्तिं सुदृढां प्रयच्छ
सैव प्रसूते सकलान् पुमर्थान् ॥ ४८ ॥

रामेति वर्णद्वयमादरेण
सदा जपन् मुक्तिमुपैति जन्तुः ।
कलौ युगे कल्मषमानसाना-
मन्यत्र धर्मे खलु नाधिकारः ॥ ४९ ॥

रामेति सीतारमणेति मेघ-
श्यामेति काकासुररक्षकेति ।
पीताम्बरेति प्रियलक्ष्मणेति
श्रीरामचन्द्रेति वदाशु जिह्वे ॥ ५० ॥

श्रीरामचन्द्रेति सलक्ष्मणेति
नीलोत्पलश्यामल कोमलेति ।
आक्रोश रामेत्यधुनैव जिह्वे
सीतापते राघव राघवेति ॥ ५१ ॥

इन्दीवरश्यामलमायताक्षं
धनुर्धरं नीलजटावचूडम् ।
पार्श्वद्वये लक्ष्मणमैथिलीभ्यां
निषेव्यमाणं प्रणतोऽस्मि रामम् ॥ ५२ ॥

आकर्णमाकृष्य धनुर्गुणोद्य-
द्ब्रह्मास्त्रलक्षीकृतराक्षसेन्द्रम् ।
रथाधिरूढं रणरङ्गधीरं
रामं भजे रक्तसरोरुहाक्षम् ॥ ५३ ॥

अकार्मुकालङ्कृतबाहुदण्डै-
रराक्षसाधीश्वरभङ्गदक्षैः ।
अजानकीन्द्रैरपयोदनीलै-
ररामचन्द्रैरलमन्यदैवैः ॥ ५४ ॥

अलं विवादेन न मानुषोऽयं
रामात्मना राक्षसमर्दनाय ।
भुजङ्गशय्यां परिमुच्य साक्षा-
न्नारायणो भूमितलं जगाम ॥ ५५ ॥

कल्याणदं कौशिकयज्ञपालं
कलानिधिं काञ्चनशैलधैर्यम् ।
कञ्जातनेत्रं करुणासमुद्रं
काकुत्स्थरामं कलयामि चित्ते ॥ ५६ ॥

मर्त्यावतारे मनुजाकृतिं हरिं
रामाभिदेहं[भिधेयं] रमणीयदेहम् ।
धनुर्धरं पद्मपलाशनेत्रं
नमामि नित्यं रघुनाथमूर्तिम् ॥ ५७ ॥

विशालनेत्रं परिपूर्णगात्रं
सीताकलत्रं शुभसच्चरित्रम् ।
सुग्रीवमित्रं जगतः पवित्रं
वन्दे सुवक्त्रं वरभूपपुत्रम् ॥ ५८ ॥

कारीरभासा कलयन् विनोदं
शारीरभासा जितशाम्बरारिः ।
वारीशगेहे कृतसेतुरीशो
मारीचवैरी मम सन्निधत्ताम् ॥ ५९ ॥

वदन्तु केचिच्चतुरोऽपि वेदान्
पठन्तु शास्त्राण्यपरेऽखिलानि ।
अटन्तु तीर्थान्यपरे पृथिव्यां
वयं तु रामं मनसा स्मरामः ॥ ६० ॥

नमामि रामं नतपारिजातं
करोमि रामाङ्घ्रिसरोजपूजाम् ।
वदामि रामस्य सुदिव्यनाम
स्मरामि रामं न तु विस्मरामि ॥ ६१ ॥

अन्नं नराणाममृतं सुराणां
भृङ्गावलीनां मकरन्द एव ।
श्रीरामपादाम्बुजसेवकानां
महात्मनां रामकथैवमुक्ता ॥ ६२ ॥

श्रीशब्दपूर्वं जयशब्दमत्यं[मध्यं]
जयद्वयावुत्तरत[द्वयं चोत्तरत]स्तथैव ।
त्रिस्सप्तकृत्वो भुवि रामनाम-
जपं तु हन्याद्द्विजकोटिहत्याम् ।। ६३ ।।

यो दण्डकारण्यनिशाचरेन्द्रान्
कोदण्डलीलाविषयीचकार ।
वेतण्डशुण्डायितबाहुदण्डो
कोदण्डपाणी[णिः]कुलदैवतं नः ।। ६४ ।।

कोदण्डदीक्षागुरुमप्रमेयं
सलक्ष्मणं दाशरथिं दयालुम् ।
महानुभावं जगदेकवीर-
मनाथनाथं रघुनाथमीडे ।। ६५ ।।

रामः पिता राघव एव माता
रामः सुबन्धुश्च सुहृत् स एव ।
रामो गुरुर्मे परमं च दैवं
रामं विना नान्यमहं स्मरामि ।। ६६ ।।

माता रामो मत्पिता रामभद्रो
भ्राता रामो मत्सखो राघवेशः ।
भर्ता त्राता रामचन्द्रो दयालु-
र्नान्यं जाने नैव जाने न जाने ।। ६७ ।।

रघुनन्दन एव दैवतं नो
रघुवंशोद्भव एव दैवतं नः ।
भरताग्रज एव दैवतं नो
भगवान् राघव एव दैवतं नः ।। ६८ ।।

दीनवत्सलमनाथरक्षकं
दीर्घबाहुमरविन्दलोचनम् ।
दीक्षितं सकललोकरक्षणं
दैवतं दशरथात्मजं भजे ।। ६९ ।।

इन्द्रनीलमणिसन्निभदेहं
वन्द्यमानचरणं मुनिबृन्दैः ।
लम्बमानतुलसीवनमालं
चिन्तयामि सततं रघुवीरम् ।। ७० ।।

चापं दधानः स्तनयित्नुघोषं
कर्षन्निषङ्गादिषुमप्यरिघ्नम् ।
आपत्सु भूयादभयप्रदो मे
साकं सुमित्रातनयेन रामः ॥ ७१ ॥

[1]यः पूतनामारणलब्धवर्णः
काकोदरो येन विनीतदर्पः ।
यशोदयालंकृतमूर्तिरव्या-
न्नाथो यदूनामथ वा रघूणाम् ॥ ७२ ॥

जातो वंशे रघूणां मुनिवरवचनात्तटकां ताडयित्वा
कृत्वा पुण्यामहल्यां त्रुटितभवधनुर्मैथिलीवल्लभोऽभूत् ।
प्राप्यायोध्यां निदेशात् पितुरटविमगाद्धीतसीतोऽस्तवाली
बद्धाब्धिर्ध्वस्तलङ्को दलितदशमुखः सीतया राज्यमाप ॥ ७३ ॥

रामं श्यामाभिरामं रविशशिनयनं कोटिसूर्यप्रकाशं
दिव्यं दिव्यास्त्रपाणिं शरमुखशरधिं चारुकोदण्डहस्तम् ।
कालं कालाग्निरुद्रं रिपुकुलदहनं विघ्नविच्छेददक्षं
भीमं भीमाट्टहासं सकलभयहरं रामचन्द्रं भजेऽहम् ॥ ७४ ॥

रामं वीरासनस्थं हृदयगतकरव्यञ्जितज्ञानमुद्रं
जानौ विन्यस्तहस्तं जनकतनयया भूषितं वामभागे ।
षट्छास्त्रं व्याहरन्तं पवनसुतनयं चाग्रतो मानयन्तं
संसेवे सेव्यमानं करधृतधनुषा दक्षिणे लक्ष्मणेन ॥ ७५ ॥

वामे कोदण्डदण्डं निजकरकमले दक्षिणे बाणमेकं
पश्चाद्भागे च नित्यं विदधदभिमतं सासितूणीरभारम् ।
वामे भागे लसद्भ्यां सहमिलिततनुं जानकीलक्ष्मणाभ्यां
रामं श्यामं भजेऽहं प्रणतजनमनःखेदविच्छेददक्षम् ॥ ७६ ॥

शुद्धान्ते मातृमध्ये दशरथपुरतः सञ्चरन्तं मनोज्ञं
काञ्चीदामानुविद्धप्रतिमणिविलसत्किङ्किणीनिक्वणाङ्कम् ।
फाले मुक्ताललामं मृदुतरनिनदं नूपुरं चारुहारं
बालं रामं भजेऽहं मृदुमधुरगिरं कुण्डलश्रीकपोलम् ॥ ७७ ॥

---

1. रामपक्षेः—पूतनामा रणलब्धवर्णः इति पदच्छेदः। काकोदरः काकासुरः। यशः दया द्वाभ्यां अलंकृतमूर्तिः । कृष्णपक्षेः—पूतना राक्षसी । काकोदरः सर्पः कालियः । यशोदा नन्दस्य पत्नी ।

लोकत्राणानुकारी दशवदनशिरःपङ्क्तिविच्छेदकारी
सीतासीमन्तकारी मणिमयमकुटोद्दण्डकोदण्डधारी ।
लङ्कालङ्कारहारी भृगुतनयमनःसर्वगर्वापहारी
[वालिप्राणापहारी] शमयतु दुरितं भूमिभारापहारी ॥ ७८ ॥

जातः श्रीरघुनायको दशरथान्मुन्याज्ञया ताटकां
हत्वा रक्षितकौशिकक्रतुवरः कृत्वाप्यहल्यां शुभाम् ।
भङ्क्त्वा भार्गशरासनं जनकजामुद्वाह्य रामस्थितो [रामः स्थितं]
जित्वा चाध्वनि भार्गवं पुनरगात् सीतासमेतं भजे ॥ ७९ ॥

स श्रेयांसि बलीनि संदिशतु ते वीरः कृपात्मा शुचिः
यन्नेत्राञ्चलरक्तिमा समतनोदब्धीश्वराग्रस्थितिम् ।
यद्वक्षो विमतानुजाय सदयं लङ्काधिपत्यं ददौ
यत्पादाब्जपरागपालिरकरोत् पाषाणमेणीदृशम् ॥ ८० ॥

गीतार्थामृतवारिधिं रघुपतिं शीतांशुबिम्बाननं
सूताङ्गीरसनारदैरभिनुतं वातात्मजाभीष्टदम् ।
आताम्राधरशोभितं सुरनुतं पीताम्बरालङ्कृतं
सीताराममहं भजामि शरणं कारुण्यदुग्धार्णवम् ॥ ८१ ॥

श्रीरामोऽजनि राघवो मुनिमखं पाति स्म सीतापतिः
कान्ताराणि निनाय वीतभयतां रामेण वाली हतः ।
आनन्दं हनुमत्... ...रघुपतिर्निन्ये जजृम्भे बले ?
लङ्केशःस्वपदात् स्वयं विजघटे रामः स्त्रियागात्पुरीम् ॥ ८२ ॥

श्रीरामं जगदेकवीरममलं सीतामनोहारिणं
कौसल्यावरनन्दनं सुरनुतं काकुत्स्थवंशोद्भवम् ।
लोकानामभिवाञ्छितार्थफलदं कारुण्यकल्पद्रुमं
वन्देऽहं जनघोरपापनिकरध्वंसव्रतं राघवम् ॥ ८३ ॥

रामं लक्ष्मणपूर्वजं रघुपतिं सीतापतिं सुन्दरं
काकुत्स्थं करुणाकरं गुणनिधिं विप्रप्रियं धार्मिकम् ।
[1]राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिं
वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥ ८४ ॥

रामं चन्दनशीतलं मणिलसद्रुक्माम्बरालङ्कृतं
कौसल्यातनयं विशालनयनं सम्पूर्णचन्द्राननम् ।

---

1. भिन्नवृत्तः श्लोकार्धः

राजानं करुणासमेतमनघं सीतामनोहारिणं
सीतादर्शनलालसं गुणनिधिं वन्दे सदा राघवम् ॥ ८५ ॥

रामं रत्नकिरीटकुण्डलधरं केयूरहारान्वितं
सीतालङ्कृतवामभागममलं वीरासने सुस्थितम् ।
सुग्रीवादिसमस्तवानरगणैः संसेव्यमानं सदा
विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं भजे ॥ ८६ ॥

रामं राजशिरोमणिं रघुवरं देवारिदर्पापहं
लोकानां हितकारिणं गुणनिधिं कारुण्यपूर्णोदयम् ।
मुक्ताकाञ्चनभूषणान्विततनुं चापेषुहस्ताम्बुजं
कौसल्याकुलभूषणं रघुपतिं श्रीरामचन्द्रं भजे ॥ ८७ ॥

राम त्वच्चरणारविन्दममलं श्रीरामपारायणं
भक्तत्राणपरायणं भवभयत्राणप्रवीणं सदा ।
तन्मे कर्तुमुपायनं मम मनः प्रीतिं दिश सर्वदा [दिश त्वं सदा]
दीनं दीनशरण्य पूर्णकृपया सीतापते पाहि माम् ॥ ८८ ॥

रामो नः कुलदैवतं सकरुणं रामं भजे सादरं
रामेणेशधनुः क्षणेन दलितं रामाय तस्मै नमः ।
रामान्नाशमवाप राक्षसकुलं रामस्य दासोऽस्म्यहं
रामे तिष्ठति विश्वमेतदखिलं हे राम(रक्षस्व)संरक्ष माम् ॥ ८९ ॥

रामो रक्षतु लक्ष्मणेन सहितो रामं सरामं भजे
रामेणैव हि रक्षिताः सुरगणा रामाय तस्मै नमः ।
रामान्नापरमस्ति दैवतमहो रामस्य दासोऽस्म्यहं
रामे तिष्ठतु मानसं मम सदा हे राम तुभ्यं नमः ॥ ९० ॥

दिव्यस्यन्दनमध्यगं घनरणचापान्वितं भीषणं
कालाग्निप्रतिमानबाणकलितं घोरास्त्रतूणीद्वयम् ।
सौमित्र्यर्कजरावणानुजमरुत्पुत्रादिसंसेवितं
रामं राक्षसकोटिवीरहरणं श्रीरामचन्द्रं भजे ॥ ९१ ॥

राजीवायतलोचनं रघुपतिं नीलोत्पलश्यामलं
मुक्तालङ्कृतमण्डपे सुललिते सौवर्णके पुष्पके ।
आसीनं नवरत्नकाञ्चनलसत्सिंहासने साम्बुजे
सीतालक्ष्मणवायुसूनुसहितं श्रीरामचन्द्रं भजे ॥ ९२ ॥

कर्पूराङ्गविलेपनं रघुवरं राजीवनेत्रान्वितं
कस्तूरीतिलकाङ्कितं करिवरप्रत्येयमेकं प्रभुम् ।

कन्दर्पायुतकोटिसुन्दरतनुं कारुण्यपाथोनिधिं
कान्ताकाममदमप्रमेयमनघं सीतासमेतं भजे ॥ ९३ ॥

पूर्वं रामतपोवनानुगमनं हत्वा मृगं काञ्चनं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।
वालीनिग्रहणं समुद्रतरणं लङ्कापुरीदाहनं
पश्चाद्रावणकुम्भकर्णनिधनं ह्येतद्धि रामायणम् ॥ ९४ ॥

राकेन्दुप्रतिमाननस्य महिमा हा केन वा वर्ण्यते
लोके यः स दयापरोऽजनि महान् काकेऽपि सान्द्रागसि ।
एकेनैव शरेण येन समरे नाकेशसूनुर्हतः
शोकेनाकुलचेतसां भुवि सतां साकेतवासी गतिः ॥ ९५ ॥

यन्नामैव सहस्रनामसदृशं यत्कर्म कैवल्यदं
यद्विद्या हृदयाम्बुजेषु विदुषामानन्दसन्दायिनी ।
यन्मूर्तिर्विजयान्विता त्रिजगतीरक्षाविधौ दीक्षिता
तं कल्याणगुणान्वितं प्रतिदिनं श्रीरामचन्द्रं भजे ॥ ९६ ॥

मैथिल्या नगरे विवाहसमये कल्याणवेद्यन्तरे
श्रीमन्तौ तपनीयरत्नखचिते पीठे व[ल]सन्तौ शुभौ ।
श्रीमन्तौ निगमार्थतत्त्वविदुषामाशीर्गिरा पावनौ
पायास्तां च वधूवरौ सुललितौ श्रीजानकीराघवौ ॥ ९७ ॥

यत्पादः सुरसिन्धुवाससदनं यन्नाभिजातोऽब्जभूः
यः साकेतनिकेतनं यदुदरं लोकैकशय्यागृहम् ।
यद्वक्षः कमलाविलासभवनं यन्नेत्रयुग्मं दया-
राश्या[लास्या]गारमखण्डमङ्गलनिधिः पायात् स नो राघवः ॥ ९८ ॥

कौसल्या जननी पिता दशरथः सल्लक्षणो लक्ष्मणः
शत्रुघ्नो भरतोऽनुजो जनकजा जाया वसिष्ठो गुरुः ।
सुग्रीवश्च विभीषणः प्रियसखौ दूतो हनूमान् महान्
साऽयोध्या नगरी सुतौ कुशलवौ श्रीरामदासा वयम् ॥ ९९ ॥

रक्षोघ्नं रणरागिणं रविसमं रुद्रप्रियं रक्षकं
रूपैकाभरणं रुषादिरहितं रुक्माङ्गदाराधितम् ।
रोचिष्णुं रथिनं रमापतिसमं राज्यप्रदं राघवं
रामं राजशिरोमणिं रघुपतिं श्रीरामचन्द्रं भजे ॥ १०० ॥

साकेते शरदिन्दुकुन्त[द]धवले सौधे महामण्डपे
पर्यस्तागरुधूपगन्धललिते कर्पूरदीपोज्ज्वले ।

सुग्रीवाङ्गदजाम्बवत्परिवृतं सौमित्रिणा सेवितं
लीलामानुषविग्रहं रघुपतिं सीतासमेतं भजे ॥ १०१ ॥

वामाङ्के जनकात्मजां पदतले वायोः सुतं लक्ष्मणं
पश्चाच्छत्रुहरं विभीषणयुतं सुग्रीवमग्रे स्थितम् ।
पार्श्वे कैकयिनन्दनं तदितरे शत्रुघ्नसंसेवितं
रामं नीरदनीलमञ्जुलतनुं सीतासमेतं भजे ॥ १०२ ॥

वामे भूमिसुता पुरस्तु हनुमान् पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाग्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १०३ ॥

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥ १०४ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥१०५॥

वैदेहीकुचमण्डलोपरि लसत्माणिक्यहारावली-
मध्यस्थोपलनीलकोमलरुचिं नीलोत्पलश्यामलम् ।
कन्दर्पायुतकोटिसुन्दरतनुं कोदण्डदीक्षागुरुं
कौसल्याकुलभूषणं रघुवरं रामं भजे श्यामलम् ॥ १०६ ॥

वैदेहीमधिरोप्य जातपुलकां लज्जावतीं सुस्थितां
काञ्चीकङ्कणहारनूपुरलसत्कर्णावतंसोज्ज्वलाम् ।
कस्तूरीघनसारचर्चितकुचां चन्द्राननां जानकीं
कन्दर्पायुतसुन्दरं रघुपतिं रामं भजे श्यामलम् ॥ १०७ ॥

वैदेहीमधिरोप्य जातपुलकां वामाङ्कमाश्लेषिणीं
वामेन स्तनचूचुकं पुलकितं वामं करेण स्पृशन् ।
तत्त्वं दक्षिणपाणिना कलितया धीमुद्रया बोधयन्
रामो मारुतिसेवितः स्फुरतु मे साम्राज्यसिंहासने ॥ १०८ ॥

उत्फुल्लामलकोमलोत्पलदलश्यामाय रामाय नः
कामाय प्रथमाय निर्मलगुणारामाय रामात्मने ।

ध्यानारूढमुनीन्द्रमानससरोहंसाय संसारवि-
ध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥ १०९ ॥

क्षीराम्भोनिधिमध्यवर्तिनिशिता . . . . सुवर्णाम्बरे
रक्तोल्लोचनहेमपद्मपटले जाम्बूनदे मण्डपे ।
तेजोधामनि पुष्पके रविनिभे माणिक्यसिंहासने
हेमाम्भोरुहकर्णिकान्तरतले वीरासने सुस्थितम् (?) ॥ ११० ॥

ये शृण्वन्ति पठन्ति रामचरितं ये भाग्यवन्तः सदा
धीरोदात्तरघूत्तमस्य चरणौ ध्यायन्ति ये मानसे ।
ये कुर्वन्ति समस्तधर्मनिचयं रामस्य सुप्रीतये
तेषां सर्वमनोरथान् वितनुते साक्षाद्रघूणां पतिः ॥ १११ ॥

रामं रामानुजं सीतां भरतं भरतानुजम् ।
सुग्रीवं वायुसूनुं च प्रणमामि पुनः पुनः ॥ ११२ ॥

यन्नामधेयं म्रियमाण आतुरः
पतन् स्खलन् वाप्यवशो गृणन्नरः ।
विमुक्तकर्मार्गल उत्तमां गतिं
प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ११३ ॥

॥ इति श्रीरामशतकं सम्पूर्णम् ॥

---

## १५. ॥ अथ श्रीमङ्गलश्लोकरामायणम् ॥

सर्वलोकशरण्याय साकेतपुरवासिने ।
सत्सेविताय रामाय ससीतायास्तु मङ्गलम् ॥ १ ॥

कौसल्यायां दशरथाज्जाताय परमात्मने ।
सदा भरतसौमित्रिशत्रुघ्नेशाय मङ्गलम् ॥ २ ॥

कौशिकक्रतुरक्षार्थं कृत्वा मारीचमर्दनम् ।
अहल्यापापनाशाय रघुनाथाय मङ्गलम् ॥ ३ ॥

जित्वा [भङ्क्त्वा] शैवं पुरा चापं प्राप्य सीतामनुत्तमम् ।
अयोध्यामागतायास्तु गुणपूर्णाय मङ्गलम् ॥ ४ ॥

पितुः सत्यप्रतिज्ञायै कैकेय्या वचनादपि ।
चित्रकूटनिवासाय सीतारामाय मङ्गलम् ॥ ५ ॥

पादुके भरते याते दत्त्वा राज्यस्य पालने ।
दण्डकारण्यवासाय धैर्ययुक्ताय मङ्गलम् ॥ ६ ॥

हत्वा विराधं बलिनं मुनीनां भावितात्मनाम् ।
दत्ताभयाय रामाय पद्माक्षायास्तु मङ्गलम् ॥ ७ ॥

चतुर्दशसहस्राणां रक्षसां क्रूरकर्मणाम् ।
खरदूषणमुख्यानां हारिणेऽस्तु सुमङ्गलम् ॥ ८ ॥

सीतादर्शनयुक्ताय गृध्रमोक्षप्रकाशिने ।
कबन्धहारिणे तस्मै राघवायास्तु मङ्गलम् ॥ ९ ॥

शबर्या दत्तपूजाय सेविताय हनूमता ।
सुग्रीवकृतसख्याय धैर्ययुक्ताय मङ्गलम् ॥ १० ॥

वालिनं बलिनं हत्वा सुग्रीवमभिषिच्य च ।
वर्षरात्रनिवासाय रामचन्द्राय मङ्गलम् ॥ ११ ॥

कालातिक्रमणाच्चैव कुपिताय महात्मने ।
आगते सति सुग्रीवे प्रसन्नायास्तु मङ्गलम् ॥ १२ ॥

अगुङ्लीयप्रदात्रे च हनूमति महात्मने ।
सीतां दृष्ट्वागते तस्मिन् हर्षयुक्ताय मङ्गलम् ॥ १३ ॥

अशोकवनिकामध्ये श्रुत्वा सीतां हनूमता ।
सुग्रीवकृतयानाय रघुनाथाय मङ्गलम् ॥ १४ ॥

अथागतं महात्मानमभिषिच्य विभीषणम् ।
कृतसागरबन्धाय सानुजायास्तु मङ्गलम् ॥ १५ ॥

सेतुना सुखमासाद्य लङ्कां रावणपालिताम् ।
सुवेलगिरिवासाय रणधीराय मङ्गलम् ॥ १६ ॥

सुग्रीवेण दशग्रीवे मुष्टियुद्धेन मूर्छिते ।
इन्द्रजिन्नागबद्धाय विमुक्तायास्तु मङ्गलम् ॥ १७ ॥

धूम्राक्षे वायुपुत्रेण वज्रदंष्ट्रेऽङ्गदेन च ।
प्रहस्ते नीलनिहते हर्षयुक्ताय मङ्गलम् ॥ १८ ॥

नयत्यौषधिशैलेन्द्रं हनूमति महात्मने ।
ब्रह्मास्त्रबन्धयुक्ताय विमुक्तायास्तु मङ्गलम् ॥ १९ ॥

रावणिं च हतं श्रुत्वा लक्ष्मणेन महाबलम् ।
निहत्य मकराक्षं च प्रसन्नायास्तु मङ्गलम् ॥ २० ॥

जित्वा रावणकोटीरं कुम्भकर्णं निहत्य च ।
अतिकायं हतं श्रुत्वा प्रीतियुक्ताय मङ्गलम् ॥ २१ ॥

ततो मूलबलं हत्वा रावणं च महाबलात् ।
विजयं प्राप्य हृष्टाय रघुनाथाय मङ्गलम् ॥ २२ ॥

ततोऽग्निवचनात् सीतां प्राप्य हृष्टां यशस्विनीम् ।
ब्रह्मस्तुत्या प्रहृष्टाय रामभद्राय मङ्गलम् ॥ २३ ॥

विभीषणं महात्मानं लङ्कायामभिषिच्य च ।
वानरैः राक्षसैः सार्धं पुष्पकस्थाय मङ्गलम् ॥ २४ ॥

मदनाकृतये तस्मै मधुरापुरवासिने ।
मनुवंशप्रदीपाय मानवेन्द्राय मङ्गलम् ॥ २५ ॥

प्राप्यायोध्यां च भरतं गङ्गातोयैः सुगन्धिभिः ।
अभिषिक्ताय रामाय ससीतायास्तु मङ्गलम् ॥ २६ ॥

मधुरापुरवासाय वसुदेवसुतप्रभुः (?) ।
श्रीराममङ्गलं नित्यं शृण्वतां सुकृतं भवेत् ॥ २७ ॥

एवं वाल्मीकिना प्रोक्तं रामायणकथामृतम् ।
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ २८ ॥

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ २९ ॥

॥ इति श्रीमङ्गलश्लोकरामायणं संपूर्णम् ॥

---

## १६. ॥ अथ श्रीचिरञ्जीविरामायणम् ॥

पायात् क्षीराब्धिशायी कमलभवनुतः कोसलेन्द्रस्य पुत्रो
रामः सौमित्रियुक्तः कुशिकसुतगिरा ताटकाप्राणहारी ।
यज्ञं निर्वर्त्य गङ्गासुचरितमुदितः पावयंस्तामहल्यां
सीतामुद्वाह्य जित्वा पथि भृगुतनयं प्राप्य हर्षादयोध्याम् ॥ १ ॥

श्रीरामं नौमि कैकेय्यभिलषितवरात् खिन्नमालोक्य तातं
तद्वाचा त्यक्तराज्यं झटिति वनगतं मैथिलीलक्ष्मणाभ्याम् ।
स्वर्गस्थे राज्ञि शोकात् कृतनुतिभरतप्रार्थनात् पादुके स्वे
दत्त्वास्मै तन्निवृत्त्या स्थितमनुजयुतं सेवितं चित्रकूटे ॥ २ ॥

हत्वारण्ये विराधं मुनिनिकरमुदे पञ्चवट्यामुषित्वा
वैरूप्यात् शूर्पणख्या[:]निशित[कुपित]खरमुखान् ध्वंसयित्वाधयामम् ।
मारीचं मर्दयित्वा दशवदनहृतां तत्र सीतामदृष्ट्वा
दग्ध्वा क्रुद्धं कबन्धं शबरिवनितया पूजितं राममीडे ॥ ३ ॥

पम्पातीरे हनूमत्पटुतरवचनादृश्यमूकं च गत्वा
कृत्वा सुग्रीवसख्यं निशितशरवरैः सप्तसालांश्च भित्त्वा ।

हत्वा सुत्रामपुत्रं दिनकरजनुषस्तस्य राज्यं च दत्त्वा
तेनानीतैः कपीशैर्विदित[विचित]सकलभूमण्डलं राममीडे ॥ ४ ॥

सेतुं बध्द्वा समुद्रे सकलबलयुतं रावणं कुम्भकर्णं
हत्वा तत्पुत्रवर्गं तदनुजमभिषिच्याथ लङ्काधिनाथम् ।
सीतां लब्ध्वाग्निशुद्धां सकलसुरनुतं पुष्पयानाधिरूढं
सुग्रीवाद्यैरुपेतं रघुपतिमनिशं प्राप्तराज्यं नमामि ॥ ५ ॥

सकृदपि यदि रामेत्युच्चरन् यस्तु मर्त्यः
सकलदुरितसङ्घैः संयुतो वापि नूनम् ।
न निवसति स मातुर्गर्भवासी कदाचि-
न्निवसति हरिलोके नास्ति सन्देहलेशः ॥ ६ ॥

॥ इति श्रीचिरञ्जीविरामायणं सम्पूर्णम् ॥

---

## १७. ॥ अथ श्रीरामाक्षरमालास्तोत्रम् ॥

अखिलाधारं श्रीरामं
आगमविनुतं श्रीरामम् ।
इष्टरक्षणं श्रीरामं
ईप्सितफलदं श्रीरामम् ॥ १ ॥

उग्रपूजितं श्रीरामं
ऊर्जितफलदं श्रीरामम् ।
ऋषिगणवन्द्यं श्रीरामं
ॠवरपक्षं श्रीरामम् ॥ २ ॥

ऌचयस्तोत्रं श्रीरामं
ॡ[ॡ]ननताघं श्रीरामम् ।
एकविक्रमं श्रीरामं
ऐहिकफलदं श्रीरामम् ॥ ३ ॥

ओंनुतिफलदं श्रीरामं
औदार्यवरं श्रीरामम् ।
अद्भुत[अंबुद]रूपं श्रीरामं
आमुष्मिकदं श्रीरामम् ॥ ४ ॥

कम्बुग्रीवं श्रीरामं
खरसंहारं श्रीरामम् ।
गजराड्वरदं श्रीरामं
घनसदृशाङ्गं श्रीरामम् ॥ ५ ॥

[1]ङज्युतिकरणं श्रीरामं
चटुलास्त्रधरं श्रीरामम् ।
छन्दोविनुतं श्रीरामं
जलजाताक्षं श्रीरामम् ॥ ६ ॥

झषवररूपं श्रीरामं
[2]ञी[ञे]शात्मस्थं श्रीरामम्
[3]टीदृश[टिट्टिभ]हस्तं श्रीरामं
[4]ठपूजाङ्घ्रिं श्रीरामम् ॥ ७ ॥

[5]डापतिनाशं श्रीरामं
[6]ढंमन्त्रहरं श्रीरामम् ।
[7]णक्रोधात्मं श्रीरामं
तपनान्वयजं श्रीरामम् ॥ ८ ॥

[8]थपरिपालं श्रीरामं
दशरथबालं श्रीरामम् ।
धरणीलोलं श्रीरामं
नरहरिरूपं श्रीरामम् ॥ ९ ॥

---

1. ङः इति शिवस्य नाम । तस्य ज्युतिः द्युतिः, तस्याः कारणम् ।
2. ञः इति शुक्रस्य नाम । तस्य ईशः अधिदेवता अम्बिका, तदात्मस्थम् ।
3. टिट्टिभः पक्षिविशेषः ।
4. ठः इति शिवस्य नाम । तस्य पूजा यस्मिन् सः ठपूजः । ठपूजः अङ्घ्रिः यस्य तम् ।
5. डा राक्षसी । तासां पतयः राक्षसाः, तेषां नाशः येन, तम् ।
6. ढः सर्पः, तस्य मन्त्रः नागास्त्रम्, तस्य हरम् ।
7. णः न क्रोधः, अक्रोधात्मानम् ।
8. थं भयम्, भयत्रातारम् ।

परमपावनं श्रीरामं
फल्गुनसुहृदं श्रीरामम् ।
बलिमददलनं श्रीरामं
[1]भण्डनसुदक्षं श्रीरामम् ॥ १० ॥

मन्मथजनकं श्रीरामं
यमिजनवेद्यं श्रीरामम् ।
रघुकुलतिलकं श्रीरामं
लक्ष्मीलोलं श्रीरामम् ॥ ११ ॥

वदनजितेन्दुं श्रीरामं
शङ्करविनुतं श्रीरामम् ।
षट्पदकान्तं श्रीरामं
सरसिजनाभं श्रीरामम ॥ १२ ॥

हृतदेवारिं श्रीरामं
लक्ष्मणाग्रजं श्रीरामम् ।
वनजातदृशं श्रीरामं
शफरसुनयनं श्रीरामम् ॥ १३ ॥

षड्वर्णज्ञं श्रीरामम
सरसिजनयनं श्रीरामं ।
हृतदेवारिं श्रीरामं
[2]क्षरणविरहितं श्रीरामम् ॥ १४ ॥

॥ इति श्रीरामाक्षरमालास्तोत्रं सम्पूर्णम् ॥

---

1. भण्डनं युद्धम्, तस्मिन् दक्षम् ।
2. क्षरणं स्वेदः, तद्रहितम् ।

## १८. ॥ अथ श्रीरामवर्णमालिकास्तोत्रम् ॥

अन्तस्समस्तजगतां यमनुप्रविष्ट-
माचक्षते मणिगणेष्विव सूत्रमार्याः ।
तं केलिकल्पितरघूद्वहरूपमाद्यं
पङ्केरुहाक्षमनिशं शरणं प्रपद्ये ॥ १ ॥

आम्नायशैलशिखरैकनिकेतनाय
वाल्मीकिवाग्जलनिधिप्रतिबिम्बिताय ।
कालाम्बुदाय करुणारसमेदुराय
कस्मैचिदस्तु मम कार्मुकिणे प्रणामः ॥ २ ॥

इन्दुप्रसादमवतंसयता तदीयं
चापं करे हुतवहं वहता हरेण ।
शङ्के जगत्त्रयमनुग्रहनिग्रहाभ्यां
संयोज्यते रघुपते समयान्तरेषु ॥ ३ ॥

ईदृग्विधस्त्वमिति वेद न सोऽपि वेदः
शक्तोऽन्तिकस्थितमवेक्षितुमुत्तमाङ्गे ।
श्रोतुं क्षमं न कुदृशेक्षितुमप्यतस्त्वां
सर्वे विदन्तु कथमीश कथं स्तुवन्तु ॥ ४ ॥

उष्णांशुबिम्बमुदधिस्मयघस्मरास्त्र
ग्रावा च तुल्यमजनिष्ट गृहं यथा ते ।
वाल्मीकिवागपि मदुक्तिरपि प्रभुं त्वां
देव प्रशंसति तथा यदि कोऽत्र दोषः ॥ ५ ॥

ऊढः पुरासि विनतान्वयसम्भवेन
देव त्वया किमधुनापि तथा न भाव्यम् ।
पूर्वे जना मम विनेमुरसंशयं त्वां
जानासि राघव तदन्वयसम्भवं माम् ॥ ६ ॥

ऋक्षं प्लवङ्गमपि रक्षसि चेन्महात्मन्
विप्रेषु किं पुनरथापि न विश्वसाम ।

अत्रापराध्यति किल [1]प्रथमद्वितीयौ
वर्णौ तवौदनतया [2]निगमो विवृण्वन् ॥ ७ ॥

नृणां न केवलमसि त्रिदिवौकसां त्वं
राजा यमार्कमरुतोऽपि यतस्त्रसन्ति ।
दीनस्य वाङ्मम तथा वितते तव स्यात्
कर्णे रघूद्वह यतः ककुभोऽपि जाताः ॥ ८ ॥

कॢप्तामपि व्यसनिनीं भवितव्यतां मे
नाथान्यथा कुरु तव प्रभुतां दिदृक्षोः ।
चक्रे शिलापि तरुणी भवता तदास्तां
मायापि यद्घटयते तव दुर्घटानि ॥ ९ ॥

एकं भवन्तमृषयो विदुरद्वितीयं
जानामि कार्मुकमहं तु तव द्वितीयम् ।
श्रुत्याश्रिता जगति यद्गुणघोषणा सा
दूरीकरोति दुरितानि समाश्रितानाम् ॥ १० ॥

ऐशं शरासमचलोपममिक्षुवल्ली-
भङ्गं बभञ्ज किल यस्तव बाहुदण्डः ।
तस्य त्वशीतकरवंशवतंस शंस
किं दुष्करो भवति मे विधिपाशभङ्गः ॥ ११ ॥

ओजस्तव प्रहितशेषविषाग्निदग्धैः
स्पष्टं जगद्भिरुपलभ्य भयाकुलानाम् (?) ।
गीतोक्तिभिस्त्वयि निरस्य मनुष्यबुद्धिं
देव स्तुतोऽसि विधिविष्णुवृषध्वजानाम् ॥ १२ ॥

औत्कण्ठ्यमस्ति दशकण्ठरिपो ममैकं
द्रक्ष्यामि तावकपदाम्बुरुहं कदेति ।
अप्येति कर्म निखिलं मम यत्र दृष्टे
लीनाश्च यत्र यतिभिः सह मत्कुलीनाः ॥ १३ ॥

अंभोनिधाववधिमत्यवकीर्य बाणान्
किं लब्धवानसि ननु श्वशुरस्तवायम् ।
इष्टापनेतुमथवा यदि बाणकण्डू-
र्देवायमस्त्यनवधिर्मम दैन्यसिन्धुः ॥ १४ ॥

---

1. =ब्राह्मणक्षत्रियौ ।
2. "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः" इति कठवल्लिरनुसन्धेया ।

अश्रान्तमर्हति तुलाममृतांशुबिम्बं
भग्नाम्बुजद्युतिमदेन भवन्मुखेन ।
अस्मादभूदनल इत्यकृतोक्तिरीश
सत्या कथं भवतु साधुविवेकभाजाम् ॥ १५ ॥

कल्याणमावहतु नः कमलोदरश्री-
रासन्नवानरभटौघगृहीतशेषः ।
श्लिष्यन् मुनीन् प्रणतदेवशिरःकिरीट-
दाम्नि स्खलन् दशरथात्मज ते कटाक्षः ॥ १६ ॥

खंवायुरग्निरुदकं पृथिवी च शब्दः
स्पर्शश्च रूपरसगन्धमपि त्वमेव ।
... ... ... ... ... ... दययात्मबन्धो
धत्से वपुः शरशरासभृदब्दनीलम् ॥ १७ ॥

गङ्गा पुनाति रघुपुङ्गव यत्प्रसूता
यद्रेणुना च पुपुवे यमिनः कलत्रम् ।
तस्य त्वदङ्घ्रिकमलस्य निषेवया स्यां
पूतो यथा पुनरघेऽपि तथा प्रसीद ॥ १८

घण्टाघणंघणितकोटिशरासनं ते
लुण्टाकमस्तु विपदां मम लोकनाथ ।
जिह्वालुतां वहति यद्भुजगो रिपूणाम्
उष्णैरसृग्भिरुदरम्भरिणा शरेण ॥ १९ ॥

प्राङ्स्यवाङसि परेश तथासि तिर्यक्
क्रमः किमन्यदखिला अपि जन्तवोऽसि ।
एकक्रमेपि तव वा भुवि न म्रियन्ते (?)
मन्दस्य राघव सहस्व ममापराधम् ॥ २० ॥

चण्डानिलव्यतिकरक्षुभिताम्बुवाह-
दम्भोलिपातमिव दारुणमन्तकालम् ।
स्मृत्वापि संभविनमुद्विजते न धन्यो
लब्ध्वा शरण्यमनरण्यकुलेश्वरं त्वाम् ॥ २१ ॥

छन्नं निजं कुहनया मृगरूपभाजो
नक्तंचरस्य न किमाविरकरि रूपम् ।

त्वत्पत्रिणापि रघुवीर ममाद्य माया-
गूढस्वरूपविवृतौ तव कः प्रयासः ॥ २२ ॥

जन्तोः किल त्वदभिधा मम कर्णिकायां
कर्णेजपन् हरति कश्चन पञ्चकोशान् ।
इत्यामनन्ति रघुवीर ततो भवन्तं
राजाधिराज इति विश्वसिमः कथं वा ॥ २३ ॥

झङ्कारिभृङ्गकमलोपमितं पदं ते
चारुस्तवप्रवणचारणकिन्नरौघम् ।
जानामि राघव जलाशयवासयोग्यं
स्वैरं वसेत्तदधुनैव जलाशये मे ॥ २४ ॥

ज्ञानेन मुक्तिरिति निश्चितमागमज्ञै-
र्ज्ञानं क मे भवतु दुस्त्यजवासनस्य ।
देवाभयं वितर किं नु सकृत्प्रपत्त्या
मह्यं न विस्मर पुरैव कृतां प्रतिज्ञाम् ॥ २५ ॥

टङ्कारमीश भवदीयशरासनस्य
ज्यास्फालनेन जनितं निगमं प्रतीमः ।
येनैव राघव भवानवगम्य मास-
त्रासं निरस्य सुखमातनुते बुधानाम् ॥ २६ ॥

ठात्कृत्य मण्डलमखण्डि यदुष्णभानो-
र्देव त्वदस्त्रदलितैर्युधि यातुधानैः ।
शङ्के ततस्तव पदं विदलय्य वेगा-
त्तैरद्भुतं प्रतिकृतिर्विदधे वधस्य ॥ २७ ॥

डिम्भस्तवास्मि रघुवीर तथा दयस्व
लभ्यं यथा कुशलवत्वमपि क्षितौ मे ।
किञ्चिन्मनो मयि निधेहि तव क्षतं किं
व्यर्था भवत्वमनसं गृणती श्रुतिस्त्वाम् ॥ २८ ॥

ढक्कां त्वदीययशसा मधुनापि शृण्मः
प्राचेतसस्य भणितिं भरताग्रजन्मन् ।
सत्ये यशस्तव शृणोति मृकण्डुसूनो-
र्धाताप्यतो जगति को हि भवादृशोऽन्यः ॥ २९ ॥

त्राणं समस्तजगतां तव किं न कार्यं
सा किं न तत्र करणं करुणा तवैव ।
आख्याति कार्यकरणे तव नेति या वाङ्-
मुख्या न सा रघुपते भवति श्रुतीनाम् ॥ ३० ॥

तत्त्वंपदे पदमसीति च यानि देव
तेषां यदस्यभिलषन्नुपलब्धुमर्थान् ।
सेवे पदद्वयमतो मृदुलं न वादौ
यद्दारुणैरपि ततो भवदर्थलाभः (?) ॥ ३१ ॥

प्रोथं यदुद्वहसि भूमिवहैकदंष्ट्रं
विश्वप्रभो विघटिताभ्रघटाः सटा वा ।
रूपं तदुद्भटमपास्य रुचासि दिष्ट्या
त्वं शम्बरारिरपि कैतवशम्बरारिः (?) ॥ ३२ ॥

दग्ध्वा निशाचरपुरीं प्रथितस्तवैको
भक्तेषु दानवपुरत्रितयं तथान्यः ।
त्वद्भ्राशराव्युरसमस्यगुणैः प्रभो मे
पुर्यष्टकप्रशमनेन लभस्व कीर्तिम् (?) ॥ ३३ ॥

धत्ते शिरांसि दश यस्सुकरो वधोऽस्य
किं न त्वया निगमगीतसहस्रमूर्ध्ना ।
मोहं ममामितपदं यदि देव हन्याः
कीर्तिस्तदा तव सहस्रपदो बहुः स्यात् ॥ ३४ ॥

नम्रस्य मे भव विभो स्वयमेव नाथो
नाथो भव त्वमिति चोदयितुं बिभेमि ।
येन स्वसा दशमुखस्य नियोजयन्ती
नाथो भव त्वमिति नासिकया विहीना ॥ ३५ ॥

पर्याकुलोऽस्मि किल पातकमेव कुर्वन्
दीनं ततः करुणया कुरु मामपापम् ।
कर्तुं रघूद्वह नदीनमपापमुर्व्या
शक्तस्त्वमित्ययमपैति न लोकवादः ॥ ३६ ॥

फल्गूनि यद्यपि फलानि न लिप्सते मे
चेतः प्रभो तदपि नो भजति प्रकृत्या ।

मूर्त्यन्तरं व्रजवधूजनमोहनं ते
जानाति फल्गु न फलं भुवि यत्प्रदातुम् ॥ ३७ ॥

बर्हिश्छदग्रथितकेशमनर्हवेष-
मादाय गोपवनिताकुचकुङ्कुमाङ्कम् ।
ह्रीणो न राघव भवान् यदतः प्रतीमः
पत्न्या ह्रिया विरहितोऽसि पुरा श्रियेव ॥ ३८ ॥

भद्राय मेऽस्तु तव राघव बोधमुद्रा
विद्रावयन्त्यखिलमान्तरमन्धकारम् ।
मन्त्रस्य ते परिपुनन्ति जगद्यथाष-
ष्टाक्षराण्य[पि तथैव]विवृण्वती सा ॥ ३९ ॥

मन्दं निधेहि हृदि मे भगवन्नटव्यां
पाषाणकण्टकसहिष्णु पदाम्बुजं ते ।
अङ्गुष्ठमात्रमथवात्र निधातुमर्ह-
स्याक्रान्तदुन्दुभितनूकठिनास्थिकूटम् ॥ ४० ॥

यज्ञेन देव तपसा यदनाशकेन
दानेन च द्विजगणैर्विविदिष्यसे त्वम् ।
भाग्येन मे जनितृषा तदिदं यतस्त्वां
चापेषुभाक् परमबुध्यत जामदग्न्यः ॥ ४१ ॥

रम्योज्ज्वलस्तव पुरा रघुवीर देहः
कामप्रदो यदभवत् कमलालयायै ।
चित्रं किमत्र चरणाम्बुजरेणुरेखा
कामं ददौ न मुनये किमु गौतमाय ॥ ४२ ॥

लङ्केशवक्षसि निविश्य यथा शरस्ते
मन्दोदरीकुचतटीमणिहारचोरः ।
शुद्धे सतां हृदि गतस्त्वमपि प्रभो मे
चित्ते तथा हर चिरोवनतामविद्याम् ॥ ४३ ॥

वन्दे तवाङ्घ्रिकमलं श्वशुरं पयोधे-
स्तातं भुवश्च रघुपुङ्गव रेखया यत् ।
वज्रं बिभर्ति भजदार्तिगिरिं विभेत्तुं
विद्यां नताय वितरेयमिति ध्वजं च ॥ ४४ ॥

शम्भुः स्वयं निरदिशद्गिरिकन्यकायै
यन्नाम राम तव नामसहस्रतुल्यम् ।
अर्थं भवन्तमपि तद्वहदेकमेव
चित्रं ददाति गृणते चतुरः किलार्थान् ॥ ४५ ॥

षट् ते विधिप्रभृतिभिः समवेक्षितानि
मन्त्राक्षराणि ऋषिभिर्मनुवंशकेतो ।
एकेन यानि गुणितान्यपि मानसेन
चित्रं नृणां त्रिदशतामुपलम्भयन्ति ॥ ४६ ॥

सर्गस्थितिप्रलयकर्मसु चोदयन्ती
माया गुणत्रयमयी जगतो भवन्तम् ।
ब्रह्मेति विष्णुरिति रुद्र इति त्रिधा ते
नाम प्रभो दिशति चित्रमजन्मनोऽपि ॥ ४७ ॥

हंसोऽसि मानसचरो महतां यतस्त्वं
संभाव्यते कील ततस्तव पक्षपातः ।
मय्येनमर्पय न चेद्रघुनन्दन... ...
जिष्णोरपि त्रिभुवने समव... ... ॥ ४८ ॥

लक्ष्मीर्यतोऽजनि यथैव जलाशयाना-
मेको रुषा तव तथा कृपयापि कार्यः ।
अन्योऽपि कश्चिदिति चेदहमेव वर्ते
तादृग्विधस्तपनवंशमणे किमन्यैः ॥ ४९ ॥

क्षन्तुं त्वमर्हसि रघूद्वह मेऽपराधान्
सर्वंसहा ननु वधूरपि ते पुराणी ।
वासालयं च ननु हृत्कमलं मदीयं
कान्तापरापि न हि किं कमलालया ते ॥ ५० ॥

इत्थं मम स्तुवदमर्त्यनिगद्यमान-
त्रय्यन्तमन्त्रमुखरीकृतपादपीठ ।
राजाधिराज कृपया रघुवीर वर्ण-
मालास्तवं त्वमवकर्णयितुं प्रसीद ॥ ५१ ॥

॥ इति श्रीरामवर्णमालिकास्तोत्रं सम्पूर्णम् ॥

## १९. ॥ अथ श्रीरामकर्णामृतम् ॥

दिशतु स कुशलं जिते दशास्ये
विधिविहितस्तुतिवेदितस्वरूपः ।
उपदिशति शिवो नृणां यदीयं
मनुमविमुक्तपुरे विमुक्तिहेतोः ॥ १ ॥

विहितविधिमपास्यता निषिद्धा-
न्यपि चरताप्यकृताक्षनिग्रहेण ।
यदघमुपचितं मया यतिष्ये
रघुवरसंस्मरणेन तन्निमार्ष्टुम् ॥ २ ॥

चिरपरिचितया मनो विकृष्टं
दिशि दिशि वासनया न मे नियाम्यम् ।
इति कवनपथे तवार्य राम
स्मरणविधावनवे करोम्युपायान् ॥ ३ ॥

प्रकृतिरिति सरस्वतीति लक्ष्मी-
रिति गिरिजेति जगत्त्रयीति वा याम् ।
गदति मुनिगणः कवित्वसिद्ध्यै
कथमपि तां कलये विदेहकन्याम् ॥ ४ ॥

मधुरभणितये पतिव्रतानां
मकुटमणिं कलये महीकुमारीम् ।
पतिकृतरिपुपातनप्रतिज्ञा-
दलनभयादहितेऽप्यदत्तशापाम् ॥ ५ ॥

हृदय विषयमेव सेवसे किं
यदयमुदग्रविषोपमः क्रमेण ।
मदयति च निहन्ति च प्रकामं
तदयनमेत्य गिरा भजस्व रामम् ॥ ६ ॥

रघुवरचरणारविन्दभक्ति-
च्छलमकरन्दनिरन्तराभिषिक्ताः ।
वकुलपरिमला गिरा मदीया
कविकुलकर्णरसायनानि सन्तु ॥ ७ ॥

भरतविदितपादुकाप्रभावं
धरतनुजारमणीयनामधेयम् ।
करतलधृतकार्मुकं पुमांसं
मरतकनीलशरीरमाश्रयामः ॥ ८ ॥

निटिलनयननिर्वृतिप्रदाख्यं
कुटिलनिशाचरकुम्भिनां मृगेन्द्रम् ।
कटिलसदसिमम्बुदाभमेकं
जटिलमुरीकृतचापबाणमीडे ॥ ९ ॥

निलयमखिलमङ्गलस्य रक्षो-
बलयवसप्रबलानिलायितास्त्रम् ।
कलयति हृदयं विदेहकन्या-
वलयपदाङ्कितकन्धरं पुमांसम् ॥ १० ॥

विमोहयति विष्टपत्रयजनान् गुणारोपण-
क्षणत्रुटितचण्डिकारमणचापचण्डध्वनिम [ध्वनौ] ।
जयत्यसकृदुन्मिषत्पुलकयोरपेतत्रपं
परपस्परनिरीक्षणं रघुवरक्ष्माकन्ययोः ॥ ११ ॥

करोमि हृदयाम्बुजे कमपि वीरमम्भोनिधे-
र्निबन्धनमपीन्धन ... ...बन्धुतूणीशयम् ।
न कश्चिदपि दृश्यते जगति यस्य शक्तो जये
स्मरप्रहितजानकीनयनपद्मबाणं विना ॥ १२ ॥

क एष दलदुत्पलद्युतिरुदारवेषोज्ज्वलः
स्वयं विशति मे मनस्त्वरितमाः परिज्ञायते ।
स एष ननु जानकीकुचतटीपटीरद्रव-
प्रसक्तरसवासनाघुमुघुमायमानः प्रभुः ॥ १३ ॥

भजे शरधनुर्धरं विकटचित्रकूटाटवी-
चरं कमपि शङ्करप्रणयिनीप्रियाख्यं प्रभुम् ।
स्फुटं कलितकुङ्कुमा वदति यस्य वक्षस्तटी
मृगेन्द्ररसितत्रसज्जनकजाहठालिङ्गनम् ॥ १४ ॥

चिराय विधुरस्य मे विषयघर्मघोरातपैः
पयोदनिचयोदयप्रतिनिधिः किलेयं दशा ।

नराघमुषि राघवे यदधुना मनः प्रीयते
समस्तसुरमस्तकप्रणतिकर्मणि ब्रह्मणि ॥ १५ ॥

कटीघटितवल्कलं घनलसज्जटामण्डलं
करात्तशरकार्मुकं कमलपत्रमित्रेक्षणम् ।
तमालदलमेचकं धरणिकन्यकाकामुकं
तरङ्गितकृपारसं तरणिवंशदीपं भजे ॥ १६ ॥

अचोदितकुलक्रमं पुनरपृष्टजातिक्रियं
नयानयविचारणाविधुरमस्तशङ्काकणम् ।
उपेयुषि विभीषणे झटिति दत्तमस्याभयं
मयेति समुदीरिता भगवतो गिरः पातु नः ॥ १७ ॥

कल्हाराम्बुजगन्धिमन्दपवने खेलन्मृगालङ्कृते
कूजत्कोकिलबालचूतगहने कूले सरय्वाः शुभे ।
पश्यान्वेति शुकं शुकीति चिबुके गृह्णन् करेण प्रियां
चित्ते भाति हि कोऽपि मे दशशिरोमत्तेभकण्ठीरवः ॥ १८ ॥

कूजत्केकिनि चित्रकूटकटके गोदावरीमेदुरे
प्रत्यग्रप्रसवस्य केसरतरोः प्रच्छायशीते तले ।
कौशेयास्तरणे विदेहदुहितुः कुर्वाणमङ्के शिरो
नीलाम्भोदनिभं भजे रघुकुलप्राचीनभाग्यं प्रभुम् ॥ १९ ॥

त्रस्तप्रस्थितहंसयूथमभितो नृत्यन्मयूरव्रजं
वल्मीकान्तरसंप्रविष्टभुजगं पङ्क्तीभवच्चातकम् ।
पुष्प्यन्नीपसिलीन्ध्रकेतकजनस्थानाटवीमेयुषा
कालिम्ना मम केनचित् कवचितं चेतो विराधद्विषः ॥ २० ॥

संरम्भस्खलितोत्तरीयमवनिन्यस्ताग्रपादाम्बुजा-
वुद्यम्य श्लथनीवि पुष्पनिचयं संगृह्णतीं जानकीम् ।
पश्यन् पञ्चवटीवने मुहुरपि प्रच्छन्न एवान्तिके
हस्तोपात्तधनुश्शरः स्फुरति मे चित्ते रघुग्रामणीः ॥ २१ ॥

निर्वृत्ते खरदूषणत्रिशिरसामुन्मा[मू]लनादाहवे
वैदेही परिषस्वजे सपदि यं मूर्ता जयश्रीरिव ।
उन्मीलत्पुलकश्रमाम्भसि धनुर्न्यस्तैकहस्ताम्बुजे
तस्मिन् सस्मितवक्त्रचन्द्रमसि मे देवे मनो धावति ॥ २२ ॥

पायात् पर्णकुटीगतो घनघटासिक्तावनीसौरभ-
प्राणव्यापृतपुष्करद्विपकुले नीपप्रसूनाकुले ।
केकाकण्ठशिखण्डिताण्डववपदे खेलत्पुरोमारुते
नन्दन् प्रावृषि चित्रकूटकटके सीतासखो राघवः ॥ २३ ॥

अर्धावर्तितमन्त्रमर्धविरतस्वाध्यायमर्धोज्झित-
ब्रह्मोपासनमर्धमुक्तहवनातिथ्यादिसर्वक्रियम् ।
दृष्ट्वा पञ्चवटीजुषो यमृषयः सार्थं तपो मेनिरे
कन्दर्पादपि सुन्दरं व्रजति मे काकुत्स्थमेनं मनः ॥ २४ ॥

चारुस्मेरमुखाम्बुजं चरणयोर्मञ्जुक्वणन्नूपुरं
चञ्चद्रत्नललन्तिकालिकलसत्कस्तूरिकाचित्रकम् ।
कान्तव्याघ्रनखानुबन्धिकनकग्रैवेयकालङ्कृतं
कौसल्याङ्कविभूषणं कुवलयश्यामं भजामः शिशुम् ॥ २५ ॥

दत्त्वा पार्श्वजुषो विदेहदुहितुश्चापं कराम्भोरुहे
गुल्फद्वन्द्वनिवेशितस्फिगवनौ कुर्वन् समौ जानुनी ।
दृष्ट्या कूणितया कराम्बुजयुगव्यासक्तमूलाञ्चलं
पश्यन् बाणमृजुं न वेति हृदि मे वीरोऽयमारोहति ॥ २६ ॥

उन्मीलन्नवमञ्जरीपरिमलोदञ्चद्द्विरेफारवै-
रारण्ये तुलसीवने मुखरितेऽदृश्यं शुकश्यामले ।
शश्वल्लीनमधीरदृग्वलयया शश्वद्गृहीतं बला-
ज्जानक्या सह चित्रकूटकटके देवं मनो ध्यायति ॥ २७ ॥

सीतादत्तकराम्बुजं पदयुगश्लिष्यन्मणीपादुकं
हर्षावेक्षिविहारबर्हिपसृताभ्यर्णं घटोध्न्या गवा ।
स्वामिन् देव जयेति पञ्जरशुकस्वानोल्लसत्तोरणं
साकेताधिपतेरुषस्यवतु नः शय्यागृहान्निर्गमः ॥ २८ ॥

पाणौ मुष्टिगृहीतपन्नगलतापर्णोच्चये बिभ्रतीं
वामे रत्नकरण्डकं तदपरे वीटीं विदेहात्मजाम् ।
पश्यन् कूजति पार्श्वतः कलरवे दृष्ट्या तिरश्चीनया
मन्दस्मेरमुखीं हृदि स्फुरति मे मञ्चाधिरूढः प्रभुः ॥ २९ ॥

शैलान्मत्तोऽवतरति करिज्र्यास्वनैर्वारय त्वं
सौमित्रे मा भवतु चकिता जानकीति प्रहिण्वन् ।

तज्ज्याघोषं मृगपतिरवं व्याहरन् वेपिताङ्गया
गाढाश्लिष्टो जनकसुतया कौसलेयोऽवतान्नः ॥ ३० ॥

हंसी मन्दं चरति हरिणी वीक्षते लोललोलं
रम्यं कूजत्ययमिह पिको राजते बर्हिणोऽसौ ।
इत्याश्चर्याद्वनभुवि वधूं दर्शयन्तीं यदि त्वां
पश्यास्येतैरलमिति वदन पातु नः कौसलेयः ॥ ३१ ॥

देव त्वां रघुवीर नीरदनिभं सीतातटित्सङ्गतं
कारुण्यामृतवर्षिणं कतिपये दृष्ट्वा मयूरा इव ।
किं नृत्यन्ति न चातका इव परे किं वा न माद्यन्त्यतः
स्वामिन् पालय पालयेत्यहमपि क्रोशामि मण्डूकवत् ॥ ३२ ॥

खेलत्केकिनि सञ्चरन् मृगशिशौ चूतस्फुरद्वल्कले
नीपन्यस्तनिषङ्गधन्वनि जनस्थानोटजप्राङ्गणे ।
सीतां पुष्पसमित्कुशं हृतवतीं संभावयन्तं दृशा
बद्धस्वस्तिकमेणचर्मणि घनच्छायं भजेयं प्रभुम् ॥ ३३ ॥

संप्राप्तो मृगयां विधाय नलिनीपत्राहृतैरम्बुभिः
संक्षाल्यांशुकपल्लवेन कुचयोः पादाब्जमुन्मार्जतीम् ।
मृष्टा नेह मनश्शिलेति विसृतां रत्नाङ्गुलीयश्रियं
वैदेहीं प्रति दर्शयन् हृदि कृतव्याजो विभुः पातु नः ॥ ३४ ॥

श्लथकचभरान्नैतद्भूमौ निपातय सुन्दरी-
त्युदितहसितं सव्रीडाया महीदुहितुर्दिशन् ।
वनतरुतले मल्लीपुष्पैः कृतं नवगर्भकं[1]
दिनकरकुलोत्तंसो देवोऽधिरोहति मे मनः ॥ ३५ ॥

दलितदनुजाटोपे चापाधिरोपितसायके
मरतकमणिच्छायादायाददायिमहोभरे ।
प्रणतजनताप्राणत्राणप्रवीणपराक्रमे
स्फुरति पुरतोऽस्माकं सीतापतौ दुरितं कुतः ॥ ३६ ॥

अविदितनतक्लेशानीशानपास्य दिशामहो
सह परिहरत् कालीकेलीसखं मुरलीभृता ।
वनमृगपरीवारे वीरे वरेण्यधनुर्धरे
कुवलयदलश्यामे रामे कुतूहलि मे मनः ॥ ३७ ॥

---

1. गर्भकः = शिरोधृतपुष्पगुच्छा

स्फटिकधवलान्मेघश्यामे गृहीतमृगानलात्
धृतधनुरिषौ भूतेशानात् प्लवङ्गमसेविते ।
मतिरवतरत्यात्तव्याघ्राजिनाद्धृतवल्कले
शिखरितनयानाथात् पृथ्वीसुतापरिणेतरि ॥ ३८ ॥

स्वच्छन्दं व्रजसुन्दरीजनविटाद्द्वैकदारव्रते
लीलावेणुलसत्करात् त्रिभुवनत्राणाय चापस्पृशि ।
चोराकृष्टवधूजनात् परिणतौ कीटादिमुक्तिप्रदे
व्यावृत्तं मम यादवाद्रघुपतौ चेतः स्वयं धावति ॥ ३९ ॥

कश्चिद्बालो मृत्तिकां भक्षयित्वा
कश्चिद्वृद्धश्चूतमूले लुठित्वा ।
मां रक्षेच्चेन्मास्तु तद्यन्ममास्ते
त्राता सीताकेलिलोलो युवैकः ॥ ४० ॥

अभिमतफलसिद्ध्यै ध्यातुमेकं सुराणां
अनुसरति मनो मे यावदाबद्धमेकम् ।
अपहरति निरुन्धन्नन्तरा तावदेतत्
कपिकुलपरिवारः कश्चिदम्भोदनीलः ॥ ४१ ॥

क्षणचलितनिरूढस्वर्णदीकर्णभूषे
परिहृतमयकन्यापत्रलेखप्रसङ्गे ।
विरचितसुरसुभ्रूविभ्रमप्रातिभाव्ये
कुतुकितमतिभव्ये क्वापि कालिम्नि चेतः ॥ ४२ ॥

कचभरनिटिलभ्रूकर्णदृङ्नासिकोष्ठ-
स्तनजघननितम्बं पश्यदन्याङ्गनानाम् ।
मलिनयति मनश्चेन्मन्मथस्तावता किं
विमलयितुमहल्यापावनोऽप्यस्ति वीरः ॥ ४३ ॥

नवकुवलयदामश्यामलः कोमलाङ्ग्या
विरचितमधुरश्रीरेकया विद्युतेव ।
जलधर इव काले जृम्भमाणो मयूरं
कुतुकयति मनो मे कोऽपि कोदण्डभूषः ॥ ४४ ॥

मनसि मम समिन्धे पुण्यभाजामवेक्ष्यः
कपिसदसि मुनीनां चेतसास्वादनीयः ।

जनकनृपतिकन्यासस्पृहालिङ्गनार्हः
श्रुतियुवतिकबर्याः कोऽपि सौरभ्यसारः ॥ ४५ ॥

कुवलयदलनीलः कोऽपि रक्षोवधूनां
कुचगिरिषु निपातं वाष्पवृष्टेर्विधाता ।
निखिलभुवनचेतोबर्हिनृत्तैकहेतुः
शमयति मम तापं शार्ङ्गवानम्बुवाहः ॥ ४६ ॥

निगमशिखरिशृङ्गान्नित्यमागत्य खेल-
न्मुनिजनहृदरण्ये मोहसारङ्गमुक्ते ।
दशवदनगजेन्द्रे दर्शिताघातलीलो
वशयति रघुसिंहो मानसं नः प्रसन्नः ॥ ४७ ॥

करयोः शरकार्मुकाभिरामं
पदयोरश्मविवेककृप्तरागम् ।
कलितेषुधिमंसयोः प्रभुं तं
करुणापूर्णमपाङ्गयोरुपासे ॥ ४८ ॥

अवलम्ब्य शरासमद्रिसारं
गुणमाकृष्य घनध्वनिं विमुञ्चन् ।
विशिखानहितेषु रुक्मपुङ्खान्
विहरत्याहवसीम्नि वीररामः ॥ ४९ ॥

चरमाङ्गनिबद्धचारुतूणं
सुरमाङ्गल्यधुरीणचापबाणम् ।
अलिनीलमुपैति मानसं मे
नलिनीनायकवंशभागधेयम् ॥ ५० ॥

दृशि कारुणिकः करे धनुष्मान्
कुशिकापत्यमखस्य रक्षिता यः ।
रजनीचरतूलचण्डवातो
भजनीयो मम सोऽयमेक एव ॥ ५१ ॥

नवनीरदनीलमात्तचापं
भवनीहाररविं शृणोति लोकः ।
अवनीतनयासखं जगत्या
स्तवनीयं मम दैवमेकमेव ॥ ५२ ॥

भरिता दयया दृशोः सुराणां
परितापक्षतये गृहीतचापा ।
दुरितानि धुनोतु कापि लीला-
च्छुरिता भूमिसुताकुचाङ्गरागैः ॥ ५३ ॥

सुरचारणसिद्धबद्धसेवः
शरचापाभरणो नवाम्बुदश्रीः ।
अहिमांशुकुलार्णवेन्दुरेको
महिमान्तःकरणे ममाविरस्तु ॥ ५४ ॥

धनुषा सह सायकं दधाने
जनुषा भूषितचण्डरश्मिवंशे ।
कुचनम्रमहीसुतानुरक्ते
क्वचन न्यस्तमिदं महिम्नि चेतः ॥ ५५ ॥

भयकम्पितसागरप्रशस्ते
मयकन्यातनुमण्डनासहिष्णौ ।
नवगारुडरत्नभासुरे स्या-
दवगाढं हृदयं क्वचित् प्रभौ मे ॥ ५६ ॥

निजनामरसज्ञनीलकण्ठं
भजनाय प्लवगावृतोपकण्ठम् ।
बलयन्त्रितसिन्धुमन्तरेकं
कलयन्नन्यमुपासितुं यते कम् ॥ ५७ ॥

विकटभ्रुकुटीन् विलोकतेऽरीन्
विशिखान् मुञ्चति विग्रहान् बिभर्ति ।
अनुलिम्पति शोणितैर्धरित्रीं
रणरङ्गे रघुपुङ्गवः समिन्धे (?) ॥ ५८ ॥

स्मयमानमुखेन्दुरिन्द्रनील-
द्युतिरम्भोजदलेक्षणो धनुष्मान् ।
तरलीकृतजानकीदृगन्त-
स्तरुणः कश्चन मे मनो [1]धिनोति ॥ ५९ ॥

दलदुत्पलदामकोमलाङ्गी
दशकण्ठायुरपायकालभङ्गी ।

---

1. धुनोति

मनसे मम रोचतेऽभिरूपा
करुणा काचिदुपात्तबाणचापा ॥ ६० ॥

मौलौ निधेहि मकुटं त्यज बर्हिगर्हं
बाणं गृहाण धनुषा सह मुञ्च वेणुम् ।
शाखामृगैर्विहर सन्त्यज गोपबालान्
रामो यदूद्वह भव त्वमथाश्रये त्वाम् ॥ ६१ ॥

कृष्णैकसूतरथकेतनभूतदूत
आनूरुसारथिरथात्मजमित्रभूतः ।
पाणीश····रथस्य शरासभूतः
कश्चिन्मनो हरति कार्मुकभूषणो मे ॥ ६२ ॥

दृप्यद्दशाननकलत्रकठोरगर्भ-
विभ्रंशविभ्रमपरिस्फुटसाहसेन ।
घण्टा विलुण्ठयतु नः कलुषं रवेण
कोदण्डकोटिघटिता कुलदेवतायाः ॥ ६३ ॥

देवद्विषां विजयदेहभृतां शरण्यं
कारुण्यभूषितकटाक्षमुदग्रचापम् ।
टङ्कत्रुटन्मरतकोपलरत्ननील-
धाम स्मरामि धरणीतनयासहायम् ॥ ६४ ॥

आस्ते कृतान्त इति पापिषु दण्डधारी-
त्याकर्ण्यते मुहुरवाप्तपरम्पराभ्यः ।
रक्षिष्यतीति रघुनन्दनमेव साक्षा-
द्विश्वस्य केवलमहं न विचिकियामि ॥ ६५ ॥

तिष्ठन्तु दारुणतरा निरयाः सहस्रं
तिष्ठन्तु घोरचरिता यमकिङ्करा वा ।
पापात्मनोऽपि नियतं परिपालनाय
कोदण्डपाणिरिति कोऽपि ममास्ति नाथः ॥ ६६ ॥

लीलोपात्तबलिप्रसूनमुकुलाः स्निग्धेन सौमित्रिणा
वैदेहीकरपल्लवात्तकलशीधाराम्बुसंवर्धिताः ।
दृष्टा वत्सलया दृशा रघुपतेः पुत्रा इव प्रत्यहं
प्रायः पञ्चवटीकुटीरतरवः प्रीणन्ति मे मानसम् ॥ ६७ ॥

सौवर्णीमवसक्थिकामधिवसन् पार्श्वस्थपृथ्वीसुता
हास्ताम्भोजयुगक्रमप्रसृतया जातिस्रजा दीर्घया ।
पाणिभ्यामपि वेष्टयन् कचभरं मौल्येकपार्श्वोचितं
देवो मे हृदि भाति दत्तनयनो दृश्ये तदेकस्तने ॥ ६८ ॥

स्वप्नदृष्टं श्लोकान्तरम्—

चापसंहितशरं चरमाङ्गे
बद्धतूणमुपनीविकृपाणम् ।
वञ्चनामृगवधाय वनान्ते
सञ्चरन्तमिममन्तरुपासे ॥ ६९ ॥

कौणपाधिपकदर्थितामरी-
काङ्क्षितप्रणयिबाणकार्मुकम् ।
कञ्चन श्रुतिकरण्डमौक्तिकं
कालिमानमवलोकयामहे ॥ ७० ॥

जानकीस्तनतटैकपालिका-
जातकुङ्कुमविभागपिञ्जरः ।
दृश्यते हृदि दयाधुरन्धरः
कोऽपि कोसलकुलीनकुञ्जरः ॥ ७१ ॥

मामके हृदि महीकुमारिका
कामकेलिकुतुकी नृपात्मजः ।
... ...पद्मस्त्रबन्धुरो
नूतनोदयपयोदसुन्दरः ॥ ७२ ॥

चन्द्रशेखरशरासनच्छिदा
चातुरीचणकरारविन्दया ।
स्वीकृतं मम सुरानुकूलया
. . . . . . भ्रनीलया ॥ ७३ ॥

कौणपालिकदलीविषाणिना
बाणचापपरिकर्मपाणिना ।
चण्डिकारमणचापखण्डने
पण्डितेन मम मण्डितं मनः ॥ ७४ ॥

तुन्नकीर्णकुटिलक्षपाचरे
कृत्रिमेतरगिरामगोचरे ।

धावते हि कुलदेवतेति मे
चित्तमेवमिदमुत्तमे नृणाम् ॥ ७५ ॥

कालिकानिभरुचिः कनीयसा
कान्तया च सह कल्पितासिका ।
कार्मुकाशुगलसत्कराम्बुजा
काचिदस्ति करुणा गतिर्मम ॥ ७६ ॥

मामके मनसि धान्यमालिनी-
भूषणासहभुजोष्मशालिनी ।
सा चकास्ति शरचापधारिणी
भालुमालिकुलभाग्यधोरणी ॥ ७७ ॥

याति तेजसि मनः सनातने
दूतभूषितकिरीटिकेतने ।
यामिनीचरचमूभयङ्करे
जानकीनयनकेलिकिङ्करे ॥ ७८ ॥

चङ्क्रमानुकृतगन्धसिन्धुरा
सिन्धुराजकृतसेतुबन्धना ।
वासनाधृतशरासनाशुगा
मेचका मनसि मे चकास्ति सा ॥ ७९ ॥

बानरक्षपितराक्षसव्रजं
दीनरक्षणविचक्षणं प्रभुम् ।
श्रीमदग्र्यशरचापमेति मे
जामदग्न्यमदनिग्रहं मनः ॥ ८० ॥

कण्ठेकालशरासखण्डनचणं कल्याणनानागुणं
कारुण्याभरणं खरान्तकरणं कञ्जाभिरामेक्षणम् ।
पाणिद्वन्द्वगृहीतबाणधनुषं पाथोदनीलत्विषं
पौलस्त्यासुमुषं भजामि पुरुषं पार्श्वे वधूटीजुषम् ॥ ८१ ॥

कुवलयदलनीलश्रीभृतां भूकुमारी-
कुचकलशविराजत्कुङ्कुमैरङ्कितानाम् ।
दशमुखभुजतेजोदर्पतूलानिलानां
दशरथसुकृतानां दासभावं भजामः ॥ ८२ ॥

करधृतशरचापः कान्तिमत्पङ्कजाक्षो
निहितशरधिरंसे नीरदस्निग्धनीलः ।
वनमृगपरिवारो वन्दनीयो मुनीनां
मदयति हृदयं मे मैथिलीप्राणनाथः ॥ ८३ ॥

मघवदुपलनीले मण्डलीकृत्य चापं
मुहुरभिदशकण्ठं मुञ्चतीषुप्रपञ्चम् ।
रणधरणिरजोभिर्धूसरे वासरेश-
प्रभवकुलभवानामुत्तमे चित्तमेति ॥ ८४ ॥

शुभगुणकलकण्ठस्तोममाकन्दशाखा-
नियमिनिवहचेतोनीलकण्ठाभ्ररेखा ।
दशवदनवधूटीचक्रवाकीत्रियामा
जनयति कुतुकं मे जानकीप्रेमसीमा ॥ ८५ ॥

तारुण्यदर्पतरलीकृतगोपकन्या
दृष्टिप्रियं तव यदस्ति वपुस्तदास्ताम् ।
काकुत्स्थवीर कमलानयनाभिरामं
गात्रं त्विदं तव करोति मुदं मदन्तः ॥ ८६ ॥

कल्याणमावहतु दाशरथेः कटाक्षः
शाखामृगे शतमखादपि सानुकम्पः ।
आभाति भूमितनयाधरबिम्बलोभ-
सम्पातसंक्रमितलाक्ष इवारुणो यः ॥ ८७ ॥

(रामं सुन्दरतया महालक्ष्मीश्चकमे इति पुराणे कथानुसन्धेया।)

स कश्चन गिरीन्द्रजासखशरासनत्रश्चको
मनो हरति मामकं मरतकोपलश्यामलः ।
धनुश्शरलसत्करो धरणिकन्यकाप्रेमभू-
र्धनञ्जयरथध्वजाभरणभूतदूतः प्रभुः ॥ ८८ ॥

धन्या वयं धरणिकन्यकया सनाथे
नाथे स्थिते जगति नः परिपालनाय ।
यश्शीलितो यतिभिरात्मनि निष्कलङ्के
लङ्केश्वरं लवितुमाप मनुष्यरूपम् ॥ ८९ ॥

दीनानुकम्पि दिवसेश्वरवंशरत्नं
कर्तृव्यपेतवचसां कथमप्युपेयम् ।

तापिञ्छनीलरुचि तामरसायताक्षं
चापोज्ज्वलं किमपि वस्तु ममाविरस्तु ॥ ९० ॥

आबद्धतूणमंसे करकमलद्वन्द्वधृतधनुर्बाणम् ।
पश्यामि हृदयकमले रामं दूर्वादलश्याम(ल)म् ॥ ९१ ॥

मज्जति मनो मदीयं क्वचिदपि दलितेन्द्रमणिनीले ।
महिमनि महीकुमारीकुचकुड्मलकुङ्कुमाङ्कितोरस्के ॥ ९२ ॥

जगदघहरप्रशंसे जनकसुतावलयपदविलसदंसे ।
निगमान्तनलिनहंसे रमते मम हृदयं रविकुलवतंसे ॥ ९३ ॥

सरसघनसारमेदुरचन्दननिष्यन्दशीतलालोकम् ।
कमपि दलितमयकन्यामङ्गलमालिङ्गति मनो मे ॥ ९४ ॥

विकचेन्दीवरनीलं विदेहतनयाकुचस्तबकलोलम् ।
निगमान्तसुधानिलयं माधुर्यं पिबति मामकं हृदयम् ॥ ९५ ॥

गिरिशधनुस्तरुकरिणं गलितभृगुप्रवरगर्वसर्वस्वम् ।
कलयामि कमपि वीरं कृत्तकबन्धं कृताम्बुनिधिबन्धम् ॥ ९६ ॥

कुशिकसुतकुतुकदायी कुवलयदलनीलकोमलशरीरः ।
कोसलकुलतिलको मे कोऽपि गतिः कोविदाररथकेतुः ॥ ९७ ॥

कुवलयदामसरूपं कुण्ठितदशकण्ठनिरुपमाटोपम् ।
करतलगृहीतचापं कलये तद्धाम पामरदुरापम् ॥ ९८ ॥

दलितेन्दीवररूपे दर्शितदशकण्ठयौवतविलापे ।
धृतशरचापकलापे दीव्यति हृदयं दिलीपकुलदीपे ॥ ९९ ॥

निगमान्तवनकुरङ्गे निर्मलमुन्यन्तरङ्गनटरङ्गे ।
रुचितुलितरवितुरङ्गे क्वचन रमे रघुकुलार्णवतरङ्गे ॥ १०० ॥

॥ इति श्रीरामकर्णामृतं सम्पूर्णम् ॥

---

## १९. ॥ अथ श्रीरामप्रपत्तिशतकम् ॥

कल्याणाद्रिमहाधीरः कल्याणगुणवारिधिः ।
कल्याणरामः कृपया कल्याणानि करोतु नः ॥

राजराजशिरोरत्नराजनीराजिताङ्घ्रये ।
राजद्राजीववक्त्राय रामराजाय मङ्गलम् ॥

यः कोसलेन्द्रदुहितुः सुकृतेन साक्षा-
ज्जातो हरिस्तनुभवो दिवि वासवाद्यैः ।
अस्मान् जगच्च विनुतः परिपालयेति
तं राममार्तिहरणं शरणं भजामि ॥ १ ॥

बृन्दारका यदुदये प्रमदादयोध्यां
सन्तानकल्पकुसुमैः परितो ववर्षुः ।
गन्धर्वजातिरतिगानरता बभूव
तं राममार्तिहरणं शरणं भजामि ॥ २ ॥

यस्योदये मनुजलोकशुभोदयोऽभूत्
सर्वं क्षणेन जगतो दुरितं प्रशान्तम् ।
चक्रुर्मुदा नटनमप्सरसः प्रकामं
तं राममार्तिहरणं शरणं भजामि ॥ ३ ॥

यस्याद्वितीयमनघं शुभदं भयघ्नं
मुक्तिप्रदं श्रवणमङ्गलमार्तिहारि ।
रम्यं समुल्लसति नाम जगत्पवित्रं
तं राममार्तिहरणं शरणं भजामि ॥ ४ ॥

यं लक्ष्मणेन भरतेन च सानुजेन
बाल्ये सहाभिविहरन्तमवेक्ष्य दृष्ट्या ।
प्रापुर्न तृप्तिमवशाः प्रमदेन लोका-
स्तं राममार्तिहरणं शरणं भजामि ॥ ५ ॥

यः शैशवे कनकमौक्तिकनीलरत्न-
माणिक्यवज्रवरभूषणभूषिताङ्गः ।
लोकान् प्ररञ्जयति कुञ्जरमञ्जुगत्या
तं राममार्तिहरणं शरणं भजामि ॥ ६ ॥

यः शैशवे मधुरसूक्तिसुधाप्रवाहै-
र्लोकस्य कर्णहृदयानि मुहुर्निषिच्य ।
चक्रे निराकृतसुरपधिपभाग्यमेनं
तं राममार्तिहरणं शरणं भजामि ॥ ७ ॥

यं शैशवातिरमणीयसुभद्रवेष-
माकर्णदीर्घनवरक्तसरोजनेत्रम् ।

धन्या बभूवुरवलोक्य दृशैव पौरा-
स्तं राममार्तिहरणं शरणं भजामि ॥ ८ ॥

यं शैशवे नयनसौख्यदचारुलीला-
कन्दर्पकोटिकमनीयनरावतारम् ।
धन्या बभूवुरवलोक्य दृशैव पौरा-
स्तं राममार्तिहरणं शरणं भजामि ॥ ९ ॥

यं मौक्तिकाभरणसुन्दरमन्दहासं
नव्यप्रवालरुचिराधरशोभमानम् ।
धन्या बभूवुरवलोक्य दृशैव पौरा-
स्तं राममार्तिहरणं शरणं भजामि ॥ १० ॥

यः शैशवे कुशिकजेन मखावनाय
नीतोऽनुजेन सह संप्रतिपन्नमन्त्रः ।
मध्याह्नभास्कर इवातितरां रराज
तं राममार्तिहरणं शरणं भजामि ॥ ११ ॥

बाल्ये समस्तजनतावधकारिवृत्तिं
यस्ताटकां स्त्रियमपीभसहस्रवीर्याम् ।
हत्वा सलीलमकरोद्भुवनं प्रहृष्टं
तं राममार्तिहरणं शरणं भजामि ॥ १२ ॥

यस्ताटकानिधनहृष्टमुनिप्रदिष्टा-
न्यस्त्राण्यगण्यमहिमानि चिरन्तनानि ।
साक्षाद्विधाय च मनोवशगानि चक्रे
तं राममार्तिहरणं शरणं भजामि ॥ १३ ॥

पौगण्ड एव वयसि प्रबलं सुबाहुं
यः केसरीव करिणं समितौ निहत्य ।
मारीचमब्धिमनयत् सहसा शरेण
तं राममार्तिहरणं शरणं भजामि ॥ १४ ॥

यो मैथिलेन्द्रनगरीमभियातुकाम-
स्त्रिस्रोतसं द्युपथिकां कुशिकात्मजोक्ताम् ।
शृण्वन् मुमोद भृशमात्मकुलीनभूपान्
तं राममार्तिहरणं शरणं भजामि ॥ १५ ॥

यो गौतमाख्यमुनियोषितमात्मकान्त-
शापोररीकृतशिलावपुषं क्षणेन ।
चक्रे स्वपादरजसा तदिदाभदेहां
तं राममार्तिहरणं शरणं भजामि ॥ १६ ॥

यो गौतमात्मजसमीरितगाधिसूनु-
ब्राह्मण्यसङ्गमकथाश्रुतिहृष्टचेताः ।
श्लाघ्यस्तमेव सुचिरं हृदये ननन्द
तं राममार्तिहरणं शरणं भजामि ॥ १७ ॥

देवासुरैरपि दुरासदमीशचापं
भङ्क्त्वा मृणालमिभराडिव लीलया यः ।
सद्यश्चकार जनकं सफलप्रतिज्ञं
तं राममार्तिहरणं शरणं भजामि ॥ १८ ॥

यो जानकीपरिणये स्वशिरो विनम्य
दोर्भ्यां तदङ्घ्रिसरसीरुहमश्ममौलौ ।
आरोप्य तन्मुखमवेक्ष्य जहास मन्दं
तं राममार्तिहरणं शरणं भजामि ॥ १९ ॥

यो मैथिलेन्द्रनगरात् स्वपुरं प्रयास्यन्
मार्गे गृहीतपरशुं भृगुजं सचापम् ।
व्यद्रावयद् धृतशरासनदर्पवीर्यं
तं राममार्तिहरणं शरणं भजामि ॥ २० ॥

यो भ्रातृभिस्त्रिभिरुदूढवधूसमेतै-
र्हेमप्रसाधितवलद्द्विरदाधिरूढः ।
साकेतमेत्य धरणीसुतयैव रेमे
तं राममार्तिहरणं शरणं भजामि ॥ २१ ॥

यो मातुलालयमतिप्रमदेन साकं
संप्रेषयन् ससहजं भरतं स्वपित्रोः ।
शुश्रूषया चिरमशेषजनप्रियोऽभूत्
तं राममार्तिहरणं शरणं भजामि ॥ २२ ॥

यस्तातमातृवचनावितथीकरस्तं
साम्राज्यभोगमनपेक्ष्य सहानुजेन ।

वध्वा ययौ वनमशेषजगद्धिताय
तं राममार्तिहरणं शरणं भजामि ॥ २३ ॥

यो नव्यशाद्वलतले मृदुपादगत्या
गङ्गामुपेत्य गुहमानित उत्तरंस्ताम् ।
हित्वा गुहं सरथसूतमभूज्जटाल-
स्तं राममार्तिहरणं शरणं भजामि ॥ २४ ॥

यस्तज्जनेन सह सोदरजानकीभ्यां
तीर्त्वा प्लवैः ससलिलाः सरितश्च बह्वीः ।
रेमे पुरीव सुदृशा सह चित्रकूटे
तं राममार्तिहरणं शरणं भजामि ॥ २५ ॥

यो मातुलस्य निलयाद्वनमागतेन
पादानतेन भरतेन पुरागमाय ।
संप्रार्थितोऽपि गमनं मनसापि नैच्छत्
तं राममार्तिहरणं शरणं भजामि ॥ २६ ॥

यो राज्यपालनकृते मणिपादुके स्वे
दत्त्वा नताय भरताय च सान्त्वपूर्वम् ।
पुर्यै निवर्त्य तमभूत् परमप्रहृष्ट-
स्तं राममार्तिहरणं शरणं भजामि ॥ २७ ॥

यः सानुजो वनितया सह चित्रकूटं
त्यक्त्वात्रिमस्य च वधूं प्रणिपत्य ताभ्याम् ।
दत्तं विभूषणकुलं मुमुदे प्रगृह्य
तं राममार्तिहरणं शरणं भजामि ॥ २८ ॥

यो दण्डकावनमुपेत्य खलं विराधं
हत्वा विदेहतनयाममितप्रमोदाम् ।
कृत्वा तुतोष शरभङ्गकृताभिताशीः
तं राममार्तिहरणं शरणं भजामि ॥ २९ ॥

यो वै सुतीक्ष्णमुनिना समनुगृहीतः
कुम्भोद्भवं समभिवाद्य मुदा च तस्मात् ।
तूर्णीं शरासनमसिं प्रतिलभ्य रेजे
तं राममार्तिहरणं शरणं भजामि ॥ ३० ॥

यो दण्डकावनतपोनिरतैर्मुनीन्द्रै-
रभ्यर्थितो निखिलराक्षसनाशनाय ।
तेभ्यस्तथेति दयया विदधे प्रतिज्ञां
तं राममार्तिहरणं शरणं भजामि ॥ ३१ ॥

यो यातुधाननिधने विधृतप्रतिज्ञः
कालं व्यपेक्ष्य निवसन् वरपञ्चवट्याम् ।
मित्रं जटायुषमवाप्य तुतोष कामं
तं राममार्तिहरणं शरणं भजामि ॥ ३२ ॥

यो दुर्मतिं झटिति शूर्पणखां विभीकां
स्वस्मिन् सगर्भकरचूर्णितकर्णनासाम् ।
कृत्वा मुमोच दयया विपिने सजीवां
तं राममार्तिहरणं शरणं भजामि ॥ ३३ ॥

यो दूषणत्रिशिरसौ च खरं तदीयं
सैन्यं चतुर्दशगुणोक्तसहस्रसङ्ख्यम् ।
एको निहत्य मुमुदे सहसा जयेन
तं राममार्तिहरणं शरणं भजामि ॥ ३४ ॥

यः पङ्क्तिकन्धरहृतां मृगयन् स्वकान्तां
तस्याः कृते खगपतिं पथि मुक्तजीवम् ।
दग्ध्वा स्वतातवदमुष्य ददौ च मुक्तिं
तं राममार्तिहरणं शरणं भजामि ॥ ३५ ॥

यो भक्षितुं स्वमनुजं च कृतप्रयत्नं
दग्ध्वा कबन्धमपि योजनदीर्घबाहुम् ।
श्रुत्वा तदुक्तशबरीचरितो ननन्द
तं राममार्तिहरणं शरणं भजामि ॥ ३६ ॥

यस्तापसीं ससहजः शबरीमुपेत्य
तत्कल्पितप्रचुरपूजनलब्धहर्षः ।
तद्भुक्तशेषफलभुक् प्रमुमोद कामं
तं राममार्तिहरणं शरणं भजामि ॥ ३७ ॥

यो व्याधयोषिदभिसूचितमैत्रपात्रं
सुग्रीवमेव मृगयन् समुपेत्य पम्पाम् ।

तत्राञ्जनेयमभिगृह्य ननन्द गाढं
तं राममार्तिहरणं शरणं भजामि ॥ ३८ ॥

यो वायुसूनुघटितातुलमैत्रहृष्ट-
सुग्रीवदत्तनिजदारविभूषणानि ।
दृष्ट्वा तुतोष रमणीमिव वीक्ष्य साक्षा-
त्तं राममार्तिहरणं शरणं भजामि ॥ ३९ ॥

यो मित्रपुत्रकथिताग्रजवैरदुःख-
निर्मोचनोदितमनाः करुणारसाब्धिः ।
हन्यां तमाश्विति ददावभयं च तस्मै
तं राममार्तिहरणं शरणं भजामि ॥ ४० ॥

यो मित्रमोदविधये सहसैककेन
बाणोत्तमेन विनिहत्य महेन्द्रपुत्रम् ।
सुग्रीवमेव कपिराज्यपदेऽभ्यषिञ्च-
त्तं राममार्तिहरणं शरणं भजामि ॥ ४१ ॥

यो भूमिशैलनिलयान् जनकेन्द्रपुत्र्याः
संमार्गणाय सहसा कपिनायकेन ।
आनायितान् कपिवरान् मुमुदे समीक्ष्य
तं राममार्तिहरणं शरणं भजामि ॥ ४२ ॥

यः सौरिणा कपिवरेषु दिशश्चतस्रः
प्रस्तावितेषु कृतिनं हनुमन्तमेव ।
ज्ञात्वा करेऽस्य विततार निजाङ्गुलीयं
तं राममार्तिहरणं शरणं भजामि ॥ ४३ ॥

यत्प्राभवादितरकीशवरैरलङ्घ्य-
वारांनिधिं पथि विधूनितमार्गविघ्नम् ।
वेशन्तवल्लघु ततार समीरसूनु-
स्तं राममार्तिहरणं शरणं भजामि ॥ ४४ ॥

लङ्कामुपेत्य निशि राक्षसकोटिगुप्तां
केनाप्यदृश्यगतिरेव यदीयभूम्ना ।
रक्षोऽवरोधमनिलात्मभवश्चचार
तं राममार्तिहरणं शरणं भजामि ॥ ४५ ॥

यत्पादपद्मयुगलस्मरणो हनूमान्
सीतां विलोक्य च वितीर्य वराङ्गुलीयम् ।
चूडामणिं समुपगृह्य मुदं प्रपेदे
तं राममार्तिहरणं शरणं भजामि ॥ ४६ ॥

यत्पादचिन्तनबलाद्दशवक्त्रकान्ता-
लीलावनं लघु विभज्य समीरसूनुः ।
तत्पालकानपि निहत्य जयी मुमोद
तं राममार्तिहरणं शरणं भजामि ॥ ४७ ॥

यत्पादसंश्रयबलात् पवमानसूनुः
सेनापतीन् झटिति पञ्च च मन्त्रिपुत्रान् ।
सप्ताक्षमप्यतिबलं सुलभं जघान
तं राममार्तिहरणं शरणं भजामि ॥ ४८ ॥

यत्पादसेवनबलेन हि मरुत्कुमारो
ब्रह्मास्त्रबन्धनमपीन्द्रजिता प्रयुक्तम् ।
निर्धूय पङ्क्तिवदनं च तृणाय मेने
तं राममार्तिहरणं शरणं भजामि ॥ ४९ ॥

यत्पादवारिजयुगस्मृतिवैभवेन
वालाग्रसीम्नि दशकन्धरदीपितेन ।
वैश्वानरेण पवनात्मभवो न देहे[भुवो न दाहः]
तं राममार्तिहरणं शरणं भजामि ॥ ५० ॥

यत्पादपद्मविनतिप्रभवप्रभावात्
पश्यत्सु राक्षसगणेष्वपि वायुसूनुः ।
भस्मीचकार रुचिरामविशङ्क्य लङ्कां
तं राममार्तिहरणं शरणं भजामि ॥ ५१ ॥

यत्पादसंस्तुतिबलेन सुतोऽनिलस्य
भस्मावशेषविभवां प्रविधाय लङ्काम् ।
तीर्त्वाब्धिमुत्तरतटं पुनराजगाम
तं राममार्तिहरणं शरणं भजामि ॥ ५२ ॥

यत्पादभक्तिमहिमातिशयेन वायोः
पुत्रोऽङ्गदादिकपिभिः सह दुष्प्रवेशम् ।

भूत्वा विभोर्मधुवनं च पपौ मधूनि
तं राममार्तिहरणं शरणं भजामि ॥ ५३ ॥

यत्सन्निधिं समुपगम्य मरुत्तनूजः
पादाम्बुजं सविनयं सहसा प्रणम्य।
दृष्टा मया जनकजेति जगाद मोदा-
त्तं राममार्तिहरणं शरणं भजामि ॥ ५४ ॥

यो मारुतेर्निजवधूकुशलप्रवृत्तिं
चूडामणिं च समवाप्य परं प्रहृष्टः।
सर्वस्वदानसदृशं परिषस्वजे तं
तं राममार्तिहरणं शरणं भजामि ॥ ५५ ॥

यः स्वानुजार्कजसमीरजशक्रभूज-
नीलादिभिः कपिवरैः सह मन्त्र्यमाणः।
लङ्कां शुभंयुदिवसे चकमेऽभिगन्तुं
तं राममार्तिहरणं शरणं भजामि ॥ ५६ ॥

यः पावमानिमधिरुह्य मुदा स्वयं तं
तारासुतं समधिरूढवतानुजेन।
सम्भाषमाण इनजेन ययाववाचीं
तं राममार्तिहरणं शरणं भजामि ॥ ५७ ॥

यः सर्वराक्षसविभेदनबद्धदीक्षै-
र्वृक्षायुधैर्हरिबलप्रवरैः परीतः।
तीरं ययौ सपदि दक्षिणवारिराशे-
स्तं राममार्तिहरणं शरणं भजामि ॥ ५८ ॥

पङ्क्त्याननानुजजुषेऽपि विभिषणाय
स्वाङ्घ्रिद्वयीसरसिजं शरणं गताय।
योऽदाच्चिरायुरपि राक्षसराजलक्ष्मीं
तं राममार्तिहरणं शरणं भजामि ॥ ५९ ॥

गम्भीरमात्मनि पराङ्मुखमम्बुधिं यः
क्रुद्धो विशोष्य विशिखेन शिखिप्रभेण।
तत्प्रार्थितः पुनरमुं स्ववशं निनाय
तं राममार्तिहरणं शरणं भजामि ॥ ६० ॥

अब्धिं नलेन हरिभिर्लघु बन्धयित्वा
तीर्त्वा तमाशु निखिलैः सह वानरैर्यः ।
लङ्कां निरुच्छ्वसनमारुरुधे समन्तात्
तं राममार्तिहरणं शरणं भजामि ॥ ६१ ॥

यो वज्रदंष्ट्रमतिदुष्टमकम्पनं च
धूम्राक्षमक्षयमुखानपि राक्षसेन्द्रान् ।
रक्षोबलाधिपतिमप्यहनत् प्रहस्तं
तं राममार्तिहरणं शरणं भजामि ॥ ६२ ॥

यो लीलया युधि निकृत्तरथध्वजाक्ष-
सेनाकिरीटशरचापमतिक्षताङ्गम् ।
रक्षोऽधिराजमकरोदपि कान्दिशीकं
तं राममार्तिहरणं शरणं भजामि ॥ ६३ ॥

यः कुम्भकर्णमचलं मघवानिवाशु
बाणैश्च मूर्ध्नि पदयोरपि चूर्णयित्वा ।
शोकाम्बुधावलममज्जयदाशरेन्द्रं
तं राममार्तिहरणं शरणं भजामि ॥ ६४ ॥

यो देवतान्तकनरान्तकरातिकाय-
कुम्भत्रिशीर्षकनिकुम्भमहोदरादीन् ।
संहार्य वानरगणैर्मुमुदे जयेन
तं राममार्तिहरणं शरणं भजामि ॥ ६५ ॥

यः शोणिताक्षमकरेक्षणमत्तयुद्धो-
न्मत्तान् विरूपनयनादिनिशाचरेन्द्रान् ।
संहारयन् कपिवरैर्मुदमाप गाढं
तं राममार्तिहरणं शरणं भजामि ॥ ६६ ॥

नाम स्मरन् मनसि यस्य समीरपुत्रो
गत्वान्तरं जलधिमेकमुहूर्तमात्रात् ।
दिव्यौषधाद्रिमुपगृह्य पुनः समागात्
तं राममार्तिहरणं शरणं भजामि ॥ ६७ ॥

यः पाकशासनजितं समुपात्तमायं
यज्ञक्रियार्थमुपविष्टनिकुम्भिलान्तम् ।

संहार्य संमुदमविन्दत लक्ष्मणेन
तं राममार्तिहरणं शरणं भजामि ॥ ६८ ॥

यः स्यन्दनेभतुरगालिपदातिपूर्णाः
सन्नद्धमूलबलसङ्घपरार्धकोटीः ।
यामार्धतः प्रतिजघान सुलीलयैक-
स्तं राममार्तिहरणं शरणं भजामि ॥ ६९ ॥

यः कौणपेश्वरशिरांसि दशोज्ज्वलानि
कृत्तानि चैकशतमङ्कुरितानि भूयः ।
दृष्ट्वा ननन्द शतकण्ठतपःप्रभावं
तं राममार्तिहरणं शरणं भजापि ॥ ७० ॥

यो वासवप्रहितमातलिसंप्रणीतं
दिव्यं रथं समभिनन्द्य मुदाधिरुह्य ।
तेजोवृतो विरुरुचेऽसुरहेव[मघवेव] साक्षात्
तं राममार्तिहरणं शरणं भजामि ॥ ७१ ॥

यः संयुगे दशमुखं निशितैः स्वबाणै-
रापादमस्तकमतीव गवाक्षिताङ्गम् ।
कृत्वापि निश्चलमवेक्ष्य बभार हर्षं
तं राममार्तिहरणं शरणं भजामि ॥ ७२ ॥

संग्रामभुव्यरिजयाय घटोद्भवेन
प्रीत्योपदिष्टमुपगृह्य रविस्तवं यः ।
तेजो वहन् युधि बभौ रिपुदुर्निरीक्षं
तं राममार्तिहरणं शरणं भजामि ॥ ७३ ॥

रक्षोऽधिपान्तकरणेऽतिविचक्षणोऽपि
यो मात......वतितरां समनुग्रहीतुम् ।
आज्ञापितास्त्रमरिनाशकमेव मेने
तं राममार्तिहरणं शरणं भजामि ॥ ७४ ॥

योऽस्त्रेण पद्मजनुषः क्षणदाचरेन्द्रं
द्वेधैव वक्षसि विभिद्य निपात्य भूमौ ।
लोकाखिलार्तिमपनीय भृशं ननन्द
तं राममार्तिहरणं शरणं भजामि ॥ ७५ ॥

यत्संहृतो दशमुखोऽप्यतिपापकर्मा
सद्यो विधूतकलुषोऽधिक[दीपितात्मा] ।
सायुज्यमुक्तिमगमद्वरयोगिगम्यां
तं राममार्तिहरणं शरणं भजामि ॥ ७६ ॥

यः सापराधिनमपि क्षणदाचरेन्द्रं
संहृत्य संप्रकटयन् स्वकृपालुतां यः[यम्] ।
तेजोमयं स्वपदमेव समानिनाय
तं राममार्तिहरणं शरणं भजामि ॥ ७७ ॥

निर्वर्त्य चाश्रुतमथाशु विभीषणं यो
लङ्काधिपत्यपद एव मुदाभिषिच्य ।
सङ्ग्राममूर्ध्नि विजयी विरराज धन्वी
तं राममार्तिहरणं शरणं भजामि ॥ ७८ ॥

योऽभ्यर्थितोऽपरिचयेऽपि विभीषणेन
तं मानयन् सकरुणं निजसान्त्ववाक्यैः ।
पूजां जहर्ष सुहृदां हृदि कारयित्वा
तं राममार्तिहरणं शरणं भजामि ॥ ७९ ॥

सौशील्यनिर्जितवसिष्ठवधूस्वभावां
प्राणप्रियां निजवधूमपि धर्मबद्धः ।
निन्दन् वपुस्त्रिजगतीमनलो न मेने (?)
तं राममार्तिहरणं शरणं भजामि ॥ ८० ॥

यस्मै भिया हुतवहो निजसात्कृताङ्गी-
मत्यादृतांशुकविभूषितदिव्यदेहाम् ।
अङ्के वहन् पुनरदादवनीतनूजां
तं राममार्तिहरणं शरणं भजामि ॥ ८१ ॥

संवीक्ष्य यं विजयिनं शिवपद्मजेन्द्र-
वैवस्वताम्बुपतिवैश्रवणादिदेवाः ।
कल्पप्रसूननिकरैः समुदोऽभ्यवर्षं
स्तं राममार्तिहरणं शरणं भजामि ॥ ८२ ॥

राम प्रसीद रघुवीर रणाग्रधीम्
रक्षःकुलान्तक विभो विजयी भवेति ।

यः संस्तुतोऽखिलसुरैर्विरराज वीरः
तं राममार्तिहरणं शरणं भजामि ॥ ८३ ॥

यस्त्र्यम्बकेण धुरि दर्शितमात्मतातं
दृष्ट्वा समुज्ज्वलविमानगतं प्रणम्य ।
अङ्के धृतः सपदि तेन ननन्द कामं
तं राममार्तिहरणं शरणं भजामि ॥ ८४ ॥

यः पूर्वमात्मगुरुणा भरते वितीर्णं
शापं तमेनमभिवाद्य च तत्प्रसादात् ।
संमोचयन् तमतनोत्तदनुगृहीतं
तं राममार्तिहरणं शरणं भजामि ॥ ८५ ॥

उज्जीवयन् पुनरपि प्रहतान् समीके
कीशान् सुरोत्तमवरच्छलतः सुरेषु ।
यो वैभवप्रकटनाय मुदान्वितोऽभूत्
तं राममार्तिहरणं शरणं भजामि ॥ ८६ ॥

यः पुष्पकं समधिरुह्य वधूसहायः
साकं निजानुजविभीषणभानुसूभिः ।
अन्यैर्हरीन्द्रनिकरैः स्वपुरीं प्रतस्थे
तं राममार्तिहरणं शरणं भजामि ॥ ८७ ॥

गच्छन् पुरीं दिवि विमानग एव वध्वै
युद्धे दशाननमुखारिवधस्थलानि ।
सन्दर्शयन् सह तया मुमुदे भृशं य-
स्तं राममार्तिहरणं शरणं भजामि ॥ ८८ ॥

यो वायुजागममहस्करपुत्रमैत्रीं
भिल्लप्रियार्चनविधिं च महीसुतायै ।
जल्पन्निमां व्यधित विस्मितचित्तवृत्तिं
तं राममार्तिहरणं शरणं भजामि ॥ ८९ ॥

यश्चोदितो वनितया कपिवर्यपुर्यां
तारामुखाः कपिवधूः परिभूषिताङ्गीः ।
आनाय्य यानमधिरोप्य बभार हर्षं
तं राममार्तिहरणं शरणं भजामि ॥ ९० ॥

यो वानरीभ्य उरुमैत्रभरान्विताभ्यः
आत्माटवीगमनहेतुमुदीरयन्तीम् ।
कान्तां विलोक्य मधुरं प्रहसन् जगाम
तं राममार्तिहरणं शरणं भजामि ॥ ९१ ॥

यः सर्वमित्रनिकरैरनुजेन वध्वा
साकं पुरन्दरपुरोहितनन्दनस्य ।
प्राप्याश्रमं तमभिवाद्य कृतार्थ आसी-
त्तं राममार्तिहरणं शरणं भजामि ॥ ९२ ॥

यस्तापसेन भृशमचितमात्मपुर्यां
शृण्वन् स्वबन्धुकुशलानि तदीयवाचा ।
ज्ञात्वा ननन्द भरतस्य तपस्विवृत्तिं
तं राममार्तिहरणं शरणं भजामि ॥ ९३ ॥

यो वायुजोदितनिजागमनश्रुतिश्री-
संपूर्णचित्तभरतं प्रणताङ्घ्रिपद्मम् ।
प्रीत्या निजाङ्कमधिरोप्य तमालिलिङ्ग
तं राममार्तिहरणं शरणं भजामि ॥ ९४ ॥

भक्त्या य आर्तजननीमभिवाद्य चान्याः
प्रीत्या तदीरितमहाशिष आदधानः ।
रेजे शतक्रतुरिव प्रसुवा समेतः
तं राममार्तिहरणं शरणं भजामि ॥ ९५ ॥

यः सोदरैर्वनितया हरिभिश्च नन्दि-
ग्रामात् समं नवसहस्रगजाधिरूढैः ।
प्राप्याभवत् प्रमदवान्नगरीमयोध्यां
तं राममार्तिहरणं शरणं भजामि ॥ ९६ ॥

राज्यावनक्षमतमे भरतप्रणीते
संयोज्य यः स्वपदयोर्मणिपादरक्षे ।
पूर्णं मनोरथमहो भरतस्य चक्रे
तं राममार्तिहरणं शरणं भजामि ॥ ९७ ॥

योऽनुग्रहं हरिवराय वितीर्य पूर्वं
पश्चात् स्वयं नतविभीषणदत्तहस्तः ।

यस्तातवेश्म समलङ्कृतमाससाद
तं राममार्तिहरणं शरणं भजामि ॥ ९८ ॥

युक्ते वसिष्ठगदिते विजये मुहूर्ते
सिंहासने रविशतद्युतिरत्नदीप्ते ।
अध्यास्य मेरुशिखरेऽर्क इवाभिरेजे
तं राममार्तिहरणं शरणं भजामि ९९ ॥

यं वायुजप्रमुखवानरवर्यनीत-
गङ्गादिसिन्धुचतुरर्णवपुण्यतोयैः ।
ब्रह्मात्मजो मुनिवरो विधिनाभ्यषिञ्चत्
तं राममार्तिहरणं शरणं भजामि ॥ १०० ॥

मान्यं मनुप्रभृतिभिर्मकुटं महार्घं
मौलौ वसिष्ठमुनिना निहितं वहन् यः ।
मध्येसभं विरुरुचे मधुहेव साक्षा-
त्तं राममार्तिहरणं शरणं भजामि ॥ १०१ ॥

यस्मिन् स्वयं त्रिभुवनावनदक्षिणेन [भारदक्षे]
सर्वंसहापतिपदे सहसाभिषेकैः[षिक्ते] ।
भेजे मही वसुमतीपदवाच्यभावं
तं राममार्तिहरणं शरणं भजामि ॥ १०२ ॥

कान्तस्य यस्य जगतां कलिताभिषेके
हृष्टा बभूव धरणीयमकृष्टपच्या ।
गावः सुपुष्टवपुषो ह्यभवन् घटोध्न्यः
तं राममार्तिहरणं शरणं भजामि ॥ १०३ ॥

यस्मिन् प्रभौ भुवि महीसुरपूर्ववर्णा
आसन्नधर्मविरता निजधर्मनिष्ठाः ।
अन्योन्यवैरविमुखाः करुणार्द्रचित्ता-
स्तं राममार्तिहरणं शरणं भजामि ॥ १०४ ॥ ॥

यस्मिन् धरां समनुशासति सर्वमर्त्या
असन् सहस्रशरदायुरनेकपुत्राः ।
आढ्याः प्रमोदभरिताश्च निरामयाश्च
तं राममार्तिहरणं शरणं भजामि ॥ १०५ ॥

यस्य प्रभुत्वपदमावहतो धरण्यां
सामन्तभूमिपतयः स्वयमङ्घ्रिपद्मे ।
निक्षिप्तमौलिमकुटाः करदा बभूवु-
स्तं राममार्तिहरणं शरणं भजामि ॥ १०६ ॥

यस्मिन् क्षितीशपदभाजि भुवि प्रभीता
रक्षःपिशाचकुलदुर्ग्रहभूतवर्गाः ।
क्षुद्रान् जनानपि कदापि न पीडयन्ति
तं राममार्तिहरणं शरणं भजामि ॥ १०७ ॥

जातु स्मृते दुरितहारिणि यस्य नाम्नि
नश्यन्त्यघानि सकलानि पुराकृतानि ।
वाञ्छाधिकानि कुशलानि भवन्ति सद्य-
स्तं राममार्तिहरणं शरणं भजामि ॥ १०८ ॥

अष्टोत्तरैकशतपद्यसुपूरितेन
भक्त्या[मुहुःस्तुतिव]रेण मयेड्यमानः ।
रामः स एष जनकात्मजया समेतः
प्रीतः सदापि हृदये मम सन्निधत्ताम् ॥ १०९ ॥

॥ इति श्रीरामप्रपत्तिशकं सम्पूर्णम् ॥

---

## २१. ॥ अथ श्रीराघवस्तोत्रम् ॥

इन्द्रनीलाचलश्याममिन्दीवरदृगुज्ज्वलम् ।
इन्द्रादिदैवतैः सेव्यमीडे राघवनन्दनम् ॥ १ ॥

पालिताखिलदेवौघं पद्मगर्भं सनातनम् ।
पीनवक्षःस्थलं वन्दे पूर्णं राघवनन्दनम् ॥ २ ॥

दशग्रीवरिपुं भद्रं दावतुल्यं सुरद्विषाम् ।
दण्डकामुनिमुख्यानां दत्ताभयमुपास्महे ॥ ३ ॥

कस्तूरीतिलकाभासं कर्पूरनिकराकृतिम् ।
कातरीकृतदैत्यौघं कलये रघुनन्दनम् ॥ ४ ॥

खरदूषणहन्तारं खरवीर्यभुजोज्ज्वलम् ।
खरकोदण्डहस्तं च खस्वरूपमुपास्महे ॥ ५ ॥

गजविक्रान्तगमनं गजार्तिहरतेजसम् ।
गम्भीरसत्त्वमैक्ष्वाकं गच्छामि शरणं सदा ॥ ६ ॥

घनराजिलसद्देहं घनपीताम्बरोज्ज्वलम् ।
घूत्कारद्रुतरक्षौघं प्रपद्ये रघुनन्दनम् ॥ ७ ॥

चलपीताम्बराभासं चलत्किङ्किणिभूषितम् ।
चन्द्रबिम्बमुखं वन्दे चतुरं रघुनन्दनम् ॥ ८ ॥

सुस्मिताञ्चितवक्त्राब्जं सुनूपुरपदद्वयम् ।
सुदीर्घबाहुयुगलं सुनाभिं राघवं भजे ॥ ९ ॥

हसिताञ्चितनेत्राब्जं हताखिलसुरद्विषम् ।
हरिं रविकुलोद्भूतं हाटकालङ्कृतं भजे ॥ १० ॥

रविकोटिनिभं शान्तं राघवाणामलङ्कृतिम् ।
रक्षोगणयुगान्ताग्निं रामचन्द्रमुपास्महे ॥ ११ ॥

लक्ष्मीसमाश्रितोरस्कं लावण्यमधुराकृतिम् ।
लसदिन्दीवरश्यामं लक्ष्मणाग्रजमाश्रये ॥ १२ ॥

वालिप्रमथनाकारं वालिसूनुसहायिनम् ।
वरपीताम्बराभासं वन्दे राघवभूषणम् ॥ १३ ॥

शमिताखिलपापौघं शान्त्यादिगुणवारिधिम् ।
शतपत्रदृशं वन्दे शुभं दशरथात्मजम् ॥ १४ ॥

कुन्दकुड्मलदन्ताभं कुङ्कुमाङ्कितवक्षसम् ।
कुसुम्भवस्त्रसंवीतं पुत्रं राघवमाश्रये ॥ १५ ॥

मल्लिकामालतीजातिमाधवीपुष्पशोभितम् ।
महनीयमहं वन्दे महतां कीर्तिवर्धनम् ॥ १६ ॥

इदं यो राघवस्तोत्रं नरः पठति भक्तिमान् ।
मुक्तः संसृतिबन्धाद्धि स याति परमं पदम् ॥ १७ ॥

॥ इति श्रीराघवस्तोत्रं सम्पूर्णम् ॥

---

## २२. ॥ अथ [1]श्रीरामस्तवः ॥

भजेऽहं सदा राममिन्दीवराभं
भवारण्यदावानलाभाभिधानम् ।
भवानीहृदाभाचिदानन्दरूपं
भवाभावहेतुं भवादिप्रपन्नम् ॥ १ ॥

---

1. अशुद्धभूयिष्ठोऽप्ययं स्तवः प्रासादिगुणोपेततया मुद्रितः ।

सुरानीकदुःखौघनाशैकहेतुं
नराकारदेहं निराकारमीड्यम् ।
परेशं परानन्दरूपं वरेण्यं
हरिं राममीशं भजे भारनाशम् ॥ २ ॥

प्रपन्नाखिलानन्ददोहं प्रसन्नं
प्रपन्नार्तिनिश्शेषनाशाभिधानम् ।
तपोयोगयोगीशभावादिभव्यं
कपीशादिमित्रं भजे राममित्रम् ॥ ३ ॥

सदा भोगभाजां सुदूरे विभान्तं
चिदानन्दकन्दं सदारामवेशम् ।
विदेहात्मजानन्दरूपं सुरेशं
महेशं नरेशानरामं प्रपद्ये ॥ ४ ॥

महायोगमायाविशेषानुयुक्त्या
सुराधीशलीलानराकारमूर्तेः ।
सदानन्दलीलाकथापूर्णकर्णाः
सदानन्दरूपा भवन्तीह लोके ॥ ५ ॥

अहंमानपानाभिमत्तः प्रमत्तो
न वेदाखिलेशाभिमानाभिमानः ।
इदानीं भवत्पादपद्मप्रसादात्
त्रिलोकाधिपत्याभिमानो विनष्टः ॥ ६ ॥

स्फुरद्रत्नकेयूरहाराभिरामं
धराभारभूतासुरानीकदावम् ।
शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं
दुरावारपारं भजे राघवेशम् ॥ ७ ॥

सुराधीशनीलाभ्रनीलाङ्गकान्तिं
विराधादिरक्षोवधाल्लोकशान्तिम् ।
किरीटादिशोभं पुरारातिलाभं
भजे रामचन्द्रं रघूणामधीशम् ॥ ८ ॥

लसच्चन्द्रकोटिप्रकाशादिपीठे
समासीनमेकं समाधाय सीताम् ।
स्फुरद्धेमवर्णां तटित्पुञ्जभासां
भजे रामचन्द्रं निवृत्तार्तितन्त्रम् ॥ ९ ॥

॥ इति श्रीरामस्तवः सम्पूर्णः ॥

---

## २३. ॥ अथ श्रीसप्तर्षिरामायणम् ॥

काश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जमदग्निर्वसिष्ठश्च सप्तैते मुनिपुङ्गवाः ॥ १ ॥

काश्यपः –

जातः श्रीरघुनायको दशरथान्मुन्याज्ञया ताटकां
हत्वा रक्षितकौशिकक्रतुवरः कृत्वा ह्यहल्यां शुभाम् ।
भङ्क्त्वा रुद्रशरासनं जनकजामुद्वाह्य रामस्ततो
जित्वा चाध्वनि भार्गवं पुनरगात् सीतासमेतः पुरम् ॥ २ ॥

अत्रिः—

दास्या मन्थरया दयारहितया दुर्बोधया कैकयी
श्रीरामप्रथमाभिषेकसमये मात्राप्ययाचद्वरौ ।
भर्तारं, भरतः प्रशास्तु धरणीं रामो वनं गच्छता-
दित्याकर्ण्य वचः स्वयं दशरथो मौनीव तूष्णीं स्थितः ॥ ३ ॥

भरद्वाजः—

श्रीरामः पितृशासनाद्वनमगात् सौमित्रिसीतान्वितो
गङ्गां प्राप्य जटां निबध्य सगुहः श्रीचित्रकूटे वसन् ।
कृत्वा तत्र पितृक्रियां सभरतो दत्त्वाभयं दण्डके
गत्वागस्त्यमुनीश्वरात्तदनुजं लब्ध्वा धनुश्चाक्षयम् ॥ ४ ॥

विश्वामित्रः—

गत्वा पञ्चवटीमगस्त्यवचनाद्दत्त्वाभयं मौनिनां
भित्त्वा शूर्पणखासकर्णयुगलघ्राणं खरं खण्डयन् ।
त्रातुं सर्वमुनीश्वरान् विदलयन् मायामृगं वालिनं
तारारत्नमवैरि राज्यमखिलं कर्तुं च सुग्रीवसात् ॥ ५ ॥

गौतमः—

दूतो दाशरथेः सलीलमुदधिं तीर्त्वा हनूमान् महान्
दृष्ट्वाशोकवने स्थितां जनकजां दत्त्वाभयं मुद्रिकाम् ।
अक्षादीनसुरान्निहत्य महतीं दग्ध्वा च लङ्कां पुनः
श्रीरामान्तिकमेत्य देव जननी दृष्टा च सीता मया ॥ ६ ॥

जमदग्निः—

रामो बद्धपयोनिधिः कपिवरैर्वीरैर्नलाद्यैर्वृतो
लङ्कां प्राप्य सकुम्भकर्णदनुजं हत्वा रणे रावणम् ।
तस्यां स्थाप्य विभीषणं पुनरगात् सीतापतिः पुष्पकं
ह्यारूढः पुनरागतः सभरतः सिंहासनस्थो बभौ ॥ ७ ॥

**वसिष्ठः—**

हेमस्तम्भसहस्रषोडशमहासौधान्तराग्रे लस-
  द्वेदिस्थं नवरत्नकीलितमहासिंहासने सीतया ।
शत्रुघ्नेन च लक्ष्मणेन भरतेनाराधितं राघवं
  विश्वामित्रवसिष्ठपूर्वमुनिभिः पट्टाभिषिक्तं भजे ॥ ८ ॥

श्रीरामो हयमेधमुख्यमखकृत् सम्यक् प्रजापालनं
  कृत्वा भृत्यसुतानुजैश्च सुचिरं भूयः सधर्मान्वितौ ।
पुत्रौ भ्रातृसुतान्वितौ कुशलवौ संस्थाप्य भूमण्डले
  सायोध्यापुरवासिभिश्च सरयूं स्नात्वा प्रयातो दिवम् ॥ ९ ॥

श्रीरामस्य कथासुधातिमधुरान् श्लोकानिमानुत्तमान्
  ये शृण्वन्ति पठन्ति च प्रतिदिनं पापौघविध्वंसिनः ।
श्रीमन्तो बहुपुत्रपौत्रसहिता भोगान् स्थिरं भुञ्जते
  भोगान्ते सहबान्धवाश्च सुचिरं विष्णोर्लभन्ते पदम् ॥ १० ॥

॥ इति श्रीसप्तर्षिरामायणं सम्पूर्णम् ॥

---

## २४. ॥ अथ श्रीवीरराघवप्रपत्तिः ॥

श्रीधर्मसेननृपरम्यसुतासमेतं
  श्रीभूसहायममलं श्रितपारिजातम् ।
श्रीशेषभोगशयनेऽतिसुखं शयानं
  श्रीवीरराघवमहं शरणं प्रपद्ये ॥ १ ॥

हृत्तापनाशनसरोत्तरतीरवासं
  हृत्पुण्डरीककुहरे समसन्निविष्टम् ।
श्रीशालिहोत्रमुनिपुङ्गवसेव्यमानं
  श्रीवीरराघवमहं शरणं प्रपद्ये ॥ २ ॥

वीक्षाटवीविहरणक्षमपादपद्मं
  वेद्यं सदा विजयकोटिविमानसेव्यम् ।
विश्वम्भरं विधिशिवेन्द्रनिषेव्यमाणं
  श्रीवीरराघवमहं शरणं प्रपद्ये ॥ ३ ॥

सस्नेहभक्तिभयभूकमलाकराब्ज
  संवाह्यमानचरणं सरसीरुहाक्षम् ।
सौम्यं समस्तजगदेकनिवासभूतं
  श्रीवीरराघवमहं शरणं प्रपद्ये ॥ ४ ॥

पद्मोपमानपदपाणिविलोचनाढ्यं
पद्मानिवासगृहबाहुयुगान्तरालम् ।
पद्मासनायुतनिकेतनपद्मनाभं
श्रीवीरराघवमहं शरणं प्रपद्ये ॥ ५ ॥

आरोग्यपुत्रविलसत्कविनाञ्जनैक
राज्याधिपत्यवरदाननिवाददीक्षम् ।
मोक्षप्रदं स्वपदवन्दकवैष्णवानां
श्रीवीरराघवमहं शरणं प्रपद्ये ॥ ६ ॥

मध्येशिखं सुरवरैः परमैरशेषै-
रार्योपचित्तविभवैरतिशुद्धसत्त्वैः ।
अप्राकृतैरतिसमश्रितपादपद्मं
श्रीवीरराघवमहं शरणं प्रपद्ये ॥ ७ ॥

रामानुजार्यमुखपद्मसहस्रभानुं
पूर्णार्यवर्यनयनोत्पलपूर्णचन्द्रम् ।
श्रीयामुनार्यहृदयाम्बुजचञ्चरीकं
श्रीवीरराघवमहं शरणं प्रपद्ये ॥ ८ ॥

श्रीराममिश्रकमलाक्षवरार्यनाथ-
योगीन्द्रतीर्थविभवं शठकोपवन्द्यम् ।
शय्यासु सागरसुतापरिचर्यमाणं
श्रीवीरराघवमहं शरणं प्रपद्ये ॥ ९ ॥

श्रीमच्छठारिपरकालयतीन्द्रमुख्यै
र्दिव्यप्रबन्धनिवहैरनुबध्यमानम् ।
पूर्वैः सदा गुरुवरैः प्रथितानुभावैः
श्रीवीरराघवमहं शरणं प्रपद्ये ॥ १० ॥

हृत्तः सदानु परमं परिशुद्धदिव्यं
दुग्धाम्बुधिं सकलसंश्रितरक्षणाढ्यम् ।
हृत्तापनाशनतटीरतयावसानं
श्रीवीरराघवमहं शरणं प्रपद्ये ॥ ११ ॥

सौम्योपयन्तृमुनिना करुणाविरक्ति
धीभक्तिशान्तिमुखसद्गुणसागरेण ।
संसेव्यमानचरणं जगतां शरण्यं
श्रीवीरराघवमहं शरणंप्रपद्ये ॥ १२ ॥

॥ इति श्रीवीरराघवप्रपत्तिः सम्पूर्णा ॥

## २५. ॥ अथ श्रीरघुनाथमङ्गलस्तोत्रम् ॥

मङ्गलं लोकरामाय रघुरामाय मङ्गलम् ।
मङ्गलं पद्मवक्त्राय रामभद्राय मङ्गलम् ॥ १ ॥

मङ्गलं कोसलेन्द्राय रामचन्द्राय मङ्गलम् ।
मङ्गलं मम नाथाय रघुनाथाय मङ्गलम् ॥ २ ॥

मङ्गलं रणधीराय रघुवीराय मङ्गलम् ।
मङ्गलं सत्यसन्धाय राजसिंहाय मङ्गलम् ॥ ३ ॥

मङ्गलं निरवद्याय वेदवेद्याय मङ्गलम् ।
मङ्गलं मुक्तिमूलाय मेघनीलाय मङ्गलम् ॥ ४ ॥

मङ्गलं सत्वरध्वस्तरुद्रचापाय मङ्गलम् ।
मङ्गलं जानकीनेत्रपूर्णपात्राय मङ्गलम् ॥ ५ ॥

मङ्गलं मिथिलानाथमौलिरत्नाय मङ्गलम् ।
मङ्गलं निस्सपत्नाय मङ्गलं नीलशालिने ॥ ६ ॥

मङ्गलं मैथिलीधन्यवनवासाय मङ्गलम् ।
मङ्गलं लक्ष्मणोपात्तभृत्यकृत्याय मङ्गलम् ॥ ७ ॥

मङ्गलं गुहसङ्गेन गङ्गाकूलनिवासिने ।
मङ्गलं गौतमीतीरपारिजाताय मङ्गलम् ॥ ८ ॥

मङ्गलं दण्डकारण्यवासिनिर्वातचेतसे ।
मङ्गलं शबरीदत्तफलमूलाभिलाषिणे ॥ ९ ॥

मङ्गलं सद्गुणारोपचापहस्ताय मङ्गलम् ।
मङ्गलं वायुपुत्रेण वन्दनीयाय मङ्गलम् ॥ १० ॥

मङ्गलं वालिसुग्रीवहर्षशोकाभिघातिने ।
मङ्गलं मैथिलीमौलिमणिरञ्जितवक्षसे ॥ ११ ॥

मङ्गलं सर्वलोकानां शरण्याय महीयसे ।
मङ्गलं सागरोत्साहश्रृङ्गभङ्गविधायिने ॥ १२ ॥

मङ्गलं वासवामित्रमर्दनोद्वृत्तबाहवे ।
मङ्गलं विश्वमित्राय विद्रावणदयादृशे ॥ १३ ॥

मङ्गलं वीक्षमाणाय मैथिलीवदनाम्बुजम् ।
मङ्गलं विनिवृत्ताय पुरं पौरनिवृत्तये ॥ १४ ॥

मङ्गलं भरतप्रीतिप्राप्तराज्याय मङ्गलम् ।
मङ्गलं मैथिलीयोगमहनीयाय मङ्गलम् ॥ १५ ॥

मङ्गलं हारकोटीरपादपीठाय मङ्गलम् ।
मङ्गलं रङ्गधुर्याय तुङ्गपन्नगशायिने ॥ १६ ॥

मङ्गलं सह्यजामात्यसान्निध्यकृतचेतसे ।
मङ्गलं मानुषे लोके वैकुण्ठमिति तिष्ठते ॥ १७ ॥

शेषशैलनिवासाय श्रीनिवासाय मङ्गलम् ।
मङ्गलं वेधसो वेदिमेदिनीगृहमेधिने ॥ १८ ॥

वरदाय दयाधाम्ने वीरोदाराय मङ्गलम् ।
मङ्गलं धनदादानदत्तसक्तिषि सम्पदे (?) ॥ १९ ॥

मङ्गलं नारसिंहाय नरसिंहाय मङ्गलम् ।
मङ्गलं मामहीनीलानित्यमुक्तैकचक्षुषे ॥ २० ॥

य इदं कीर्तयेन्नित्यं मङ्गलं मङ्गलस्तवम् ।
वर्तयेत् पुरतस्तस्य मङ्गलायतनं हरिः ॥ २१ ॥

॥ इति श्रीरघुनाथमङ्गलं सम्पूर्णम् ॥

---

## २६. ॥ अथ श्रीराममङ्गलाशासनम् ॥

श्रीमन्मार्ताण्डवंशे दशरथनृपतेरात्मजत्वं प्रपन्नः
साकं शेषारिसङ्घैर्निशिचरनिवहं संहरिष्यन् सुरार्थे ।
गुर्वादेशेन हत्वा पथि रजनिचरीं प्राप्य सिद्धाश्रमं यः
चक्रे यज्ञस्य रक्षां स दिशतु भगवान् मङ्गलं रामचन्द्रः ॥ १ ॥

राज्यं गच्छन् मुनीनामथ पथि विगलच्छापशल्यामहल्यां
कृत्वा भङ्क्त्वा भवानीरमणभुजसरोजालयं चापदण्डम् ।
पाणौ कृत्वावनेयीं भृगुसुतविजयी भ्रातृभिः प्राप्तदारैः
योऽवात्सीदात्मपुर्यां स दिशतु भगवान् मङ्गलं रामचन्द्रः ॥ २ ॥

मातुर्वाचा सुमित्रातनयजनकजामात्रमित्रप्रविष्टः
कान्तारं शान्तचेताः कलशभवमुनेराश्रमं प्राप्य भूयः ।
प्रीत्यै तस्य प्रतिज्ञां निशिचरकुलनिर्मूलनायात्तरोषः
चक्रे यो विश्ववीरः स दिशतु भगवान् मङ्गलं रामचन्द्रः ॥ ३ ॥

यस्या भ्राता दशास्यो निशिचरतरुणीं कामुकीं कारयित्वा
भ्रात्रा तां कृत्तनासां झटिति खरमुखं राक्षसौघं च हत्वा ।

मायाशक्त्यैव रक्षोमुषितजनकजः क्लृप्तसुग्रीवसख्यः
यो जघ्ने वानरेन्द्रं स दिशतु भगवान् मङ्गलं रामचन्द्रः ॥ ४ ॥

नष्टां कान्तां विचेतुं दिशि दिशि चलिते वानराणां निकाये
श्रुत्वा कान्ताप्रवृत्तिं पवनसुतगिरा प्राप्तपाथोधितीरः ।
आग्नेयास्त्रानुभावक्षपितमदभरं दीनदीनं नदीनं
तेने यो मानशाली स दिशतु भगवान् मङ्गलं रामचन्द्रः ॥ ५ ॥

मध्येपाथोधि बद्ध्वां झटिति गिरिशतैः सेतुमाढौक्य लङ्कां
हत्वा सभ्रातृमित्रं रणशिरसि रुषा रावणं दारचोरम् ।
कान्तां स्वीकृत्य शुद्धां ज्वलनपतनतः प्राप्य रम्यामयोध्यां
योऽवात्सीदात्तमोदः स दिशतु भगवान् मङ्गलं रामचन्द्रः ॥ ६ ॥

यो नित्यं रामचन्द्रस्तुतिमिति जपति ध्वस्तसर्वारिसङ्घो
भुक्त्वा भोगानभीष्टानभिनवयशसा पूरयित्वा त्रिलोकीम् ।
अन्ते सञ्छिन्त्य कान्ताधनतनयगृहाद्येषु रूढं ममत्वं
साक्षादालीयतेऽसौ भगवति भवसिन्धुप्लवे चक्रपाणौ ॥ ७ ॥

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥ ८ ॥

॥ इति श्रीराममङ्गलाशासनं सम्पूर्णम् ॥

---

# ॥ अथ श्रीकृष्णस्तोत्राणि ॥

## १. ॥ अथ श्रीकृष्णचतुर्विंशतिस्तोत्रम् ॥

केशवं केशिमथनं वासुकेर्भोगशायिनम् ।
रासक्रीडाविलासाढ्यं कृष्णं वन्दे जगद्गुरुम् ॥ १ ॥

नारायणं नरहरिं नारदादिभिरर्चितम् ।
तारकं भवबन्धानां कृष्णं वन्दे जगद्गुरुम् ॥ २ ॥

माधवं मधुरावासं भूधरोद्धारकं विभुम् ।
आधारं सर्वभूतानां कृष्णं वन्दे जगद्गुरुम् ॥ ३ ॥

गोविन्दमिन्दुवदनं श्रीवन्द्यचरणाम्बुजम् ।
नवेन्दीवरसङ्काशं कृष्णं वन्दे जगद्गुरुम् ॥ ४ ॥

विष्णुमुष्णीषभूषाढ्यं जिष्णुं दानवमर्दनम् ।
तृ[कृ]ष्णाभयप्रभेत्तारं कृष्णं वन्दे जगद्गुरुम् ॥ ५ ॥

मधुसूदनं विधिनुतं बुधमानसवासितम् ।
दधिचोरं महाभागं कृष्णं वन्दे जगद्गुरुम् ॥ ६ ॥

त्रिविक्रमं त्रिलोकेशं भवदादिविजै[वृषाद्यदितिजै]र्नुतम् ।
कविं पुराणपुरुषं कृष्णं वन्दे जगद्गुरुम् ॥ ७ ॥

वामनं श्रीमदाकारं कामितार्थफलप्रदम् ।
रामानुजं सामलोलं कृष्णं वन्दे जगद्गुरुम् ॥ ८ ॥

श्रीधरं [1]श्रीधरानुतं राधेयाद्यैर्नुतं हरिम् ।
राधाविडम्बनासक्तं कृष्णं वन्दे जगद्गुरुम् ॥ ९ ॥

हृषीकेशं [2]विषावासं भिषजं भवरोगिणाम् ।
तुषाराद्रिसुतावन्द्यं कृष्णं वन्दे जगद्गुरुम् ॥ १० ॥

पद्मनाभं पद्मनेत्रं पद्माहृत्पद्म[3]बम्भरम् ।
आध्मातमुरलीलोलं कृष्णं वन्दे जगद्गुरुम् ॥ ११ ॥

दामोदरं श्यामलाङ्गं सोमसूर्यविलोचनम् ।
चामीकराम्बरधरं कृष्णं वन्दे जगद्गुरुम् ॥ १२ ॥

---

1. श्रीः लक्ष्मीः, धरा भूः, एताभ्यां नुतम् । 2. विषं=जलम् । 3. बम्भरः=भ्रमरः ।

सङ्कर्षणं वेङ्कटेशं ओंकाराकारमव्ययम् ।
शङ्खचक्रगदापाणिं कृष्णं वन्दे जगद्गुरुम् ॥ १३ ॥

वासुदेवं व्यासनुतं भासुराभरणोज्ज्वलम् ।
दासपोषणसंसक्तं कृष्णं वन्दे जगद्गुरुम् ॥ १४ ॥

प्रद्युम्नमाम्नायमयं खद्योतनमया[करा]र्चितम् ।
[1]वैद्यनाथं प्रपन्नास्यं कृष्णं वन्दे जगद्गुरुम् ॥ १५ ॥

अनिरुद्धं ध्रुवनुतं शुद्धसङ्कल्पमव्ययम् ।
शुद्धब्रह्मानन्दरूपं कृष्णं वन्दे जगद्गुरुम् ॥ १६ ॥

नरोत्तमं पुराणेशं मुरदानववैरिणम् ।
करुणावरुणावासं कृष्णं वन्दे जगद्गुरुम् ॥ १७ ॥

अधोक्षजं सुधालापं बुधमानसवासिनम् ।
अधिकानुग्रहं रक्षं कृष्णं वन्दे जगद्गुरुम् ॥ १८ ॥

नारसिंहं दारुणास्यं क्षीराम्बुधिनिकेतनम् ।
वीराग्रेसरमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥ १९ ॥

अच्युतं कच्छपाकारमुज्ज्वलं कुण्डलोज्ज्वलम् ।
सच्चिदानन्दवीर्याढ्यं[रूपेशं]कृष्णं वन्दे जगद्गुरुम् ॥ २० ॥

जनार्दनं घनाकारं सनातनतमं विभुम् ।
[2]विनायकपतिं नाथं कृष्णं वन्दे जगद्गुरुम् ॥ २१ ॥

उपेन्द्रमिन्द्रावरजं कवीन्द्रनुतविग्रहम् ।
कविं पुराणपुरुषं कृष्णं वन्दे जगद्गुरुम् ॥ २२ ॥

हरिं सुरासुरनुतं दुरालोकं दुरीक्षणम् ।
परेशं मुरसंहारं कृष्णं वन्दे जगद्गुरुम् ॥ २३ ॥

श्रीकृष्णं गोकुलावासं साकेतपुरवासिनम् ।
आकाशकालदिग्रूपं कृष्णं वन्दे जगद्गुरुम् ॥ २४ ॥

कृष्णस्तोत्रं चतुर्विंशमेतत् सन्नामगर्भितम् ।
यः पठेत् प्रातरुत्थाय सर्वपापैः प्रमुच्यते ॥ २५ ॥

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ २६ ॥

॥ इति श्रीकृष्णचतुर्विंशतिस्तोत्रं सम्पूर्णम् ॥

---

1. वैद्यनाथः = धन्वन्तरिः । 2. विनायकः = गरुडः ।

२. ॥ अथ श्रीकेशवब्रह्मादिनामानन्दरसस्तोत्रम् ॥

केशवब्रह्मानन्दरसं केशवनामसुधारसम् ।
केशवपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १ ॥

नारायणब्रह्मानन्दरसं नारायणनामसुधारसम् ।
नारायणपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ २ ॥

माधवब्रह्मानन्दरसं माधवनामसुधारसम् ।
माधवपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ ३ ॥

गोविन्दब्रह्मानन्दरसं गोविन्दनामसुधारसम् ।
गोविन्दपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ ४ ॥

विष्णुब्रह्मानन्दरसं विष्णुनामसुधारसम् ।
विष्णुपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ ५ ॥

मधुसूदनब्रह्मानन्दरसं मधुसूदननामसुधारसम् ।
मधुसूदनपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ ६ ॥

त्रिविक्रमब्रह्मानन्दरसं त्रिविक्रमनामसुधारसम् ।
त्रिविक्रमपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ ७ ॥

वामनब्रह्मानन्दरसं वामननामसुधारसम् ।
वामनपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ ८ ॥

श्रीधरब्रह्मानन्दरसं श्रीधरनामसुधारसम् ।
श्रीधरपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ ९ ॥

हृषीकेशब्रह्मानन्दरसं हृषीकेशनामसुधारसम् ।
हृषीकेशपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १० ॥

पद्मनाभब्रह्मानन्दरसं पद्मनाभनामसुधारसम् ।
पद्मनाभपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ ११ ॥

दामोदरब्रह्मानन्दरसं दामोदरनामसुधारसम् ।
दामोदरपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १२ ॥

सङ्कर्षणब्रह्मानन्दरसं सङ्कर्षणनामसुधारसम् ।
सङ्कर्षणपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १३ ॥

वासुदेवब्रह्मानन्दरसं वासुदेवनामसुधारसम् ।
वासुदेवपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १४ ॥

प्रद्युम्नब्रह्मानन्दरसं प्रद्युम्ननामसुधारसम् ।
प्रद्युम्नपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १५ ॥

[अनिरुद्धब्रह्मानन्दरसं अनिरुद्धनामसुधारसम् ।
अनिरुद्धपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १६ ॥]

आधोक्षजब्रह्मानन्दरसं आधोक्षजनामसुधारसम् ।
आधोक्षजपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १७ ॥

नारसिंहब्रह्मानन्दरसं नारसिंहनामसुधारसम् ।
नारसिंहपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १८ ॥

अच्युतब्रह्मानन्दरसं अच्युतनामसुधारसम् ।
अच्युतपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ १९ ॥

जनार्दनब्रह्मानन्दरसं जनार्दननामसुधारसम् ।
जनार्दनपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ २० ॥

उपेन्द्रब्रह्मानन्दरसं उपेन्द्रनामसुधारसम् ।
उपेन्द्रपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ २१ ॥

रिब्रह्मानन्दरसं हरिनामसुधारसम् ।
हरिपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ २२ ॥

[श्री]कृष्णब्रह्मानन्दरसं कृष्णनामसुधारसम् ।
कृष्णपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ २३ ॥

पुरुषोत्तमब्रह्मानन्दरसं पुरुषोत्तमनामसुधारसम् ।
पुरुषोत्तमपादाम्बुजरसं पिब जिह्वे निरन्तरम् ॥ २४ ॥

केशव, नारायण, माधव, गोविन्द, विष्णो, मधुसूदन, त्रिविक्रम, वामन, श्रीधर, हृषीकेश, पद्मनाभ, दामोदर, सङ्कर्षण, वासुदेव, प्रद्युम्न, अनिरुद्ध अधोक्षज, नरसिंह, अच्युत, जनार्दन, उपेन्द्र, हरे, श्रीकृष्ण, पुरुषोत्तम ।

॥ इति श्रीकेशवब्रह्मादिनामानन्दरसस्तोत्रं सम्पूर्णम् ॥

## ३. ॥ अथ श्रीगिरिधार्यष्टकम् ॥

त्रैलोक्यलक्ष्मीमदभृत् सुरेश्वरो
यदा घनैरन्तकरैर्ववर्ष ह ।
तदाकरोद्यः स्वबलेन रक्षणं
तं योगबालं गिरिधारिणं भजे ॥ १ ॥

यः पाययन्तीमधिरुह्य पूतनां
स्तन्यं पपौ प्राणपरायणः शिशुः ।
जघान वातायितदैत्यपुङ्गवं
तं योगबालं गीरिधारिणं भजे ॥ २ ॥

नन्दव्रजं यः स्वरुचेन्दिरालयं
चक्रे हि देवादिविमोहवृद्धये ।
गोगोपगोपीजनसर्वसौख्यकृत्
तं योगबालं गिरिधारिणं भजे ॥ ३ ॥

यं कामदोग्धीमनसा हृतैर्जलैः
स्वज्ञातिराज्ये मुदिताभ्यषिञ्चत् ।
गोविन्दनामोत्सवकृद्व्रजौकसां
तं योगबालं गिरिधारिणं भजे ॥ ४ ॥

यस्याननाब्जं व्रजसुन्दरीजनो
दिनक्षये लोचनषट्पदैर्मुदा ।
पिबन्ति धीरा विरहातुरा भृशं
तं योगबालं गिरिधारिणं भजे ॥ ५ ॥

बृन्दावने निर्जरबृन्दवन्दितो
गाश्चारयन् यः कलवेणुनादैः ।
गोपाङ्गनाचित्तविमोहमन्मथः
तं योगबालं गिरिधारिणं भजे ॥ ६ ॥

यो गोपिकानां हृदयं दिवानिशं
विचित्रलीलामृतसिन्धुवीचिभिः ।
आसिञ्चति स्वाङ्गवियोगतापितं
तं योगबालं गिरिधारिणं भजे ॥ ७ ॥

यः स्वात्मलीलारसदित्सया सता-
माविश्चकाराग्निकुमारविग्रहः ।
श्रीवल्लभाध्वानुसृतैकपालकः
तं योगबालं गिरिधारिणं भजे ॥ ८ ॥

गोपेन्द्रसूनोर्गिरिधारिणोऽष्टकं
पठेदिदं यस्तदनन्यमानसः ।
स मुच्यते दुःखमहार्णवाद्भृशं
प्राप्नोति दास्यं गिरिधारिणो ध्रुवम् ॥ ९ ॥

प्रणम्य संप्रार्थयते तवाग्रत-
स्त्वदङ्घ्रिमूलं रघुनाथनामकः ।
श्रीविट्ठलानुग्रहलब्धसन्मति-
स्तत्पूरयैतस्य मनोरथार्णवम् ॥ १० ॥
॥ इति श्रीगिरिधार्यष्टकं सम्पूर्णम् ॥

---

## ४. ॥ अथ श्रीमदनगोपालस्तोत्रम् ॥

ईश्वर उवाच—

श्रृणु देवि प्रवक्ष्यामि रहस्यं भुवनेश्वरि ।
तवैव पौरुषं रूपं गोपिकानयनामृतम् ॥ १ ॥

सदा निषेवितं रागाद्भवद्विरहभीरुभिः ।
सत्यभामादिरूपाभिर्मायामूर्तिभिरष्टभिः ॥ २ ॥

ख्यातं मदनगोपालसंज्ञया भुवनत्रये ।
तस्य ध्यानं प्रवक्ष्यामि सर्वपापप्रणाशनम् ॥ ३ ॥

सर्वमोहमयं सर्वसम्पत्प्रदमनुत्तमम् ।
अणिमादिमहैश्वर्यप्रदमायुःप्रवर्धनम् ॥ ४ ॥

सौभाग्यदायकं नृणां स्त्रीणां चैव विशेषतः ।
किमत्र बहुनोक्तेन ध्यानेनानेन भामिनि ।
यद्यदिच्छति तत्सर्वं नरः प्राप्नोत्यसंशयः ॥ ५ ॥

श्रीमद्बालार्कसङ्काशं पद्मरागमणिप्रभम् ।
बन्धूकबन्धुरालोकसन्ध्यारागारुणद्युतिम् ॥ ६ ॥

मकुटानेकमाणिक्यप्रभापल्लविताम्बरम् ।
किरीटोपान्तविन्यस्तबर्हिबर्हावतंसकम् ॥ ७ ॥

कस्तूरीतिलकाक्रान्तकमनीयालकस्थलम् ।
निस्तलस्थूलमाणिक्यचारुमौक्तिकमण्डलम् ॥ ८ ॥

दन्तांशुकुसुमाश्लिष्टचिबुकोद्देशशोभितम् ।
शशाङ्कबिम्बालङ्कारश्लाघातङ्करकराननम् ॥ ९ ॥

अनर्घरत्नग्रैवेयविलसत्कम्बुकन्धरम् ।
उदंशुमौक्तिकैर्हारैर्वैजयन्त्या च मालया ॥ १० ॥

श्रीवत्सकौस्तुभाभ्यां च परिष्कृतभुजान्तरम् ।
छत्रं पुष्पं शरं पद्मं सृणिं शङ्खेक्षुकार्मुके ॥ ११ ॥

गदां पाशं च मुरलीं बिभ्राणं मोहनाकृतिम् ।
निम्ननाभिं रोमराजीविलसत्पल्लवोदरम् ॥ १२ ॥

विसङ्कटकटीदेशवाचालमणिमेखलम् ।
स्फुरत्सौदामनीछायादायादकनकाम्बरम् ॥ १३ ॥

मणिमञ्जीरकिरणकिञ्जल्कितपदाम्बुजम् ।
शाणोल्लीढमणिश्रेणिरम्याङ्घ्रिनखमण्डलम् ॥ १४ ॥

आपादकण्ठमायुक्तभूषाशतमनोहरम् ।
कल्पकानोकहारामभहिते मणिमण्डपे ॥ १५ ॥

चिन्तामणिमहापीठमध्ये हेमसरोरुहे ।
कर्णिकापरिसन्दीप्तश्रीमच्चक्रासने शुभे ॥ १६ ॥

तिष्ठन्तं देवदेवेशं त्रिभङ्गीललिताकृतिम् ।
वामांसशिखरोपान्तव्यालोलमणिकुण्डलम् ॥ १७ ॥

आकुञ्चितभ्रुवं किञ्चित्कुञ्चिताधरपल्लवम् ।
गानामृतरसास्वादनिष्पन्दनिखिलेन्द्रियैः ॥ १८ ॥

उपास्यमानमानन्दात् सदारैर्दिविषद्वरैः ।
सौरदुन्दुभिनिर्घोषैर्मुक्तप्रसववृष्टिभिः ॥ १९ ॥

ध्यायेन्मदनगोपालं मन्त्री शुचिरलङ्कृतम् ।
(यः)पठेन्मदनगोपालध्यानस्तोत्रं समाहितः ।
सर्वान् कामानवाप्नोति दुर्लभानप्ययत्नतः ॥ २० ॥

॥ इति श्रीमदनगोपालस्तोत्रं सम्पूर्णम् ॥

---

## ५. ॥ अथ श्रीनवनीतप्रियाष्टकम् ॥

अलिकावृतलसदलके विरचितकस्तूरिकातिलके ।
चपलयशोदाबाले विरचितमाले मतिर्मेऽस्तु ॥ १ ॥

मुखरितनूपुरचरणे कटिबद्धक्षुद्रघण्टिकावरणे ।
[1]द्वीपिकरजकृतभूषाभूषितहृदये मतिर्मेऽस्तु ॥ २ ॥

करधृतनवनवनीते हुंकृतजननीविभीषिकाभीते ।
रतिमुद्वहताञ्चेतो गोपीभिर्वश्यतां नीते ॥ ३ ॥
बालदशामतिमुग्धे चोरितदुग्धे व्रजाङ्गनाभवनात् ।
तदुपालम्भवचोभयविभ्रमनयने मतिर्मेऽस्तु ॥ ४ ॥

व्रजकर्दमलिप्ताङ्गे स्वरूपसुषमाजितानङ्गे ।
कृतनन्दाङ्गणरिङ्गणविविधविहारे मतिर्मेऽस्तु ॥ ५ ॥

करवरधृतलघुलगुडे विचित्रमायूरचन्द्रिकामकुटे ।
नासागतमुक्तामणिघटितविभूषे मतिर्मेऽस्तु ॥ ६ ॥

अभिनन्दनकृतनृत्ये विरचितनिजगोपिकाकृत्ये ।
आनन्दितनिजभृत्ये प्रहसनमुदिते मतिर्मेऽस्तु ॥ ७ ॥

कामादपि कमनीये नमनीये ब्रह्मरुद्राद्यैः ।
निःसाधनभजनीये भावतनौ मतिर्मेऽस्तु ॥ ८ ॥
॥ इति श्रीनवनीतप्रियाष्टकं सम्पूर्णम् ॥

---

## ६. ॥ अथ श्रीयादवाष्टकम् ॥

माधवानन्त[व्यय] केशवाच्युत वासुदेव जगत्पते
मीन कच्छप नारसिंह श्रीवीरराघव पाहि माम् ।
निर्जरार्चित मौनिसंनुत नीरजाक्ष दयानिधे
देवनायक देहि मे तव पादभक्तिमचञ्चलाम् ॥ १ ॥

श्रीकरं करुणाकरं मुनिमानसाम्बुजवासिनं
पाकशासनसेवितं फणिराजतल्पसुशायिनम् ।
शोकमोहविनाशकं सुगुणाकरं शुभदायकं
लोकजीवनहेतुकं प्रणमामि यादवकुञ्जरम् ॥ २ ॥

---

1. द्वीपी=व्याघ्रः ।

कृष्ण श्री[मा]धर वासवानुज पद्मनाभ नमोऽस्तु ते
किङ्किणीघननाददिव्यसुपादपद्म नमोऽस्तु ते ।
वृष्णिवंशप्र[सु]दीप नायक वेदवेद्य नमोऽस्तु ते
विप्रसंस्तुत मेघवर्ण सुपर्णवाह नमोऽस्तु ते ॥ ३ ॥

देवकीतनुसम्भवं त्रिगुणात्मकं जगदीश्वरं
दिव्यकौस्तुभशोभितं शुभशङ्खचक्रगदाधरम् ।
भावुकं पशुपालनं परमात्मकं भयनाशकं
दिव्यभागवतस्तुतं प्रणमामि यादवकुञ्जरम् ॥ ४ ॥

नन्दगोपकुमारकं नवरत्नकुण्डलभूषितं
नन्दिताश्रितपोषकं रविकोटिकान्तिसमप्रभम् ।
कुन्दकैतकमल्लिकादिसुगन्धपुष्पसमर्चितम्
इन्दुवंशविवर्धनं प्रणमामि यादवकुञ्जरम् ॥ ५ ॥

क्रूरकंसविमर्दनं मुचुकुन्दमोक्षणदायकं
चारुकेलिरसप्रियं शतकोटिमन्मथविग्रहम् ।
नीरजासनपूजितं नवनीतदिग्धकलेबरं
क्षीरसिन्धुनिवासिनं प्रणमामि यादवकुञ्जरम् ॥ ६ ॥

पूतनासुविभञ्जनं परिपूर्णचन्द्रनिभाननं
चूतपल्लवकोमलाधरमारुताञ्चितवांशिकम् ।
गीतनाट्यरसप्रियं सुरगीयमानयशोधरं
पीतवाससमव्ययं प्रणमामि यादवकुञ्जरम् ॥ ७ ॥

कोपमूर्छितकौरवादिविमर्दनं गुणसागरं
गोपिकाकुचकञ्चुकाहरणादरं कुलदैवतम् ।
चापवेदसुपारगं समशास्त्रधर्मविशारदं
क्लेशपापविमोचनं प्रणमामि यादवकुञ्जरम् ॥ ८ ॥

चन्द्रभानुविलोचनं मणिहारभूषणधारिणं
सुन्दरं नवरत्ननूपुरशोभिताङ्घ्रिसरोरुहम् ।
मन्दहासविराजितं वरबर्हिपिञ्छवतंसिनं
नन्दगोकुलवर्धनं प्रणमामि यादवकुञ्जरम् ॥ ९ ॥

मेरुशैलसमानधैर्यममेयरूपमजार्चितं
चारुमन्नवनीतचोरमखण्डरूपमनामयम् ।
पारिजातहरं परं बलभद्ररामसहोदरं
क्षुद्रकालियभञ्जनं प्रणमामि यादवकुञ्जरम् ॥ १० ॥

शिष्टपालनतत्परं शिवदायकं जगदात्मकं
इष्टकामफलप्रदं भक्त[नत]वेङ्कटाचलवन्दितम् ।
दुष्टकर्मविनाशकं सर्व[भव]दोषरोगनिवारणम्
अष्टभूतिप्रदायकं प्रणमामि यादवकुञ्जरम् ।। ११ ।।

कृष्ण कृष्ण नमस्तेऽस्तु त्वयि भक्तिमचञ्चलाम् ।
इष्टकामार्थसिद्धिं च देहि मे मधुसूदन ।। १२ ।।

यादवाष्टकमिदं पुण्यं यः पठेत् सततं नरः ।
सर्वसिद्धिं च संप्राप्य श्रीकृष्णपदमाप्नुयात् ।। १३ ।।

।। इति श्रीयादवाष्टकं सम्पूर्णम् ।।

---

## ७. ।। अथ श्रीकृष्णानुस्मृतिः ।।

युधिष्ठिरः—

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
प्रयाणकाले किं जप्यं मोक्षिभिस्तत्त्वचिन्तकैः ।। १ ।।

किं नु स्मरन् कुरुश्रेष्ठ मरणे पर्युपस्थिते ।
प्राप्नुयात् परमां सिद्धिं श्रोतुमिच्छामि तत्त्वतः ।। २ ।।

भीष्मः—

सद्युक्तिसहितः सूक्ष्म उक्तः प्रश्नस्त्वयानघ ।
शृणु चावहितो राजन् नारदेन पुरा श्रुतम् ।। ३ ।।

पुरा नारायणं देवं नारदः परिपृष्टवान् ।
त्वमक्षरं परं ब्रह्म निर्गुणं तमसः परम् ।। ४ ।।

आहुर्वेद्यं परं धाम ब्रह्मादिकमलोद्भवम् ।
भगवन् भूतभव्येश श्रद्दधानैर्जितेन्द्रियैः ।। ५ ।।

कथं भक्तैर्विचिन्त्योऽसि योगिभिर्देहमोक्षिभिः ।
किं जप्यं किं जपन्नित्यं काल्यमुत्थाय मानवः ।। ६ ।।

कथं युञ्जन् सदा ध्यायेद्ब्रूहि तत्त्वं सनातनम् ।
श्रुत्वा तस्य तु देवर्षेर्वाक्यं वाचस्पतिः स्वयम् ।
प्रोवाच भगवान् विष्णुर्नारदं वरदः प्रभुः ।। ७ ।।

श्रीभगवान्—

हन्त ते कथयिष्यामि हीमां दिव्यामनुस्मृतिम् ।
यामधीत्य प्रयाणे तु मद्भावायोपपद्यते ।। ८ ।।

ओंकारमग्रतः कृत्वा मां नमस्कृत्य नारद ।
एकाग्रः प्रयतो भूत्वा चेमं मन्त्रमुदीरयेत् ॥ ९ ॥

ओं नमो भगवते वासुदेवाय ।
इत्युक्तो नारदः प्राह प्राञ्जलिः प्रयतः स्थितः ।
सर्वदेवेश्वरं विष्णुं सर्वात्मानं हरिं प्रभुम् ॥ १० ॥

नारदः—

अव्यक्तं शाश्वतं देवं प्रभवं पुरुषोत्तमम् ।
प्रपद्ये प्राञ्जलिर्विष्णुमक्षरं परमं पदम् ॥ ११ ॥

पुराणं प्रभवं नित्यमक्षयं लोकसाक्षिणम् ।
प्रपद्ये पुण्डरीकाक्षमीशं भक्तानुकम्पिनम् ॥ १२ ॥

लोकनाथं सहस्राक्षमद्भुतं परमं पदम् ।
भगवन्तं प्रपन्नोऽस्मि भूतभव्यभवत्प्रभुम् ॥ १३ ॥

स्रष्टारं सर्वलोकानामनन्तं विश्वतोमुखम् ।
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम् ॥ १४ ॥

हिरण्यगर्भममृतं भूगर्भं परतः परम् ।
प्रभोः प्रभुमनाद्यन्तं प्रपद्ये तं रविप्रभम् ॥ १५ ॥

सहस्रशीर्षं पुरुषं महान्तं तत्त्वभावनम् ।
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ॥ १६ ॥

नारायणं च प्राणर्षिं योगात्मानं सनातनम् ।
संस्थानं सर्वतत्त्वानां प्रपद्ये ध्रुवमीश्वरम् ॥ १७ ॥

यः प्रभुः सर्वभूतानां येन सर्वमिदं ततम् ।
चराचरगुरुर्विष्णुः स मे देवः प्रसीदतु ॥ १८ ॥

यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः पितामहः ।
ब्रह्मयोनिर्हि विश्वात्मा स मे विष्णुः प्रसीदतु ॥ १९ ॥

यः पुरा प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके परावरे ॥ २० ॥

आभूतसंप्लवे चैव प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ॥ २१ ॥

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु ॥ २२ ॥

पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये ।
गुणाकारः स मे विष्णुर्वासुदेवः प्रसीदतु ॥ २३ ॥

अग्नीषोमार्कताराणां ब्रह्मरुद्रेन्द्रयोगिनाम् ।
यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु ।। २४ ।।

योगावास नमस्तेऽस्तु सर्वावास वरप्रद ।
यज्ञगर्भ हिरण्याङ्ग पञ्चयज्ञ नमोऽस्तु ते ।। २५ ।।

चतुर्मूर्ते परं धाम लक्ष्म्यावास वरार्चित ।
सर्वावास नमस्तेऽस्तु वासुदेवः प्रधानकृत् ।। २६ ।।

अजस्त्वमगमः[नामयः]पन्था ह्यमूर्तिर्विश्वमूर्तिधृत् ।
त्रिगर्तः पञ्चकालज्ञो नमस्ते ज्ञानसागर ।। २७ ।।

अव्यक्ताद्व्यक्तमुत्पन्नं व्यक्ताद्यस्त्वपरोऽक्षरः ।
यस्मात् परतरं नास्ति तमस्मि शरणं गतः ।। २८ ।।

न प्रधानो न च महान् पुरुषश्चेतनो ह्यजः ।
अनयोर्यः परतरस्तमस्मि शरणं गतः ।। २९ ।।

चिन्तयन्तो हि यन्नित्यं ब्रह्मेशानादयः प्रभुम् ।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ।। ३० ।।

जितेन्द्रिया महात्मानो ज्ञानध्यानपरायणाः ।
यं प्राप्य न निवर्तन्ते तमस्मि शरणं गतः ।। ३१ ।।

एकांशेन जगत्सर्वमवष्टभ्य विभुः स्थितः ।
आग्राह्यो निर्गुणो नित्यस्तमस्मि शरणं गातः ।। ३२ ।।

सोमार्काग्निमयं तेजो या च तारामयीद्युतिः ।
दिवि सञ्जायते योऽयं स महात्मा प्रसीदतु ।। ३३ ।।

गुणादिर्निर्गुणश्चाद्यो लक्ष्मीवांश्चेतनो ह्यजः ।
सूक्ष्मः सर्वगतो योगी स महात्मा प्रसीदतु ।। ३४ ।।

अव्यक्तं समधिष्ठाता ह्यचिन्त्यः सदसत्परः ।
अस्थितिः प्रकृतिः श्रेष्ठः स महात्मा प्रसीदतु ।। ३५ ।।

क्षेत्रज्ञः पञ्चधा भुङ्क्ते प्रकृतिं पञ्चभिर्मुखैः ।
महान् गुणांश्च यो भुङ्क्ते स महात्मा प्रसीदतु ।। ३६ ।।

सूर्यमध्ये स्थितः सोमस्तस्य मध्ये च या स्थिता ।
भूतबाह्या च या दीप्तिः स [1]मे विष्णुः प्रसीदतु ।। ३७ ।।

1. महात्मा

नमस्ते सर्वतः सर्वे सर्वतोऽक्षिशिरोमुख ।
निर्विकार नमस्तेऽस्तु साक्षी क्षेत्री ध्रुवस्थितिः ॥ ३८ ॥

अतीन्द्रिय नमस्तुभ्यं लिङ्गैर्व्यक्तैर्न मीयसे ।
ये च त्वां नाभिजानन्ति संसारे संसरन्ति ते ॥ ३९ ॥

रागद्वेषविनिर्मुक्ताः कामक्रोधविवर्जिताः ।
नान्यभक्ता विजानन्ति किं पुनर्मारका द्विजाः (?)॥ ४० ॥

एकान्तिनो हि निर्द्वन्द्वा निराशीः कर्मकारिणः ।
ज्ञानाग्निदग्धकर्माणस्त्वां विशन्ति विचिन्तकाः ॥ ४१ ॥

अशरीरं शरीरस्थं समं सर्वेषु देहिषु ।
पुण्यपापविनिर्मुक्ता भक्तास्त्वां प्रविशन्त्युत ॥ ४२ ॥

अव्यक्तं बुद्ध्यहङ्कारमनोभूतेन्द्रियाणि च ।
त्वयि तानि च तेषु त्वं न तेषु त्वं न ते त्वयि ॥ ४३ ॥

एकत्वान्यत्वनानात्वं ये विदुर्यान्ति ते परम् ।
समोऽसि सर्वभूतेषु न ते द्वेष्योऽस्ति न प्रियः ॥ ४४ ॥

समत्वमभिकाङ्क्षेऽहं भक्त्या वै नान्यचेतसा ।
चराचरमिदं सर्वं भूतग्रामं चतुर्विधम् ॥ ४५ ॥

त्वया त्वय्येव तत्प्रोतं सूत्रे मणिगणा इव ।
स्रष्टा भोक्तासि कूटस्थो ह्यतत्त्वं तत्त्वसंज्ञितः ॥ ४६ ॥

अकर्महेतुरचलः पृथगात्मा व्यवस्थितः ।
न ते भूतेषु संयोगो भूततत्त्वगुणातिगः ॥ ४७ ॥

अहंकारेण बुद्ध्या वा न मे योगस्त्रिभिर्गुणैः ।
न मे धर्मोऽस्त्यधर्मो वा नारम्भो जन्म वा पुनः ॥ ४८ ॥

जरामरणमोक्षार्थं त्वां प्रपन्नोऽस्मि सर्वग ।
विषयैरिन्द्रियैर्वापि न मे भूयः समागमः ॥ ४९ ॥

पृथिवीं यातु मे घ्राणं या तु मे रसना जलम् ।
[1]रूपं हुताशनं यातु स्पर्शो यातु च मारुतम् ॥ ५० ॥

श्रोत्रमाकाशमप्येतु मनो वैकारिकं पुनः ।
इन्द्रियाण्यपि संयान्तु स्वां स्वां योनिं यथायथम् ॥ ५१ ॥

---

1. तेजो

पृथिवी यातु सलिलमापोऽग्निमनलोऽनिलम् ।
वायुराकाशमप्येतु मनश्चाकाश एव च ॥ ५२ ॥

अहङ्कारं मनो यातु मोहनं सर्वदेहिनाम् ।
अहङ्कारस्ततो बुद्धिं बुद्धिरव्यक्त[1]मेव च ॥ ५३ ॥

प्रधाने प्रकृतिं याते गुणसाम्ये व्यवस्थिते ।
वियोगः सर्वकरणैर्गुणभूतैस्तु मे भवेत् ॥ ५४ ॥

निष्केवलं पदं देव काङ्क्षेऽहं परमं तव ।
एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत् पुनः ॥ ५५ ॥

[2]त्वद्बुद्धिस्त्वद्गतप्राणस्त्वद्भावस्त्वत्परायणः ।
त्वामेवाहं स्मरिष्यामि मरणे पर्युपस्थिते ॥ ५६ ॥

पूर्वदेहकृता ये तु व्याधयः प्रविशन्तु माम् ।
अर्दयन्तु च दुःखानि ऋणं मे प्रविमुञ्चतु ॥ ५७ ॥

अनुध्यातोऽसि देवेश न मे जन्म भवेत् पुनः ।
तस्माद्ब्रवीमि कर्माणि ऋणं मे न भवेदिति ॥ ५८ ॥

नोपतिष्ठन्तु मां सर्वे व्याधयः पूर्वसञ्चिताः ।
अनृणो गन्तुमिच्छामि तद्विष्णोः परमं पदम् ॥ ५९ ॥

श्रीभगवान्—

अहं भगवतस्तस्य मम चासौ सनातनः ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ६० ॥

कर्मेन्द्रियाणि संयम्य पञ्चबुद्धीन्द्रियाणि च ।
दशेन्द्रियाणि मनसि ह्यहङ्कारे तथा मनः ॥ ६१ ॥

अहङ्कारं ततो बुद्धौ बुद्धिमात्मनि योजयेत् ।
यतबुद्धीन्द्रियः पश्येद्बुद्ध्या बोधेत् परात् परम् ॥ ६२ ॥

ममायमिति यस्याहं येन सर्वमिदं ततम् ।
आत्मनात्मनि संयोज्य परमात्मन्यनुस्मरेत् ॥ ६३ ॥

ततो बुद्धेः परं बुद्ध्वा लभते न पुनर्भवम् ।
मरणे समनुप्राप्ते यश्चैवं मामनुस्मरेत् ॥ ६४ ॥

अपि पापसमाचारः स याति परमां गतिम् ।
ओं नमो भगवते तस्मै देहिनां परमात्मने ॥ ६५ ॥

---

1. मच्युत  2. त्वद्भक्ति-

नारायणाय भक्तानामेकनिष्ठाय शाश्वते ।
इमामनुस्मृतिं दिव्यां वैष्णवीं सुसमाहितः ॥ ६६ ॥

स्वपन् विबुध्यंश्च पठेद्यत्र तत्र समाहितः ।
पौर्णमास्याममा[1]यां च द्वादश्यां च विशेषतः ॥ ६७ ॥

श्रावयेच्छ्रद्दधानानां मद्भक्तानां विशेषतः ।
यद्यहङ्कारमाश्रित्य यज्ञदानतपःक्रियाः ॥ ६८ ॥

कुर्वंस्तत्फलमाप्नोति पुनरावर्तनं [2]हि तत् ।
अभ्यर्चयन् पितॄन् देवान् पठन् जुह्वत् बलिं ददत् ॥ ६९ ॥

ज्वलन्नग्निं स्मरेद्यो मां स याति परमां गतिम् ।
यज्ञो दानं तपश्चैव पावनानि [3]मनीषिणाम् ॥ ७० ॥

यज्ञं दानं तपस्तस्मात् कुर्यादाशीर्विवर्जितः ।
नम इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयान्वितः ॥ ७१ ॥

तस्मा [तस्या]क्षयो भवेल्लोकः श्वपाकस्यापि नारद ।
किं पुनर्ये यजन्ते मां साधका विधिपूर्वकम् ॥ ७२ ॥

श्रद्धावन्तोऽनसूयन्तस्ते मां यान्ति मदाश्रिताः ।
कर्माण्याद्यन्तवन्तीह मद्भक्तो [4]नान्तमश्नुते ॥ ७३ ॥

मामेव तस्माद्देवर्षे ध्याहि नित्यमतन्द्रितः ।
अवाप्स्यसि ततः सिद्धिं द्रक्ष्यसे च पदं मम ॥ ७४ ॥

अज्ञानिने च यो ज्ञानं दद्याद्धर्मोपदेशनम् ।
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ॥ ७५ ॥

तस्मात् प्रदेयं साधुभ्यो जन्मबन्धभयापहम् ।
एवं दत्त्वा नरश्रेष्ठः श्रेयो वीर्यं च विन्दति ॥ ७६ ॥

अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥ ७७ ॥

भीष्मः—

एवं पृष्टः पुरा तेन नारदेन सुरर्षिणा ।
यदुवाच पुरा शम्भुस्तदुक्तं तव सुव्रत ॥ ७८ ॥

त्वमप्येकमना भूत्वा ध्याहि ध्येयं गुणातिगम् ।
भजस्व सर्वभावेन परमात्मानमव्ययम् ॥ ७९ ॥

---

1. -वास्यां । 2. न तु । 3. शरीरिणाम । 4. -ऽमृत-

श्रुत्वेदं नारदो वाक्यं दिव्यं नारायणेरितम् ।
अत्यन्तभक्तिमान् देवमेकान्तित्वमुपेयिवान् ॥ ८० ॥

नारायणमृषिं देवं दशवर्षाण्यनन्यभाक् ।
इदं जपन् वै प्राप्नोति तद्विष्णोः परमं पदम् ॥ ८१ ॥

किं तस्य बहुभिर्मन्त्रैर्यस्य भक्तिर्जनार्दने ।
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥ ८२ ॥

इमां रहस्यां परमामनुस्मृती-
मधीत्य बुद्धिं लभते च नैष्ठिकीम् ।
विहाय दुःखान् प्रविमुच्य सङ्कटात्
स वीतरागो विचरेन्महीमिमाम् ॥ ८३ ॥

॥ इति श्रीकृष्णानुस्मृतिः सम्पूर्णा ॥

## ८. ॥ अथ श्रीकृष्णवत्सरावलिस्तोत्रम् ॥

अस्मद्गुरूंस्तदाचार्यानपि सर्वगुरूनहम् ।
नमामि शिरसा वाचा स्तौमि ध्यायामि चेतसा ॥ १ ॥

अब्दवाचिपदोपेतपद्यजालेन माधवम् ।
स्तोष्यामि देवकीसूनुमस्मदन्वयदैवतम् ॥ २ ॥

विश्वस्य प्रभवं वेदमौलयो यं प्रचक्षते ।
स भाति यदुवंशस्य परिष्कारो रमापतिः ॥ ३ ॥

विभवं वेदजालानि प्राहुर्यस्य ततोऽवदत् ।
वेदैः सर्वैरहं वेद्य इति यस्तं समाश्रये ॥ ४ ॥

ध्यायन्ति यत्पदाम्भोजद्वयं शुक्लहृदो जनाः ।
तत्प्रपद्यामहे गम्यं गतिं वयमकिञ्चनाः ॥ ५ ॥

दयया विश्वविषयप्रमोदूतस्तु योऽभवत् ।
रथास्नूनां पाण्डुसूनूनां स्वाङ्घ्रिं गतिमुपेयुषाम् ॥ ६ ॥

प्रजापतिशिवेन्द्राश्च यन्मायामोहिताः सुराः ।
मुनयो यस्य माहात्म्यं तत्त्वतो न विजानते ॥ ७ ॥

आङ्गीरसस्य यस्य श्रीर्विश्वाह्लादकरी शुभा ।
नीलतोयदवाक्यादिश्रुतिवाक्येषु कीर्तिता ॥ ८ ॥

श्रीमुखं महिषीवर्गं भक्तान् भागवतानपि ।
मुनयश्चक्षते व्योम्नि परस्मिन् यज्जुषः सदा ॥ ९ ॥

युदुक्तं ज्ञानमाश्रित्य जना गीतागमादिषु ।
तद्भावभावमापन्नाः सर्गादीनामगोचराः ॥ १० ॥

युवा कुमारो यः प्रोक्तः युवतिश्च कुमारिणी ।
यस्य पत्नी तया श्रद्धानाम्न्या देवत्वमश्नुते ॥ ११ ॥

धातुसाम्ये स्थिते स्मर्ता यस्तं काष्ठादिसन्निभम् ।
नयामीति कृती कोलः स्वजन्मन्यब्रवीद्भुवम् ॥ १२ ॥

व्यापनं भरणं स्वाम्यं स्वस्य यो लोकतोऽवदत् ।
ईश्वरः सर्वभूतानां यो हृद्देशेऽवतिष्ठते ॥ १३ ॥

यस्मिन्नन्दकुलं याते नार्द्रमार्द्रेश्च धेनवः ।
बहुक्षीरदुघाश्चासन् बहुधान्यं च भूतलम् ॥ १४ ॥

प्रमाथी कंसदन्तीन्द्रो यदुद्धृतरदोऽभवत् ।
त्यक्तासुर्येन मल्लाश्च सोऽपि सौधतलस्थितः ॥ १५ ॥

यद्विक्रमस्य ककुभौ पूतनारिष्टकेशिनौ ।
प्रलम्बधरणीसूनू कालियाद्याश्च साक्षिणः ॥ १६ ॥

वृषप्रेरितवर्षेण गोपगोपीजनाकुलम् ।
आर्तं गवां कुलं दृष्ट्वा यो दधार धराधरम् ॥ १७ ॥

यद्बाहुमुक्तहेतीशबिम्बोद्यच्चित्रभानुना ।
दग्धा वाराणसी कृत्यासहिता सर्षभीकृता ॥ १८ ॥

सुभानुना रथाङ्गेन यस्य भानुस्तिरोहितः ।
जयद्रथवधोद्युक्तपार्थस्य प्रीतये दिवा ॥ १९ ॥

भारापहरणाद्भूमेरविता भवितारणः ।
यमुनायास्तटे रेमे यो गोपीसहितो मुदा ॥ २० ॥

अजातारे राजसूये योऽसौ पार्थिवसंसदि ।
अर्चितः सहदेवेन सर्वसंमतिपूर्वकम् ॥ २१ ॥

अन्ययश्चेदिराजस्य व्ययं चक्रे विनिन्दतः ।
चक्रेण बहुशो यस्तु स्वपादकमलं गतम् ॥ २२ ॥

यः सर्वजिदिति ख्यातो जितं भगवता जगत् ।
इत्यादिवाक्यैर्योऽप्येवं जितो भक्तजनैः प्रियैः ॥ २३ ॥

सर्वधारी स्वरूपेण सङ्कल्पेनापि यः श्रुतौ ।
ख्यातो मत्स्थानि भूतानीत्यादिवाक्येषु च स्वतः ॥ २४ ॥

विरोधी रुद्ररक्ष्यत्वभ्रान्तिर्बाणासुरो यतः ।
कान्दिशीके ससैन्येऽस्मिँल्लूनबाहुवनोऽभवत् ॥ २५ ॥

प्रकृतेर्विकृतिः सर्वा येनाध्यक्षेण जायते ।
यच्छरीरं समस्तं च यस्येत्यादिर्यदीरितम् ॥ २६ ॥

यद्भयात् पवते वायुः खरवृष्टिरुदेति च ।
लोहिताश्वस्सुरेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ २७ ॥

लेपनं दाम चान्नानि कुब्जा माल्योपजीविनी ।
विदुरोऽपि ददुर्यस्मै स पायान्नन्दनन्दनः ॥ २८ ॥

यस्माद्विजयसारथ्यं कृतं सकलसाक्षिकम् ।
तस्मात् कृष्णस्य सौलभ्यकाष्ठा लोके विदर्शिता ॥ २९ ॥

जयतात्पतगाधीशमधिरूढः सुरेश्वरम् ।
विजित्य पारिजातं योऽनयत् सत्यामुदे भुवम् ॥ ३० ॥

रासलीलावियोगेन याः पीड्यन्ते स्म गोपिकाः ।
तासामाविरभूद्योऽसौ साक्षान्मन्मथमन्मथः ॥ ३१ ॥

सुमुखी सुमना वापि विरहे यस्य गोपिका ।
न कापि दुर्मुखी किन्तु दुर्मना च लसत्तनोः ॥ ३२ ॥

यादवेन्द्रस्य सेवायां हेविलम्बिजनद्रुतम् ।
भजस्व तं भवाम्भोधिं तरितुं दुरितालयम् ॥ ३३ ॥

विलम्बितुलसीमाल्यं विष्णुं नन्दजमाश्रये ।
विग्रहे स्वस्य रक्तानां विषयासक्तिवारकम् ॥ ३४ ॥

अविकारि समस्तस्य वस्तु प्रकृतितां भजत् ।
अपि यच्चिदचिद्द्वारा तदच्युतमुपास्महे ॥ ३५ ॥

शार्वरीतीः समस्ताश्च ब्राह्मरीतीश्च हे जन ।
विचार्य हेया बिश्वस्य पतिं प्राप्नुहि यादवम् ॥ ३६ ॥

नृदेहं प्रतिलभ्यापि प्लवं कृष्णेन वायुना ।
ईरितं यो भवाब्धिं स न तरेदात्महा भवेत् ॥ ३७ ॥

यस्य केलिः प्रलम्बघ्नलीलया सङ्गताखिला ।
लोकोपकारिणी जाता शुभकृत् भवतात् स नः ॥ ३८ ॥

मधुरां गमितो योऽसावक्रूरेण सशोभकृत् ।
गोपीनां विरहार्तानां नगरस्त्रीरसावहः ॥ ३९ ॥

नीलः सुवक्रो धिषणां यद्गुडालकसञ्चयः ।
पश्यतां हरिणीं हर्तुं जालति स्निग्धशीतगुः ॥ ४० ॥

द्वित्रास्त्रिचतुरा वापि कटाक्षा यस्य पञ्चषाः ।
विश्वावसुजनस्यालं दातुं धनदतुल्यताम् ॥ ४१ ॥

पराभवति यस्याङ्घ्र्योर्भक्तिस्थस्य तु केशवः ।
सुलभस्तस्य नाभक्ते भक्तिक्रीतो हि स स्मृतः ॥ ४२ ॥

प्लवङ्गदूत्यकरणान्न सौलभ्यमलाभि यत् ।
पूर्वजन्मनि तत्सोऽयं वृतोऽभूत् पाण्डुजन्मनाम् ॥ ४३ ॥

वरं स कीलकशिखिपञ्जरान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैशस ॥ ४४ ॥

केशवो यस्य हृद्यास्ते सौम्यरूपो भवत्ययम् ।
अन्तः क्षितिरसं ब्रूते चारुत्वात् सालभूरुहः ॥ ४५ ॥

गोपिका चिन्तयन्ती यद्विग्रहं निजमन्दिरे ।
साधारणं निजासूनां न लभे किन्तु यत्पदम् ॥ ४६ ॥

येनाविवादो यस्यासीत्तिष्ठता हृदयाम्बुजे ।
स कृतार्थस्तु नोजीवेत् क्रूरात्मा यद्विरोधिकृत् ॥ ४७ ॥

गोपालशिशुभिस्तुल्यैःसह बृन्दावने चरम् ।
वस्तु वत्सावनं नौमि परिधावि सुदीप्तिमत् ॥ ४८ ॥

प्रमादी चन्द्रसङ्काशमुखबिम्बावलोकने ।
कृष्णस्य मा भूः कैङ्कर्ये जनैतत्पदगोचरे ॥ ४९ ॥

नरानदमुपक्रम्य यदानन्दगुणं श्रुतिः ।
परिच्छेत्तुमना वाचोऽप्यभूमिं मनसोऽवदन् ॥ ५० ॥

कृष्ण पाहि गभीराक्ष संन्यस्तभरणं त्वयि ।
मां त्वमेवार्जुनव्याजादात्थ सर्वादिपद्यतः ॥ ५१ ॥ ॥

पृतनां धार्तराष्ट्राणां पार्थस्यन्दनचक्रतः ।
नलाटवीमिवाक्लिष्टं द्विपो मत्तः पिपेष यः ॥ ५२ ॥

पूजनं कुसुमं योग्यं श्रीमतः केशवस्य हि ।
न भिक्षोः पिङ्गलजटाधारिणस्तु कदाचन ॥ ५३ ॥

यस्य चेतसि गोविन्दः कृतं तस्य कलौ न चेत् ।
सत्कालयुक्तितः श्रैष्ठ्यं नैव तस्य युगं कलिः ॥ ५४ ॥

सिद्धार्थिनां निजाभीष्टप्राप्तिः कृष्णस्य सेवनात् ।
स्यात् प्रसिद्धो हि सर्वेषां सर्वकामप्रदो हरिः ॥ ५५ ॥

रौद्रं वा सेवनं ब्राह्ममन्यदैवतगोचरम् ।
वर्जयन्ति प्रबुद्धास्तु यस्मात् परिमितं फलम् ॥ ५६ ॥

वासुदेवपरित्यागी योऽन्यसेवापरो नरः ।
तृषितः स्वर्णदीतीरे कूपं खनति दुर्मतिः ॥ ५७ ॥

यथा कृष्णप्रभावेण मुक्त आनकदुन्दुभिः ।
शृङ्खलायास्तथा जन्यास्तस्या मुच्येत तत्परः ॥ ५८ ॥

येन नीलाविवाहाय पुङ्गवाः सप्त दुर्दमाः ।
एकदा रुधिरोद्गारिवदना विनिपातिताः ॥ ५९ ॥

येनोढा रुक्मिणी स्वानुरक्ता क्षिप्त्वा स्वयंवरे ।
आगतान्नृपतींस्तस्याः परिभूय सहोद्धवम् ॥ ६० ॥

सक्रोधनयनः कालयवने पुरतः स्थिते ।
मुचुकुन्दो नृपो येन विशेषेण कटाक्षितः ॥ ६१ ॥

सम्पूर्य वीथ्यामायान्तं गवां पश्चात् सवेणुकम् ।
गोपजैर्बालगोपालं नमाम्यक्षयसम्पदम् ॥ ६२ ॥

वादिभीकरपुत्रेण वेङ्कटेशेन धीमता ।
कृता स्तुतिः कवीन्द्रेण कृष्णेन विषयिण्यसौ ॥ ६३ ॥

वत्सरावली मत्सरातिगैः
. . . . . . ज्ज्वला ।
दृश्यतामियं वश्यमानसै-
र्भद्रदा भवेद्द्रिुता मतिः ॥ ६४ ॥

॥ इति श्रीकृष्णवत्सरावलिस्तोत्रं सम्पूर्णम् ॥

## ९. ॥ अथ श्रीगोविन्दस्तवराजः ॥

स्थिते मनसि गोविन्दे दूरतो याति पातकम् ।
उदयाचलमारूढे दिननाथे तमो यथा ॥ १ ॥

गोविन्देति तथा प्रोक्तं भक्त्या वा भक्तिवर्जितैः ।
सर्वपापानि दहति कल्पान्ताग्निर्गिरीन् यथा ॥ २ ॥

शौनक उवाच—

अम्बरीष शुभं वाक्यं मयोक्तं शृणु भक्तितः ।
धर्मार्थकाममोक्षाणां कुरु गोविन्दकीर्तनम् ॥ ३ ॥

यदीच्छसि परं ज्ञानं ज्ञानात्तत्परमं पदम् ।
तदादरेण राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४ ॥

कर्मणा मनसा वाचा यदीच्छसि भवक्षयम् ।
तदा सदा महीपाल कुरु गोविन्दकीर्तनम् ॥ ५ ॥

सर्वरोगविनाशाय चात्मनः शुभवाञ्छया ।
अहर्निशं सदा नित्यं कुरु गोविन्दकीर्तनम् ॥ ६ ॥

संसारानलतापस्य यदीच्छसि शमं नृप ।
तदा चित्तं स्थिरं कृत्वा कुरु गोविन्दकीर्तनम् ॥ ७ ॥

यदीच्छसि भयं त्यक्तुं परलोकसमुद्भवम् ।
तदा नित्यं महीपाल कुरु गोविन्दकीर्तनम् ॥ ८ ॥

जीवितस्य फलं नित्यं यदि वाञ्छसि भूपते ।
प्रत्यहं परया भक्त्या कुरु गोविन्दकीर्तनम् ॥ ९ ॥

ब्रह्महत्यादिपापानां यदीच्छसि परं क्षयम् ।
संयतेन्द्रियसन्दोहः कुरु गोविन्दकीर्तनम् ॥ १० ॥

राज्यं भोगांश्च विपुलान् पुत्रं वेच्छसि सम्पदम् ।
तदा यत्नेन महता कुरु गोविन्दकीर्तनम् ॥ ११ ॥

त्यक्तुमिच्छसि राजेन्द्र जन्मरोगज्वरादिकम् ।
भयं यदि सदा भक्त्या कुरु गोविन्दकीर्तनम् ॥ १२ ॥

रणे यदि भयं[रिपुं]जेतुं त्वमिच्छसि नराधिप ।
सदा सर्वात्मना नित्यं कुरु गोविन्दकीर्तनम् ॥ १३ ॥

वाजियज्ञसहस्राणां फलं नित्यं यदीप्ससि ।
प्रातरुत्थाय भूपाल कुरु गोविन्दकीर्तनम् ॥ १४ ॥

यदि संसारजं दुःखं हन्तुमिच्छसि भूमिप ।
तदा भक्तिं समास्थाय कुरु गोविन्दकीर्तनम् ॥ १५ ॥

वैष्णवस्य च धर्मस्य पारं गन्तुं यदीच्छसि ।
नरेन्द्र तन्मना भूत्वा कुरु गोविन्दकीर्तनम् ॥ १६ ॥

किं करिष्यसि साङ्ख्येन योगेन नरनायक ।
मुक्तिमिच्छसि राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ १७ ॥

परान्नं गर्हितं भुक्तं पर्वकाले विशेषतः ।
सुनिष्टप्तं गतं पापं कुरु गोविन्दकीर्तनम् ॥ १८ ॥

अभक्ष्यसम्भवं राजन् दुष्परिग्रहसम्भवम् ।
तत्पापं यातु विलयं कुरु गोविन्दकीर्तनम् ॥ १९ ॥

संसर्गे पापिना नित्यं पाषण्डजनरक्षणे ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २० ॥

यद्बाल्ये यौवने चैव वार्धके समुपार्जितम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २१ ॥

पूर्वाह्णे वापराह्णे वा मध्याह्ने यदुपार्जितम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २२ ॥

वर्तमानं च यत्पापं यद्भूतं यद्भविष्यति ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २३ ॥

मेरुमन्दरतुल्यं तु मनसा समुपार्जितम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २४ ॥

यत्त्वया पापमनसा परदाराभिमर्शनम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २५ ॥

धर्मं वै पितृदेवानां वित्तशाठ्येन यत्कृतम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २६ ॥

गुरुनिन्दाकृतं पापं वेदशास्त्रद्विजादिजम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २७ ॥

गतायां तीर्थयात्रायां परान्नेन तु पातकम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥२८ ॥

पूज्यानामवमानेन यत्कृतं पातकं महत् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ २९ ॥

वसतां महतां वासे कुग्रामे च सतां च यत् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३० ॥

तटाककूपवापीषु जलविघ्नकृतं गवाम् ।
तत्तापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३१ ॥

मार्गभङ्गकृतं पापं क्षेत्रसेतुविभेदजम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३२ ॥

गुरुतल्पाभिगमने स्वजनस्त्रीनिषेवणे ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३३ ॥

अनभ्यर्च्य पितॄन् देवान् यत्र यत्र च भोजनम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३४ ॥

कथायां कथ्यमानायां विघ्नाचरणजं च यत् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३५ ॥

अकुर्वतामातिथेयं होमान्ते च विशेषतः ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३६ ॥

सूर्योदयमुखे राजन् यत्पापं समुपार्जितम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३७ ॥

हेतुवादभरेणापि धर्मपक्षनिषूदनम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३८ ॥

एकेन यत्त्वया भुक्तमेकान्ते शुभसंस्थितेः ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३९ ॥

समं तु भागं न पिता पुत्रादीनां न यच्छति ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४० ॥

मातापित्रोरभक्तानां भार्यापुत्रहतादिजम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४१ ॥

दिवामैथुनजं पापं पर्वकाले विशेषतः ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४२ ॥

मित्रद्रोहकृतं पापं स्वामिद्रोहकृतं च यत् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४३ ॥

नित्यं क्रियाविहीनानां दैवतातिथिवञ्चनात् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४४ ॥

अयथोक्तं व्रतं कृत्वा यत्त्वया पातकं कृतम् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४५ ॥

गोवधादिसमं पापं ब्रह्महत्यासमं च यत् ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४६ ॥

पत्यौ जीवति या नारी मृते वा व्यभिचारिणी ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४७ ॥

भुक्तं क्षीरमवत्साया घृतं दुग्धं तथा दधि ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४८ ॥

वर्णधर्मपरित्यागे यत्पापं सञ्चितं त्वया ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ४९ ॥

विना चान्द्रायणैः कृच्छ्रैस्तीर्थैर्दानैर्व्रतैर्मखैः ।
तत्पापं यातु राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ५० ॥

गोविन्दकीर्तनं नाम स्तवानामुत्तमः स्तवः ।
पापप्रणाशमभ्येति सिंहस्येव यथा गजः ॥ ५१ ॥

कृत्वा पापसहस्राणि स्तवं गोविन्दकीर्तनम् ।
यः पठेदन्तकालेऽपि स गच्छेत् परमं पदम् ॥ ५२ ॥

नित्यं पठति यो मर्त्यः शृणोति हरिवासरे ।
विष्णूत्सवेषु राजेन्द्र मोक्षमाप्नोत्यसंशयः ५३ ॥

हत्यासमानि पापानि गोविन्दस्तवकीर्तनात् ।
विलयं यान्ति राजेन्द्र प्रोक्तं देवेन शम्भुना ॥ ५४ ॥

कृष्णाचैर्बहुभिः स्तोत्रैः पठितैर्यत्फलं श्रुतम् ।
स्तवेनैकेन तत्प्रोक्तं गोविन्दाख्येन भूमिप ॥ ५५ ॥

यत्फलं पठितैर्वेदैः पुराणैश्च प्रकीर्तितम् ।
तत्फलं पठिते स्तोत्रे गोविन्दाख्ये प्रकीर्तितम् ॥ ५६ ॥

तावत् पापानि तिष्ठन्ति जन्मकोटिशतैरपि ।
यावत् पठति जन्तुर्न गोविन्दाख्यं स्तवं कलौ ॥ ५७ ॥

लोके न तं च स्पृशति भयमित्यक्षरद्वयम् ।
कलौ पठति यो नित्यं गोविन्दाख्यं महास्तवम् ॥ ५८ ॥

लिखितस्तिष्ठति यस्य गोविन्दाख्यो महास्तवः ।
ग्रहशान्तिर्गृहे नित्यं सुप्रसन्नाः पितामहाः ॥ ५९॥

गोविन्देति कृतोच्चारे अहन्यहनि भूभुज ।
क्षिप्त्वा कलिमुखे पांसुं दोर्भ्यां तु मनुजेश्वर ।
गतोऽसौ परमं लोकं कृत्वा गोविन्दकीर्तनम् ॥ ६० ॥

॥ इति श्रीगोविन्दस्तवराजः सम्पूर्णः ॥

## १०. ॥ अथ श्रीकविराजस्तुतिः ॥

विलोचनकदम्बकं यदुपलभ्य लुभ्यत्किमा-
लिलेह न हि किं पपौ न हि ममज्ज किं वा न हि ।
परं तु किमिवाभवन्नवतमाललक्ष्मीतिर-
स्क्रियानिगमसाम्प्रदायिकमुपास्महे तन्महः ॥ १ ॥

अबालकजवाधरः सलिलवाहवाहद्युतिः
नवाब्जवनवादिदृग्बृहदवार्यबाहुद्वयः ।
स वाङ्मनसबाह्यदृक्प्रमदवारवारां निधिः
भवाह्णवणवारिधेः सविधवासवानुद्धरेत् ॥ २ ॥

यदीयसुषमावलोकनमुदः शरत्कौमुदी-
कदम्बपरिशीलनप्रमदधाटिकाचेटिका ।
तदम्बुदकदम्बडम्बरविडम्बिकिञ्चिच्छर-
त्सरोजदुरहंकृतेरनवकाशनेत्रं भजे ॥ ३ ॥

सिताभ्रचयपङ्किला विधुशिलाम्बुवापीविधु-
प्रभामयसरोजिनी यदि सृजेत् प्रसूनं नवम् ।
तदीयमुपमा यदीयनयनस्य नः स्पर्धिनी-
ममन्दमुदमम्बुधेस्तटकुटीचरं तत्क्रियात् ॥ ४ ॥

कुतूहलमयी हरिन्महमयं नभोमेदिनी
प्रमोदलहरीमयी जगति यत्र कुत्र क्वचित् ।
मतिः परमरंस्त यद्वदनबिम्बसञ्चुम्बिनी
तदस्तु वटभूरुहस्तटचरिष्णु धाम श्रियै ॥ ५ ॥

किमद्भुततते: किमुल्लसनसम्पदः किं महो-
त्सवस्य कुतुकस्य किं किमु जगत्त्रयीविस्मृतेः ।
बभूव हृदयं यदाननविहारि जाने न तत्
पुनातु लवणाम्बुधे सविधचुम्बि किञ्चिन्महः ॥ ६ ॥

अधीनमिति यत्कृपाविमुखमित्यशेषोपमा
सङ्ग्रहमिति द्युतिः प्रणयपूर्णमित्युत्सवः ।
अजस्रमनुशीलयत्यधिकलुब्धमित्यक्षित-
द्रुटावनिरुहस्तटीघटितधाम धामाश्रये ॥ ७ ॥

यदीयरजसां गणः कबलितोडुवासां गणः
पतत्यमिततारकप्रियकरच्छटाकारकः ।
सुधां किरति यत्कलाकरपुलाकराशिर्दृशो-
स्तमम्बुधितटीचरं कमपि कान्तिसारं भजे ॥ ८ ॥

सुधांशुमयमांसुमांसलमृजं सुधारासुधा-
विधौतमतिनिर्मलप्रबलकौमुदीप्रोत्थितम् ।
परस्परविघर्षणैर्दहितशार्मणस्रोतसं
भुवि क्वचन पुञ्जितं मधुरिमाणमन्तर्भजे ॥ ९ ॥

प्रतिक्षणरतिक्षणप्रदमुरारिपादद्वयी-
विहारसुखसञ्चितद्रढिमनीलशैलद्रवे ।
अपाकृतबलस्त्रपाभरजयाय मातङ्गमनो-
द्रवं विरचयन्मदं मधुरिमा स कोऽपि क्रियात् ॥ १० ॥

वदान्ययशसो जगद्विजयगर्वगम्भीरिमा
तुलाकणकलङ्कितानवसरः क्षमासम्पदः ।
महोर्मिभरिताद्भुतस्तबकिता कृपाचातुरी
तुरीयपुरुषार्थदं जयति मर्म शर्म श्रियाम् ॥ ११ ॥

दृशोरमृतवापिकामधुरिमैकधाराधरे
घनप्रमदकन्दलो वपुषि पानबाहुद्वये ।
भवामयपयोनिधेस्तरणसेतुरव्याहतं
पदं मनसि काचनाचरतु सा चितश्चातुरी ॥ १२ ॥

मदंहसि मदं हसत्पलमनूननानैनसां
प्रचण्डिमपिचण्डिले मरुति हिण्डमाने मुहुः ।
चलत्पतितपावनाधिपपताति कास्तम्भक्रु-
त्किमाततभुजद्वयः स मयि निर्दयः किं भवेत् ॥ १३ ॥

परे तपति विक्रमाह्वयनिदाघचण्डातप-
व्यथादलनकेलिकौतुककदस्त्रवानम्बुदः ।
क्रियाज्जलधिकूलभृन्मुदितभाव्यलक्ष्मीवधू-
प्रसाधनविधौ हरिन्मणिजदर्पणस्तर्पणम् ॥ १४ ॥

सखे किमुपलभ्य कां ननु दशां भजे वेद्मि नो
परस्परमिति ब्रुवद्वचनसत्यतासिद्धये ।
निमज्ज्य सुखनीरधौ न हि बहिर्ययौ दृङ्मनो-
द्वयं यदवलोकने तदवलोकवाञ्छास्तु नः ॥ १५ ॥

दुरुद्धरमहाधमाधिपतिमादृशोद्धारणा-
तिभारगिरिविन्नवन्मधुरिमाब्धिवीचिप्लवः ।
जगन्नयनभाग्यवैभवमहौषधीवाधव-
द्वयाद्रवमयोदयः स्फुरतु कोऽपि मन्मानसे ॥ १६ ॥

महोत्सवकरम्बितामितरगन्धशून्यापर-
प्रमोदमयसृष्टिमुल्लसितलोभकोशं दृशोः ।
अकण्टकविलुण्ठनापणमनश्वरश्रेयसां
मुहुर्मुहुरहं महोघनमहोज्ज्वलं कामये ॥ १७ ॥

कलङ्ककपटस्फुटोदररजच्छटापङ्किलं
यदाननसुधाम्भसः कलुषहृत्पटीमण्डलम् ।
धिनोति वसुधां सुधामयमयूखमाली मुहुः
मम प्रमददोहनः स भवताज्जगन्मोहनः ॥ १८ ॥

यदाननसुधाकरद्युतिसुधाधिपानेच्छयोः
मुहुर्विवृतसर्वतोमुखमतित्वरं धावतोः ।
अनाविलमणीमयाभरणमन्तरायस्त्विषा
भवन्नयनयोर्ममाभयनयोदयं स क्रियात् ॥ १९ ॥

सपत्नविरहो महोल्लसितमाधुरीसम्पदां
सहासननवोत्सवो निखिलमोहलक्ष्मीततेः ।
परप्रमदकन्दलीवलदमन्दलीलाभरः
स रक्षतु पुरस्सरः सरसिजस्रजश्चक्षुषा ॥ २० ॥

पराजितवराकरक्तकनवौष्ठलेखाकरः
श्रिया विमलनाकरक्षणशिलाविलासाकरः ।
मुखेन हरिणा करम्बितसुधांशुनिन्दाकरः
स मेऽस्त्वघनिराकरः खलु गृहीतपद्माकरः ॥ २१ ॥

कृपालुकुलमौलिना सपदि येन सम्पत्तथा
वनीयकमनीयतापदतनूरुचिन्तापदम् ।
शितिक्षितिमहेन्द्र हे शरण शून्यताशालिनां
गणे सुरतरूपमोचितमहे भवं ध्यायताम् ॥ २२ ॥

श्रियं च सुहृदे ददद्वितरसन्मतिं भूपजा-
ङ्गणे सुरतरूपमोचितमहे भवं ध्यायताम् ।
जवाधरदरस्मितं मुखरुचा महेन्द्रप्रभा-
करम्बिततमालसारसदृगन्तरं गाहताम् ।। २३ ।।

दिशं विरचयन्महो विपुलबाहुपुष्पावली
करम्बिततमालसारसदृगन्तरं गाहताम् ।
अरे हृदय यः सुधारसनिधानवेणुध्वनिं
वनेजनयनाशयातनुतनुतराधिकारङ्गदम् ।। २४ ।।

तमीक्षणनटं सकृत्तटवतीशतीरस्थली
वनेजनयनाशयातनुतराधिकारङ्गदम् ।
प्रपन्नपरिपालने पतितपावने पाटवी
पवित्रपदपङ्करुट्पतनपूतपाषाणकम् ।। २५ ।।

पयस्सुपरिपन्थिपीडितपदः स पाता प्रभुः
प्रियं प्रतनपूरुषः परमपुण्यदः पूरयेत् ।
महेन्द्रमणिमञ्जुतां मलिनयन् महोमण्डलैः
मनोहरमहामहामधुरमर्मणां मर्दनः ।
महीध्रमयमन्दिरो मनुजमत्ततामञ्जरी
मधुर्मथनकृन्मथोर्मसृणयेन्मदीयां मतिम् ।। २६ ।।

उदञ्चितसमुच्चकोरकरुचिप्रसूनस्मितं
स्फुरत्तरलतातिखेलदलकान्तभालास्यभृत् ।
स्वरूपमिह ते न कः प्रकटवासवेलावने
जजल्प कुशलान्यनल्पय मुकुन्द कल्पद्रुम ।। २७ ।।

सुधारसमयोदयं मुहुरुदञ्चयन् यः स्वरू-
पलक्षणरुचिच्छटापटिमपूरिताशातटः ।
घनाञ्जनरुचिं दधाति बहुधा नवैराश्रितो
महोभिरनिशं दिशेत् कुशलमम्बुजाक्षोऽम्बुदः ।। २८ ।।

अरङ्कुधरधामवन्नरजनीमहोल्लासभृ-
त्कलापचयपूर्णविग्रहमहः श्रिया भास्वरम् ।
नकैरवगतां मुदं दिशति यन्नदीनोदये
पराङ्मुखमहं भजेऽद्भुतसुधानिधिं धाम तत् ।। २९ ।।

अनुक्षणरसार्द्रतां सृजति यो यदीयं वल-
द्विनोदकमलं वपुः कलयतोऽपि यस्योदयः ।
न चन्द्रकिरणोच्चतामपि च ताडितालोकस-
न्ततिर्यमनुमोदिता स्मर तमद्भुताम्भोधरम् ॥ ३० ॥

तुलानवसरोजबानवसरो जवामौष्टद्द-
ग्घनाञ्जनकलापगञ्जनकलापगर्हेच्छविः ।
भुजायुगमहोकचायुगमहोरुचातुर्यभा-
ग्भुजन्मदवलम्बतां मदबलं दृढार्तेर्हरेत् ॥ ३१ ॥

भविष्यदरुणानुजध्वजवियोगचिन्ताशुचो
विभिन्नशितशैलभृद्गलितरक्तधारोपमम् ।
शिवं दिशतु नीलभूधरविलग्नसोपानभू-
पतद्बहलतूलतुन्दिलविशालशोणांशुकम् ॥ ३२ ॥

हृदामितरवृत्तिभिः सह विधूतमूर्तिक्षणं
समं कमलकोरकाकृतिकरैरुदस्तं ततः ।
स्खलत्तदनुपीठतः सह सहस्रनेत्रोदकैः
क्रियात् किमपि मन्महः श्रियमनारतं तन्महः ॥ ३३ ॥

नदेशनिनदाधिपल्लवितलोककोलाहला
स्फुटार्तिविनिवेदनाश्रवणसावधानः किमु ।
सलीलसवनस्थलीगमनकौतुकोपक्रमे
तिरोवलितकन्धरो धरधुरन्धरोऽस्तु श्रियै ॥ ३४ ॥

जगद्विहरणोचितस्वतनुसङ्गहासाङ्गतो-
त्तरङ्गरुचिरङ्गसंग्रहविधित्सया किं धुतः ।
गमोत्सवसमुत्सुको द्युतमहं ह सारंहसा
बलान्यधवलावनीधरवनीवसन्तो विभुः ॥ ३५ ॥

प्रमोदजलधौ निमज्जति मनो जलार्द्रा दृशः
कदम्बकुसुमश्रियं हरति वर्ष्म बद्धोऽञ्जलिः ।
प्रधावति जयध्वनिर्निपतितं शिरोभूषणे
स कोऽपि समयः क्रियादिति चरित्रचित्रः श्रियम् ॥ ३६ ॥

पुरा परिचितेतरप्रणयचातुरीं कस्यचि-
न्मतिं नवकुमुद्वतीमभिलषन्तमालिङ्गितुम् ।
वहन्तमवरोहणं किमु कलाकरं तं भजे
शितिक्षितिधरः स्खलद्विपुलगण्डशैलोपमम् ॥ ३७ ॥

शनैरनुसरत्तरप्रमदवारिपूरेक्षण-
प्रमुक्तजनतेक्षणप्रकरसानुरोधः किमु ।
स्वकीयचरणद्वयीविहरमाणभक्ताशय-
व्यथालवविशङ्कितः किमु मृदु व्रजन् पातु सः ॥ ३८ ॥

अनाथजनतार्पितं भरणभारमाविर्भव-
त्कृपादरमुपाददेत् किमु विलासयात्रालसम् ।
दरोदितशिरोनतिः क्वचन चारु गारुत्मत-
प्रभालघिमकारु तद्भवतु दारु कारुण्यभाक् ॥ ३९ ॥

विपन्नजनतावनप्रचुरधावनत्रासतः
सदारतिकरक्षणव्यतिकरस्पृहोल्लासतः ।
विलम्बमवलम्ब्य चुम्बति नितान्तधीरागति-
र्यदीयपदसारसं समदसारसङ्गं हरेत् ॥ ४० ॥

विधूतिमभितो दधद्बहुविधां मुहुर्मोदशा-
मनुद्धरणदुर्दमाद्बहलदुर्यशःकर्दमात् ।
समुद्धृतिविधानकृन्मुरहरस्य लोकोत्तरो
जयत्यतितरां हरेरपि हरेः प्रयाणोत्सवः ॥ ४१ ॥

मुहुः परिजनोत्करैर्धृतगुणैः कृताकर्षणो
नरप्रकरवीक्षितः सकरतारकोलाहलः ।
गृहीततनुरुत्तरैरलसयानशीलोऽवतु
व्रजेशपुरनागरीवसनतस्करो दुष्कृतात् ॥ ४२ ॥

सुखाम्बुधिगभीरतावकलनादिवोर्ध्वस्फुर-
द्भुजाधिविनिवेदनाप्रवणलोकसन्तानकम् ।
मृदङ्गरवरङ्गतुङ्गिमतरङ्गिघण्टारवं
भजे पशुपदारदृक्पतनपात्रयात्रोत्सवम् ॥ ४३ ॥

महीतलमहो जगद्विजयवादिनिःसाणज-
प्रणादभरनिर्भरभ्रमधुरीणसन्नाहिनम् ।
भजे चलपरेतराट्पतितराज्यधैर्याचल-
स्खलत्पृथुशिलारवप्रतिममङ्घ्रिघोषं हरेः ॥ ४४ ॥

स्वतः प्रसरणोत्सुकामरुणचेलभामेलना-
दश्रृङ्खलितखेलितां नवसुधांशुधारोन्मदाम् ।
विधूननपम्परोदयविधूतसाम्यासनां
भजामि वदनद्युतिं मदनमोहनस्य प्रभोः ॥ ४५ ॥

करोद्धरणवाञ्छया करिवरस्य गाढत्वचा-
वगाढसरसीमिलन्मलिनकण्टकैः पीडनम् ।
नतोन्नतनिजाङ्गजङ्गमतयेव संसूचय-
न्नुपाधिविगलत्कृपानदनृपालपादोऽवतात् ॥ ४६ ॥

कनत्किसलयावलीसुललितप्रभारामव-
न्नवारुणरुचारुणेक्षणविपत्तियामान्तवत् ।
महेन्द्रमणिमानसंपदणिमानमानर्तय-
ज्जयत्यतिलसज्जवाविजयसज्जवासो महः ॥ ४७ ॥

वपुर्लवणिमोर्मिषु प्रतिफलन्निजास्यप्रभा-
वलोकनवलोत्थिता मम विमोहिता नोहिता ।
भवेदिह महाधमोद्धरणपात्रयात्रोदये
मुरारिरिति चिन्तयन् किमु समावृताङ्गोऽवतात् ॥ ४८ ॥

अये हरिपदद्वये हृदयखेलदेलातिगं
तदीययुगपद्गतौ बत कुतो विमर्शस्तवः ।
यतस्तदपदोषमानसपदं वदन्ति त्वया
विमृश्यमिदमेव यद्भवति विभ्रमश्रीर्गतिः ॥ ४९ ॥

मुकुन्दमुखवापिकाजगदपूर्वलक्ष्मीसमु-
द्गमाग्रसरबुद्बुदप्रतिममिन्दुबिन्दुव्रजम् ।
प्रफुल्लतरमुल्लसद्भुवनमोहवल्लीनव-
प्रसूनवलयभ्रमं प्रबलयन्तमन्तर्भजे ॥ ५० ॥

दुरापरमणीयमारमणवक्त्रकान्तिच्छटा-
वलोकनवलोभतः किमु शिरस्तटोर्ध्वं गता ।
मदीयनयनायनीभवतु कापि यात्रोत्सवो-
त्सुकस्य परमेशितुश्चरमचुम्बिनी पट्टिका ॥ ५१ ॥

जनार्दनदृशोर्भृशोल्लसितपुण्डरीकोत्करा-
धिराज्यगरिमोपरि स्फुरितचामरोड्डामराम् ।
भजे फणिफटाच्छटानटललाटसीम्नि भ्रुवोः
स मां विलसितामनाविलसिताभ्ररेखाद्वयीम् ॥ ५२ ॥

हरेर्गमननिस्वनैः शमनयातनानिःसर-
न्मुरारिपुरसंमुखप्रबलपापिनां विघ्नदौ ।
विघातविनिवारणं निगदितुं किमु द्वाःस्थितौ
विहायसि विहारदृक् क्वचन चक्रभृत् पातु नः ॥ ५३ ॥

नृलोकविषदोल्लसत्सुकृतजालबद्धं बहि-
र्गतं श्रुतिशिरोऽम्बुधेः किमपि रत्नमभ्रप्रभम् ।
महीपटतटस्थलीललितलोचनालङ्क्रिया
प्रियाणि च फलं क्रियाद्वसनदामनद्धो हरिः ॥ ५४ ॥

ललाटतटभूनटत्पटुकुरण्टकस्रक्चल-
न्नवीनशतपर्विकास्तबकमिन्दुबिन्दुत्विषाम् ।
तरङ्गनिकरं गतावधिमधिश्रयद्भिस्मृतं
प्रयातु वदनं न कम्पवदनन्तशोभाम्बुधेः ॥ ५५ ॥

गमक्रमकुतूहली क्व च दधद्भ्रमी विभ्रमी
समुद्घटितभङ्गिमन्दिरकपाटवत्पाटवम् ।
गुणालयमृणालिनीकुसुमकान्तिकीर्ति श्रिया-
मनध्ययनलोचनः कलुषमोचनं नः क्रियात् ॥ ५६ ॥

नखद्युतिविलासवैभवलवार्थिकोटिक्षयां
करप्रकरमाधुरीपदनिपातदैन्यग्रहात् ।
ध्रुवं म्रदिमशालिसुन्दरगतिर्गतिर्मादृशां
दृशा विशदपुष्कर द्युतितिरस्क्रियादुष्करः ॥ ५७ ॥

अगाधनिजमाधुरीधृतनिमज्जनायाः श्रुतेः
विकर्षणवशादिवोत्तरलमौलिभिर्मानवैः ।
गृहीतमरिजैत्रयात्रिकमिवाखिलाशाचरं
भजे मुरजयि क्षणे मुरजघण्टिकानिस्वनम् ॥ ५८ ॥

निमेषकणिकाविपद्युवतिदर्शनं दुष्क्रिया-
द्विषन्विविधविभ्रमो नृपचमूर्जुगुप्सास्पदम् ।
यदन्यदखिलं तदप्यपथमेव यस्मिन् दृशो-
र्मुकुन्दवदनस्पृशोः स समयोस्तु नः श्रेयसे ॥ ५९ ॥

विलोकितमितस्ततो विरचयन्निवान्वेषय-
न्ननाकलितमादृशः किमु नताननो लज्जया ।
मदीयपतितावलीनृपतितासहस्रासहा
सहस्रदलदा ... ...सर्षदविलोचनः सम्भवेत् ॥ ६० ॥

मुहुर्मथितलोचनोच्चयविषादचक्रं चर-
त्तमालतरुमस्तकोत्थितसिताब्जमत्यद्भुतम् ।
चलद्दलितकज्जलद्युतिमुरारिमौलौ मिल-
त्त्विषा धवलदीधितेः प्रबलमातपत्रं भजे ॥ ६१ ॥

चलन्नृहरिभूतिवैभववनीसमुद्भेदव-
न्महाद्भुतमहीरुहन्नृहत्पलाशोपमम् ।
स्मरामि वियदुन्मुखं किमपि मण्डलाकारभृ-
त्पटेन घटनाद्घनाघनघटानिभेनोद्भटम् ॥ ६२ ॥

परेतपृतनापतिः पतितमण्डले चण्डता-
मखण्डबहुदण्डदां प्रकटयन् यदाकर्णनम् ।
गतेषु पतितेषु पूजनजनम्रतासम्भ्रमं
त्रपाबहलमावहत् स हृदि गाहतां काहलः ॥ ६३ ॥

घनांशुमघनाशिनाकृतिघनाघनाडम्बरं
विलोक्य विहितप्रडीनगतयोऽगतीनां गतेः ।
दृगम्बुजविहारलोभत इवापतन्तः स्थित-
च्छदाश्चलदुपर्यधो जयति चामराणां कुलम् ॥ ६४ ॥

प्रहारशकलीभवन्नमुचिवैरिकैरीटभू-
जुटन्मणिगणोच्चलत्तरझणत्क्रियामांसलः ।
पलायनपरायणव्यसनवारहाहारवा-
नवाप्य कलितोन्नतिर्जयति कोऽपि वेत्रध्वनिः ॥ ६५ ॥

जगत्त्रितयभानकृद्यदुकुलप्रदीपप्रभा-
प्रभासनसमुद्भवस्मयरसादिवोद्ग्रीवताम् ।
गतैः किल शिखाशतैर्घनतमास्तमाघस्मराः
स्मरामि धरणीपतेः सरणिदीपिका दीपिकाः ॥ ६६ ॥

रसास्थितिवशाकृपानिधिकृपाकटाक्षास्पदं
ततो विधिबलावरजमौलिसीमां गतः ।
अनाप्तजलजाक्षवीक्षणलवस्तदाकाङ्क्षया
विनम्रवदनोघटस्त्रुटितजीवनः पातु नः ॥ ६७ ॥

शरद्विमलकौमुदीमयमहीमहाह्लादभू-
धरोपरि परिस्फुटामृतझरीव लीलावहा ।
सुधाधरणिरोहणत्रिजगतीमनोमोहनो-
त्तमाङ्गतलनिर्गलत्सलिलनिर्झरी पातु नः ॥ ६८ ॥

स्वजातकुसुमस्रजामसमभावलावण्यकृ-
न्मुरारिमुखहृत्कपदाम्बुजसमुच्चलश्रीलवः ।
अवाप्तुमिव माधवाननविलोचनाङ्घ्रिद्वय-
क्रमभ्रमणविभ्रमप्रियमदभ्रमम्भः क्रियात् ॥ ६९ ॥

मुखेन्दुमथ लोचनं स्वसुतवैरिभावान्निजा-
धिपाभरणलोहितोपलकुलश्रियो लुण्टनात् ।
स्वशैत्यविजयाद्रदच्छदहृदोश्च सीमेत्यज-
न्नजद्भुवनपावनं चरणमम्बु विष्णोर्जयेत् ॥ ७० ॥

वहन्तमलमम्बुदं स्ववहनाधिकस्निग्धतां
पपौ दलितकालियो ललितकालिमाडम्बरैः ।
रुषेत्यपनयत्पयोजनयनस्य नैल्यं मुहुः
पयो जनयतु प्रियाण्यनयतुष्टिभाजो मम ॥ ७१ ॥

निपीय वदनाम्बुजोदरमरन्दबृन्दं हरेः
पदाब्जमधुलालसागतमिलिन्दमाला किमु ।
विधौतमुखवर्णकैः शितिपुषां पयोविप्रुषां
ततः सपदि पातु काचन कृपालुतः पातुका ॥ ७२ ॥

जगत्त्रितयचित्तमोहनमनुपदेशाय किं
कपोलतलचुम्बिनः कति च केचन श्रीपतेः ।
विलोचनपिधायकाः किमतिलुण्ठनाय श्रियां
दिशन्तु मदनामयं वदनवारिपूरा हरेः ॥ ७३ ॥

क्वचिद्द्रुतगतिश्रियो हृदयचौर्यभीता इव
क्व च स्थिरतरा जगन्नयनरुद्धमार्गा इव ।
दिशन्तु मम सन्ततं स्खलनशोभिताम्भोधिजा-
धिवास्यशरदिन्दवः कुशलमम्भसां बिन्दवः ॥ ७४ ॥

लसद्वसनदामसंनहनयन्त्रणानर्गल-
स्खलत्कमललोचनाननसुधांशुपीयूषवत् ।
मिलन्मलयसम्भवद्रवकदम्बवल्गुच्छवि
च्छिनत्तु दुरितामयं किमपि वारिधारामयम् ॥ ७५ ॥

विलोचनविलुण्ठितामृतमुखालयोद्घाटना-
तटद्वयनटद्विशङ्कटकवाटयुग्मोपमम् ।
भजाम्यभिषवोत्सवोत्तरतरङ्गिकेलीकर-
क्रियस्य कमलाकरग्रहकरस्य कर्णद्वयीम् ॥ ७६ ॥

घनः क्वगतमात्मनो मदमदभ्रमाहूतवान्
परेतसदृशि द्युतौ प्रतिकरोति पाथोरुहम् ।
रसातलगतं विधुर्मधुरिमाणमाकृष्टवान्
यदङ्गनयनाननावरणतः स्वपन् पातु सः ॥ ७७ ॥

अखण्डसुखसम्पदानयनयोः शितिक्ष्माधर-
स्थलीसुषमया निशारतिगुरोर्विषादश्रिया ।
समं समदमुत्थितः प्रभुरभूतपूर्वं क्रियात्
कृपाविपुलसम्पुटप्रतिमदृष्टिरिष्टं मम ॥ ७८ ॥

प्लुवप्रवररामणीयक इवाभिलुब्धोत्थितं
सुधामयमरीचिमण्डलपिचण्डमध्यात् किमु ।
घनप्रमदमर्मतः किमु समुद्धृतं शर्म तत्
करोतु करुणानिधेरभिनवाक्षियुग्मं मम ॥ ७९ ॥

अनादृतजगत्स्थितेर्निजरथैकवासोद्वल-
त्कलेश्च रुचिसन्ततेः स्वरथसन्निवेशावनीम् ।
विमृश्य विभजद्ध्रुवं रथतटभ्रमीविभ्रमि
क्रियान्मुहुरदभ्रमिष्टचयमभ्रमित्रं महः ॥ ८० ॥

मनोवचनयोगिचिन्तनपरिच्युतश्रीधरा-
धिरोहणमहोत्सवोन्नतनिमित्ततां दर्शयन् ।
तुलामुचि रुचिच्छटापटिमविक्रियात्पातक-
व्यथाहररथाङ्गभृन्मम मनोरथानश्लथान् ॥ ८१ ॥

रथो मुरहरत्विषा विकसता विलासेन सा
सलोचनचयेन सप्रमदसम्भवेनाम्भसा ।
तदप्यमितवीचिभिर्गहनतां जगाहे यतः
स तर्पयतु दर्पहृत् कलिमलस्य कोऽपि क्षणः ॥ ८२ ॥

स्वकीयसुरनिम्नगाप्रभृतितीर्थराजीनृपा-
भिषेकमुकुटं शिरस्यसितशैलचूडामणिम् ।
अधोऽप्यमरधोरणीमुकुटधाटिकामावह-
द्रथोपरि परिस्फुटं किमपि पीठमन्तर्दधे ॥ ८३ ॥

हरेर्यदभवत्त्विषां भुवि तदेव तादृक् पुन-
र्वदेन्ननु वदेन्न तद्यदभवद्रथारोहणे ।
विलोचनचयोत्कथोपरि विभावयत्तच्च किं
शुभानि यदिदंविधं तदनिशं विधत्तां महः ॥ ७४ ॥

किमद्रवमयी सुधा न धवलाकृतिश्चन्द्रिका
न बिन्दुपतनान्विता प्रमदवृष्टिरत्युन्नता ।
शताङ्गमधिरोहतः स्फुरतु कापि केलीमन-
स्तटे तटविटप्यधः स्फुटकुटी नटस्य प्रभोः ॥ ८५ ॥

विकीर्ण इव कुत्रचित् कचन दुर्मदोर्मिक्रमः
क च स्तबकबन्धुरः कचन पूरधौरेयकः ।
क च प्रबलवृष्टिमान् मुहुरुदेति यात्रोत्सवः
स चक्रधरचक्रिचङ्क्रमणकेलिकालोऽवतात् ॥ ८६ ॥

स्थिरश्रवणदिग्गजव्रजकपोलदानापगा-
वगाहगतसम्भ्रमभ्रमरवाञ्छितश्रेयसम् ।
भुजङ्गजगदम्बरावरणदुर्दमाडम्बरां
भजामि हरिचक्रचङ्क्रमणघुङ्क्रियाघोषणाम् ॥ ८७ ॥

किमु स्वभयविद्रवद्दुरितवर्गमार्गं दद-
द्दलेन दलयन् मलं नलिनजाण्डभाण्डोदरम् ।
समुद्धतघनाघनध्वनिनियुद्धबद्धादर-
स्त्रिविक्रमरथारवः श्रवणसीम्नि विश्राम्यतु ॥ ८८ ॥

अदृश्यदुदधेस्तटीनिकटजन्मजन्मावली-
शिरःसुजनजन्मना पदमदायि दृक्पाटवम् ।
पुनर्यदभवन्न तद्वचसि यत्समारम्भणे
स चक्रिगमनक्रमः कमलचक्षुषो रक्षतात् ॥ ८९ ॥

जहाति जननीमनोनयनरङ्करत्नं शिशुं
शिशुर्न जननीस्तनेऽर्पयति चित्तवृत्तिं मनाक् ।
प्रियस्वजतिवल्लभो ......................प्रियां
रथे चलति यत्र नः सृजतु रक्षणं स क्षणः ॥ ९० ॥

प्रमोदजलधौ निमज्जति मनोजलार्द्रा दृशः
कदम्बकुसुमश्रियं हरति वर्षबद्धोऽञ्जलिः ।
प्रधावति जयध्वनिर्निपतितं शिरो भूतले
स कोऽपि समयः क्रियादतिचरित्रचित्रः श्रियम् ॥ ९१ ॥

विनिर्मितबहूत्सवैः परमसम्पदैः स्यूतव-
द्विभूषितवदद्भुतैः समुपलिप्तवत् कौतुकैः ।
करिष्यति कदा दृशोरमृतसेचनं मेचका-
चलाधरकलानिधेरथ विहारकालो मम ॥ ९२ ॥

अखण्डमहिमा भुवो भरतखण्डसीमास्मयः
पयःपतितटीभुवः सुकृतिनः सपत्नोदयः ।
पुनर्जनजनुर्जुषां किमपि वैभवं चक्षुषां
हरेः स्फुरतु मानसे मम स कोऽपि यात्रोत्सवः ॥ ९३ ॥

अहिस्थलतलाद्बहिर्न हि महीजनैर्धिक्क्रिया
 जयध्वनिभरस्फुटद्गगनमेव यस्यायशः ।
मनः सदनमस्तु नो नदनरेन्द्रवेलावनी-
 वनीभवनवासिनः सरभसक्षणः सक्षणः ॥ ९४ ॥

कुलोद्भवकलावतीजनपरिश्रमः सत्क्रिया-
 कथारथमहश्श्लथा यदि च सा पशुव्याप्तृतिः ।
चिरातुरजरावतामपि हि मन्दतादूषणं
 यतः स तनुतां शुभं वनजनेत्रयात्रोत्सवः ॥ ९५ ॥

विपन्मुखममुद्रयद्ध्वजमपातयत् पातकं
 सवेगमुदसारयत् परिकरं गदानां गणः ।
रहस्युदधिवन्मुहुः कमपि मन्त्रमन्तर्व्यथा
 जनोऽयमनुयातुमिच्छति हरेः स पायान्महः ॥ ९६ ॥

समं निजगृहाङ्गणद्रुमफलेन निःश्रेयसं
 विरिञ्चिपदवीकटीकनकवद्भिडौजःपदम् ।
मुखोदरचरत्सुधाकबलवन्महापापिनां
 ययाजनि भयानि सा हरतु कापि यात्रा हरेः ॥ ९७ ॥

रथस्थितमुकुन्दसुन्दरमुखेन्दुसंदर्शन-
 प्रवाहविरहादिव स्वरवकैरवार्तस्वना ।
लुठत्यपि च तिष्ठति क्व च शुचातिमोहेन या
 न यातु मम सा विलोचनपथाद्रथाङ्गावली ॥ ९८ ॥

नितान्तपतिता इति प्रथमतः प्रभूतप्रथा
 रथाङ्घ्रिपदभावतः सुगतयो भवामो वयम् ।
इति प्रतिजनं घनस्तनितकैतवेन ब्रुव-
 द्व्रजे मधुमथो रथोच्चलितचक्रचक्रं हृदि ॥ ९९ ॥

मुकुन्दपदचुम्बनान्निगमशूलिमौलीन्दिरा-
 कुचार्कतनयातटीमुनिमनस्सहाध्यासिनि ।
अनेकसुकृतश्रिया नयनयोर्विहारक्रिया
 भविष्यति कदा रथे मम पृथासुवः सारथे ॥ १०० ॥

सुखैर्ननु तनूततेर्मनुजनुस्समूहैर्दिशां
 मुरारिमुखमाधुरीझरभरैश्च यस्मिन् दशाम् ।
भिदानकिमहो महोऽवतु विलासहासप्रभा
 प्रवालमणिदोलिकानिभरदच्छदस्य प्रभोः ॥ १०१ ॥

पतिः पतितसौहृदो मयि पितापि तादृक् सुतः
 सुतप्रहृदयोदयोद्गमहिमा हि माता न मे ।
मनः श्वशुरयोरयोमयतिले बलं मे बलं
 भवन्निति कदागदी[1]तदितयातनः पातु नः ॥ १०२ ॥

चमूकरिणि मन्दता क्वचन रागभङ्गोद्गताः
 सुगीतिषु नभः पतत्कुसुमकेष्वनुत्कण्ठता ।
शताङ्गचरणेष्वधोगतिरियंविधा यत्र त-
 द्भिनत्तु भवपीडनं मधुमथो रथक्रीडनम् ॥ १०३ ॥

रथप्रवरमेदिनीधरतलावनीसम्भव-
 न्नवीनवनलेखिकावलिकलिप्रगल्भप्रभाः ।
जनास्तनुजिताञ्जनाः कलितरञ्जवो यत्र तं
 शताङ्गसमतां गतेः स्मरतु चित्तमत्युत्सुकम् ॥ १०४ ॥

अनर्गलबलेन यन्मधुरिमा चतुर्दिक्तटीः
 प्रपूरयितुमुत्सुको झरचतुष्टयं पुष्टयन् ।
तटिद्द्युतिविडम्बकृद्वसनपट्टिकाकैतवा-
 द्ददातु मुदमिन्दिराहृदयनन्दनस्यन्दनः ॥ १०५ ॥

इदंविधविलासिनीत्यहृदयत्वमत्युन्नतं
 नितान्तमहतीति चेद्वहति रम्यतां ग्राम्यताम् ।
शिरःशिखरलङ्घिनीत्यनुभवानुलापः कथं
 रथं श्रितवतो गतिप्रमदसन्ततिर्वर्ण्यते ॥ १०६ ॥

मनांसि सुषमासमाधवरथोत्तमस्तामथो
 जनस्तमपि तं पुनः प्रमदसिन्धुवीचीरयः ।
चकर्ष नितरामतो जयति यत्प्रकर्षोदयः
 स नः सृजतु [2]गुत्सवत्कुशलमुत्सवः श्रीहरेः ॥ १०७ ॥

जगद्विजयिमञ्जिमोत्करवरोपलब्धिर्नव-
 प्रसूनशरचातुरीपरिणतिर्गुणानां जयः ।
स यत्र तरुणीगणः प्रणयपूर्णलीलापणः
 स मेऽस्तु कृतरक्षणः सरसिजेक्षणस्य क्षणः ॥ १०८ ॥

दयामधुरिमामृतप्रमदभुक्तिमुक्तिश्रियां
 परस्परगुरोर्विनिस्सरणसंभ्रमाडम्बरः ।

---

1. गदिप्रणतयातनः   2. गुत्सः=गुच्छः

मुहुर्जयति यत्र नो हृदि भवन्तु ताः सङ्कटाः
फटाधरपतेः फटानटनकृत्कटाक्षच्छटाः ॥ १०९ ॥

अपाङ्गतटरिङ्गणस्मितवचांसि वामभ्रुवोऽ-
नुगच्छति यथा यथा कुलभुवस्त्रपाचातुरी ।
कपालिकमलाश्रिता ननु तथा तथा लीलयाऽ-
नुगच्छति यदीयदृग्घ्नतु मदीयदुःखानि सः ॥ ११० ॥

स्पृशन्नमरमण्डलं प्रमथनाथसङ्घट्टितो
रमास्यपरिरम्भकृद्धजनभाजि मज्जन्मुहुः ।
अनाथजनसन्ततौ विहितसीवनः श्रीवन-
प्रभूतनयनस्य पश्यतु समां दृगन्तः कदा ॥ १११ ॥

अखण्डमणिमण्डनत्विषि करावलम्बं द्विष-
द्दिशो हसदनेहसोऽपि च सहायभावं मुहुः ।
किमीहविकसन्मनोनयनमुल्लसद्दुर्लभं
रमारमणरामणीयकमहर्निशं भावयेत् ॥ ११२ ॥

मिलन्निखिलमङ्गलावलिनिवाससीमार्पणा-
मधश्चरणयोर्दधत्प्रपदचर्वितोर्वीतलम् ।
यदीयनृकुलं क्वचिन्मुरहराननश्रीसुधा-
नुधावि नयनं दयाजलधिमन्दयानं भजे ॥ ११३ ॥

निराकृतिपुराकृतप्रचुरपातकान्तः पुनः-
प्रवेशविनिवारकार्गलयुगाभबाहुद्वयः ।
कचावचितपुण्यपादपफलाभिरूर्ध्वोल्लस-
द्भुजा यदवलोकिनः क्वचन धाम तत्कामये ॥ ११४ ॥

कियद्गगनमुद्गतानललता यदा सङ्कटा
धरा यदि नरान्दिश क्वचन पुञ्जदीपत्विषः ।
ततादिविततारवं यदि जगत्कृशं किं सखे
ब्रवीमि मुरजिद्दिनात्ययशताङ्घ्रयात्राश्रियः ॥ ११५ ॥

अनादिमृदुमर्दलैरथ विहारितादृङ्महो
मुदं हृदयमस्त्रवन्नयनयोर्युगं तादृशम् ।
अपायि पुरुषैर्दिशां कुलमघं च यस्मिंस्तथा
स कोऽपि समयः समुत्सवमयः श्रियाणि क्रियात् ॥ ११६ ॥

पिचण्डपरिपूरकाधिकनिपातपीताम्बरा-
ननद्युतिसुधाबहिर्गमभयेन बद्धानना ।
सरोरुहमयी स्वनर्तनमनोज्ञरूपालिका
हरेरलकपालिका भवतु पालिका मादृशम् ॥ ११७ ॥

सारसामर्थ्यसंसारसाधो यशः
सारसानल्पकासारसामन्त हे ।
सारसाप्यब्जवासारसा त्वां कृपा
सारसानन्ददा सारसान्द्रद्युते ॥ ११८ ॥

सुधामारामाराधननिरुपमारातिभयद
स्वनामारामाराजिषु तरुणमारायित भवान् ।
अकौमारा मारालचयसुषमा राजतयशः
श्रियामारामाराद्दशयतु रमाराजधरणेः ॥ ११९ ॥

नवमालिकालिनवमार्थकीर्तिम-
न्नवमानितेन्द्रनवमाष्टदिग्गजाम् ।
नवमारकान्त्यनवमातिदानव-
न्नवमामिलाधनवमापि मत्कृपाम् ॥ १२० ॥

धनव्ययोपमानवर्जितोर्जितार्जमानव-
द्घटच्छटाक्षमानवद्यकीर्तिर्बहिमानवः ।
महोऽप्यहो रमानवर्धतेनसत्तमानव-
न्नवर्णहीनमानवप्रभोविभासमानवः ॥ १२१ ॥

पदांशुखेलन्नखरांशुसम्पदा
पदाहपुष्पायुधकोटिकिंपदा ।
पदाय मूर्तिर्भवतु व्रजापदा
पदाप्तवृंदावनचन्द्रिकापदा ॥ १२२ ॥

समारसम्पद्व्रजभूरमासमा
समाजसौभाग्यकलानिवासमा ।
समापयन्तं शुभकर्मभिः समा
समाकुलं कर्म सदद्य शंसमा ॥ १२३ ॥

॥ इति श्रीकविराज[कृतकृष्ण]स्तुतिः सम्पूर्णा ॥

## ११. ॥ अथ श्रीराजगोपालस्तवः ॥

श्रीराजगोपालमुखारविन्दं
  वन्दामहे मोहनमिन्दिरायाः ।
यदीयसन्दर्शननन्दितानां
  न मुक्तिलाभोदितमोदवाञ्छा ॥ १ ॥

वाञ्छाधिकानेकपुमर्थदान-
  दक्षोत्पलोल्लासिकटाक्षवीक्षम् ।
श्रीराजगोपालमुखामृतांशुं
  पश्येम शश्वद्भवतापनुत्यै ॥ २ ॥

नुतं श्रुतीनां ततिभिस्तताभि-
  स्तथानविच्छिन्नमियत्तयापि ।
श्रीराजगोपाल तवानुभाव-
  मज्ञः कथं स्तोतुमलं भवामि ॥ ३ ॥

भवन्ति लोकाः सकला विचित्रा-
  स्त्वदेकदेशाश्चिदचिद्विशिष्टे ।
श्रीराजगोपाल तव स्वरूपं
  ततो विचित्रं प्रवदन्ति सन्तः ॥ ४ ॥

सन्तस्तुवन्तीश तवानुभावम्
  अन्त(र्मु)स्सुखाः सन्ततयुक्तचित्ताः ।
तापत्रयार्तो विषयानुवृत्त-
  चित्तः कथं स्तोतुमहं प्रवृत्तः ॥ ५ ॥

प्रवृत्त एव स्वयमेव वक्तुं
  पादाम्बुजद्वन्द्वसमाश्रितानाम् ।
विस्रम्भसम्पद्विरहादिहाहं
  त्वां रक्ष रक्षेति कदर्थयामि ॥ ६ ॥

. . . . . . .
  . . . . . . . . ।
तदर्थतत्तत्पुरुषार्थदान-
  गुणप्रदानेन हितायसि त्वम् ॥ ७ ॥

त्वमेक एवासि परं निधान-
मध्यक्षितं भक्तिभराजिताक्षैः ।
विश्वेश शश्वद्बहुशः स्मृतीनां
विश्रान्तिभूमिश्च तथा श्रुतीनाम् ॥ ८ ॥

श्रुतिस्तु सत्त्वोत्तरशास्त्रमासीत्
भवांश्च सत्त्वैकगुणः पुराणः ।
एवं स्थिते त्वत्र कथं नुतः स्या
आकर्षणं[चैव]बलाद्घटेत ॥ ९ ॥

तत्त्वप्रकाशो विशयं श्रुतीनां
विष्वङ्मुखीनामबहुश्रुतेभ्यः ।
"वेदैश्च सर्वैरहमेव वेद्यः"
इत्येवकारेण निराचकर्थ ॥ १० ॥

चकर्थ गीतां यदि वत्सल त्वं
त्वमेव विष्णुर्यदि कृष्णरूपः ।
गीता च मानं यदि तत्त्वसिद्धौ
कुतोऽन्यतोऽस्मत्पदवाच्यता स्यात् ॥ ११ ॥

स्याद्धि प्रमाणं भगवन्नचाल्यं
नाम्नां सहस्रं बहुभिः किमन्यैः ।
जगत्प्रभुं देवमिति प्रकृत्य
त्वमेवमित्यस्य कृतोत्तरत्वात् ॥ १२ ॥

दत्तोत्तरो विष्णुपुराणरत्न-
गतैर्वचोभिर्विचिकित्सितांशः ।
विष्णोः सकाशादिति यान्यवोचम्
सामान्यतः प्रश्नमुपर्यसक्तम् ॥ १३ ॥

असक्तचित्तैः परतत्त्वविद्या-
निष्ठैरनुष्ठानपरैरनेकैः ।
नानादिशास्थैः परतत्त्वरूपं
व्यचार्यहो विष्णुपुराणमानैः ॥ १४ ॥

मानेषु या यत्प्रतिकूलितार्था
सा न स्मृतिः शस्यत इत्युदीर्णा ।
मनुस्मृतिः कर्मसमर्च्यमाह
न्नारायणं त्वां पुरुषं परं च ॥ १५ ॥

चकास्ति यत्सूत्रसमूह एव
सर्वात्मना तत्त्वबुभुत्सुसेव्यः ।
योऽसौ महाभारतवेदमादौ
नारायणस्यैव कथां जगाद ॥ १६ ॥

दयालुनालोड्य समस्तशास्त्रं
नारायणध्येयतमत्वमुक्त्वा ।
भुजं समुद्धृत्य मुनीन्द्रबृन्दे
त्रिः सत्यमित्याह समानमेये ॥ १७ ॥

ये त्वन्यदेवाभ्यधिकत्वमूचुः
केचित् प्रबन्धाः प्रति[कल्प]मान्याः ।
रजस्तमःस्पृष्टचतुर्मुखेन
समीरिता इत्यवधीरितास्ते ॥ १८ ॥

तेनेह मानानि विचार्य सम्यक्
प्रामाणिकाः सत्त्वगुणोत्तरास्त्वाम् ।
श्रीराजगोपाल परं पुमांसं
वदन्ति सन्तो जगदेकहेतुम् ॥ १९ ॥

हेतुत्वमन्यत्र कथं घटेत
संवर्तसिन्धौ सकले विलीने ।
कृत्स्नैः सिसृक्षाकृतयोगनिद्रे
त्वयि प्रमाणैरभिधीयमाने ॥ २० ॥

नेतरस्त्वदीयाखिलकारणत्वे-
नातः परं मानमवेक्षणीयम् ।
यन्नारशब्दाभिहितेषु मुख्य-
स्त्वन्नाभिपद्मादुदभूत् स्वयम्भूः ॥ २१ ॥

भूदेवगुप्त्यै यदवातरस्त्वं
संजायमानो बहुधादिदेव ।
तेनैव केचित्तव भूम्न्यसीम्नि
सिद्धान्ततामानशिरे सशङ्काः ॥ २२ ॥

शङ्का कृता वा यदजो भवन्न-
प्यात्मेच्छयैवावतरामि जन्म ।
कर्माविदित्यं मम वेत्तरेव
जन्मापि न स्यादिति गायसि त्वम् ॥ २३ ॥

त्वदीयकल्याणगुणाकरत्वं
श्रुतं रमेशा......चलन्ति केचित् ।
क्वचित् . . . . . . .
... ... ... ॥ २४ ॥

... ... ...
प्रत्यक्षमुख्याखिलमानवेद्यम् ।
कृत्स्नं च मिथ्येत्यभिधाय मेयं
ये निर्विशेषं च वदन्ति वेद्यम् ॥ २५ ॥

वेद्यं सदक्षैरपि निर्विकल्प
इदंतयासक्तिमुपैति लिङ्गम् ।
व्याप्तिं पुरस्कृत्य तथोपमानं
साम्यं च मेयं गमयत्यदृष्टम् ॥ २६ ॥

दृष्टा हि शब्दस्य च शक्तिधर्म-
पुरस्कृतिर्लक्षणया पदानि ।
सर्वाण्यपि स्वार्थविबोधकानी-
त्युदीरणं हे परिहासयोग्यम् ॥ २७ ॥

योग्ये च शब्दे परिकल्प्य शक्ति-
मन्यत्र सर्वत्र पदे पदज्ञाः ।
सम्बन्धयुक्तेऽनुपपत्तिमेव
दृष्टा श्रयन्तीश्वरलक्षणं च ॥ २८ ॥

चञ्चत्प्रकृत्यर्थमुपर्युदञ्चत्
स्वप्रत्ययार्थत्वविशेषवाचाम् ।
चयः पदानां निजतत्तदर्थ-
भेदोदिताकाङ्क्षकमन्वियाय ॥ २९ ॥

यात्येवमर्थानुसृतिं विहाय
सम्बन्धसिद्धावपि लक्षणां च ।
अलक्षिते लक्षणयाभिधेये
पर्यायभावं वद वाक्यजातम् ॥ ३० ॥

तन्मुच्यतां वाचकताप्रकार-
विचारणा ब्रह्म सलक्षणं च ।
जन्मादिना किं नु विशेष्यमिष्ट-
मुतोपलक्ष्यं सगुणं द्विधापि ॥ ३१ ॥

पिनद्धमेकेन विशेषणेन
गृहादि काकाद्युपलक्षणीयम् ।
अतो बृहत्त्वादिविशिष्टमेव
ब्रह्मोपलक्ष्यं न तु निर्विशेषम् ॥ ३२ ॥

विशेषमालम्ब्य मनोऽप्युपास्तौ
प्रवर्तते ध्येयगतं हि कञ्चित् ।
तथैव विद्याश्च परा गृणन्ति
ततो भवद्भव्यगुणा न मिथ्या ॥ ३३ ॥

मिथ्यागुणोपासनतो यदि स्यात्
उपासनानिर्वचनीयतत्त्वे ।
हे शुक्तिरूप्याधिगमाद्भवेयुः
समाधिभाजो भुवि सर्व एव ॥ ३४ ॥

एवं भगो श्रेष्ठगुणानुबद्धं
त्वां निर्गुणं हेयगुणैरशून्यम् ।
श्रुत्यां वदन्त्यां त्रितयाविरोधात्
सामान्यतो योऽपि विशेषसक्तः ॥ ३५ ॥

सक्तो गुणैर्हेयगुणैरसक्तो
भवान् रमेशोभयलिङ्गयुक्तः ।
अद्रेश्यमव्यक्तमिति प्रवाद्य
प्रत्यक्षितार्थोतिविलक्षणत्वात् ॥ ३६ ॥

त्वमेव जीवं प्रलपन्त्यभेद-
वादादविद्यान्धमुपाधिभिन्नम् ।
प्रकाशमात्रस्य सतस्तिरोधिः
स्वरूपनाशादिभयान्निरस्यः ॥ ३७ ॥

स्यादप्यवच्छिन्नमुपाधिपक्षे
ब्रह्मानवच्छिन्नमतो द्वयं च ।
अयुक्तमेतच्चिदचिच्छरीर-
स्त्वमेक एवासि विभूतिमांश्च ॥ ३८ ॥

चमत्कृतिः सा किल दर्शनीया
यन्मायिनोऽसत्यगिरैव सर्वम् ।
समर्थयन्ते व्यवहारसत्यं
हे शुक्तिरूप्यं च ततः किमासीत् ॥ ३९ ॥

आसीरहेयो भगवंस्त्वमुक्तः
परशराद्यैः परतत्त्वविद्भिः ।
"समस्तकल्याणगुणात्मकोऽसौ"
इत्यादिभिर्वाक्यशतैर्गुणाढ्यः ॥ ४० ॥

आढ्यो विभूत्या परया गुणैश्च
लक्ष्मीमहीभ्यामभिसेव्यमानः ।
पादारविन्दानतसूरिबृन्द-
चक्रादिदिव्यायुधयूथधारी ॥ ४१ ॥

रिरक्षिषासक्तमनोभनोज्ञ-
वपुः किरीटादिमनूपुरान्तैः ।
विभूषणैर्भूषित ईश शेषं
वैकुण्ठलोके त्वमलङ्करोषि ॥ ४२ ॥

करोषि दुग्धाम्बुनिधौ रमेश
शेषे शयालुः सनकादिसेव्यः ।
तापत्रयोपप्लवतप्तचित्त-
चतुर्मुखाभ्यर्थनयावतारान् ॥ ४३ ॥

अवातरस्त्वं प्रथमं विधीश-
मध्ये स्वयं विष्णुसमाह .. ।
.. ... ...
.. .. तनोषि रक्षाम् ॥ ४४ ॥

रक्षन् हि वेदापहृतेर्विरिञ्चि
भवान् महापातकतस्त्रिणेत्रम् ।
प्रद्युम्नसङ्कर्षणरूपतस्तौ
कृत्येष्वधिष्ठाय करोति शक्तौ ॥ ४५ ॥

शक्तिः कुतः स्यात् त्रिदिवाधिराज्ये
पुरन्दरस्य त्वमुपेन्द्ररूपः ।
साचिव्यकारी यदि तस्य नासि
नासीररक्षाकरणैकदक्षः ॥ ४६ ॥

क्षयार्णवे देव चराचराणि
सर्वाणि नापि प्रणिधाय धृत्वा ।
दंष्ट्रैकदेशेन मनोज्ञमीनो
मनोस्तनोषि स्म हितोपदेशम् ॥ ४७ ॥

शं साधुबन्धो मथने पयोधेः
सुधार्थमभ्यर्थनया सुराणाम् ।
पृष्ठप्रदेशोद्धृतमन्थशैलः
कूर्मस्वरूपः समधाः सुधाजम् ॥ ४८ ॥

जन्तून्निमग्नान् प्रलयाम्बुराशौ
विलोक्य लोकेशमहावराहः ।
भूत्वा . . . . भूरिदयोद्धार[दयापूरित उद्धार]
धरां स्वदंष्ट्रामुखतः सखेलम् ॥ ४९ ॥

खेलन्नवल्गत्सटमट्टहास-
स्फुटद्विषन्निष्ठुरधृष्टभावः ।
सैंहं व्यधात् संहननं महत्ते
प्रह्लादमन्वर्थसमाह्वयं हि ॥ ५० ॥

हितं वितन्वन् द्विषते हि याच्ञां
विधाय वेधःकरधौतपादः ।
पादाम्बुजस्यन्दिमरन्दधारा-
शङ्कादगङ्गामकरोस्त्रिलोक्यै ॥ ५१ ॥

लोकक्षयोद्युक्त . . . . लिप्तकृत्स्न-
क्षत्रक्षयाय सृजो जकृत्याम् ।
परश्वथाग्नौ रुधिरह्रदे च
कृताहुतिः कल्पिततर्पणस्त्वम् ॥ ५२ ॥

त्वमीशवंशं मिहिरस्य सीता-
मनो मुनीनामुटजाटविं च ।
क्रमेण सुग्रीवविभीषणर्द्धि-
मलञ्चकर्थादिकवेर्वचांसि ॥ ५३ ॥

सितायुतक्षीरतुला ललास
हलाग्रहेलानवमञ्जरीभिः ।
लीलालता सा किल माधवस्य
समेधिता गोपविलासिनीभिः ॥ ५४ ॥

भिन्नाञ्जनश्यामतनुं मनोज्ञं
सशङ्खचक्राग्रचतुर्भुजाढ्यम् ।
पीताम्बरं कौस्तुभभूषितं त्वां
तुष्टाव देवक्यवलोक्य सूनुम् ॥ ५५ ॥

स्तुवन्नमन् स्वं वसुदेव आत्म-
जातं परं त्वामभिवीक्ष्य साक्षात् ।
संसारनिस्तारमयाचमानः
कंसादहिंसां तव याचते स्म ॥ ५६ ॥

स्मरन्ति सन्तोऽप्यनघं भवन्तं
स्वस्रीयमात्मान्तकरं निशम्य ।
कंसो निहन्तुं चकमेऽनघं त्व-
मघातयश्चित्रमिदं स्वसारम् ॥ ५७ ॥

सारं स्वकं दर्शयितुं यदीह
हन्तुं द्विषन्तं यदि वाभिलाषः ।
पीतस्तनायास्तव पूतनाया
वयोविधेर्नाथ परं विरुद्धम् ॥ ५८ ॥

विरुद्धचित्तः शकटासुरस्ते
पादारविन्दद्वयभाङ्ममार ।
निरन्तरप्रीतिकृतो मुकुन्द-
पदारविन्दं स्मृतिमृग्यमासीत् ॥ ५९ ॥

आसीत्तृणावर्तसमुत्थचक्र-
वात्यासमुत्थापितमस्य वीक्ष्य ।
कण्ठं गृहीत्वाथ निहत्य मह्यां
शिशुं शयालुं जननी सशङ्का ॥ ६० ॥

शङ्का यशोदाहृदयोदितापि
सा जृम्भमाणे वदनारविन्दे ।
प्रदर्श्य विश्वं विशदं विचित्रं
न चित्रमत्रेति निराकृताभूत् ॥ ६१ ॥

भूमौ ममाङ्घ्रिद्वितयाश्रितानां
स्वकर्मनाशेन न कर्मबन्धः ।
न कर्मनैरर्थ्यमपि प्रसज्ये-
तेत्ति स्वयं तादृशपाशबद्धः ॥ ६२ ॥

बद्धस्त्वमस्ताश्रितकर्मबन्ध
हैयंगवीनापहृतिं विधाय ।
शापाददाः मोचनमर्जुनाभ्या-
मुलूखलाकर्ष[ण]लीलयैव ॥ ६३ ॥

. . . .
. . . . ।
कथं तथाप्यर्जुननाशहेतु-
भूतां व्यतानीरतिबाललीलाम् ॥ ६४ ॥

लास्यं सुरस्यं नवनीतमोष-
रोषोपशान्त्यै व्रजसुन्दरीणाम् ।
पुरः करस्थे नवनीत[भाण्डे]
व्यधा यथा ता हृषिता भवेयुः ॥ ६५ ॥

युतोऽग्रजेनेश समग्रबाल-
लीलारसौघान् रसिकोपसेव्यान् ।
देवक्यलभ्यान् कलभप्रगल्भ
सदा यशोदासुलभान् व्यतानीः ॥ ६६ ॥

नीतं त्वया दुग्धमुखं यदृद्धिं
नन्दव्रजे नन्दितगोकुलेन ।
श्रीराजगोपाल सबाललीलं
स्तेयेन तत्सर्वमहार्यनूनम् ॥ ६७ ॥

नूनं मिथो गोपवधूमनोऽपि
मनोहरस्त्वं नवनीतचोरः ।
मोहाज्जवेनापजहर्थ तेन
नातानि ता[भि]स्त्वयि रोषलेशः ॥ ६८ ॥

शस्ते त्वया वत्सल वत्सदैत्ये
त्वत्पालितान् बाल विलासकाले ।
वत्सान् विशङ्के त्रिदशांस्त्वदीया-
वतारचारित्रसरूपरूपान् ॥ ६९ ॥

पातुं गवां बृन्दमथ प्रवृत्तो
बृन्दावनान्ते यदुनन्दन त्वम् ।
वेणुक्वणेनेव विधाय तृप्तिं
निवर्तयामासिथ चित्रचर्य ॥ ७० ॥

यदा भवान् भावुकवेणुनादा-
दुन्मादयामास तदा त्वदादि ।
जडाजडात्मत्वविभागशून्य-
महो बभूवाखिलमन्यदेव ॥ ७१ ॥

देवेश तादृङ्मुरलीनिनाद-
सोन्मादचित्ता व्रजसुन्दराङ्गथः ।
त्यक्तान्ययोगास्त्वयि सानुरागा
बभूवुरित्यत्र विचित्रता का ॥ ७२ ॥

कान्तस्मितालङ्कृतवक्त्रचन्द्र-
सङ्क्वणद्वेणुकनत्कराब्जम् ।
व्यत्यस्तपादाम्बुजमम्बुजाक्ष
भवद्वपुर्भक्तजनोपजीव्यम् ॥ ७३ ॥

व्यक्तोक्तिभङ्गी मुरली सखी ते
घोषाङ्गनानां कृतचित्तमोहा ।
शृङ्गारलीलारसचारुरास-
विलाससाचिव्यकरी किलासीत् ॥ ७४ ॥

सीदत्सु सर्वेषु विषाग्निमिश्र-
कृष्णापयःपानवशात् किशोरः ।
भवानभीः कालियमस्तरत्न-
रुच्यर्चिताङ्घ्रिः प्रणनर्त चित्रम् ॥ ७५ ॥

त्रातस्त्वसौ केशवशेषितोऽपि
शेषत्वसम्पद्भवनं बभूव ।
नृत्यत्त्वदीयाङ्घ्रियुगाङ्कनेन
नित्यप्रसक्तस्वफणासहस्रः ॥ ७६ ॥

सहस्रसङ्ख्यैः सपयोभिरह्नि
सह स्वचित्तानुविधायिकृत्यैः ।
गोपालबालैर्यमुनावनान्ते
तदीयदारैर्व्यहरद्रजन्याम् ॥ ७७ ॥

न्याय्यं किमेतद्व्रजकन्यकासु
सरोविहारैकपरासु राजन् ।
गृहीततीरस्थदुकूलक स्म-
कुन्दस्थितः प्रार्थयसेऽञ्जलिं ताः ॥ ७८ ॥

ताभिः कृतश्चैककराञ्जलिस्त्वं
कार्यान्तरासक्तकरान्तराभिः ।
अकार्यमेवाकथयो विधिज्ञ
विरोधगन्धोऽत्र कथं विधीनाम् ॥ ७९ ॥

नान्यच्चरित्रं भवतोऽतिचित्रं
यत्सप्तवर्षोऽपि च सप्तवर्षात् ।
दीनानि दीनानि गवां कुलानि
लीलोद्धृताद्रिः समपालयस्त्वम् ॥ ८० ॥

त्वदीयसङ्कल्पलवेन देव
रक्षा यदि स्थावरजङ्गमानाम् ।
महीध्रमुद्धृत्य भुजेन वर्षात्
गोगोपरक्षा रचिता नु चित्रा ॥ ८१ ॥

त्रातुं त्वयि स्वानचिरादरातीन्
निराचिकीर्षत्यपि कंसकर्णे ।
जजाप बृन्दावनवासिनं त्वां
त्वरान्वितस्तस्य वधे सुरर्षिः ॥ ८२ ॥

सुरर्षिवृन्दैरपि चिन्त्यमानं
पादारविन्दं तव नन्दसूनो ।
ब्रह्मा . . . . . . .
स्थिरत्रसानां सुलभं बभूव ॥ ८३ ॥

वधाय कंसस्य रथाधिरूढे
विहाय गोपीं मधुरां यथासौ ।
. . . . . . . . .
. . .निरणायि भोगः ॥ ८४ ॥

गच्छंश्च वीथ्यां मथुरावधूभिः
कुब्जाङ्गवैरूप्यनिराकृतिज्ञः ।
बालः किलायं वसुदेवसूनु-
रिति स्मरस्मेरमुदीक्ष्यसे स्म ॥ ८५ ॥

स्मृतत्वदीयाखिलबाललीलौ
जगत्पितस्त्वं पितरौ विमुच्य ।
बन्धाद्व्यधाः कंसकृता स्वरूप-
साक्षात्कृतिप्रीतियुतौ नितान्तम् ॥ ८६ ॥

नितान्ततान्तां शिशुपालपाप-
प्रसक्तिवार्ताश्रवणेन कृष्ण ।
त्वां रुक्मिणीं रुक्मसमानशोभा-
माहृत्य हृद्यामकृथाः कृतार्थाम् ॥ ८७ ॥

अर्थादमर्त्याधिपतेरमित्रान्
संहर्तुमुद्युक्तमना मनाक् त्वम् ।
सत्यानुरोधादकरोन्मुरारे
पुरं सुरावासमपारिजातम् ॥ ८८ ॥

तं त्वां भजन्तः शरणं शरण्यं
रणेषु पार्थात्र भवत् कृतार्थाः ।
पाञ्चालपुत्रीपरिभूतिधूति-
प्रवीणनामस्मरणप्रभावा ॥ ८९ ॥

भावाहितत्वन्महिमप्ररोहा
भर्तुः शुकव्यासपराशराद्याः ।
श्रीराजगोपाल तवाखिलासु
लीलासु कूलङ्कषवाग्विलासाः ॥ ९० ॥

विलासवत्यंसकसव्यहस्तं
स्मेराननाब्जं कमनीयकायम् ।
करान्तरेणादृतकेलियष्टि-
मभीष्टदं त्वां शरणं भजेयम् ॥ ९१ ॥

जयं यदीदं कलिकालखेलद्
दुर्वृत्तजातं तव कल्किमूर्त्या ।
अद्यैव सद्याचनयानवद्य
तथा यतेथाः स्वजनावनाय ॥ ९२ ॥

यदेव देवात्र परत्र चापि
हितं सतां चानुमतं हितज्ञ ।
तन्मे तवाङ्घ्री शरणं गताय
रम्यं रमाधीश विधेहि सम्यक् ॥ ९३ ॥

समीच्यसम्यक्त्वधिया विमुग्धो
समीचि सम्यक्त्वधिया च नाथ ।
कथं त्वहं मे हितमेतदेव
तदेव देहीत्यपि याचिताहे ॥ ९४ ॥

हे देव भोगीशखगेशमुख्यै-
र्दिव्यैर्दिवारात्रविभागशून्यम् ।
संसेव्यमानं तव पादपद्म-
युगं कदाहं करवाणि साक्षात् ॥ ९५ ॥

क्षान्तिः क्षमानाथ मदीयदोष-
लाभादलभ्यादखिलेऽपि लोके ।
अतीव सौहित्यमुपेत्य मुक्तिं
बद्धात् स्वतन्त्रान्मम संविधत्ताम् ॥ ९६ ॥

तामेव देवीं शरणं प्रपद्ये
दधाम हेतुं महतीं त्वदीयाम् ।
यासीत् स्वयं संसृतिचक्रवात्या-
भ्रमातिदुःख्यज्जनजीवनाय ॥ ९७ ॥

यत्सत्सु वात्सल्यमिति प्रसिद्धं
त्वदीयकल्याणगुणेषु रत्नम् ।
तदेव पूर्वोत्तरदोषराशी
उपेक्ष्य रक्षेदिति निश्चयो मे ॥ ९८ ॥

मेधा दृढा माधव ते परत्वेऽ-
प्यपायतायां यदुपेयतायाम् ।
परीक्ष्य रक्ष त्रितयं तदेतत्
समग्रमागोऽन्यदुपेक्षणार्हम् ॥ ९९ ॥

अर्हद्भिरङ्घ्र्योर्भवतोऽर्पितं मां
सहास्मदीयेन दयार्द्रचित्त ।
श्रीराजगोपाल तथा विधेहि
यथा भवेयं भृतकिङ्करश्रीः ॥ १०० ॥

॥ इति श्रीराजगोपालस्तवः सम्पूर्णः ॥

---

## १२. ॥ अथ श्रीगोसखपञ्चविंशतिः ॥

मार्कण्डेयकवेरजाखगपतिप्रह्लादसंसेवितं
सेवे गोसखमम्बुजाक्षममलं कारुण्यवारां निधिम् ।
भूमौ चेतनरक्षणार्थमजरो योऽवातरच्छ्रीपतिः
स्वच्छाम्भोभरदर्शपुष्करणिकातीरे सुरम्यो हरिः ॥ १ ॥

वन्दिषीय जलधे[स्सुता]पतिं
नन्दगोपसुतमाश्रितेष्टदम् ।
नीलमेघनिभविग्रहं हरिं
दर्शतीर्थतटमास्थितं विभुम् ॥ २ ॥

श्रीमन्तं वरदममुं भजेऽहमाद्यं
गोपालं व्रजयुवतीविहारलोलम् ।
देदीप्यन्मणिमयहारवक्षसं तं
[गोविन्दं]निगमशिखासु वेद्यरूपम् ॥ ३ ॥

श्रीगोसख त्वमधिकोऽपि महेश्वराणां
वेदा[न्त]वेद्यनिजरूपगुणप्रतापः ।
बद्धोऽसि यत् [धनदपुत्र]विमोक्षहेतु-
रज्ज्वा स्त्रिया कथय किं भवतो हि लीला ॥ ४ ॥

श्रीदर्शतीर्थतटखेलनतत्परादौ
बाणाहवे जितमपि श्रितकामधेनुः ।
पुत्रार्थमिन्दुशिरसं भगवान् हिमाद्रौ
गत्वा त्वयाचत भवान् किमहो करोति ॥ ५ ॥

पुरा जरासन्धमहोऽवधी रिपुं
न मानवोऽशक्त भुजाहवे सकृत् ।
अनीनयः पुत्रमुदारशक्तिको
गुरोः समीपं यदुवंशनायकः ॥ ६ ॥

विचित्रतेजोगुणयुक्त[रूपः]
सालद्रुमाद्रीनिपुणा विभेद ।
भवान् ययाचे कपिमल्पवीर्यं
ममानुकूल्यं कुरु सूर्यजेति ॥ ७ ॥

श्रीगोसख श्रितजनावनबद्धदीक्ष
देवादिनाथमकुटोज्ज्वलरत्नकान्त्या ।
नीराजिताङ्घ्रिजलजद्वय पाहि मां त्वं
कारुण्यदर्शितशिशुक्रम देवदेव ॥ ८ ॥

भजे मुरारे भवदीयपाद-
मनन्यबुद्ध्या भववार्धिपोतम् ।
उदार मां पालय मन्तुगेहं
न चेद्भवेद्वत्सलता प्रयाता ॥ ९ ॥

स्वामिन्नभीष्टवरदाखिललोकबन्धो
सूर्येन्दुलोचन रतीश सुरम्यमूर्ते ।
रत्नोज्ज्वलन्मकुटरम्यशिरस्क पाहि
श्रीदर्शपुष्करिणिकातटवासलोल ॥ १० ॥

वन्दे तं गुणवारिधिं व्रजसु[ता]लीलापरं गोसखं
[1]वत्साघाश्वदवाग्निधेनुकतृणावर्तेभमल्लान्तकम् ।
लीलामानुषविग्रहं गिरिवरं मुक्त्वा[धृत्वा]शचीशाज्ञया
वर्षत्यम्बुवहे भृशं निज[जन]स्त्रीगोपरक्षाकरम् ॥ ११ ॥

यो ननर्त स्वनन्नूपुरार्णोजप-
द्विस्तरे कालियस्योत्तमाङ्गे चिरम् ।
चञ्चलद्बर्हनीलालकास्याम्बुजं
दर्शतीर्थस्य कूले हरी राजते ॥ १२ ॥

पार्श्वस्थया श्रियासौ
नन्दतनूजो विराजते शार्ङ्गी ।
ऐन्द्रधनुर्वैद्युतरक्तो
नीलाम्बुधरो द्युरत्रेव [इवाकाशे] ॥ १३ ॥

क्षीराब्धेर्मथनं चकारिथ पुरा धृत्वाचलं मन्थरं
कूर्माकारधरो द्विशीर्षमहिराडज्ज्वा कराब्जेन यः ।
आलम्ब्याश्रितवत्सलः सुरगणैः संप्रार्थ्यमानः सुधां
प्रादादत्र भवान् जनाव[नक्]ते त्वं सन्निधत्स्व स्वयम् ॥ १४ ॥

श्रीपादपद्मौ भज मानसाले
सन्तापहारप्रथितौ मनोज्ञौ ।
उज्जीवनेच्छा यदि ते मुरारे
श्रीगोसखस्याब्धिसुतासखस्य ॥ १५ ॥

पूर्वं व्रजे सुनवनीतमचूचुरस्त्वं
गोपीगृहेषु दययाहृतशैशवोऽत्र ।
अद्यापि देव गुणमर्मविचित्रवेषै-
र्गृह्णासि सेवकजनस्य मनो रमेश ॥ १६ ॥

गोविन्द गोपसुत नक्तञ्चरेशसुतनागास्त्रमोषितबलो
निस्सङ्गकोऽपि रणत्रज्या हरन्न रघुवीर . . . लघुबलः ।
आदातुकाम रुधिरा . . . शयिनेतुरतिदुर्धर्ष एव भगवन्
सोऽयं दयाम्बुनिधिरस्मान् हि पातुमिह मान्द्योल्बणान् सुवससी(?)॥१७॥

ववन्दे बिम्बोष्ठं मणिमयकिरीटोज्ज्वलममुं
सुनासं नीलान्तोद्भानितधनुं सुभ्रुलतिकम् ।

---

1. वत्साहीवृषभाश्वदावति...योरक्तेभमल्लान्तकम् ।

दरस्मेरास्येन्दुं परिससूबाहुं सवसनं
पयोजाक्षं रम्भार्तिकरवरोरुं भुजपदम् ? ॥ १८ ॥

रक्ताब्जलोचना[ढ्यदेवं]चक्रगदाखड्गधरं शार्ङ्गाड्यम् ।
तं नौमि गोपसूनुं गोसखमम्भोजसम्भवद्ध्येयम् ॥ १९ ॥

गोसखमम्भोजलोचनं नौमि पीतवाससम् ।
हृदयाब्जनिकेतनं प्रभुं पिञ्छाचूडं सुन्दराङ्गकम् ॥ २० ॥

कुचेलेनानीतं पृथुकमतिरिक्तेन भगवन्
सुभुक्त्वातिप्रीत्या फलसुमजलाद्यैरुपचरन् ।
भवान् प्रादात्तस्मै निरवधिकमैश्वर्यमतुलं
रमेशोदारत्वं त्वयि तु किमहोऽगण्यविभवम् ॥ २१ ॥

शरणमेति महः परमं परं
गुणनिकेतनमब्धिभवासखम् ।
त्रिदशसेव्यमचिन्त्यमजं स्थिरं
लसितदर्शतटे स्थितमादिमम् ॥ २२ ॥

छेत्ता कंसादिसकलशत्रोः
भर्ता रत्नाम्बुजातदयितायाः ।
कर्ता ब्रह्मादिसकलसृष्टेः
भोक्ता स स्यादधिकमुदे मे ॥ २३ ॥

दुष्टक्षोणीपतिनिकुरुम्बं
हत्वा तुत्वा तद्रक्तसरसि पूर्वकृष्ण ।
हे राम त्वं पितृकुलत्रस्तेरुग्रो
नैवापाम्भोऽप्यपाय उर्वीभारम् ? ॥ २४ ॥

शठमथनवरवरमुनिमुखकलित-
नुतिवचनविषयमिह वरये ।
पशुसखमहिपतिशयमुपरिचर-
वसुनरपतिविनुतपदकमलम् ॥ २५ ॥

रक्ताब्जनायिकां तां करुणारूपामहंभजेय मुग्धाङ्गीम् ।
अर्थिसखकल्पवल्लीं गोसखदयितां सभूषणां देवीम् ॥ २६ ॥

निःसमाभ्यधिको लोके जीयादाचन्द्रतारकम् ।
कृष्णो रक्ताब्जनायिकानाथो भक्तेष्टदोऽधिकम् ॥ २७ ॥

॥ इति सुदर्शनवरददासकृतगोसखपञ्चविंशतिः सम्पूर्णा ॥

---

## १३. ॥ अथ श्रीकृष्णमङ्गलम् ॥

मङ्गलं बालकृष्णाय दिव्यलीलाय मङ्गलम् ।
मङ्गलं नीलवर्णाय मातृमान्याय मङ्गलम् ॥ १ ॥

मङ्गलं रुक्मिणीशाय जगदीशाय मङ्गलम् ।
मङ्गलं यदुनाथाय दीननाथाय मङ्गलम् ॥ २ ॥

मङ्गलं देवदेवाय वासुदेवाय मङ्गलम् ।
मङ्गलं नन्दपुत्राय सदानन्दाय मङ्गलम् ॥ ३ ॥

मङ्गलं पूतनाहन्त्रे लीलामर्त्याय मङ्गलम् ।
मङ्गलं शकटच्छेत्रे पद्मपादाय मङ्गलम् ॥ ४ ॥

मङ्गलं वत्सपालाय विश्वपालाय मङ्गलम् ।
मङ्गलं योगिमृग्याय गोपमित्राय मङ्गलम् ॥ ५ ॥

मङ्गलं बालगोपाय ब्रह्मविद्याय मङ्गलम् ।
मङ्गलं कमलाभर्त्रे गोपीकान्ताय मङ्गलम् ॥ ६ ॥

मङ्गलं मातृबद्धाय जडघ्नायास्तु मङ्गलम् ।
मङ्गलं क्रीडते स्त्रीभिः कुन्दारूढाय मङ्गलम् ॥ ७ ॥

मङ्गलं द्विषते क्रूरान् प्रियाक्रूराय मङ्गलम् ।
मङ्गलं वल्लवीभर्त्रे कंसघ्नायास्तु मङ्गलम् ॥ ८ ॥

मङ्गलं प्रीतभक्ताय विद्यावासाय मङ्गलम् ।
मङ्गलं मागधजिते द्वारकेशाय मङ्गलम् ॥ ९ ॥

मङ्गलं पार्थसुहृदे जितदैत्याय मङ्गलम् ।
मङ्गलं रुक्मिणीजाने रुक्मिणीशाय मङ्गलम् ॥ १० ॥

मङ्गलं नैकरूपाय नरदैत्याय मङ्गलम् ।
पुत्रिणे नित्यरूपाय ब्रह्माचार्याय मङ्गलम् ॥ ११ ॥

मङ्गलं द्रौपदीड्याय मानदायास्तु मङ्गलम् ।
मङ्गलं प्रियभक्ताय भक्तपालाय मङ्गलम् ॥ १२ ॥

मङ्गलं दिशते कामान् विप्रप्रार्थ्याय मङ्गलम् ।
मङ्गलं [शिष्टपालाय]भारघ्नायास्तु मङ्गलम् ॥ १३ ॥

मङ्गलं मायिनेऽमायसारथ्यायास्तु मङ्गलम् ।
मङ्गलं पूर्णरूपाय गीताचार्याय मङ्गलम् ॥ १४ ॥

मङ्गलं विश्वरूपाय योगिध्येयाय मङ्गलम् ।
मङ्गलं विश्वगुरवे कृपावासाय मङ्गलम् ॥ १५ ॥

मङ्गलं ज्ञानरूपाय सर्वाभिज्ञाय मङ्गलम् ।
मङ्गलं सर्वशक्ताय महासत्त्वाय मङ्गलम् ॥ १६ ॥

मङ्गलं दिव्यवीर्याय माहैश्वर्याय मङ्गलम् ।
मङ्गलं ते[ऽच्युता]य सत्कुलत्राणाय मङ्गलम् ॥ १७ ॥

॥ इति श्रीकृष्णमङ्गलं सम्पूर्णम् ॥

---

## १४. ॥ अथ श्रीकृष्णस्तुतिः ॥

सृजद्रक्षत्संहरद्यद्विश्वमात्मनि मायया ।
तद्ब्रह्म दद्याद्ब्रह्मास्मीत्यनुभूतिमयीं धियम् ॥ १ ॥

श्रीमत्यां द्वार्वत्यामासीनं कल्पपादपाधस्तात् ।
मणिमण्डपान्तरब्जे विद्याश्रयमाश्रये परं धाम ॥ २ ॥

ह्रीमत्या रतिमत्या रुक्मिण्या सत्यभामया चापि ।
ऊरुस्थितयोपासे श्लिष्टमविद्याश्रयमहं धाम ॥ ३ ॥

क्लींकारात्मकमूर्तिः स्फूर्तिः सत्ता च सकलस्य ।
मायिमहोऽञ्जननीलं सच्चित्सुखरूपमनिशमाशासे ॥ ४ ॥

कृतसक्तिभक्तिमति प्रसृमरमदने च गोपयुवतिजने ।
मणिमकुटाङ्गदकटकप्रभृतिभिरिद्धो हरिर्मुदे नः स्तात् ॥ ५ ॥

ष्णाधातुवाच्यनिरतैर्जपद्भिरनिशं स्मरद्भिश्च ।
मुनिभिरुपासितमीडे गोपालं नारदप्रमुखैः ॥ ६ ॥

यमवरुणसोमशक्रप्रभृतिभिरमरैरुपास्यमानाय ।
कृष्णायास्तु नमः सत्सुखमयपरमार्थरूपाय ॥ ७ ॥

गोपवधूनां निकरैः प्रियमुखपद्मोत्कलोचनभ्रमरैः ।
विश्लथनीवीकबरैः परिवृतमीडे परं महस्तदहम् ॥ ८ ॥

विन्यस्य वेणुमधरे नादब्रह्मामृतोदधौ भुवनम् ।
मग्नं कुर्वाणा मे निर्वाणायास्तु भावना काचित् ॥ ९ ॥

दानवरक्षोयक्षप्रेतोरगसिद्धकिन्नरप्रमुखैः ।
परिवृतमस्तु परं तद्वस्तु विभूत्यै यदोः कुलाभरणम् ॥ १० ॥

यमिनामन्तः स्वान्तं बद्धस्थितये नमोऽस्तु चिद्वपुषे ।
गोविन्दायासुसमाकटाक्षवीक्षाद्विरुक्तनीलिम्ने ॥ ११ ॥

गोघटया परिवीते गोपालैरपि च धाम्नि निर्विकृतौ ।
विहरतु मानसमनिशं यन्तरि कुन्तीसुतस्य मम ॥ १२ ॥

पीताम्बरोज्ज्वलश्रीश्रीवत्सोद्भासितोरस्का ।
कौस्तुभकृतमणिभूषा रक्षतु मां भाग्यपरिणतिर्महताम् ॥ १३ ॥

जलजारियोगमुद्रावेणुगदाभासुराष्टभुजम् ।
प्रणतिपरदुरितनिकरप्रमथनकृतदीक्षमच्युतं नौमि ॥ १४ ॥

नरसुरनारकतनुभृद्धृदयगुहागूढनिजमहिमा ।
वनमालया निवीतः परमात्मा स्फुरतु मम हृदये ॥ १५ ॥

वल्लवसुचरितमव्यात् सव्याग्राश्लिष्टजानुदक्षपदम् ।
कामदनारतविगलद्रत्नघटन्यस्तपादुकमस्मान् ॥ १६ ॥

लक्ष्मीवक्षोजमिलद्घुसृणारुणवर्णवक्षसं वन्दे ।
अङ्कस्थितदयिताभ्यामभिषिक्तं रत्नधारया शौरिम् ॥ १७ ॥

भासुरभूसुरनिकरैर्विचीयमानोऽच्युतस्त्रयीशिरसि ।
मम सुरतरुमञ्जर्या दिशतु मुदं मणिभिरभिषिक्तः ॥ १८ ॥

यश्च प्रकृतेस्तस्याः कार्याणां प्रेरकोऽहिराजेन ।
सिक्ताय नमो रत्नैर्गोपीजनवल्लभायास्मै ॥ १९ ॥

स्वाश्रयमेतद्विश्वं स्वमपि च विश्वाश्रयं विदुर्हि बुधाः ।
यन्नमनात् सकलैरप्यभिषिक्तो मणिभिरवतु मां स हरिः ॥ २० ॥

हारं यद्धाम बुधाः स्वात्मनि पश्यन्ति सोऽहमिति ।
तदतिप्रसन्नवदनं स्वाहाजानिर्ममास्त्वविद्यायाः ॥ २१ ॥

मन्त्राक्षरारब्धमुखार्णपद्यां-
तद्ध्यानवाच्यप्रकटोक्तिहृद्याम् ।
मन्त्रार्णमालां दधतोऽनवद्यां
यतो लभेरन् परमात्मविद्याम् ॥ २२ ॥

व्रजरमणीरमणीयकटाक्ष-
भ्रमरघटारभटीपरिशोभि ।
कपटशिशोरशिवप्रतिघातं
मुखनवतामरसं मम कुर्यात ॥ २३ ॥

॥ इति श्री कृष्णस्तुतिः समाप्ता ॥

———

## १५. ॥ अथ श्रीविंशत्यक्षरीध्यानम् ॥

श्रीमत्यां द्वारवत्यां नवकनकमये भूतले रत्नवद्योः
मध्ये कल्पद्रुमाधो विविधमणिलसन्मण्डपे सन्निविष्टम् ।
चक्रं शङ्खं च वेणुं नलिनमथ गदां योगमुद्रां दधानं
वन्दे संसिच्यमानं मणिमयकलशैर्वल्लभाभिर्मुकुन्दम् ॥ १ ॥

॥ इति श्रीविंशत्यक्षरीध्यानं सम्पूर्णम् ॥

---

## १६. ॥ अथ श्री अष्टाक्षरीध्यानम् ॥

वेदान्तस्वद्रुमायस्तलपरिलसिताष्टाक्षराष्टच्छदाब्जे
तिष्ठन् वामाङ्घ्रिणासावितरपदतलं वामतोऽग्रे निधाय ।
बिभ्रत् सर्वा विभूतीर्मणिगणविलसद्भूषणश्यामलश्रीः
शब्दब्रह्मात्मवेणुं भुवनधृतिहरं नादयन् माधवोऽव्यात् ॥ १ ॥

॥ इति श्री अष्टाक्षरीध्यानम् ॥

---

## १७. ॥ अथ श्रीपूर्णत्रयीशस्तोत्रम् ॥

पूर्णत्रय्याख्यपुर्यां हरिभवननिभे स्वालये सन्निषण्णः
पीठे हैमे स कृष्णः फणिवरलसितो हारकोटीरधारी ।
केयूरैः कुण्डलैस्तैर्मणिवरकटकैर्भूषणैर्भासुराङ्गो
माटश्रीरामभूपं कठिनकवचधृक् पातु पूर्णत्रयीशः ॥ १ ॥

पूर्वं यः कंसहेतोर्निजपितृजननीभ्यां स्तुतो बालकृष्णो
जातः पित्रा निशायां व्रजपतिरमणीसूतिकागेहमध्यम् ।
संनीतः स्वीयताते व्रजपतितनयां संप्रयाते गृहीत्वा
माटश्रीरामभूपं मृदुहसनपरः पातु पूर्णत्रयीशः ॥ २ ॥

बालघ्नी पूतना सा शिशुहननकृते प्रेषिता नन्दगेहं
कंसेन क्रूरबुद्ध्या यदुपतितनयं शङ्कमानेन कृष्णम् ।
संप्राप्य स्तन्यदुग्धं निजमुखकमले दातुकामां सजीवं
स्तन्यं पीत्वाहनत्तां नृपकुलतिलकं पातु पूर्णत्रयीशः ॥ ३ ॥

हेमाढ्ये तल्पवर्ये व्रजपतिसुदृशा शायितो जातनिद्रः
तत्काले चागतं तं शकटदितिसुतं योगदृष्ट्या निशाम्य ।
स्तन्यार्थी रुद्यमानो निजचरणयुगेनोत्क्षिपन् दैत्यहेयं[देहं]
छिन्नाभिन्नाङ्गसन्धिं त्वतनुत स नृपं पातु पूर्णत्रयीशः ॥ ४ ॥

कंसेन प्रेषितं तं निजहननविधौ चक्रवातस्वरूपा-
दात्मानं संगृहीत्वा गतमपि च तृणावर्त[नामानमा]शु ।
कण्ठे निष्पीड्य कोपाद्विगलितरसनं शीर्णनेत्रं व्यधाद्यः
सोऽयं तं रामभूपं गुणनिधिमनिशं पातु पूर्णत्रयीशः ॥ ५ ॥

कस्मिन् काले तु गोपैर्यदुपतितनयौ रामकृष्णौ च पांसु-
क्रीडां सञ्चक्रतुस्ते मृदुमिति बुभुजे चीचिरे नन्दपत्न्यै।
दृष्ट्वा पुत्रस्य वक्त्रं त्रिभुवनसहितं नन्दपत्नी सुभीता
तां पश्यन् मन्दहासं बहुतरमतनोत् पातु पूर्णत्रयीशः ॥ ६ ॥

बालोऽसौ गोपगेहे व्रजकुलरमणीष्वन्यगेहं गतासु
पीठे पीठं विनिक्षिप्य च शिशुमपरं पृष्ठभागेऽस्य तिष्ठन्।
भित्त्वा शिक्यस्थभाण्डं त्वमृतरससमं पीतवानाशु दुग्धं
माटश्रीरामभूपं शशिनिभवदनं पातु पूर्णत्रयीशः ॥ ७ ॥

अङ्कं त्वारुह्य मातुर्द्रुततरमथनं चावरुध्य प्रवृत्तं
स्तन्यं पातुं निजाङ्कात् . . . जननीं स्थापयित्वा च चुल्ल्याम्।
क्षिप्तं दुग्धं ग्रहीतुं त्वगमदथ दृषद्भिन्नपात्रः प्रयातो
हृत्वा हैयङ्गवीनं नृपमणिमपि यः पातु पूर्णत्रयीशः ॥ ८ ॥

संप्राप्योलूखलाग्रं निभृतपदमदं तं च हैयङ्गवीनं
[1]मर्केभ्यः संप्रदाय द्रुततरनयनं वीक्ष्य तिष्ठन्तमारात्।
भिन्नं दध्नोऽपि भाण्डं निजकरमथ सङ्गृह्य बद्धस्तु दाम्ना
[गोपस्त्रीभिः]स कृष्णो नृपममलधियं पातु पूर्णत्रयीशः ॥ ९ ॥

आकृष्योलूखलं यः करचरणयुगैश्चङ्क्रमन् बालकृष्णः
संदृष्ट्वा शापहेतोर्धनपतितनयौ भूरुहत्वं प्रपन्नौ।
भित्वा चोलूखलात्तौ धृतनिजवपुषौ प्रेष्य पश्चात् स्वलोकं
वृक्षस्थो मन्दहासं बहुतरमतनोत् पातु पूर्णत्रयीशः ॥ १० ॥

गोप्यस्ता नन्दपत्नीं निजगदुरथ ते पुत्र आगत्य गेहं
वत्सान् बद्धान् विमुञ्चत्यथ पिबति पयस्तक्रभाण्डं भिनत्ति।
पश्चाद्धैयङ्गवीनं हरति परिहसन् बालमुन्मर्द्य याती-
त्येवं चाक्रुश्य याता हसति स च वधूः पातु पूर्णत्रयीशः ॥ ११ ॥

वीथ्यां क्रीडन् स रामो निजपितृजननीभ्यां मुदालङ्कृताङ्गः
क्रीणीध्वं सत्फलानीत्यथ वचनमहो क्रीणयित्र्या निशम्य।
धान्यान्यादाय दत्त्वा त्ववददथ स तां मानय त्वं फलानि
धान्यानीत्थं गृहीत्वा फलमथ बुभुजे पातु पूर्णत्रयीशः ॥ १२ ॥

---

2. मर्कः=मर्कटः

दृष्ट्वा ह्युत्पातसङ्घान् व्रजपतिरभितो तत्र वस्तुं हि नालं
निश्चित्यैवं स गोपैर्व्रजकुलरमणीभिश्च गोभिः समेतः ।
बृन्दारण्यं प्रपेदे त्वथ हरिरभजत् गोपवत्सैर्घनान्ते
तिष्ठन् गच्छन् हसन् यो मुदमिममलं पातु पूर्णत्रयीशः ॥ १३ ॥
बृन्दाकान्तारमध्ये पशुगणमभितश्चारयन् रामयुक्तो
दृष्ट्वा दैत्यं बकं स्वग्रसनपरमथो ह्रासयित्वात्मदेहम् ।
दग्ध्वा[गत्वा]तत्तालुमूलं तदनु दितिसुतं छिद्यमानस्तमेनं
द्वेधा कृत्वा सतुण्डात् मुदमगभदमुं पातु पूर्णत्रयीशः ॥ १४ ॥
कस्मिन् काले तु गोपा वनभुवमगमन् चारयन्तोऽथ वत्सान्
लीलार्थं भूषयन्तः स्तबकफलसुमैः काचगुञ्जाफलैः स्वान् ।
दध्मुः शृङ्गाणि वेणून् पिकरुतमपरे चक्रिरे कीशचेष्टां
गायन्तस्तांश्च पश्यन् मुदमगमदसौ पातु पूर्णत्रयीशः ॥ १५ ॥
तस्मिन् बृन्दावनान्ते व्रजकुलतिलकोऽघासुरं भोगिरूपं
तद्वत् क्रान्तः प्रविष्टान् व्रजशिशुपशुकान् वीक्ष्य चान्तः प्रविश्य ।
वृद्धिं गत्वा तदास्ये तदुदरवसतः प्राणवातान्निरस्या-
रक्षत्तान् गोपवत्सानमृतमयदृशा पातु पूर्णत्रयीशः ॥ १६ ॥
गास्तास्ता वत्सयुक्ता वनभुवमभितश्चारयन् गोपबालै-
र्वेणुं शृङ्गं च कूजन् श्रममगमदिने मध्यकालं प्रपन्ने ।
बद्ध्वा तद्भानुपुत्रीतटभुवि पुलिने चाधिनिक्षिप्य गोपैः
भुञ्जन् नृत्यन् हसन् यो मुदमगमदमुं पातु पूर्णत्रयीशः ॥ १७ ॥
तत्काले लोककर्ता पशुकुलमनयच्चान्यदेशं तदानीं
याते कृष्णे विचेतुं त्वनयदपि शिशून् गाश्च गोपांश्च दृष्ट्वा ।
कृत्वात्मानं द्विधा यः पशुशिशुवपुषं गोत्रवर्णस्वरूपं
तत्तद्देहं प्रविष्टः स्मितमुखकमलः पातु पूर्णत्रयीशः ॥ १८ ॥
[1]मुञ्ज .. .. न्नृण परीतो गोकुलै गोपसङ्घा
गावस्तास्ते न दृष्ट्वा यदुकुलपतये प्रोचुराराद्भ्रमन्तः ।
तच्छ्रुत्वाहूयमाना यदुकुलतिलकेनाययुस्ताः स्वनाम्ना
दृष्ट्वा यः प्राप मोदं नरवरमनघं पातु पूर्णत्रयीशः ॥ २६ ॥

---

1. तद्वर्षान्तेऽथ गावः क्षितिधरशिरसः स्वीयवत्सान् निशाम्य
प्रीताः प्रापुस्तद . . . . . . . . . . . . . . ॥ १९ ॥

Only the 3rd Pāda and a portion of the 4th Pāda of verse 19 are available. Stanzas 20-24. are missing.

. . . . . . . . . . . . . . . . . . . . . . . . .
. . . . . . . . . . . प्रहृष्टो नृपभतुलगुणं पातु पूर्णत्रयीशः ॥२५॥

Only a portion of the 4th Pāda of verse 25 is available.

मुञ्जारण्ये समन्ताद्विपिनमुखभवो धूमकेतुर्दवाग्निः
सर्वान् वृक्षान् परीत्य द्रुततरमुदभूज्जिह्वया लेलिहानः ।
दृष्ट्वा गा वत्सयुक्ता व्रजकुलतनयाश्चुक्रुशुः कृष्णरामौ
तद्दृष्टिं मीलयित्वा स्वयमपिबदमुं पातु पूर्णत्रयीशः ॥ २७ ॥

कृष्णायाः कूलदेशे निशि पशुपसुता भूरि सम्भूय कृष्णं
गायन्त्यः प्रार्थयानाः पतिमिति नितरां कामतप्ता जगुस्ताः ।
त्वन्नाथास्त्वां भजामः कुरु पदमयि नः कामतप्तस्तनेषु
चेत्येवं प्रार्थितस्तास्त्वभजत कृपया पातु पूर्णत्रयीशः ॥ २८ ॥

चापस्थेऽर्केऽर्कपुत्र्यास्तटभुवि वसनान्याशु संक्षिप्य नीरं
संयाता गोपिकास्ता द्रुततरमपहृत्यांशुकान्याप वृक्षम् ।
गृह्णीध्वं चेत्यनुक्त्वा[चैनमद्धा]वसनगणमथेत्युक्तवन्तं समीक्ष्य
मुग्धास्ता भूरिलज्जास्त्वपगतमतयो नम्रमुख्यो बभूवुः ॥ २९ ॥

भूयस्तास्त्वेत्य शीघ्रं करतलवसनैर्योनिमाच्छाद्य नेमुः
नालं कृष्णेन चोक्ताः प्रणमनमिति ताः स्निग्धमुख्यस्तदानीम् ।
साञ्जल्यस्तं प्रणेमुर्विकसितवदनो वस्त्रपूगं ददौ यः
स्वीकृत्यैतद्दधुस्ताः स्मितमुखकमलाः पातु पूर्णत्रयीशः ॥ ३० ॥

गोबृन्दैर्गोपबृन्दैर्वनभुवमगमत्तत्र वृक्षान् स दृष्ट्वा
प्राहेत्थं गोपवत्सानमृतनिभफलैः पुष्पबृन्दैर्लताभिः ।
सुच्छायाभिर्नितान्तं पथिकजनकृते चोपकुर्वन्ति वृक्षाः
प्रेक्षध्वं पुण्यवृक्षानिति यदुतनयः पातु पूर्णत्रयीशः ॥ ३१ ॥

बृन्दारण्येऽथ गास्तास्तृणगणमशितं भक्षितुं चारयन्तो
गोपालाः क्षुत्पिपासाश्रममुषितधियस्तत्र तत्र स्थितास्ते ।
तान् दृष्ट्वा गोपवर्यः श्रमजलमलिनान् गोपवत्सान्नितान्तं
तेषां रक्षाविधौ यो मतिममुमतनोत् पातु पूर्णत्रयीशः ॥ ३२ ॥

गोपानां भोजनार्थं मखयजनपरान् ब्राह्मणान् पृष्टवन्तो
भिक्षां देहीति गोपा न तु ददुरथ ते कृष्णवाक्याच्च पत्नीः ।
ता दत्त्वा पूर्णमन्नं यदुकुलपतये मोदमापुस्तदन्नैः
योऽरक्षद्गोपवत्सानमुमपि कृपया पातु पूर्णत्रयीशः ॥ ३३ ॥

यागान् सन्धातुकामं व्रजपतिमवदद्देवनाथेन किं न-
स्त्वस्मद्गोरक्षकाय त्वगकुलपतये यागवर्याः क्रियन्ताम् ।
इत्युक्त्वा चाद्रये तान् व्रजकुलपतिना कारयित्वा मुदा तान्
नन्दादीन् प्राह तुष्टस्त्वहमिति स नृपं पातु पूर्णत्रयीशः ॥ ३४ ॥

गोपेन्द्रात् स्वीययागप्रतिहतिकुपितेनाशु देवाधिपेन
सन्दिष्टैर्मेघवृन्दै[र्व्रज]भुवि नितरां वर्षवत्यां कृतायाम् ।
गोपालैः प्रार्थितो यः सरभसमचलं छत्रवद्वामहस्तात्
धत्ते गोवर्धनाख्यं नृपवरमनघं पातु पूर्णत्रयीशः ॥ ३५ ॥

गोपास्ते नन्दमूचुस्तव शिशुरिति कः पूतनाजीवहन्ता
धून्वानोऽहन् स्वपादं शकटमपि तृणावर्तमालिङ्ग्य कण्ठम् ।
हृत्वा हैयङ्गवीनं व्रजपतिरमणीबन्धितोलूखलेऽन्तः
गच्छन्तौ वृक्षभूतौ धनपतितनयौ भूतलेऽपातयच्च ॥ ३६ ॥

आत्मानं हन्तुकामं बकमपि मुखतो पाटयद्दैत्यहेयं
नागेशः सूर्यपुत्र्याः पदकमलयुगोन्मन्ध्यनीतोऽन्यदेशम् ।
शृण्वन् गोपालवाक्यान्यवददथ हसन् गर्गवाक्यानि नन्द-
स्त्वित्थं चाश्चर्यकारी व्रजपतितनयः पातु पूर्णत्रयीशः ॥ ३७ ॥

आसाराद्रक्षितायां व्रजभुवि सुरराट् कामधेन्वा समेत-
स्त्वागत्यारात् सुभीत्या पदयुगमनमत् क्षाम्यतामित्यमुष्य ।
स्तुत्वाथो भक्तिपूर्वं सुरसुरभियुतः प्राभिषिच्याबदत्तं
गोविन्देति प्रसिद्धोऽभवदमुमपि यः पातु पूर्णत्रयीशः ॥ ३८ ॥

एकादश्यां स नन्दस्त्वनशनवशतस्तद्दिने मध्यरात्रे
कालिन्द्यां स्नातुमाराद्गमदपहरत्पाशिदूतोऽसुरोऽमुम् ।
श्रुत्वा चातः स कृष्णो जलपतिभवनं पूजितस्तेन भक्त्या
तातं स्वीकृत्य तुष्टो व्रजमगमदमुं पातु पूर्णत्रयीशः ॥ ३९ ॥

नन्दो गोपानवोचत् प्रहसितवदनः पाशिलोकेऽस्य पूजां
श्रुत्वा भक्त्या प्रणेमुस्तदनु मुररिपुः स्वीयभक्त्या प्रहृष्टः ।
वैकुण्ठं त्वानयित्वा[तांश्च नीत्वा]निजपितृसविधे दर्शयित्वा च तेभ्यः
स्वं रूपं नीतवान् यः स्वभुवनमपि तं पातु पूर्णत्रयीशः ॥ ४० ॥

कस्मिंश्चिद्रात्रिकाले शरदि वनभुवं सङ्गतः केलिहेतो-
स्तस्मिन् काले सुधांशुर्दिवमगमदथो वेणुगानं स चक्रे ।
तच्छ्रुत्वा गोपिकास्ता द्रुततरमगमन् यत्र कृष्णोऽवतस्थे
हित्वा कार्याण्यहेतोर्निजभवनभवान्याशु कामाभितप्ताः ॥ ४१ ॥

काश्चिद्धित्वाथ वत्सान् घटमथ पयसः स्थापितं चुल्लिकायां
हित्वा दोहं दुहन्त्यस्त्वशनमथ पराः पाययन्त्यः शिशूंश्च ।
शुश्रूषन्त्योऽथ भर्तॄन् सुमगणमपरा धारयन्त्योऽङ्गरागं
त्वञ्जन्त्यस्त्वक्षियुग्मं विलुलितचिकुरा लोलवस्त्राङ्गभूषाः ॥ ४२ ॥

भर्त्रा पित्रा च मात्रा स्वसृसुतसखिभिर्भ्रातृभिर्बन्धुवर्गैः
संप्रेत्यावार्यमाणा हरिहृतमतयः प्रापुराराद्धरिं ताः ।
कृष्णो दृष्ट्वावदत्ताः कुहननरवपुः भर्तृपुत्राः[श्वसख्यः]
कुप्यन्ति भ्रातरस्ते निजभवनमतो गम्यतां मा चिरं वः ॥ ४३ ॥

इत्युक्ताः शुष्ककण्ठास्त्वथ हरिमवदन् मन्दमन्दस्वरास्ताः
पृष्टो धर्मस्त्विदानीं न च पितृसहजा मातरः कोपमीयुः ।
त्वन्नाथास्त्वां भजन्तीर्भुज[स्त्वयि]मदनहतास्त्वेवमुक्तोऽभजद्यः
तां रात्रिं क्रीडमानो मुदमगमदमुं पातु पूर्णत्रयीशः ॥ ४४ ॥

इत्येवं क्रीडमानो व्रजकुलरमणीभिः सतोषं तदानीं
दृष्ट्वा गर्वं स तासां नरवरसदृशश्शीघ्रमन्तर्धिमाप ।
कृष्णं नालोकमाना द्रुततरमबलास्तत्र तत्र प्रचेलु-
स्त्वन्वेषन्त्यो नितान्तं वनभुवमभितः क्लिष्टबुद्ध्या प्रतप्ताः ॥ ४५ ॥

वृक्षान् दृष्ट्वालपन्त्यः किमु यदुतनयं दृष्टवांश्चूत वृक्ष[नाली-]
केर त्वं वा कपित्थानस पनसवराश्वत्थ नीपार्जुन त्वम् ।
सिंह त्वं पुण्डरीक त्वमपि करिवर त्वं हि पक्षिप्रवीर
हंस त्वं चक्रवाक त्वमपि च कृपया नन्दसूनुं वदेति ॥ ४६ ॥

गच्छन्त्योऽन्यत्र देशे पदयुगयुगलं वीक्ष्य काचित्तु गोपी
नाथेनान्यत्र नीता शुभगुणसहितेत्यूचिरे तां च दृष्ट्वा ।
पृच्छन्त्यो गोपवर्यं पुनरपि पुलिनं प्राप्य सर्वाश्च गोप्य-
स्तिष्ठन्त्यश्चालपन्त्यो हरिमथ नितरां मुक्तलज्जाः प्रलेपुः ॥ ४७ ॥

वल्लव्यः प्रोचुरन्याः स्मरमुषितधियो भाति ते जन्मनाम्ना
नित्यं नृत्तं करोति व्रजभुवि नितरां वर्धते गोकुलं नः ।
पाहि त्वं कामतप्ता द्रुततरमधुनालिङ्ग्य मोदं कुरुष्वे-
त्येवं संप्रार्थितो यः पशुपवरसुतः पातु पूर्णत्रयीशः ॥ ४८ ॥

प्रोचुस्ता गोपदाराः पुलिनतलगताः पूर्णचन्द्राननं तं
हित्वास्मान् कुत्र यातो मनसिजनिभ हे नः पुरस्तात् त्वमेहि ।
धम्मिल्लेऽस्मान् गृहीत्वा विगलितवसनास्त्वाशु चुम्बस्व गण्डे
वक्षोजौ मर्दय त्वं कनकघटनिभौ नाथ किं वाद्य कुर्मः ॥ ४९ ॥

धेनुस्वामिन्न याहि द्रुततरमधुना कामतप्तस्तनीनां
त्वस्माकं बिम्बतुल्यं त्वमृतरसयुतं चाधरोष्ठं पिब त्वम् ।
इत्येवं प्रार्थितो यो व्रजकुलरमणीभिस्तदा प्रादुरासीत्
तासां प्रीतिं च कुर्वन् स्मितकमलमुखः पातु पूर्णत्रयीशः ॥ ५० ॥

कृष्णं दृष्ट्वा तु गोप्यः स्मितमुखकमलाः शीघ्रमाश्लिष्य सत्यः
रासक्रीडां प्रचक्रुस्त्वथ हरिसहिता गानपूर्वं सनृत्तम् ।
कृष्णो गोपी च कृष्णस्त्वथ पशुपसुतेत्येवमावृत्य हस्तान्
आश्लिष्य प्रेमयुक्ताः स तु मुदमगमत् पातु पूर्णत्रयीशः ॥ ५१ ॥

कृष्णो नन्दादिगोपा वनमुखमगमन् सेवितुं चाम्बिकां तां
स्नात्वा सारस्वतेऽथोऽम्बुनि मुनिकुसुमैरर्चयन्तः शिवौ तौ ।
गोवस्त्रादीन् द्विजेभ्यो ददुरुदकमथो प्राश्य भक्त्या नितान्तं
देवौ संप्रार्थ्य भूयस्त्वभिमतमपि ते भक्तभक्तौ विजह्रुः ॥ ५२ ॥

तस्यां रात्र्यां तु नन्दं त्वजगरजरठस्त्वग्रहीद्भक्षणार्थं
चुक्रोश त्राहि कृष्णेत्यजगरमुखतो नन्दवाक्यं निशम्य ।
गत्वा पादेन हित्वोरगपरिबृढकं को भवानित्यपृच्छत्
श्रुत्वा कृष्णस्य वाक्यं द्रुततरमवदद्भक्तिपूर्वं विनम्रः ॥ ५३ ॥

स्वामिन् मे श्रूयतां भो जगति मम गतिस्त्वङ्गिरोत्राह्मणेन्द्रं
विद्याद्ध्रुक् प्राहसं सत्ववददिति रुषा चोरगत्वं प्रयाहि ।
त्वत्पादस्पर्शमुक्तोऽभवमनुजानीहि गन्तुं सुदर्शं
त्वित्युक्तोऽयं हि चोक्त्वा मुदमगमदमुं पातु पूर्णत्रयीशः ॥ ५४ ॥

कस्यां रात्र्यां स रामो वनमगमदसौ गोपनारीजनौघै-
र्गायंश्चिक्रीड तस्यां निधिपसहचरः शङ्खचूडोऽभ्युपेत्य ।
तन्नाथं स्त्रीसमूहं भयरहितमनाः प्रैरयद्दिश्युदीच्यां
क्रोशन्तं कृष्ण रामेत्यथ निजसुहृदा गाय[काल्य]मानौ वनान्ते ॥५५॥

तच्छ्रुत्वा रोदनं तौ जगदतुरभयं सालहस्तौ प्रयातौ
तौ दृष्ट्वा विद्रुतोऽसौ युवतिजनमवन् सीरपाणिर्व्यतिष्ठन् ।
कृष्णो हत्वा च हृत्वा तमपि मणिवरं दत्तवानग्रजाय
प्रीतास्ता गोपवध्वः स च मुदमगमत् पातु पूर्णत्रयीशः ॥ ५६ ॥

गोप्यः कृष्णं ह्यदृष्ट्वा निजगदुरथ ताः कार्यमन्यद्विहाय
चान्योन्यं वेदयुक्ता निजहनुममलां वामभागांसदेशे ।
क्षिप्त्वा वेणुं सरन्ध्रं त्वधरपरिसरे चाङ्गुलीभिः पिधाय
सभ्रूभङ्गं त्वपोह्य त्वमृतरससमं यत्र गानं करोति ॥ ५७ ॥

हे गोप्यो नन्दसूनुर्निजचरणगतान् गोपनारीजनौघा-
नस्मान् हित्वा प्रयातः क्व नु भुवनतले वेणुगानं प्रकुर्वन् ।
श्रुत्वा यद्वेणुगानं गगनमनुगताः सिद्धपत्न्योऽथ सिद्धान्
हित्वा तान्ता अभूवन् स्मरमुषितधियो मूर्छिता मुक्तलज्जाः ॥ ५८ ॥

हे गोप्यो हन्त हन्त स्वकरजलभवेनाथ संगृह्य शृङ्गं
कच्छे धृत्वा च वेणुं ह्युरसि मणियुतां हारवल्लीं प्रधार्य ।
ध्मानं कुर्वन् प्रयातः सुरवरसुदृशो यस्य नादं निशम्य
देवान् हित्वा स्मरार्ता मुमुहुरथ मुहुः स्निग्धमुख्यो नितान्तम ॥ ५९॥

हे गोप्यो नन्दपत्नी वदनवनभुवोन्मेषकारी दिनेशः
सालिर्बर्हावतंसः स्मितकमलमुखः पुण्डरीकायताक्षः ।
वेणुं गायन् क्व यातो वृषमृगपशवो वेणुनादं यदीयं
श्रुत्वा तद्दत्तकर्णा विगलितकबलाश्चित्रभूता भवन्ति ॥ ६० ॥

वल्ल्यो गोपचोरो द्रुततरमपहृत्याथ यातः क्व वासौ
यास्माकं चित्तरत्नं हृदयपिठरगं वेणुगानं प्रकुर्वन् ।
गन्धर्व्यो यस्य गानं स्वरवरसहितं प्रीतिपूर्वं गृणन्त्यो
निन्दन्त्यः स्वीयगानं सुमृदुकलगिरः कामतप्तास्त्वभूवन् ॥ ६१ ॥

हे गोप्यो गोपवेषो निजकरकमले धारयन् यष्टिमेकां
संयुक्तो गोपवत्सैर्वनभुवि रणयन् वेणु[नादं]क्व यातः ।
व्यत्यस्ताङ्घ्रिर्यदीयं मृदुतरनिनदं सर्पवर्यास्तु पीत्वा
संश्लाघन्ते शिरोभिर्मणिवरसहितैर्दीर्घजिह्वे प्रसार्य ॥ ६२ ॥

इत्थं गोपीजनैर्यो निजविरहवशाद्दूयमानान्तरङ्गैः
भूयः प्रस्विन्नगात्रैर्विगलितवसनैर्भूयसाकृश्यमानः ।
वत्सान् संप्रेर्यमाणः पशुपसुतगणैर्गीयमानात्मकीर्तिः
तं कुर्वन् वेणुनादं व्रजकुलमगमत् पातु पूर्णत्रयीशः ॥ ६३ ॥

गोष्ठं प्राप्तस्त्वरिष्टः खरतरमतुलं रम्भमाणः सुशृङ्गः
तं दृष्ट्वा कृष्ण कृष्णेत्यव तव सुहृदः शृङ्गिणो भीतभीतान् ।
इत्येवं चुक्रुशुस्तं वृषमवनितले शृङ्गयोः संप्रगृह्णन्
निष्पिष्यारादरक्षद्धरिरथ सुहृदः पातु पूर्णत्रयीशः ॥ ६४ ॥

केशी कंसस्य मित्रं व्रजमगमदसौ वाजिरूपोऽतिकायो
धून्वन् बभ्रूः सटाः स्वाः खुरदलितमहीरेणुभिश्छन्नगात्रः ।
पद्भ्यां हत्वा हरिं तं व्यनददथ रुषा कम्पयन् गोपसङ्घान्
धून्वानः स्वीयपुच्छं त्वतिकुपितमनाश्चण्डवेगोऽञ्जनाभः ॥ ६५ ॥

तत्क्षेपं वञ्चयित्वा हरिरथ जगृहे पादयोर्भ्रामयित्वा
चिक्षेप क्रोशमात्रं पुनरपि स रुषा लब्धसंज्ञस्तमाप ।
तस्यास्ये स्वीयबाहुप्रसरणमतनोत्तेन दग्धोऽपतत् सः
गोपास्ते मोदमापुः स्वयमपि नृवरं पातु पूर्णत्रयीशः ॥ ६६ ॥

लीलां नीलायनाख्यां पशुपसुतवराश्चक्रुरन्योन्यमेत्य
केचित् पालास्तु चोरास्त्वजकुलमिति तान् योऽहरच्चोररूपी ।
व्योमो नीत्वाद्रिकुञ्जे पुनरपि हरणे चोद्यतं वीक्ष्य वक्षो-
देशं भित्त्वा त्वरक्षत् पशुपशिशुगणान् पातु पूर्णत्रयीशः ॥ ६७ ॥

अक्रूरः कंसवाचा व्रजमगमदथो रामकृष्णौ ननाम
ताभ्यां संपूज्य पश्चान्निजपितृचरितं कंसवाक्यं निशम्य ।
नन्देनालोच्य राज्ञे करमपि च घृतं क्षीरमादाय गोपैः
नन्दाद्यौ रामकृष्णौ ययतुरथ रथपृष्ठमारुह्य शीघ्रम् ॥ ६८ ॥

तत्काले गोपकन्या निजगुणमनुसृत्यादराद्दुःखितास्ताः
वाचा स प्रेमदृष्ट्यामृतकरनिभया प्रेरयन्नाप कृष्णाम् ।
तस्यां स्नातुं प्रविष्टो यदुवरतनयौ वीक्ष्य चोन्मज्ज्य याने
दृष्ट्वाक्रूरः स कृष्णं फणिवरशयितं प्राप मोदं नितान्तम् ॥ ६९ ॥

नत्वा स्तुत्वा जलौघे फणिवरशयनं कृष्णमुन्मज्ज्य यानं
संप्राप्तः कृष्णरामौ निजनुतिमुदितौ नन्दगोपाद्यनेकैः ।
नीत्वा कंसपुरीं नितान्तमधुरामावेद्य कंसाय तौ
प्राप्तौ स्वीयगृहं जगाम स हरे राज्ञां प्रगृह्यानमन् ॥ ७० ॥

द्रष्टुं तां मधुरां ययौ बलमुतो गोपैर्वृतः सर्वतो
हृत्वा वस्त्राणि पुष्पाण्यपि बहुरुचिरं कुङ्कुमं चन्दनं च ।
कुब्जां तामतनोन्नितान्तरमणीं तद्याचितः प्राह यः
कृत्वा कार्यं व्रजे ते सदनमिति मुदा पातु पूर्णत्रयीशः ॥ ७१ ॥

पृष्ट्वा शालां प्रयातं वधिमपि गजं वीक्ष्य मार्गे स्थितं तं
मार्गादानात् स कृष्णो गजमथ तरसोन्मथ्य चोत्पाट्य दन्तम् ।
अम्बष्ठं चापि हत्वा करिवररदनात् युद्धरङ्गं प्रयातौ
दृष्ट्वा चाणूर ऊचे स्मितमुषितमना मुष्टिकश्चाब्जनाभौ ॥ ७२ ॥

मल्लोन्मल्लौ युवां तौ नृपसद इदमप्यत्र युद्धं च कुर्मः
चाणूरो मुष्टिकोऽसौ निजकरयुगमास्फाल्य चोरुप्रदेशम् ।
बद्ध्वा चान्योन्यहस्तान् द्रुतपदयुगलं चिक्षिपुर्दूरदूरं
वक्षोभिर्मुष्टिभिस्तेऽप्ययुयुधुरथ पुनर्जानुभिश्चोत्तमाङ्गैः ॥ ७३ ॥

चाणूरं संप्रगृह्णन् युधि यदुतिलको भ्रामयित्वा कुपृष्ठे
चास्फाल्यापेषयत्तं द्रुतमथ स बलो मुष्टिकं मुष्टिहत्या ।
कूटं चापेषयत्तं शलमथ कुपितस्तोसलं गोपवर्यो
मल्लास्त्वन्येऽथ रङ्गाद्द्रुततरमगमन् भीतभीताः समन्तात् ॥ ७४ ॥

दृष्ट्वाथो रामकृष्णावतिकुपितमनाः प्राह निःसार्य तान्ता-
विज्युक्ते मातुले स्वे द्रुतमगमदसौ मञ्चवर्यं सभायाम् ।
रोषात् केशान् प्रगृह्य स्वकरकमलतोऽपातयद्युद्धरङ्गे
तस्मिन् कंसे पतित्वाख्यनुमतनुत यः पातु पूर्णत्रयीशः ॥ ७५ ॥

हत्वा युद्धे च कंसं त्वथ बलसहितो मोचयित्वा स बन्धा-
दम्बां तातं च नत्वा सविनयमनघौ तस्थतुः साञ्जली तौ ।
तावाश्लिष्य स्वपुत्रौ प्रमुदमगमतामुग्रसेनाय राज्यं
दत्त्वा यः प्राप मोदं नृपममलधियं पातु पूर्णत्रयीशः ॥ ७६ ॥

नन्दं प्रत्यर्च्य गोपान् धनवसनवरैः प्रेषयित्वा व्रजं तान्
संप्राप्तौ ब्रह्मचर्यं स्वकुलगुरुमुखाद्गर्गसंज्ञां श्रुतिं तौ ।
काश्यां सान्दीपिनेश्च प्रथितगुरुवराल्लब्धविद्यौ प्रभास-
क्षेत्रे नष्टं समुद्रे स्वतनयमवृणोत् निष्क्रियार्थं गुरुस्तौ ॥ ७७ ॥

तौ गत्वा याम्यगेहं गुरुसुतमधुना चानयेत्युक्तमात्रौ
नेतारं च जनं ततोम्बुधिजले हत्वा तदङ्गोद्भवम् ।
शङ्खं हत्वाथ गत्वा यमपुरिशयनात् प्राप्य पुत्रं गुरोस्तौ
दत्त्वा देशिकपुङ्गवाय तदनुज्ञातौ पुरीं जग्मतुः ॥ ७८ ॥

कृष्णोऽयं चोद्धवं तं निजसखमवदद्गच्छ शीघ्रं व्रजं तं
तातं नन्दं यशोदां व्रजकुलरमणीः सान्त्वसन्देशतो मे ।
आयाहि [हीति] प्रयुक्तो व्रजमगमदथो स्यन्दनेन प्रपूज्य
नन्दोऽयं यस्य लीलाश्रवणलसितधीः पातु पूर्णत्रयीशः ॥ ७९ ॥

गोप्यो दृष्ट्वोद्धवं तं भ्रमर इति धिया चाब्रुवन् वञ्चकस्य
बन्धुस्त्वं मा स्पृशाङ्घ्रिं त्वितरयुवतिभिर्दत्तमाल्याङ्गरागः ।
बिम्बाभं चाधरोष्ठं सकृदपि हृदयं वल्लवीनां वनान्ते
क्रूरेणाक्रूरनाम्ना पुरमनुगमितस्तस्य दूतो हि तस्मात् ॥ ८० ॥

भृङ्गास्मत्सन्निधौ तं यदुपतिमगुणं गायसि त्वं किमर्थं
स्त्रीणां वक्षोजयुग्मग्रहणपटुतरं धूर्तलोकाग्रगण्यम् ।
तासां स्त्रीणां पुरस्ताद्विजयसखममुं गीयतां तास्तदानीम्
इष्टं ते कल्पयन्ति व्रजपतिशिशुना भुज्यमानास्त्रयो याः ॥ ८१ ॥

ऊचुर्गोप्यः षडङ्घ्रिं कपटयदुपतेर्भूतले वा रसायां
स्वर्लोके वा दुरापाः किमिति युवतयो हासशृङ्गारभूम्नः ।
हित्वा बन्धून् पतीन् तान् यमनिशमगमामास्य वाक्याद्वयं नः
कुर्यात् किं प्रेमदृष्टिं बहुतरमलपंश्चोद्धवाग्रे हि कृष्णम् ॥ ८२ ॥

श्रुत्वा गोपीविलापं यदुवरसचिवः प्राह गोपीरथायं
प्रेष्ठो युष्मत्कृते मां व्रजकुलमधुना प्राहिणोत् सान्त्वयेति ।
अत्रागत्याथ शीघ्रं भजति च भवतीरित्थमुक्त्वा प्रयातो
श्रुत्वा सर्वं च सख्युर्मुदमगमदसौ पातु पूर्णत्रयीशः ॥ ८३ ॥

सैरन्ध्रया मन्दिरं तत् प्रययतुरनघश्चोद्धवश्चक्रपाणिः
तत्पूजां प्राप्य पश्चाच्छयनवरमथो प्राप्तवान् कामतप्ताम् ।
आलिङ्ग्याहो स्त्रियं तामभजत विमलां भूयसामन्त्र्य यातो
माटश्रीरामभूपं स्वभवनमथ यः पातु पूर्णत्रयीशः ॥ ८४ ॥

कृष्णो रामोद्धवाभ्यां द्रुतमगमदथाक्रूरगेहं वरिष्ठं
दृष्ट्वा तौ रामकृष्णौ प्रणमनमकरोद्भक्तिपूर्वं स ताभ्याम् ।
पूजाभिः पूजयित्वा पदयुगमनयोरभ्यषिञ्चत् स तोयैः
पीत्वा पूतोऽभवत्तन्मृदुहसनपरोऽक्रूरमूचे तदानीम् ॥ ८५ ॥

दाशार्हाक्रूर गत्वा पुरवरमधुना हस्तिनाख्यं तु कुन्तीं
तत्पुत्रांस्तातहीनान् कुरु नरपतिना पत्तनं संप्रणीतान् ।
दृष्ट्वा वृत्तान्तमेषां कुरु नगरपतेरन्धनेत्रस्य भूयो
ज्ञात्वा चायाहि शीघ्रं त्विति यदुपतिना प्रेषितस्तत्र यातः ॥ ८६ ॥

गत्वा कुन्तीं सपुत्रां त्वनुनयवचसा सान्त्वयित्वान्धनेत्रं
दृष्ट्वान्यान् द्रोणभीष्मप्रभृतिकुरुवरान् पाण्डुपुत्रास्त्वदीयाः ।
पोष्यास्ते तातहीनास्तव पदशरणा यामि राष्ट्रं त्विदानी-
मित्युक्त्वागत्य यस्मादवददमुमसौ पातु पूर्णत्रयीशः ॥ ८७ ॥

श्रुत्वा कंसं हतं तं रथकरिहरिभिः पत्तिसङ्घैर्जराया
अत्रायं मागधाख्यो यदुपुरमगमत् कंसहन्त्रा नियोद्धुम् ।
कृत्वा युद्धं स रामान्निहतनिजबलो बन्धितः कृष्णमुक्तो
दुःखार्तोऽगात्तदानीं सुरगणनुदितः पातु पूर्णत्रयीशः ॥ ८८ ॥

इत्थं त्वक्षोहिणीभिर्दश च पुनरसौ सप्तवारं च युद्ध्वा
भग्नो भूत्वाथ यातस्तदनु यवनपः स्वीयसैन्यैर्निरुद्धः ।
तत्काले द्वारकायां निजजनमनयद्योगमायाप्रभावात्
तद्रक्षायै बलं चागमयदथ हरिः पातु पूर्णत्रयीशः ॥ ८९ ॥

पुर्या निष्क्रान्तमेनं स तु यवनवरः प्राद्रवन्निद्रितं तम्
अद्रेरन्तर्गुहाया नृपतिमथ पदाहत्य तद्दृष्टिदग्धः ।
भस्मीभूतस्तदानीं यदुपतिरगमत्तत्पुरस्तात् स दृष्ट्वा
नत्वा संप्राप्य चेष्टं तपसि कृतमनाः प्रापयाद्रिं नृपेन्द्रः ॥ ९० ॥

प्रत्यावृत्याथ राज्यं यवनगणवृतं संहरन् म्लेच्छसङ्घान्
हृत्वा द्रव्यं प्रयातौ यदुवरतनयौ मार्गमध्ये स दृष्ट्वा ।
अक्षोहिण्या वृतस्तौ द्रुततरमगमच्चेलतुर्दूरदूरं
पादाभ्यां पर्वताग्रं हरिवरसदृशौ प्रापतू रामकृष्णौ ॥ ९१ ॥

सोऽप्यावृत्य स्वसैन्यै गिरिवरमभितस्तावदृष्ट्वा कृशानुं
दत्त्वा सद्यो गिरीन्द्रं त्वदहदथ जवाद्रामकृष्णौ गिरीन्द्रात् ।
तस्माच्चाधो निपत्य स्वपुरमगमतां सिंहशार्दूलवेगौ
निर्यातो मागधोऽसौ निजपुरमथ तौ यादवेन्द्रावदृष्ट्वा ॥ ९२ ॥

आनर्तो रैवताख्यो निजवरतनयां रेवतीं दत्तवांस्तां
रामायाथो स कृष्णो द्विजवरवचनात् कुण्डिनं प्राप सद्यः ।
हृत्वासौ रुक्मिणीं तां यदुवरतनयश्चैद्यराजाय क्लृप्तां
भूपानां पश्यतां तद्रथवरमगमत् पातु पूर्णत्रयीशः ॥ ९३ ॥

राजानः क्रोधयुक्ता द्रुततरमगमन् योद्धुमावृत्य सैन्यैः
वीराः संप्रापुरेते यदुबलपतयः संप्रचुक्रुर्मृधं तैः ।
कृष्णश्चापं विधून्वंस्त्वरिपु बहुशरान् प्रैरयत्तेऽपि भग्नाः
याताश्चैद्यं निमग्नं व्यसनजलनिधौ सान्त्वयामासुरेनम् ॥ ९४ ॥

रुक्मी कोपाद्रथस्थो हरिमवददसौ चोर किं यासि हृत्वा
कन्यामेनां विसृज्य व्रज यदि तु न चेत्त्वां निहन्यां शरौघैः ।
इत्युक्त्वा भल्लबाणानमुचदथ हरिर्बाणवर्षै रथं तं
छित्त्वा केशांश्च चापं व्यसृजदमुमसौ मुन्डयन् रामवाक्यात् ॥९५॥

वाद्यानुद्घुष्य चारात् पुरमगमदसौ ब्राह्मणैर्बन्धुवर्गैः
मात्रा पित्रा च राज्ञा निजसहजवरेणाशु सङ्गम्य पुर्याम् ।
रुक्मिण्याः पाणिपद्मं परिणयविधिना तद्गृहीत्वा हसन् यो
भेजे मोदं नितान्तं स्मितवदन इमं पातु पूर्णत्रयीशः ॥ ९६ ॥

प्रद्युम्नं चाम्बुधौ तं व्यसृजदथ रुषा शम्बरस्त्वग्रसीत्तं
मत्स्यः कैवर्तसङ्घा ददुरथ झषमस्मै पुनः सोऽपि तस्यै ।
मायावत्यै तदन्तःस्थितममुमथ सारक्षदारब्धकामा
ज्ञातार्थं यौवने तं यदुवरतनयं चाकरोत् कामपत्नी ॥ ९७ ॥

श्रुत्वा पत्न्याः सकाशान्निजरिपुमसुरं शम्बरं युध्यमानं
खड्गेनापाहरत्तद्गलमथ निजया भार्यया नीयमानः ।
गत्वा स्वीयगृहं नितान्तमहितं मात्रा च पित्रा स्वकैः
देवक्यानकदुन्दुभिप्रभृतिभिः संलाल्यमानोऽवसत् ॥ ९८ ॥

सत्राजित्त्वेककाले मणिवरमनुजो धारयन् काननान्तं
यातो जग्राह रत्नं त्ववददिति हरिस्तच्छ्रुतं शौरिणाथ ।
तन्मार्ष्टुं स्वीयसङ्घैर्वनमविशदसौ सिंहभग्नं प्रसेनं
सिंहं चर्क्षेण भग्नं बिलमविशदवस्थाप्य बन्धून् निशाम्य॥ ९९ ॥

तं दृष्ट्वा भल्लराजस्त्वगमदविनयाद्योद्धुमासीच्च युद्धं
त्वष्टाविंशद्दिनान्तं त्वनवरतमथो तन्निशाम्य स्वनाथम् ।
दत्त्वासौ स्वीयकन्यां मणिवरमपि तौ जाम्बवान् प्रेष्य पश्चात्
मोदं भेजे हरिस्तौ युवतिमणिवरौ पातु पूर्णत्रयीशः ॥ १०० ॥

लब्ध्वा स्त्रीरत्नवर्यं मणिवरमपि संप्राप्य राज्ञः सभां तां
नीत्वा सत्राजितं तं स मणिवरमदात् पश्यतां यादवानाम् ।
सत्राजित् स्वीयकन्यां मणिवरमपि तद्रोषशान्त्यै ददौ तत्
रत्नं नो सत्यभामामभजत स हरिः पातु पूर्णत्रयीशः ॥ १०१ ॥

श्रीकृष्णे हस्तिनाख्यं गतवति च पुरं प्राप्य सत्राजितं तं
हत्वा सङ्गृह्य रत्नं शतधनुरगमत्तत्सुता सत्यभामा ।
दृष्ट्वा वृत्तं स्वतातं कुरुपुरमगमत् स्वीयनाथाय चोचे
श्रुत्वा तद्रामकृष्णौ निजपुरमनुसंप्रापतुः स्यन्दनेन ॥ १०२ ॥

ज्ञात्वायान्तं च कृष्णं तदनु सकृतवर्मान्विताक्रूरमेत्य
द्राक्षीं साहाय्ये निराशः शतधनुरथ तद्रत्नमक्रूरसंज्ञे ।
निक्षिप्यागादुदीचीं हरिवरमधिरुह्याथ रामेण कृष्णो
गत्वा तं दूरदूरं हरिरमुमकरोत् कृत्तकण्ठं स्वचक्रात् ॥ १०३ ॥

कृष्णो रत्नं विमृश्यालभत न तु यदागात् पुरीं द्वारकाख्याम्
उक्त्वा भार्यासुहृद्भिः सह निजगुरवे चोर्ध्वकृत्यं विधाय ।
आनाय्याक्रूरसंज्ञं मणिमथ सुहृदां दर्शयित्वा निवृत्य
स्वस्मिंल्लोकोक्तिदोषं मुदमगमदमुं पातु पूर्णत्रयीशः ॥ १०४ ॥

इन्द्रप्रस्थं स गत्वा विजयसखयुतः सूर्यपुत्रीतटान्ते
कालिन्दीं तत्र दृष्ट्वा रथवरमधिरोप्याययौ द्वारकां ताम् ।
तामुद्वाह्याथ तात स्वसृवरतनयां मित्रविन्दामवन्ती-
नाथस्याथोपयेमे नृपमतुलयशाः पातु पूर्णत्रयोशः ॥ १०५ ॥

सत्यां कौसल्यपुत्रीं गिरिवरसदृशान् सप्त तान् गोवृषान् सः
जित्वा चोद्वाह्य पश्चात् परिणयमकरोत् केकयास्यात्मजायाः ।
भद्रायामाद्रपुत्रीं गुणगणसहितां लक्ष्मणां चोपयेमे
चाष्टौ ताः पट्टनारीरुदवहदपि यः पातु पूर्णत्रयीशः ॥ १०६ ॥

गत्वा प्राग्ज्योतिषाख्यं पुरमथ स हरिर्भेदयित्वा च दुर्गा-
ण्यायान्तं पञ्चशीर्षं मुरमतिनिगदन् युध्यमानं स्वचक्रात् ।
हत्वा तत्कण्ठसङ्गं नरकमपि तदा शूरशूरं शतेन
युक्तं नारीजनाष्टद्वितयदशशतं नीतवान् द्वारकां ताम् ॥ १०७ ॥

गत्वा स्वर्लोकमिन्द्रं सुरगणसहितं युध्यमानं नितान्तं
जित्वा तत्कल्पवृक्षं हरिरथ गरुडेनोह्य नीतं गृहान्ते ।
सत्राजित्कन्यकाया विकसितवदनायास्तु शृङ्गारभूमौ
निक्षिप्यासां गृहस्थो मदन इव बभौ पातु पूर्णत्रयीशः ॥ १०८ ॥

तासां स्त्रीणां गृहस्थः स सुखमनुभवन् मोदमानोऽथ धर्मान्
गार्हस्थ्यान् संप्रकुर्वन् त्वथ वररमणीं रुक्मिणीं नर्मवाक्यैः ।
प्रीत्या संलालयन् तां बहुतनयवरान् ताभ्य उत्पाद्य कृष्णः
प्रद्युम्नादींश्च पौत्रानपि मुदमगमत् पातु पूर्णत्रयीशः ॥ १०९ ॥

प्रद्युम्नो रुक्मिपुत्रीं परिणयविधिना चोपयेमेऽनिरुद्धो
रुक्मीपौत्र्या विवाहं स्वयमपि कृतवान् रोचनाया रमण्याः ।
द्यूते रामोऽजयत्तं स च कपटयुतस्त्वं जितो नाहमूचे
श्रुत्वा शक्त्याहनत्तं निजपुरमगमद्रुक्मिणं पुत्रपौत्रैः ॥ ११० ॥

स्वप्नाप्तं बाणपुत्री हरिसुततनयं चित्रलेखाख्यसख्या
चानीतं सौधमध्ये त्वरमत सततं गर्भवत्या सयोषा ।
श्रुत्वा रोषात् स बाणो यदुवरतनयं स्वीयपाशैर्बबन्ध
योद्धारं स्वीयसङ्गान् परिघवरकरं कोपसंरक्तनेत्रम् ॥ १११ ॥

ज्ञात्वा तं नारदोक्त्या यदुवरतनया रामकृष्णाववाप्य
राज्यं बाणस्य युद्धं द्रुततरमभवत् कृष्णरुद्रास्तराणाम् ।
शान्तं कृत्वा ज्वरं तं करगणमभिनद्रुद्रवाक्याच्चतुर्भिः
हस्तैः संस्थाप्य बाणं पुरमगमदसौ पौत्रतद्दारयुक्तः ॥ ११२ ॥

प्रद्युम्नाद्या वनान्तं ययुरथ तृषिताः श्वभ्रमन्तस्तु जन्तुं
दृष्ट्वा चोद्धर्तुमेते त्वथ न परिबृढाः प्राप्य कृष्णाय चोचुः ।
कृष्णस्तूद्धृत्य हस्तादमुमवददतो मुक्तजन्तुस्वरूपं
कोपात् त्वं चेति पृष्टस्त्ववददमुमसौ देवरूपी स राजा ॥ ११३ ॥

ऐक्ष्वाकोऽहं नृगाख्यो पशुनिवहमदां तत्र काचिद्द्विजातेः
तत्स्वामी गां च दृष्ट्वा द्विजमपि च गृहीत्वोचतुर्मां द्विजेन्द्रौ ।
तौ नत्वा सान्त्ववादैरवदमनुनयन् नैच्छतां गां विमोक्तुं
तच्छापात् प्राप्तमेतत् तदपि तव करस्पर्शनादाशु मुक्तम् ॥ ११४ ॥

इत्युक्त्वा तं च नत्वा दिवमनुगतवान् प्राप्तदेवस्वरूपो
राजा कृष्णस्तवादीच्छुतमिदमधुना राजवाक्यं हि पुत्राः ।
ब्रह्मस्वं यो हरेद्वो मम रिपुरथ मत्सन्निधौ नैव तिष्ठेत्
इत्युक्त्वा पुत्रपौत्रैः पुरमगमदमुं पातु पूर्णत्रयीशः ॥ ११५ ॥

रामोऽगाद्गोत्रजं तं यदुगणसहितस्तत्र नन्दं यशोदां
नत्वा तल्लालितः सन् दिनकरतनयातीरकान्तारमध्ये ।
गोपीभिः क्रीडमानो जलपतितनयां वारुणीं चापि पीत्वा
कृष्णामाकृष्य कोपान्निजहलमुखतो वन्दितश्चोत्ससर्ज ॥ ११६

तत्काले पौण्ड्रकोऽयं यदुकुलपतये प्राहिणोद्दूतमुक्त्वा
बालैः संकथ्यसे त्वं गतनिजमतिभिर्वासुदेवोऽहमस्मि ।
तच्छ्रुत्वा दूतवाक्यं यदुगणसहीतः प्राप्य काशीं तु पौण्ड्रं
हत्वा तं स्वीयवेषं हरिरथ नगरीं प्राप पूर्णेन्दुवक्त्रः ॥ ११७ ॥

काशीनाथं च हत्वा यदुवरतनयो मित्रभूतं दुरीहं
तत्पुत्रस्याभिचारोद्भवमनलमथो स्वीयराज्यं दहन्तम् ।
दृष्ट्वा तं चुक्रुशुस्ते यदुपतितनयं कृष्ण रक्षेति तुष्टो
हत्वा चक्रेण काशीपतिसुतमपि यः पातु पूर्णत्रयीशः ॥ ११८ ॥

रामोऽसौ रैवताख्यं गिरिमगमदतः स्वीयनारीजनौघैः
पीत्वाथो वारुणीं तामरमत हलिनं हेलयन् प्राप कीशः ।
तं दृष्ट्वा युद्धमासीद्द्विविदमुसलिनो वृक्षपूगैरनेकैः
अन्योन्यं तं च हत्वा पुरवरममलः प्राप नारीजनौघैः ॥ ११९ ॥

साम्बो दुर्योधनस्य त्वहरदथ सुतां लक्ष्मणां तां गृहीत्वा
कर्णाद्यास्तं बबन्धुः सुरमुनिवचनाद्यादवान् क्रोधयुक्तान् ।
शान्तान् कृत्वा बलोऽगात् कुरुपुरमनु ते द्रोणभीष्मप्रमुख्याः
सत्कारैः पूजयित्वातुलमुदमगमन् सोद्धवं सीरपाणिम् ॥ १२० ॥

साम्बोऽयं बन्धमाप श्रुतमयमधुना नीयतां मत्पुरस्तात्
इत्युक्ताः क्रोधयुक्ता बलमनु नितरां हेलयन्तोऽथ जग्मुः ।
रामः क्षेप्तुं पुरीं तां निजहलमुखतश्चोद्यतो गाङ्गतोये
भीताः साम्बं सदारं ददुरथ नगरं प्राप रामः सपुत्रः ॥ १२१ ॥

देवर्षिर्नारदोऽसौ हरिगृहमगमत् तत्र भैष्मीसमेतः
पर्यङ्के तिष्ठतीशः पुनरपि च गृहं स्नाति भुक्तिं करोति ।
अक्षैर्दीव्यत्यथायं द्विजगणसहितः कुत्रचिच्छास्त्रसङ्घान्
शृण्वन्नास्ते स दृष्ट्वा मुनिरगमदहो मोदमन्यैरलभ्यम् ॥ १२२ ॥

कृत्वा गार्हस्थ्यधर्मान् युवतिगणयुतं मोदमानं निशान्ते
तिष्ठन्तं राजदूतो ह्यवददिति जरापुत्ररुद्धा नृपौघैः ।
पार्थेनाहूयमानो मखमनु हलिना चोद्धवेन स्वयंभू-
पुत्रेणालोच्य कृष्णः परिजनसहितः पार्थराज्यं प्रपेदे ॥ १२३ ॥

कृष्णाभीमेन युक्तौ मगधमनुगतौ व्याजभूदेवरूपं
कृत्वोचुर्मागधं तं यदि पटुरधुना द्वन्द्वयुद्धं प्रदेहि ।
श्रुत्वा भीमेन युद्धं बहुतरमकरोन्मुष्टियष्टिप्रहारैः
पादेनाक्रम्य भीमस्तमथ स गुदतः पाटयामास शूरः ॥ १२४ ॥

भूपान् दुर्गेषु रुद्धान् हरिरथ कृपया मोचयित्वा समस्तान्
सुस्नातान् भोजयित्वा निजपुरमनु तान् प्रेष्य तस्यैव पुत्रम् ।
तत्पुर्यामभ्यषिञ्चन्नृपमथ सहदेवाख्यमाशु प्रयातः
शक्रप्रस्थं सुहृद्भ्यां सुरगणसहितः पातु पूर्णत्रयीशः ॥ १२५ ॥

यज्ञार्थं भूसुराद्या मुनिगणसहिता भूपसङ्घास्त्ववाप्ताः
चक्रुर्यागं सुमृष्टं तदनु नृपवरस्त्वग्रपूजां स चक्रे ।
कृष्णायातः स चैद्यः सदसि हरिमधिक्षिप्तवान् निन्द्यवाक्यैः
छित्त्वा चक्रेण कण्ठं मुदमगमदसौ पातु पूर्णत्रयीशः ॥ १२६ ॥

तत्काले साल्वभूपः शिवभजनवशात् प्राप्य सौभाख्ययानं
गत्वाथो द्वारकां तां स यदुबलवरैर्युद्धमारात् स चक्रे ।
प्रद्युम्नप्रेषितास्त्रप्रहतनिजबलं वीक्ष्य मन्त्री द्युमांस्तं
यष्ट्या गुर्व्या प्रजघ्ने तमथ निहतवान् कार्ष्णिरस्त्रैः स्वकीयैः ॥१२७॥

इन्द्रप्रस्थात् स कृष्णो निजपुरमगमद्वीक्ष्य साल्वं प्रकोपात्
अस्त्रैः शस्त्रैः प्रजघ्ने करमथ स हरेः शार्ङ्गयुक्तं न्यकृन्तत् ।
पश्यन् मायाहतं तं निजपितरमथो सौभमुन्मर्द्य शक्त्या
तत्कण्ठं चापि चक्रान्मुदमगमदमुं पातु पूर्णत्रयीशः ॥ १२८ ॥

युद्धार्थं दन्तवक्रस्त्वगमदथ रुषा यष्टिमुद्यम्य पद्भ्यां
कृष्णो यष्टीधरस्त्वगात् स समितिं तौ चक्रतुर्भीषणाम् ।
कौमोदक्याहनत्तं व्यसुरपतदथो भ्रातरं तस्य चक्रात्
प्रख्यातं च विडूरथं हृतगलं चक्रे स गोपालकः ॥ १२९ ॥

रामोऽसौ नैमिशाख्यं वनमगमदथो ब्राह्मणाः सत्रयागे
स्तुत्वा सम्पूज्य नेमुर्हलिनमथ स तं सूतमालोक्य पीठे ।
तिष्ठन्तं प्राहरत्तैः किमिति कृतमिदं चोक्तमात्रस्तदानीं
चोन्मथ्याथो करे तं पुनरपि जनयामास योगाधिनाथः ॥ १३० ॥

तद्यागे विघ्नकारी बहुगजबलवान्निल्वलस्यात्मजोऽयं
पर्वण्यागत्य भूयस्त्वशुचिमनुदिनं बिल्वलाख्यः करोति ।
सीरेणाकृष्य जघ्ने शिरसि च मुसलेनापतत् सोऽपि भूम्यां
स्नात्वा तीर्थेषु पश्चात् पुरमगमदसौ मोदमानः प्रकामम् ॥ १३१ ॥

कृष्णं द्रष्टुं कुचेलः पृथुकमपि गृहीत्वाप्तवांस्तस्य गेहं
दृष्ट्वा कृष्णः प्रमोदात् प्रणमनयुतमाश्लिष्य पर्यङ्कमध्ये ।
संस्थाप्यादाद्गृहीत्वा पृथुकमपि मुदा तस्य दत्त्वा धनानि
स्वेच्छं संप्रेरयद्यो गृहमगमदसौ पातु पूर्णत्रयीशः ॥ १३२ ॥

भूलोकस्थास्तु भूपा ग्रहणमनु रवेः कृष्णरामादयस्ते
चाजग्मुर्वृष्णयस्ते कुरुपदसहितं क्षेत्रमन्योन्यमत्र ।
दृष्ट्वा तुष्टाः कथास्ता जगदुरथ मुदा नन्दमन्यांश्च गोपान्
गोपीराश्लिष्य मोदात् कुशलमनुवदन् पातु पूर्णत्रयीशः ॥ १३३ ॥

द्रौपद्या कृष्णपत्न्यः स्वमुपयमविधिं पृष्टवत्यस्तदानीं
विस्तार्य प्रोचुरेता निजपरिणयमाश्राव्य मोदं गता सा ।
तत्रे कृष्णतातो मखमपि कृतवान् ब्राह्मणान् भूपसङ्घान्
नन्दं चापृच्छ्य गोपान् निजपुरमगमन् रामकृष्णादयस्ते ॥ १३४ ॥

मात्रा पित्रानुनीतौ यदुवरतनयौ हिंसिता भोजपत्या
चानेतव्याः स्वपुत्रास्त्विवति तु हरिबलौ प्रापतुस्तौ रसान्ताम् ।
पातालात् पुत्रषट्कं ददतुरथ सुता देवकी स्तन्यपानात्
शुद्धा नत्वा च कृष्णं बलमपि पितरौ भेजिरे स्वर्गलोकम् ॥ १३५ ॥

बीभत्सुः स्नानहेतोरगमदथ पुरीं द्वारकां मस्करी सन्
कृष्णः स्नानाय सिन्धुं यदुगणसहितः प्राप्तजित्वापुरस्स्थान् ।
हृत्वागाच्छारिकन्यां तदनु हरिबलौ तातवाचाथ दत्त्वा
दम्पत्योः पारिबर्हं स्वपुरमगमतां मोदयित्वा स्वसारम् ॥ १३६ ॥

कृष्णो यात्वा पुरीं तां जनकनरपतेस्तेन संपूज्यमान-
श्चोक्त्वा तास्ताः कथास्तं मुनिगणसहितः प्रोक्तवानिन्द्रवक्त्रः ।
लोकेऽस्मिंस्त्वत्समानो नहि मम भजने मैथिल ज्ञानदृष्टे
पूज्या भूदेवमुख्या नृपवर भवता नित्यमस्मत्स्वरूपाः ॥ १३७ ॥

तस्यां पुर्यां स कृष्णो धिषणमुनिवरं नारदं कण्वमत्रिं
वेदव्यासं प्रवृद्धं शुकमुनिमथ तं वृद्धशातातपं च ।
दृष्ट्वा प्रीत्या नितान्तं प्रणमनमकरोत् साञ्जलिस्तांस्तथा तैः
भक्त्या नत्वा स्तुतोऽसौ मुनिवरविनतः पातु पूर्णत्रयीशः ॥ १३८ ॥

प्राप्यार्यं श्रुतदेवभक्तसदनं संपूज्यमानोऽमुना
भक्त्या प्रीतियुतो नितान्तमहितः प्रोवाच कृष्णस्तु तम् ।
भक्त त्वं श्रुतदेव भूसुरवरान् संपूजयन् मां हरिं
वर्तस्वेति वदन् ययौ पुरवरं संस्तूयमानः सुरैः ॥ १३९ ॥

वेदा ये वेदमूर्तिं दशशतशिरसं तावताक्ष्णाभियुक्तं
पद्भिः साहस्रसङ्ख्यैर्वरकरकमलैर्व्याप्य भूमिं समन्तात् ।
तिष्ठन्तं स्तोत्रवर्यैः स्तुतपदकमलं भक्तिपूर्वं प्रणेमुः
सोऽयं वेदान्तवेद्यो नृपवरमनिशं पातु पूर्णत्रयीशः ॥ १४० ॥

दैतेयः पापबुद्धिः पथि च सुरमुनिं चाशुतोषं त्वपृच्छत्
प्राहेत्थं शाकुनेयं वृकमथ स मुनिः शम्भुमन्वेहि दैत्य ।
श्रुत्वाथो नारदोक्तिं शिवमनु तप आतिष्ठदस्मै ददौ सः
पृष्टोऽयं मूर्ध्नि हस्तः पतति मम पुनर्भस्म भूयात् स चेति ॥ १४१ ॥

इत्येवं धूर्जटेस्तद्वरमपि स पुनः प्राप्य तन्मूर्ध्नि हस्तं
क्षेप्तुं दृष्ट्वाऽगतं तं द्रुततरमगमत् सोऽपि पश्चादधावत् ।
विष्णुस्त्वागत्य वाक्यैशिरसि करमतः पातयित्वा वृकं तं
कृत्वा भस्म त्वरक्षच्छिवमपि स हरिः पातु पूर्णत्रयीशः ॥ १४२ ॥

तीरे सारस्वतीये भृगुमथ ऋषयः प्रेषयामासुरेषा-
मुत्कर्षं ज्ञातुकामास्तदनु विधिमगान्नत्यभावात् स रुष्टः ।
रुद्रस्त्वालिङ्गनेच्छुस्त्वगमदथ रुषा गर्वितोऽसीति चोक्तः
क्रुद्धो हन्तुं प्रवृत्तस्तदनु गिरिजया प्रार्थितोऽगाद्गिरीन्द्रम् ॥ २४३ ॥

विष्णुं गत्वा जघान द्रुतमथ स पदा वीक्ष्य चोत्थाय शीघ्रं
लक्ष्म्यङ्कात् साञ्जलिस्तं प्रणमनमकरोद्ब्राह्मणं प्रार्थयानः
दृष्ट्वा तूष्णीं स गत्वा मुनिगणमवदत् सर्वमेतेषु ते तं
विष्णुं श्रेष्ठं नितान्तं त्वमनुत स हरिः पातु पूर्णत्रयीशः ॥ १४४ ॥

भूदेवः कश्चिदेवं त्ववददनुगतो द्वारदेशं नृपस्य
दोषान्नष्टाः सुता मे स तु कुरुतनयः फाल्गुनस्तन्निशाम्य ।
गत्वा भूदेवगेहं निजशरनिवहैः सूतिकागेहमध्ये
कृत्वाथो पञ्जरं तच्छिशुमपि स ददर्शाङ्गनष्टं न तत्र ॥ १४५ ॥

पार्थोऽधिक्षिप्तमानो द्विजवरमुखतः सर्वलोकान् परीत्य
नष्टं [पुत्रं त्वदृष्ट्वा]ऽनलमनुनिविशन् कृष्णरुद्धस्त्ववाप ।
विष्णोर्लोकं गृहीत्वा मुररिपुकृपयागत्य बालान् द्विजाय
दत्वाभूत्प्रीतियुक्तो निजसखसहितः पातु पूर्णत्रयीशः ॥ १४६ ॥

श्रीकृष्णो द्वारकायां सुरगणसदृशैर्वृष्णिसङ्घैर्युतायां
प्राकाराट्टालसौधोत्तमगृहविपणीपङ्क्तिसङ्घैर्युतायाम् ।
मुक्तावैदूर्यनीलप्रवरमरतकप्रौढगोमेधवज्रैः
माणिक्यैर्भासुरायां निजवरयुवतीं क्रीडयन् प्राप मोदम् ॥ १४७ ॥

गेहोद्याने स कृष्णः सरसि मणिजले पद्मकल्हारयुक्ते
गोमेधैः पुष्यरागैः विकृततटवरे रत्नसोपानयुक्ते ।
कादम्बैश्चक्रवाकैः पिकशुकविहगैः सारसैः शोभमाने
हास्यन् क्रीडन् [वधूभि]र्मुदमगमदमुं पातु पूर्णत्रयीशः ॥ १४८ ॥

उद्याने मण्डलेऽस्मिन्नमृतकरशिलानिर्मितैः स्वर्णकुम्भैः
युक्ते मुक्तावितानैर्गरुडमणिचयस्तम्भसङ्घप्रयुक्ते ।
नारीभिश्चोत्तमाभिर्वरवसनमणीन् धारणीभिः समन्तात्
आक्रीडन् भासमानो नृपमदनममुं पातु पूर्णत्रयीशः ॥ १४९ ॥

पूर्णत्रय्याख्यपुर्यां विरचितविहृतिर्देवगन्धर्वयक्षैः
सिद्धैः साध्यैर्मुनीन्द्रैर्दिगधिपतिवरैः सेव्यमानाङ्घ्रियुग्मः ।
भक्ताभीष्टप्रदाता विकसितवदनाम्भोरुहः श्रीनिकेतः
माटश्रीरामभूपं वरगुणरुचिरं पातु पूर्णत्रयीशः ॥ १५० ॥

पूर्णत्रयीशचरितं यदुनाथभक्ताः
शृण्वन्ति ये त्वनुदिनं च पठन्ति ये वै ।
सत्कीर्तिपुण्यधनधान्यमहीसुतांश्च
दीर्घायुरन्यविभवान् समवाप्नुयुस्ते ॥ १५१ ॥

॥ इति श्रीपूर्णत्रयीशस्तोत्रं सम्पूर्णम् ॥

---

## १८. ॥ अथ श्रीजगदीशशतकम् ॥

यद्भासानुविभाति विश्वमखिलं सार्केन्दुतारागणं
यत्किञ्चिद्भ्रुकुटीकटाक्षकलया नाशोद्भवौ पालनम् ।
यत्पादाम्बुजधूलिधार[णवशात्कुर्वन्त्य]यत्नं सुरा-
स्तं नीलाचलवासिनं यदुपतिं वन्दे जगद्वन्दितम् ॥ १ ॥

यं सिद्धा मुनयः सुरासुरगणा गन्धर्वयक्षोरगाः
सेशानाः सचतुर्मुखाः प्रतिदिनं ध्यायन्ति शंप्राप्तये ।
विज्ञानेन विरागयोगतपसा जानन्ति किञ्चित्पदं
तं नीलाचलवासिनं यदुपतिं वन्दे जगद्वन्दितम् ॥ २ ॥

य: पूर्वं जगतामनादिरमलोऽनन्त: परो मध्यग:
स्रष्टा गोपयिता कटाक्षकलया हन्ता नियन्ता विभु: ।
यो धाता ध्रुवधर्मधारकनृणां शश्वद्विहर्ता स्वदृक्
तं नीलाचलवासिनं यदुपतिं वन्दे जगद्वन्दितम् ॥ ३ ॥

य: स्वामी भुवनस्य यं मुनिगणा ध्यायन्ति येनाविता
यस्मै देवगणा हरन्ति सुबलिं यस्माज्जगज्जायते ।
यस्याभापरिपूरितं जगदिदं यस्मिंश्च तल्लीयते
तं नीलाचलवासिनं यदुपतिं वन्दे जगद्वन्दितम् ॥ ४ ॥

यन्मायापरिमोहिता: सुरगणा गन्धर्वविद्याधरा
योगीशा ऋषयोऽसुराश्च पुरुषा ये स्थावरा जङ्गमा: ।
जायन्ते परितो भ्रमन्ति जगति द्वन्द्वे म्रियन्ते सदा
तं नीलाचलवासिनं यदुपतिं वन्दे जगद्वन्दितम् ॥ ५ ॥

साक्षी सर्वगत: प्रभु: प्रकृतय: सर्वेश्वरेश: सुधी:
दिव्यैर्मङ्गलमूर्तिमद्गुणगणै: संसेवितोऽजस्तु य: ।
वेदैश्चोपनिषद्भिरीरितयशा: सच्चिद्घनानन्दक-
स्तं नीलाचलवासिनं यदुपतिं वन्दे जगद्वन्दितम् ॥ ६ ॥

य: पातालपदो मही कटितट: स्वर्लोकशीर्षोऽस्तु य:
मार्ताण्डेक्षणदिक्श्रुतिश्रुतिमुखो गीर्वाणवाह्वङ्घ्री: ।
मायाक्रीडनको जगद्गुरुजो हीनोह्यदिव्यैर्गुणै-
स्तं नीलाचलवासिनं यदुपतिं वन्दे जगद्वन्दितम् ॥ ७ ॥

यच्छक्त्या हरते हरो विधिरपि स्रष्टा च शास्ता यमो
वह्निर्दाहयते शशी सुखयते वायु: प्रवात्यञ्जसा ।
. . . . . . . . . . . .
तं नीलाचलवासिनं यदुपतिं वन्दे जगद्वन्दितम् ॥ ८ ॥

यत्पादपङ्कजपरागविमिश्रतोयं
ब्रह्माण्डमण्डलमखण्डलमाविरिञ्चम् ।
स्तम्बान्तमाशु हि पुनाति न भेदभावं
वन्दे प्रभुं पतितपावननामधेयम् ॥ ९ ॥

यत्पादपङ्कजजलं चतुराननोऽसौ
शुद्धे कमण्डलुमुखे सुतरां दधार ।
अद्यापि मूर्धनि शिवो वहतीष्टरूपं
वन्दे प्रभुं पतितपावननामधेयम् ॥ १० ॥

यत्पादतीर्थममलं परमादरेण
सप्तर्षयः प्रतिदिनं शिरसा वहन्ति ।
विज्ञाननिर्गतमलाः सुपवित्रतायै-
वन्दे प्रभुं पतितपावननामधेयम् ॥ ११ ॥

यन्नामकीर्तननिरन्तरलब्धिमात्रात्
गात्राद्द्रुतं कलुषिणां सकलान्यघानि ।
दन्दह्यमानतनुभिः परिनिस्सरन्ति
वन्दे प्रभुं पतितपावननामधेयम् ॥ १२ ॥

यन्नाम मङ्गलममङ्गलभङ्गकार-
मुच्चारणेन खलु पातकिनां मुखैश्च ।
सद्यः पुनाति शबरान्यवनानधर्मान्
वन्दे प्रभुं पतितपावननामधेयम् ॥ १३ ॥

यस्यैकवारममलं स्मरणं हि पुंसां
सद्यः क्षिणोति सकलं दुरितं च दुःखम् ।
यः स्वं करोति नयति प्रणतं स्वधाम
वन्दे प्रभुं पतितपावननामधेयम् ॥ १४ ॥

यज्जन्मकोटिसुकृतेन यदा कदापि
तिर्यङ्नृदेव[गण]सन्ततिभूति[भाजः] ।
त्वत्पादसेवनमभूत् स पुमान् विमुक्तो
वन्दे प्रभुं पतितपावननामधेयम् ॥ १५ ॥

यद्वर्षमासदिनयाममुहूर्तमात्रे
यैः कैः प्रयत्नविधिभिस्तव पूजनं स्यात् ।
सर्वं बभूव सुकृतं पुरुषस्य तस्य
वन्दे प्रभुं पतितपावननामधेयम् ॥ १६ ॥

धन्यः पुमान् धरणिधर्मधरो ध्रुवोऽसौ
त्वां शर्मदं नमति यः शिरसैकदापि ।
पारं प्रयाति दुरवापजगन्नदीशात्
वन्दे प्रभुं पतितपावननामधेयम् ॥ १७ ॥

साङ्केत्यहेलनविमन्युगते च हास्ये
दुःखाद्यनन्तसमये पतितोऽपि यस्त्वम् ।
दासस्तवेति वदते त्वभयं ददासि
वदे प्रभुं पतितपावननामधेयम् ॥ १८ ॥

ब्रह्मेन्द्रशम्भुसनकादिसुरर्षयो यं
  न प्राप्नुवन्ति तपसा नियमादियोगैः ।
सख्यं विधाय पुरुषो रमते हि तेन
  वन्दे प्रभुं पतितपावननामधेयम् ॥ १९ ॥

आत्मार्पणां हि कुरुते पुरुषस्तु यस्ते
  स्वात्मार्पणं त्वमपि देव करोषि तस्मै ।
श्रेष्ठं तु तं त्वमनुगच्छसि सर्वदैव
  वन्दे प्रभुं पतितपावननामधेयम् ॥ २० ॥

स्त्रैणो धनान्धमदिरावशसंप्रमत्तः
  पापी त्वजामिलशठः कथनात्तु यस्य ।
नाम्नो जगाम पदवीं मुनिभिर्दुरापां
  वन्दे प्रभुं पतितपावननामधेयम् ॥ २१ ॥

विप्रामिषं त्वयि समर्पितवान् परेण
  प्रेम्णा पिशाचकुलजः श्रुतिबद्धघण्टः ।
आलिङ्ग्य तं निजजनं कृतवान् सुदोर्भ्यां
  वन्दे प्रभुं पतितपावननामधेयम् ॥ २२ ॥

दीनोऽतिजीर्णवसनः क्षुधया कृशोऽपि
  सन्दत्ततण्डुल उदारमतिः सुदामा ।
उत्तापविस्मृतरमः परिषस्वजे यो
  वन्दे प्रभुं पतितपावननामधेयम् ॥ २३ ॥

भोजेन्दुदास्यनिरता मलिनातिनीचा
  कुब्जा तु या मधुपुरे पथि तां विलोक्य ।
गत्वा गृहं कमलया सदृशीं व्यधाद्यः
  वन्दे प्रभुं पतितपावननामधेयम् ॥ २४ ॥

जात्या तु वायकवरं हतधर्मलेशं
  गत्वा तदीयभवने कृतवान् सकम्पः ।
वस्त्राणि तद्विरचितानि दधार देहे
  वन्दे प्रभुं पतिततपावननामधेयम् ॥ २५ ॥

नीचो निषादकुलजो जलजीवभोक्ता
  जग्राह तत्करसमर्पितकन्दमूलम् ।
कृत्वा सखायमतुलं परिषस्वजे यो
  वन्दे प्रभुं पतितपावननामधेयम् ॥ २६ ॥

मांसादकं वनचरं दुरितौघयुक्तं
गृध्रं जटायुषमलं परिरभ्य दोर्भ्याम् ।
तस्मै ददौ परगतिं यतिदुर्लभां यो
वन्दे प्रभुं पतितपावननामधेयम् ॥ २७ ॥

विज्ञानभक्तिविरतीष्टसुधर्महीना
नीचा महावनचरी शबरी हि तस्यै ।
भुक्त्वा तदर्पितफलं प्रददौ गतिं यो
वन्दे प्रभुं पतितपावननामधेयम् ॥ २८ ॥

स्वप्नेऽपि दर्शनममङ्गलदं वदन्ति
येषां बुधाः स्मरणतो ह्यशुभानि लोके ।
तैर्वानरैः सह चकार सुमित्रतायै
वन्दे प्रभुं पतितपावननामधेयम् ॥ २९ ॥

दुष्टानुजं रजनिकाचरवंशजातं
पादान्तिके निपतितं भरतेन तुल्यम् ।
उत्थाप्य तं स्वभुजतः परिषस्वजे यो
वन्दे प्रभुं पतितपावननामधेयम् ॥ ३० ॥

जात्या तु गोपकुलजाः परधर्महीना
गोपाश्च गोपवनितास्तुलसीवने तैः ।
चिक्रीड रासपरिमण्डलमण्डितो यो
वन्दे प्रभुं पतितपावननामधेयम् ॥ ३१ ॥

वापी महाविषधरः किल कालियेन
संप्लुत्य भास्करसुताह्रदनीरमध्ये ।
संस्कृत्य तत्फणगणेष्वभयं ददौ यो
वन्दे प्रभुं पतितपावननामधेयम् ॥ ३२ ॥

किं किं ब्रवीमि पतितोद्धरणं हि लोके
यद्यत्त्वया कृतमनन्तचतुर्मुखेषु ।
तस्मात् त्वदीयचरणं शरणं गतोऽहं
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ३३ ॥

न त्वत्समः पतितपावनकार्यकारी
नास्मादृशो जगति संपतितोऽवनीशः ।
दिष्ट्या कृतं विशदमित्यनवेक्ष्य योगं
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ३४ ॥

अन्वेषितं भुवनमेतदतीव बुद्ध्या
स्वोद्धारकारणकृते भवतो विना मे।
दृष्टो न कोपि पतितोद्धरणे समर्थो
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ३५ ॥

कामस्य पाशवलितं चपलं मनो मे
संधावतीष्टविषयेषु वदामि सत्यम्।
प्राप्स्यामि केन विधिना गतिमुत्तमां ते
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ३६ ॥

त्वं सर्वदिव्यगुणबृन्दसमन्वितोऽसि
तैः सर्वगर्हितगुणैर्वलितस्तथाहम्।
लज्जावनं तव करे मम सर्वथास्ति
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ३७ ॥

सूर्यो यथा स्वकिरणैः स्पृशतीष्टनेष्टं
संशोषयन्न हि करोति कदापि भेदम्।
विस्मृत्य तद्वदगुणं मम नैजरीत्या
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ३८ ॥

शोचामि तन्निजगुणानवलोक्य दुष्टान्
पापं करोमि खलु यद्वशगोऽहमद्य।
हृष्यामि ते गुणगणानवलोक्य भव्यान्
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ३९ ॥

ज्ञानी न योगनिरतो न हि भक्तिनिष्ठो
वैराग्यलेशसहितो न च धर्मधारी।
प्राप्स्याम्यहं कथमहो तव पादपद्मं
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ४० ॥

स्वाभाविकी भवति दाहनशक्तिरग्ने-
श्चन्द्रस्य शैत्यमनिशं वहनं च वायोः।
तद्वत्तवापि पतितोद्धरणं हि नित्यं
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ४१ ॥

वेदे पुराणकथने श्रुतवानहं यत्
नित्यं तवेड्य पतितोद्धरणं हि लोके।
इच्छाम्यहं तदवलोकितुमात्मशुद्ध्यै
मामुद्धरस्व कृपया जगदीशकृत्य ॥ ४२ ॥

सम्यग्बभूव यदहं पतिताग्रगण्य-
स्त्वं सर्वदोद्धरसि तान् पतिताग्रगण्यान् ।
संस्कृत्य रीतिममलां विजचित्तजातां
मामुद्धरस्व कृपया जगदीशकृत्य ।। ४३ ।।

तव दया न हि चेदवनीतले
मम समान् जगतीतलपामरान् ।
अतिपुनीत दयावशगो हि कः
पतितपावन माधव पाहि माम् ।। ४४ ।।

सकलकारणकारणकारणाः
पतिततारणतारणतारणाः ।
निखिलभावनभावनभावनाः
पतितपावन माधव पाहि माम् ।। ४५ ।।

विपुलजीवनजीवनजीवनो
जनविलोपनलोपनलोपनः ।
विशदकामदकामदकामदः
पतितपावन माधव पाहि माम् ।। ४६ ।।

हृदयहर्षणहर्षणहर्षणो
मनुजकर्षणकर्षणकर्षणः ।
अवनिपोषणपोषणपोषणः
पतितपावन माधव पाहि माम् ।। ४७ ।।

दुरितवर्तनवर्तनवर्तनः
श्रुतिप्रवर्तनकर्तनकर्तनः ।
जगति नर्तननर्तननर्तनः
पतितपावन माधव पाहि माम् ।। ४८ ।।

सकलगोकुलगोकुलगोकुलः
सकलगोकुलगोकुलगोकुलः ।
सकलगोकुलगोकुलगोकुलः
पतितपावन माधव पाहि माम् ।। ४९ ।।

निबिडनीरदसंनिभमद्भुतं
विपुलचारुचतुर्भुजशोभितम् ।
जनदयापरिपूर्णशरीरकं
तमवलोकितुमुत्सहते मनः ।। ५० ।।

ज्वलितरत्नविभासितभासितं
मकुटमण्डितमस्तकमिष्टदम् ।
सुभगकुण्डलमण्डलगण्डकं
तमवलोकितुमुत्सहते मनः ॥ ५१ ॥

स्मितमुखं सरसीरुहलोचनं
रुचिरनासिकया परिराजितम् ।
अतिविशालसुफालविशोभितं
तमवलोकितुमुत्सहते मनः ॥ ५२ ॥

उरसि हारविहारमनोहरं
तुलसिकावनमालिकयान्वितम् ।
कलितकौस्तुभकण्ठदरोपमं
तमवलोकितुमुत्सहते मनः ॥ ५३ ॥

कनकसूत्रनिबद्धकटिस्थलं
विमलपीतपटेन विराजितम् ।
विलसितं भुजबद्धशुभाङ्गदं
तमवलोकितुमुत्सहते मनः ॥ ५४ ॥

कटकशोभितपाणितटं शुभं
दरगदासिसुचक्रशरासनैः ।
अतिविराजितमूर्तिमनुत्तमं
तमवलोकितुमुत्सहते मनः ॥ ५५ ॥

कुटिलकुन्तलमण्डलमञ्जुलं
भ्रुकुटिभावितकर्णमहाशयम् ।
हृदि सुपाण्डरलक्षणलक्षितं
तमवलोकितुमुत्सहते मनः ॥ ५६ ॥

भवविलासनिरासविधायकं
मुनिगणामलमानसमानसम् ।
लसितनूपुरयुग्मपदाम्बुजं
तमवलोकितुमुत्सहते मनः ॥ ५७ ॥

चन्द्रांशुगौरेण सुनीलवाससा
मदाविघूर्णारुणदिव्यचक्षुषा ।
रामेण युक्तं कृतदासमुक्तं
श्रीमज्जगन्नाथमहं नमामि ॥ ५८ ॥

जगज्जनन्या करुणाग्रगण्यया
सुभद्रया शोभितदक्षभागम् ।
प्रपन्नपालं पतितार्तिहारिणं
श्रीमज्जगन्नाथमहं नमामि ॥ ५९ ॥

दयाविधानेन सुदासकामदं
महाप्रसादेन भवापहारिणम् ।
विमुक्तिदं नीलगिरौ निवासिनं
श्रीमज्जगन्नाथमहं नमामि ॥ ६० ॥

पापप्रणाशाय जगज्जनानां
संराजते योऽब्धितटे दयालुः ।
तमुद्धरन्तं पतितानघौघात्
श्रीमज्जगन्नाथमहं नमामि ॥ ६१ ॥

रत्नासनस्थं प्रणवस्वरूपं
सतां गतं दीनदयानिधानम् ।
प्रदर्शयन् स्वस्य वपुर्जनेभ्यः
श्रीमज्जगन्नाथमहं नमामि ॥ ६२ ॥

या ज्ञानयोगेन विरागभक्त्या
गतिर्भवत्यब्दशतैर्मुनीनाम् ।
महाप्रसादेन तु तद्गतिप्रदं
श्रीमज्जगन्नाथमहं नमामि ॥ ६३ ॥

ये पापिनस्त्यक्तसमस्तसत्क्रिया
लोकेऽव्यवाये विषयैर्विलिप्ताः ।
महाप्रसादेन पुनाति तान् यः
श्रीमज्जगन्नाथमहं नमामि ॥ ६४ ॥

अस्मादृशां पापविनिष्ठितानां
नान्योऽस्त्युपायस्तरणे भवाब्धेः ।
महाप्रसादं ददतं तदर्थं
श्रीमज्जगन्नाथमहं नमामि ॥ ६५ ॥

यथाम्बरं वै गतिरस्ति पक्षिणां
यथा पशूनां पृथिवी गतिश्च ।
अस्मादृशां पापनिविष्टचेतसां
गतिस्त्वमेवासि तथा न चान्यः ॥ ६६ ॥

अन्यः समर्थो भुवि कोऽपि नास्ति
य उद्धरेन्मां कृपयातिपापम् ।
आधारभूतं तव पादपद्मं
तस्माज्जगत्पावन रक्ष लज्जाम् ॥ ६७ ॥

यो मां तवास्मीति जनः प्रयाचते
तस्मै ददामीत्यभयं व्रतं मे ।
आधार एषोऽद्य ममादिनाथ
व्रतं स्वकीयं न विहातुमर्हसि ॥ ६८ ॥

त्यक्त्वा सुधर्मानखिलान् जनो यदा-
ह्यनन्यधर्मा शरणं समीहते ।
अहं तदाघानि विमोचयामि
व्रतं त्वदीयं शरणं ममेदम् ॥ ६९ ॥

श्रुत्वा पुराणानि विधाय धर्मान्
करोमि किञ्चिन्न हि तद्विधानम् ।
लज्जाविहीनेऽपि पुरः स्थिते मयि
प्रसीद नीलाचलनाथ दीने ॥ ७० ॥

प्रारब्धदोषाद्यदभूदभूत-
च्छोचामि किञ्चिन्न हि तस्य दुःखम् ।
शोचामि यत्त्वच्छरणागतं मां
प्रबाधते पापपराभवोऽलम् ॥ ७१ ॥

न चित्तवृत्तिस्थिरता प्रयाति
न पापकर्मस्वपि मेऽस्ति तोषः ।
केन प्रयत्नेन गतिं च लप्स्ये
लज्जा त्विदानीं तव पाणिपद्मे ॥ ७२ ॥

शास्त्रेषु वेदेषु पुराणकल्पे
श्रुतो मया त्वं पतितोद्धरः सदा ।
अतोऽतिपापे पतितप्रधाने
दयाविधाने त्वमसि क्षमोऽद्य ॥ ७३ ॥

गृध्रे गुहे वै नृगभूमिदेवे
गजे पिशाचेऽपि कृता दया या ।
कारागृहे राजसु मागधस्य
कुरुष्व दीने मयि तां दयां प्रभो ॥ ७४ ॥

यद्यप्यहं पापसमूहकारी
स्थातुं हि नार्होऽस्मि पुरस्तथापि ।
त्वं नाम संस्मृत्य निजं जगत्पते
मामुद्धर प्रेष्ठमकिञ्चनानाम् ॥ ७५ ॥

क याम्यहं कं नितरां स्मरामि
नान्योऽस्ति लोके प्रभुदीननाथः ।
ऋते भवन्तं जगदेकनाथ-
मुपायहीनः शरणागतोऽहम् ॥ ७६ ॥

पाञ्चालराजस्य कुमारिकाया
लज्जा त्वदीयस्मरणेन रक्षिता ।
तथैव नीलाद्रिपतेऽनुकम्पया
लज्जां मदीयामव वासुदेव ॥ ७७ ॥

त्वत्प्रेरितौ मत्पितरौ प्रचक्रतु-
र्मन्नाम यद्भागवतप्रसादम् ।
स्वसम्प्रदाये कृतवान् यतस्त्वं
तत् श्रीजगन्नाथ भवत्कराम्बुजे ॥ ७८ ॥

हास्यं न लोके मम किञ्चिदस्ति
हास्यास्पदं यत्स्वयमेव जातः ।
किन्तु त्वदग्रे शरणागतानां
हास्यं च लोकेषु महाननर्थः ॥ ७९ ॥

शोचामि नाहं नरकप्रपातं
शोचामि नाहं पतितोऽभवं यत् ।
शोचाम्यहं त्वच्छरणागतस्य
नेयं दशा नाथ तवानुरूपा ॥ ८० ॥

य आद्योऽन्तोऽनादिः सकलगुणवृन्दैकसदनं
स्वशक्त्येदं विश्वं सृजति सुतरां पाति हरते ।
जगत्क्रीडाकारी निजजनदयादाननिरतो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८१ ॥

कदम्बच्छायायां धृतविपिनपुष्पाभरणक-
त्रिभङ्गाकारो यः कृतमधुरवंशीकलरवः ।
कटाक्षाक्षेपेण व्रजपुरवधूनां हि सुखदो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८२ ॥

सदा बृन्दारण्ये वरमधुरवंशीध्वनिरतो
निकुञ्जे भृङ्गाढ्ये बहुसुरभिसञ्चारणपरः।
सुहृद्भिर्गोपालैस्सुखितवदनैर्योऽतिशुशुभे
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८३ ॥

मनोहारी हारी व्रजवनविहारी यदुपति-
द्विषद्दारी तारी हृदि शिवविचारी सुमनसाम्।
सदा सञ्चारी यो दिनपतिकुमारीकलतटे
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८४ ॥

भवान्तर्यामी यो वरविहगगामी स्वसुष[ख]दः
सतामात्मारामी कटिकनकदामी विभुवपुः।
सुधामा शंधामा जनसुगतिकामी करुणया
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८५ ॥

प्रवीरै राजन्त्यां मदनबलशैनेयसुभगैः
सुधर्मायां सिंहासनवरगतो योऽतिशुशुभे।
चतुर्बाहुः श्यामो धनुरसिगदाद्यायुधधरो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८६ ॥

निहन्ता कंसं च प्रवलमुरभौमादिनिकरा-
न्नियन्ता विश्वस्य प्रचुरतरयास[पाष]ण्डदलनः।
सुयन्ता संगोप्तामरपतिसुतस्यात्मविभवै-
र्जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८७ ॥

सरस्य[य्वा]स्तीरे यो वरभरतशत्रुघ्नसहित-
स्सुमित्रापुत्रेण प्रविलसति लीलातिललितः।
सुहृद्भिस्संयुक्तो धृतसशरकोदण्डसुभुजो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८८ ॥

कदाचिद्रत्नाढ्ये हिमगिरिसुशृङ्गे यमगृहे
सखीभिः संयुक्तो जनकतनयाभ्राजितभुजः।
सुपुष्पालङ्कारैरतिलसितसर्वाङ्गसुभगो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८९ ॥

विजेता शत्रूणां निशिचरकुलोद्भूतजनुषा-
मृषीणां संगोप्तोदधिविपुलसेतो रचयिता।
प्रदाता गृध्रस्याद्भुतगतिमगुर्या न मुनयो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ९० ॥

दयापारावारो वरगुणगणस्यैकनिलयो
यशो भासं शुद्धिं यदशुचिजनोऽपि प्रलभते ।
मरालो यत्पादः शिवमनसि सन्मानसवरे
जगन्नाथः स्वामी नयनपथगामी भवतु मे ९१ ॥

सृजाशक्त्या सृष्टिं पुनरपि च हर्त्र्यैव हरणं
सुपालिन्या पालं स्वशरणशरण्यः प्रकुरुते ।
य ईदृग्गौरीशः प्रभुरपि च तस्यापि सुखदो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ९२ ॥

सतां धर्माचार्यो मुनिजनसुविज्ञानदपरो
महान् योगाचार्यः प्रकृतिपतिरत्यद्भुतकलः ।
महादेवस्तस्यामलमनसि यच्चारुचरणो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ९३ ॥

हरेर्नाथो हारी हरियतिपतिः संहरिमुखो
हरेर्दी प्रदीप्तिर्हरिविहसुशिष्यच्छलकरः ।
हरेर्मित्रं चित्रं हरिकटिरनादिर्हरिगति-
र्जगन्नाथः स्वामी नयनपथगमी भवतु मे ॥ ९४ ॥

शरन्मेघाकारो हलमुसलसन्धारणपरो
धराधारोद्धारो जनकलिविकारापहरणः ।
य ईदृक्छ्रीरामः शुभगतिकरस्तेन सहितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ९५ ॥

अहं पापासक्तः प्रभुरपि महापापदहनो-
ऽस्त्यहं हीनाचारः प्रभुरपि समुद्धारणकरः ।
विचिन्त्येमं योगं निजचरणगाल्पस्य कृपया
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ९६ ॥

असौ यः के सदा शेते केशेशः शङ्करः सताम् ।
नादिवेदार्णनामा मां कुमेशो विश्वगोऽवतु ॥ ९७ ॥

तव चरणसरोजं सिद्धदेवेन्द्रवन्द्यं
निखिलपतिततारं ज्ञानविज्ञानकारम् ।
निजजनपरिपालं कल्मषाणां हि कालं
मुनिमनसि मरालं विश्वपालं नमामि ॥ ९८ ॥

जयतु जलधिवासी नीलशैलेन्द्रभासी
निजजनरिपुनाशी सत्यविश्वप्रकाशी ।
व्रजविपिनविलासी सर्वदा मन्दहासी
नरनरकनिरासी दिव्यसौन्दर्यराशिः ॥ ९९ ॥

मयि विरतिविलीने सर्व[दुःखैकताने]
खलसमलकुलीने सर्वदा पापपीने ।
मदमदनविलीने त्वं दयां संविधत्स्व
निजपदजलमीने पामरेऽस्मिन्नवीने ॥ १०० ॥

नीलाचलनिवासाय दिव्यैश्वर्यविभासिने ।
बलभद्रसुभद्राभ्यां जगन्नाथाय ते नमः ॥ १०१ ॥

हे नाथ हे रमानाथ प्रणतार्तिविनाशन ।
जगन्नाथ दयासिन्धो रघुराजे दयां कुरु ॥ १०२ ॥

नारायण सुरश्रेष्ठ दीनोद्धारपरायण ।
जगन्नाथ दयासिन्धो रघुराजे दयां कुरु ॥ १०३ ॥

जगद्धातर्जगत्त्रातर्जगन्मातर्जगत्पितः ।
जगदीश दयासिन्धो रघुराजे दयां कुरु ॥ १०४ ॥

जगदाधार धीरेन्द्र धाराधर्मधुरन्धर ।
जगन्नाथ दयासिन्धो रघुराजे दयां कुरु ॥ १०५ ॥

जनार्दन जगद्वास जगद्वन्द्य जगद्धर ।
जगन्नाथ दयासिन्धो रघुराजे दयां कुरु ॥ १०६ ॥

त्वदन्यो न गतिर्मेऽद्य त्वामहं शरणं गतः ।
जगन्नाथ दयासिन्धो रघुराजे दयां कुरु ॥ १०७ ॥

त्वदाधारस्त्वद्बलोऽहं त्वमेव शरणं मम ।
जगन्नाथ दयासिन्धो रघुराजे दयां कुरु ॥ १०८ ॥

जगदीशस्य शतकं रघुराजकृतं शुभम् ।
पठतां शृण्वतां शश्वज्जगदीशः प्रसीदतु ॥ १०९ ॥

रामेन्दुखण्डविधुभिर्मितेऽब्दे तैर्य[ष्य]उत्तमे ।
शनावमायां शतकं जगदीशस्य निर्मितम् ॥ ११० ॥

॥ इति श्रीसिद्धि श्रीबान्धवेशमहाराजाधिराजश्रीमहाराजश्रीराजावहादुद श्रीकृष्णचन्द्रकृपापात्राधिकारी श्रीरघुराजसिंहजादेवविरचितं श्रीजगदीशशतकं सम्पूर्णम् ॥

---

## १९. ॥ अथ श्रीगोपालस्तोत्रम् ॥

वक्षस्स्थले मणिमयाभरणाभिरामे
कल्याणकल्पलतिकां कमलां वहन्तम् ।
वक्त्रे दधानमतिसुन्दरमन्दहासं
सञ्चिन्तयामि नृपगोपकुमारवेषम् ॥ १ ॥

वेदान्तमस्तकगिरां प्रथमाभिधेयं
गोपालबालवनिताभवने निवेयम् ।
नन्दाङ्गनानयनपङ्कजभागधेयं
सञ्चिन्तयामि नृपगोपकुमारवेषम् ॥ २ ॥

काञ्चीकलापकमनीयकटिप्रदेशं
कान्तासहस्रकुचमण्डलमण्डनीयम् ।
कामं विशालनयनं करुणैकसिन्धुं
सञ्चिन्तयामि नृपगोपकुमारवेषम् ॥ ३ ॥

आजानुदीर्घभुजमञ्चितकञ्जनाभम्
आलोलनेत्रमसितोत्पलकर्णपूरम् ।
आरूढपक्षिपतिमाश्रितकालमेघं
सञ्चिन्तयामि नृपगोपकुमारवेषम् ॥ ४ ॥

फुल्लातसीकुसुमकान्तिमुषं कुमारं
सौन्दर्यशेवधिमुदारगुणाभिरामम् ।
लक्ष्म्यालयं कलितकौस्तुभमम्बुजाक्षं
सञ्चिन्तयामि नृपगोपकुमारवेषम् ॥ ५ ॥

हस्तारविन्दयुगलीधृतशङ्खचक्रं
पीताम्बरं मकरकुण्डलदीप्तगण्डम् ।
हाराभिराममभिरामकराङ्गुलीयं
सञ्चिन्तयामि नृपगोपकुमारवेषम् ॥ ६ ॥

कन्दर्पकान्तिमरुणाधरमायताक्षं
कस्तूरिकातिलकशोभितफालभागम् ।
पूर्णेन्दुबिम्बवदनं मधुरावलोकं
सञ्चिन्तयामि नृपगोपकुमारवेषम् ॥ ७ ॥

बालं बालं बालमेव स्मरामः
  नीलं नीलं नीलमालोकयामः ।
गोपं गोपं गोपमेवाश्रयामः
  बालं नीलं गोपवेषं भजामः ॥ ८ ॥

वीक्षा[नीला]लकावृतमुखं तव कुण्डलश्री-
  गण्डस्थलाधरसुधां सदयावलोकम् ।
दत्ताभयं च भुजदण्डयुगं विलोक्य
  वक्षः श्रियो विहरणं च भवाम दासाः ॥ ९ ॥

॥ इति श्रीगोपालस्तोत्रं सम्पूर्णम् ॥

---

## ॥ अथ प्रकीर्णस्तोत्राणि ॥

### १. ॥ अथ श्रीगोविन्दराजसुप्रभातम् ॥

श्रीभूमिनायक दयापर दिव्यमूर्ते
देवादिदेव जगदेकशरण्य विष्णो ।
गोपाङ्गनाकुचतटेषु निमग्नदृष्टे
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १ ॥

देवादिदेव फणिराजविहङ्गराज-
राजत्किरीटमणिराजविराजिताङ्घ्रे ।
राजाधिराज वसुदेवकुलाधिराज
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ २ ॥

कासारयोगिपरमाद्भुतभक्तिबद्ध-
वाङ्मूलभूषितमहोत्पलरम्यपाद ।
गोपाधिनाथ वसुदेवकुमार कृष्ण
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ३ ॥

श्रीभूतयोगिपरिकल्पितदिव्यमान-
ज्ञानप्रदीपपरिदृश्यरतैकतान ।
गोगोपजालपरिरक्षणबद्धदीक्ष
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ४ ॥

मान्यानुभावमहदाह्वययोगिदृष्टे
श्रीशङ्खचक्रकमलासहितामलाङ्ग ।
गोपीजनप्रियचरित्र विचित्रवेष
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ५ ॥

श्रीमत्त्वदीयपदपङ्कजभक्तिनिष्ठ-
श्रीभक्तिसारमुनिनिश्चितमुख्यतत्त्व ।
गोपीजनार्तिहर गोपजनान्तरङ्ग
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ६ ॥

श्रीमत्पराङ्कुशमुनीन्द्रसहस्रशाख-
संस्तूयमानचरणाम्बुज सर्वशेषिन् ।
गोपालवंशतिलकाच्युतपादपद्म
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ७ ॥

शेषाचले महति पादपपक्षिजन्म
तद्भक्तितः स्पृहयता कुलशेखरेण ।
राज्ञा पुनःपुनरुपासितपादपद्म
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ८ ॥

श्रीविष्णुचित्तकृतमङ्गलदिव्यसूक्ते
तन्मानसाम्बुरुहकल्पितनित्यवास ।
गोपालबालयुवतीविटसार्वभौम
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ९ ॥

श्रीविष्णुचित्तकुलनन्दनकल्पवल्ली-
गोदालकान्तविनिवेशितमाल्यलोल ।
गोपाङ्गनाकुचकुलाचलमध्यसुप्त
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १० ॥

भक्ताङ्घ्रिरेणुमुनिना परमत्वदीय-
शेषत्वमाश्रितवता विमलेन नित्यम् ।
प्राबोधकीस्तुतिकृता ह्यवबोधितश्रीः
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ११ ॥

श्रीपाणनामकमहामुनिदिव्यनाम-
दिव्यानुभावदयमानदृगञ्चलाख्य ।
पूर्णानुकम्प पुरुषोत्तम पुष्कराक्ष
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १२ ॥

भक्तोत्तमाय परकालमुनीन्द्रनाम्ने
विश्राणितातुलमहातनुमूलमन्त्र ।
सर्वात्मरक्षणविचक्षण चक्रपाणे
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १३ ॥

सत्त्वोत्तरैः सततसेव्यपदाम्बुजेन
संसारतारकदयार्द्रदृगञ्चलेन ।
सौम्योपयन्तृमुनिमानसराजहंस
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १४ ॥

भक्तप्रपन्नकुलनायकभाष्यकार-
सङ्कल्पकल्पतरुदिव्यफलामलात्मन् ।
श्रीशेषशैलनिकटस्थितशेषशायिन्
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १५ ॥

श्रीमच्छठारिकरुणाश्रितदेवगान-
सारज्ञनाथमुनिसन्नुतपुण्यमूर्ते ।
गोब्राह्मणप्रियगुरो श्रितपारिजात
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १६ ॥

देव प्रसिद्ध करुणाकर भक्तवर्ग-
सेनापतिप्रणयिताखिललोकभानो ।
श्रीवासदिव्यनगराधिप राजराज
गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १७ ॥

॥ इति श्रीगोविन्दराजसुप्रभातं सम्पूर्णम् ॥

---

## २. ॥ अथ श्रीकेशवादिचतुर्विंशतिनामस्तोत्रम् ॥

केशवस्तु सुवर्णाभः संयुतश्च श्रिया सदा ।
शङ्खचक्रगदापद्मधरो ध्येयोऽखिलैर्जनैः ॥ १ ॥

नारायणः श्यामवर्णः सदा लक्ष्म्या युतः प्रभुः ।
पद्मगदाशङ्खचक्रधरो ध्येयोऽखिलैर्जनैः ॥ २ ॥

माधवो ह्युत्पलाभश्च सदा कमलया युतः ।
शङ्खचक्रपद्मगदाधरो ध्येयोऽखिलैः प्रभुः ॥ ३ ॥

गोविन्दः शशिवर्णश्च पद्मया च युतः प्रभुः ।
गदापद्मशङ्खचक्रधरो ध्येयोऽखिलैर्जनैः ॥ ४ ॥

स विष्णुर्गौरवर्णाभो [ह्यब्धिकन्या] युतः प्रभुः ।
पद्मशङ्खचक्रगदाधरो ध्येयः सदा विभुः ॥ ५ ॥

मधुसूदनः शोणवर्णः प्रिया तु कमलालया ।
शङ्खपद्मगदाचक्रयुक्तो ध्येयोऽखिलैर्जनैः ॥ ६ ॥

त्रिविक्रमोऽग्निसङ्काशो रमया च युतः सदा ।
गदाचक्रशङ्खपद्मधरो ध्येयोऽखिलैर्जनैः ॥ ७ ॥

वामनः स्फटिकाभश्च वृषया प्रियया युतः ।
चक्रगदापद्मशङ्खधरो ध्येयोऽखिलैर्जनैः ॥ ८ ॥

श्रीधरस्तु हरिद्राभो धन्याख्यप्रियया युतः ।
चक्रगदाशङ्खपद्मधरो ध्येयोऽखिलैर्जनैः ॥ ९ ॥

हृषीकेशः सूर्यवर्णो बुद्ध्याख्यप्रियया युतः ।
चक्रपद्मशङ्खगदाधरो ध्येयोऽखिलैः प्रभुः ॥ १० ॥

पद्मनाभो घनश्यामः प्रियया यज्ञया युतः ।
पद्मचक्रगदाशङ्खधरो ध्येयोऽखिलैः सदा ॥ ११ ॥
दामोदरो हेमवर्ण इन्दिराप्रियया युतः ।
शङ्खगदाचक्रपद्मधरो ध्येयोऽखिलैः प्रभुः ॥ १२ ॥
सङ्कर्षणः सुमुक्ताभो हिरण्यासहितः प्रभुः ।
शङ्खपद्मचक्रगदाधरो ध्येयः सदा जनैः ॥ १३ ॥
वासुदेवो नीरदाभो हरिण्याख्यप्रियायुतः ।
शङ्खपद्मचक्रगदाधरो ध्येयोऽखिलैः प्रभुः ॥ १४ ॥
प्रद्युम्नो रक्तवर्णश्च सत्यया संयुतः प्रभुः ।
शङ्खगदापद्मचक्रधरो ध्येयोऽखिलैः प्रभुः [स्सदा] ॥ १५ ॥
अनिरुद्धोऽग्निवर्णश्च नीलया सहितः प्रभुः ।
गदाशङ्खपद्मचक्रधरो ध्येयोऽखिलैः सदा ॥ १६ ॥
पुरुषोत्तमस्तु रक्ताभो नित्ययानन्दया युतः ।
पद्मशङ्खगदाचक्रधरो ध्येयोऽखिलैः प्रभुः ॥ १७ ॥
अधोक्षजः श्यामवर्णस्त्रय्याख्यप्रियया युतः ।
गदाशङ्खचक्रपद्मधरो ध्येयोऽखिलैः प्रभुः ॥ १८ ॥
नृसिंहो मणिवर्णाभः सुखया सहितः प्रभुः ।
गदापद्मशङ्खचक्रधरो ध्येयोऽखिलैर्जनैः ॥ १९ ॥
अच्युतः सूर्यवर्णश्च सुगन्ध्याख्यप्रियायुतः ।
पद्मचक्रशङ्खगदाधरो ध्येयोऽखिलैः प्रभुः ॥ २० ॥
जनार्दनः कुन्दवर्णः सुन्दर्या सहितः प्रभुः ।
चक्रशङ्खगदापद्मधरो ध्येयोऽखिलैः प्रभुः [सदा] ॥ २१ ॥
उपेन्द्रः शशिवर्णश्च विद्याख्यप्रियया युतः ।
गदाचक्रपद्मशङ्खधरो ध्येयोऽखिलैः प्रभुः ॥ २२ ॥
हरिर्वैदूर्यसङ्काशः सहितश्च सुशीलया ।
चक्रपद्मगदाशङ्खधरो ध्येयोऽखिलैः सदा ॥ २३ ॥
कृष्णो भिन्नाञ्जनप्रख्यो लक्ष्मणाख्यप्रियायुतः ।
गदापद्मचक्रशङ्खधरो ध्येयोऽखिलैर्जनैः ॥ २४ ॥

॥ इति श्रीकेशवादिचतुर्विंशतिनामस्तोत्रं सम्पूर्णम् ॥

---

## ३. ॥ अथ श्रीकटाक्षषोडशी ॥

संभावयन् विधिशिवौ सकृदिन्दिरायाः
वक्त्रारविन्दपरिरम्भकरः सुरस्पृक् ।
मज्जन् मुहुः स्वशरणेषु निपत्य मग्नो
दीनेषु रक्षतु स मां भगवत्कटाक्षः ॥ १ ॥

मज्जन् दयामयसुधाम्बुनिधौ जगत्या-
मत्यादरेण परिरभ्य करीन्द्रमार्तम् ।
कुम्भीरमाप परुषाकृतिमेव रोषात्
यः पातु जातु विशदो भगवत्कटाक्षः ॥ २ ॥

रक्तः स्वयं सलिलराशिसुतास्यबिम्ब-
सम्भावनासु शुचिरार्तजनप्रसादे ।
अम्भोजनिःसरदलिप्रकरानुकारी
चित्रश्चिरादवतु मां भगवत्कटाक्षः ॥ ३ ॥

दुःखप्रवाहपरिणाहविगाहनोद्यत्-
सन्तापमाद्दशविवर्जनदुर्यशोभिः ।
संलिप्तमूर्तिरिव मेचकरोचिरव्या-
दव्याजरक्षितजगद्भगवत्कटाक्षः ॥ ४ ॥

पद्मालयावदनमण्डलनेत्रयुग्म-
च्छद्मोल्लसद्विकचपद्मविहारलुब्धः ।
मुग्धो मधुव्रतसमूह इव प्रसर्पन्
श्रेयः समर्पयतु मे भगवत्कटाक्षः ॥ ५ ॥

पातानुभावपरिपावितपातकाध्व-
पान्थाधिकाररहितान्तकदर्शिताधिः ।
दुःखाभिभूततरभूतचयानुभूतौ
दायस्तनोतु कुशलं भगवत्कटाक्षः ॥ ६ ॥

मन्दारमुख्यसुरवृक्षवदान्यभावः
सन्ध्यास्फुटीकृतबहुप्रवणार्थिवन्द्यः ।
निष्कामभक्तजनसात्कृतनित्यधामा
कामाय संभवतु मे भगवत्कटाक्षः ॥ ७ ॥

न्यस्तात्मभारभरणादरभाव्यमान-
वृत्तिप्रवृत्तिपरतन्त्र इव प्रवृत्तिः ।
सद्वृत्तिधूर्तविषयाधिकतोषरोष-
संलक्षितो भगवतोऽवतु मां कटाक्षः ॥ ८ ॥

दुर्वारमारशरवार इवातिधीर-
वाराङ्गनाहृदयदुर्जयधैर्यभेदी ।
सत्पक्षयोगविहितद्रुतगत्यनिन्द्यो
निन्द्यां मतिं हरतु मे स हरेः कटाक्षः ॥ ९ ॥

निर्व्याजदृष्टिकरुणामृतवृष्टिहृष्ट-
पुष्टत्रिलोकगतकोकविलोकनीयः ।
दिव्याम्बुवाह इव सक्षणरुग्विलासः
तापत्रयं हरतु मे स हरेः कटाक्षः ॥ १० ॥

यस्मिन् समुल्लसति कामधुगल्पदो वा
कल्पद्रुरल्पफलपुष्प इवास्तु कल्पः ।
चिन्तामणिर्मणिगणैर्गणनीयभाग्यः
कामं स पूरयतु मे भगवत्कटाक्षः ॥ ११ ॥

अन्तर्निरन्तरवलद्विमलानुकम्पा-
संस्पर्धमानमहिमानुगृहीतभक्तः ।
अग्राध्वजाग्रदतिवेललसत्तितिक्षः
क्षेमं तनोतु नितरां भगवत्कटाक्षः ॥ १२ ॥

इन्दीवरोदरमनोहरमन्दिरान्त-
र्वास्तव्यकान्तिरमणीपरिरभ्यमाणः ।
कश्चिद्विपश्चिदनुभूतमहाप्रसादः
सीदन्तमुद्धरतु मां भगवत्कटाक्षः ॥ १३ ॥

ध्यायन्निकायनिरपायकृपौघयुक्तो
मुक्तोपभुक्तमहिमामृतसिन्धुबिन्दुः ।
कामप्रकामफलदाननिदानकल्प-
वृक्षोपमः फलतु मे भगवत्कटाक्षः ॥ १४ ॥

यस्यानुकूल्यबहुमूल्यमनोज्ञरत्न-
भूषाविभूषिततनुस्तनुजाम्बुराशेः ।
भूरप्यभूदतुलसौभगयोगयोग्या
भूयात् स भूरिविभवाय विभोः कटाक्षः ॥ १५ ॥

इन्दीवरैरिव किरन् रुचिभिः समन्तात्
वृन्दावनान्तरमनन्तगुणास्पदं यः ।
आनन्दयत्यनुदिनं व्रजसुन्दरीणां
चेतांसि मेऽस्तु सुखदः स हरेः कटाक्षः ॥ १६ ॥

कटाक्षषोडशी सेयं कविचन्द्रविनिर्मिता ।
कलेव कृष्णचन्द्रस्य करोतु जगतां मुदम् ॥ १७ ॥
॥ इति श्रीकटाक्षषोडशी सम्पूर्णा ॥

## ४. ॥ अथ श्री आर्तिषोडशी ॥

जन्मानन्त्यसमुत्थकिल्बिषपरीपाकोत्थदुश्शेमुषी-
सञ्जातानभिजातकृत्यकलनाशीलं सदा श्रीपते ।
पाहि श्रीकरिशैलनाथ करुणाकूपार पापाकरं
दासं मामरुणाब्जनेत्र यतिराण्मुख्यार्यसेव्य प्रभो ॥ १ ॥

संसारे दुर्वचाधिक्षुदहितबहुलव्याध्यकाण्डातपाद्यैः
दुःखैः प्रोते मया तु क्षणमपि भगवन् वर्तनं सह्यते न ।
श्रीमन्तं त्वां प्रपन्नः शरणमहमतिव्याकुलं मां करीश
स्वामिन् मुक्तैश्च साकं कृतविविधभवद्दास्यमेनं कुरुष्व ॥ २ ॥

शरीराशक्तेः प्राङ्मम मनसि च त्वत्पदयुग-
स्मृतिस्थे चैव श्रीसहचर करिक्ष्माधरपते ।
अनायासेनैतत् कलुषदशरीरात् करुणया
क्षणादुन्मोच्य त्वच्चरणयुगलं मां नय हरे ॥ ३ ॥

महापापकोटिं गते मय्यनाथे
दयाक्षान्तिपूर्णो भवान् हस्तिनाथ ।
कटाक्षं प्रकुर्वन् विशेषेण दीनं
त्वनायासतो मां नयत्वङ्घ्रियुग्मम् ॥ ४ ॥

सदा मच्चित्ते त्वत्पदसरसिजध्यानमधिकं
मुदा मद्वाचि त्वन्मधुरतरनामालिकथनम् ।
त्वदीयैः सत्त्वाढ्यैः सततसहवासं च कृपया
समुत्पाद्य श्रीमन् वरद नय मां त्वत्पदयुगम् ॥ ५ ॥

कृतान्ताज्ञप्तातिप्रकटकटुवाग्भीषणनिज-
स्वरूपप्रेष्यौघप्रचितबहुबाधा मम हरे ।
यथा न स्याल्लक्ष्मीपरिबृढतया कामपि भवान्
कृपां कुर्वन् दिव्यं पदमपि च भो प्रापयतु माम् ॥ ६ ॥

मयि त्वत्स्वे जाते स्वकविषयचिन्ता तव हि तत्
स्वकं भूतं स्वस्मै कुरु वरद भोगाय तरसा।
त्वदेकोपायत्वध्यभिधवृतिमातत्य किमिदं
फलप्राक्कालीनं किमपि करणीयं न कुरुषे ॥ ७ ॥

सत्कर्माणि सरोरुहाक्ष वरद ज्ञानं लसद्भक्तिर-
प्यत्याश्चर्यकरत्वदीयचरितव्यूहे श्रुतेऽप्यादरः।
सत्यं त्वत्पदपङ्कजैकनिरतस्वान्तेषु संसेवनं
चैतेष्वन्यतमं च नाथ न कृतं पापात्मना हा मया ॥ ८ ॥

मुधा चिन्ता भीतिर्व्यसनमधिकं चाधिरमिता
प्रकृष्टस्वस्तौत्यं महदधिकनिन्दा च मम भो।
न मुञ्चन्ति स्वान्तं नयननलिनेमानि सततं
महाप्रारब्धस्यानुगुणफलमेतन्न विशयः ॥ ९ ॥

पिता माता भ्राता सुहृदपि सुतः सद्गुरुरपि
त्वमेव श्रीमन् मे जय जय करिक्ष्माधरपते।
हरे ब्रह्मेन्द्रादित्रिदिवपटलीसेवितपदा-
म्बुजद्वन्द्व स्वामिन् सकलभुवनाधीश्वर विभो ॥ १० ॥

रागद्वेषविलोभमानमदसंमोहादिजन्मावनिः
मज्जन्मप्रभवाम्बुधावहमयं त्वां सर्वलोकेश्वरम्।
स्वामिन् भो कथमाप्नुयां वरद ते क्षान्त्याः पराया भृशं
दासं मां विषयीकरोतु दयया श्रीमन् भवान् वत्सलः ॥ ११ ॥

महापापव्यूहो व्यपनयति सत्कर्मधिषणा-
मकृत्यव्यूहोऽतिप्रयतनमनीषां वितनुते।
स्वरूपं च प्राप्तं यदिह महतां संमततमं
सुवृत्तं तन्नित्यं सुगुणनिलयोत्पादय हरे ॥ १२ ॥

धन्यास्त्वत्करुणोत्थवित्तविभवस्वाराधितत्वत्पद
त्वद्दासा विलसन्ति केचिदसमा लीलाविभूत्यामहो।
तद्भाग्यं वरद प्रभो मम कथं जायेत जातैनसो
नित्यं त्वत्पदपद्मसंस्मृतिरियं स्याच्चेन्ममालं हरे ॥ १३ ॥

मत्स्यात्मन् कूर्मरूपिन् महितकिटितनो नारसिंहस्वरूपिन्
भूयाच्च्वोद्युक्तवर्णिन् नृपकुलबहुरुड्भार्गवाकारशोभिन्।
धात्रीपुत्रीशरूप स्वकरतललसत्सीर तालाङ्कमूर्ते
लीलागोपाल कल्के वरद मुरहरे त्वां शरण्यं भजामि ॥ १४ ॥

दृष्टार्थं प्रार्थितेऽपीप्सितफलद मया वासनातः प्रकृत्याः
तं मे त्वं मा कृथास्त्वत्पदकमलयुगीदास्यवृत्त्येकलिप्सोः ।
संभूतादेहबन्धाज्झटिति करुणया मां विमोच्य त्वदीयैः
नित्यैर्मुक्तैश्च साकं कृतविविधभवद्दास्यमेनं कुरुष्व ॥ १५ ॥

कटाक्षविषयं कृत्वा दासं कमललोचन ।
अनायासेन नय मां त्वत्पादाम्भोरुहद्वयम् ॥ १६ ॥

अष्टगोत्रनृसिंहार्यकलितामार्तिषोडशीम् ।
यः पठेत्तस्य तु भवेत् करीशकरुणामिता ॥ १७ ॥

॥ इति श्री आर्तिषोडशी सम्पूर्णा ॥

## ५. ॥ अथ श्रीवेङ्कटेश्वरशतकम् ॥

विधाय गुरुवन्दनं महितविघ्नराड्वन्दनं
मदिष्टसुरवन्दनं तदनु भारतीवन्दनम् ।
अमन्दबुधवन्दनं निखिलविद्वदानन्दनं
वदामि शतकं बुधा[मुदा]वृषगिरीश्वरानन्दनम् ॥ १ ॥

श्रीमद्वेङ्कटनायकार्यपृतनापालस्य यस्याज्ञया
यद्वेत्राग्रविचालने त्रिभुवनं संरक्षितावस्थितम् ।
प्रत्यूहाद्रिविभेदनाशनिनिभं मोक्षप्रदं ज्ञानिनां
वन्दे सूत्रवतीपतिं तमनघं विघ्नोपशान्त्यै सदा ॥ २ ॥

पूर्वं व्यासपतञ्जलिप्रभृतिभिर्यच्छास्त्रषट्कं कृतं
धात्रा वेदचतुष्टयं विखनसा सूत्रं च यद्यत्कृतम् ।
तेषां तत्त्वपदार्थवेदिनमहं वेदान्तवंशाम्बुधे
राकाचन्द्रमनन्तदीक्षितगुरुं वन्दे श्रितज्ञानदम् ॥ ३ ॥

श्रीमद्वेङ्कटनायकक्षितिपतेरक्षीणलक्ष्मीवतः
क्षोणीं काङ्क्ष्य[क्षोणीकाङ्क्षित]चित्रवाटनगरे तस्मै सुपुत्रं दिशेः ।
क्षोणीरक्षणदक्षमक्षयकृपावीक्षासुसंरक्षित-
क्षोणीनिर्जरद[प]क्षमक्षयसुखापेक्षावतामिष्टदम् ॥ ४ ॥

शारदाम्बुजविभासुरानना
शारदा मदवने विशारदा ।
शारदेन्दुधवला ममानने
सर्वदा वसतु सर्वदादरात् ॥ ५ ॥

सच्छात्रबृन्दं यदपाङ्गदृष्ट्या
षट्शास्त्रवेदाकलनक्षमं स्यात् ।
तेभ्यो महद्भ्योऽखिलभूसुरेभ्यो
नमो नमो भागवतोत्तमेभ्यः ॥ ६ ॥

श्रीवेङ्कटेश्वर मया क्रियतेऽधुना ते
विज्ञापना सुमहती शृणु तां दयालो ।
कृत्वापराधमनिशं शरणागतं मां
रक्षस्व देव कृपया क्षमया च युक्तः ॥ ७ ॥

श्रीवेङ्कटेश्वर विभो मयि तेऽनुकम्पा
यद्यस्ति संस्तुतिमहं करवाणि शक्त्या ।
नो चेत् कथं सुरवरैर्मनसोऽप्यगम्यां
ब्रह्मादिभिश्च वचसः प्रभवामि कर्तुम् ॥ ८ ॥

श्रीवेङ्कटेश्वर विभो भवता प्रणीतं
कर्माखिलं न सुकरं चिदभूदवेद्या ।
मत्वाप्यशक्यमिति ते भजनं प्रपत्तु
स्मृत्वा दृढोऽस्मि चरमं वचनं तवाहम् ॥ ९ ॥

श्रीवेङ्कटेश्वर विभो न मयाप्यधीतं
तप्तं तपो न हि हुतं न च नास्ति दत्तम् ।
आराधनं न विधिना कृतमेव ते मां
चित्राडवास कृपया परिपाहि दीनम् ॥ १० ॥

श्रीवेङ्कटेश्वर विभो भवता च सर्वं
ज्ञातं मया न हि मदस्ति समोऽधिको वा ।
त्राताप्ययं मदवनीय इतीह लोके
चित्राडवास परिपालय मां दयालो ॥ ११ ॥

श्रीवेङ्कटेश्वर विभो करणत्रयेण
कालत्रये दुरितमेव कृतं मयासीत् ।
तस्मान्निवारणकृते तव चास्ति शक्ति-
र्विष्णो विमोचयतु मां दुरितात् कृपा ते ॥ १२ ॥

श्रीवेङ्कटेश्वर कृता भवता प्रतिज्ञा
मामेकमेव शरणं व्रज सर्वधर्मान् ।
त्यक्त्वाथ सर्वदुरितादपि मोक्षयिष्ये
त्वामेव चाहमिति या ननु मा शुचस्त्वम् ॥ १३ ॥

श्रीविङ्कटेश्वर निशम्य तव प्रतिज्ञां
तां प्रत्ययात् पदमहं शरणं प्रपन्नः ।
मां पाहि सर्वदुरितात् परिमोचयित्वा
चित्राडवास भगवन् भव सत्यसन्धः ॥ १४ ॥

श्रीवेङ्कटेश्वरभुजान्तरमास सद्म
यस्यास्तु जन्म वसुधा तव धाम चेष्टम् ।
यद्वीक्षणाश्रयमिदं जगतां त्रयं स्या-
द्दुग्धस्त्वयाम्बुधिरमन्थि च यत्कृतेऽभूत् ॥ १५ ॥

श्रीवेङ्कटेश्वर विभो दयितां श्रियं तां
रूपेण चेष्टितगुणैर्भवतोऽनुरूपाम् ।
त्वद्वल्लभां भगवतीं कृपया श्रिताना-
मिष्टार्थदामुदधिजां प्रणमामि नित्यम् ॥ १६ ॥

श्रीवेङ्कटेश्वर विभो कृपणाय मह्यं
दातुं त्वमर्हसि धियं गुणकीर्तने ते ।
चित्राडवास शरणागतवत्सलत्वात्
त्वत्पादपद्ममनिशं शरणागतोऽस्मि ॥ १७ ॥

श्रीवेङ्कटेश्वर जनार्दन वासुदेव
गोविन्द माधव हरेऽच्युत कृष्ण विष्णो ।
श्रीकेशव त्रिभुवनेश मुकुन्द राम
नारायणेति सततं स्मरणं करिष्ये ॥ १८ ॥

श्रीवेङ्कटेश्वर विभो शरणागतस्य
चित्ते ममास्तु सततं तव पादभक्तिः ।
संसारसागरवितारणमिच्छतां नौ-
र्मोहान्धकारविनिवारणसूर्यरश्मिः ॥ १९ ॥

श्रीवेङ्कटेश्वर भवच्चरणारविन्द-
ध्यानामृताम्बुधिविगाहननिर्मलात्मा ।
ब्रह्मादिभिस्तव कृपारहितैर्यदीदृग्-
गच्छाम्यगम्यपदमन्यजनैः कदा ते ॥ २० ॥

श्रीवेङ्कटेश्वर सुदर्शनपाञ्चजन्यौ
पञ्चायुधान्यहमनन्यमनाः स्मरामि ।
कौमोदकीप्रवरनन्दकदीप्य[दीप्र]शार्ङ्गा-
ण्यज्ञानकाण्डपटुदैत्यनिबर्हणानि ॥ २१ ॥

श्रीवेङ्कटेश्वरविभुं शिरसा नमामि
ध्यायाम्यनन्यमनसा वचसा वदामि ।
चित्राडवासमुरसा श्रियमादधानं
हस्तद्वयेन कुसुमैरपि पूजयामि ॥ २२ ॥
श्रीवेङ्कटेश्वरविभुं जगति स्थितानां
संसारमाकलयतां मनसाप्यसारम् ।
हिंसाकरासुरतमिस्रनिरासहंसं[1]
कंसासुरारिमनिशं शिरसा नमामि ॥ २३ ॥
श्रीवेङ्कटेश्वर विभो परिपाहि मां त्वं
वेतण्डदैत्यवरदण्डनपण्डितस्य ।
कोदण्डदण्डपटुखण्डनशौण्डशुण्डा-
दोर्दण्डमण्डितसुदर्शनकाण्डजाब्जः ॥ २४ ॥
श्रीवेङ्कटेश्वर विभो भवतः प्रभावात्
शैलीं तनुं चरणयो रजसाप्यहल्या ।
त्यक्त्वाथ गौतममगान्मुदिता सती त-
त्पादारविन्दमनिशं कलयामि चित्ते ॥ २५ ॥
श्रीवेङ्कटेश्वर विभो प्रवदन्ति धीरा
नीलाद्रिवेङ्कटमहीध्रपतिप्रसिद्धौ ।
द्वावत्र तौ पतितपावनदीनबन्धू
त्वामित्ययं तु शरणागतरक्षकाख्यः ॥ २६ ॥
श्रीवेङ्कटेश्वर विभो भवतोऽत्र लोके
दीनार्त[2]मन्तुकरपालनतत्परत्वात् ।
नीलाद्रिवेङ्कटमहीपतिनामधेयं
त्वामेव तत्त्रिविधरूपमहं वदामि ॥ २७ ॥
श्रीवेङ्कटेश्वर विभो न गजावलिं च
न स्यन्दनानि न भटान्न तु वाजिराजिम् ।
याचे प्रसादमवनं भवतः क्षमां त्वां
चित्राडवास भगवन् त्रिविधात्मकोऽहम् ॥ २८ ॥
श्रीवेङ्कटेश्वर कृता भवते प्रतिज्ञा
नीलाद्रिरायविभुना क्षयवत्सरे तु ।
क्षेत्रं स्थितं युधि परत्र हृतं खलैस्ते
दत्तं भवेदिति मया कुरु सत्यसन्धम् ॥ २९ ॥

1. हंसः=सूर्यः । 2. मन्तुकरः=अपराधी ।

श्रीवेङ्कटेश्वर कलौ भवता समोऽपि
देवो न हीति विदिता भुवि संप्रतीतिः ।
चित्राडधामनिलयस्य समा दशाष्टौ
याता ह्रिया विरहितस्य तवाद्य विष्णो ॥ ३० ॥

श्रीवेङ्कटेश्वर विभो तव चाग्रपत्न्यो-
रेका चलाग्रमहिषी च कथं स्थिराभूत् ।
अन्या स्थिरापि चपला कथमास चित्रं-
श्रीभूमिदेविसहितः खलु तिष्ठसीह ॥ ३१ ॥

श्रीवेङ्कटेश्वर भुवस्तन[व]योऽपवा[ह]र्ता
तस्यावनिं क्षितिपतिस्तमसूययेव ।
हृत्वापि भीमवरकोऽपि निवासिनस्त्वं
शक्तोऽसि वेङ्कटपतेर्विल[ष]येऽपि नूनम् (?) ॥ ३२ ॥

श्रीवेङ्कटेश्वर विभो भवदीयवर्गं
ये विद्विषन्ति ननु तान् विगतान् करोषि ।
चित्राडवास भवति प्रतिपत्तियुक्ता
ये तान् करोषि ससुखानिह सम्पदा त्वम् ॥ ३३ ॥

श्रीवेङ्कटेश्वर विभो मम दुष्कृताद्वा
क्षेत्रं खलैरपहृतं स्थितमन्यदेशे ।
यद्यस्ति तेऽद्य महिमा तदपि स्वदेशे
नीलाद्रिराड् वितरति स्वयमेव राजा ॥ ३४ ॥

श्रीवेङ्कटेश्वर युवा खलु सम्प्रति त्व-
मष्टादशाब्दवयसा सहितोऽसि देव ।
संस्थापनात् प्रभृति वा तव चित्रवाड-
ग्रामे ह्रिया विरहितोऽसि लभस्व मानम् ॥ ३५ ॥

श्रीवेङ्कटेश्वर विभो भव सुप्रसन्नः
स्वप्नेऽथवावनिपतेरपि बोधय त्वम् ।
शक्तिर्न ते मदवने किमु चित्रवाड-
क्षेत्रं प्रदातुमिति मेऽवनिचक्रवर्तिन् ॥ ३६ ॥

श्रीमद्वेङ्कटशब्दपूर्वविलसन्नीलाद्रिरार्यप्रभु-
र्दासस्ते खलु वेङ्कटेश्वरनिजस्स्वामी भवांस्तस्य च ।
दत्तास्मै भवतान्यराज्यवसुधा तुभ्यं न तेनावनि-
र्भो चित्राडनिवासिने जनपदे स्वीये निजस्वामिने ॥ ३७ ॥

श्रीवेङ्कटेश्वर विभो वृषवत्सरे तु
न्यायादहं स्वपरराष्ट्रभुवा युतोऽस्मि ।
चित्राडदेव कृपया न मयीति येन
क्षेत्रं न दत्तमधुनापि सविस्मितोऽभूत् ॥ ३८ ॥

श्रीवेङ्कटेश्वर भुवा सहितो भवाद्य
तत्त्वं प्रबोध्य निजदेशपतेः स्वदेशे ।
सुक्षेत्रमेव भवतेति च दीयतां मे
संप्रार्थय त्वमथवार्जय पौरुषेण ॥ ३९ ॥

श्रीमद्रावुकुलोद्भवः स गुणवान् श्रीवेङ्कटाद्रिं गतः
तत्रासीन्निजदैवमेव शरणं प्राप्तः पुनर्लक्ष्मणः ।
वत्सं गौरिव धावतीति विदितन्यायेन तस्माद्गिरे-
रायातः स तु चित्रवाडनगरं नूनं स्वदासास्पदम् ॥ ४० ॥

श्रीवेङ्कटेश्वर विभो जलधौ निमग्न-
स्त्वं मीनरूपमुपलभ्य जगद्धितार्थम् ।
ब्रह्माखिलं कमलजाय ददासि भूय-
श्चित्राडवास भवतः परमा हि शक्तिः ॥ ४१ ॥

श्रीवेङ्कटेश्वर विभो कमठ प्रभुत्वात्
पृष्ठे महीं धृतवतः कृपयाश्रितेषु ।
चित्राडधाम्न्यवनिरेव न तेऽस्ति किं वा
शक्तः कथं मदवने वद संप्रति त्वम् ॥ ४२ ॥

श्रीवेङ्कटेश्वर वराहतनुर्निमग्नां
रत्नाकरे धरणिमुद्धृतवान् किल त्वम् ।
किञ्चानया सह रतिं प्रतिलभ्य सूनु-
मुत्पाद्य किं ह्रियमवाप्य न याचकोऽसि ॥ ४३ ॥

श्रीवेङ्कटेश्वर यथा नरसिंहमूर्ति-
स्त्रातुं कयाधुसुतमुत्तमभक्तियुक्तम् ।
पातुं भवार्तनिजभक्तजनांस्तथास्मां-
श्चित्राडधाम्नि वसतिं गतवानसि त्वम् ॥ ४४ ॥

श्रीवेङ्कटेश्वर पुरन्दरशत्रुसत्रे
त्वं वामनत्वमुपलभ्य बलेर्धरित्रीम् ।
लब्ध्वा च तां मघवते पुनरेव दत्त्वा
लक्ष्म्या ह्रियापि सहितः किमयाचकस्त्वम् ॥ ४५ ॥

श्रीवेङ्कटेश्वर भवान् खलु भार्गवः सन्
रामः पुरार्जुनमरिं किल कार्तवीर्यम् ।
निर्जित्य भूमिमखिलामपि कश्यपाय
प्रादादथाम्बुधिभुवं प्रति याचकः किम् ॥ ४६ ॥

श्रीवेङ्कटेश्वर विभो शरणं प्रपद्ये
पादौ तवाहमधुना भव रक्षको मे ।
रामो यतः खलु विभीषणरक्षसे त्वं
दत्त्वाभयं पुनरपि प्रददासि लङ्काम् ॥ ४७ ॥

श्रीवेङ्कटेश्वर भवान् खलु रामरूपं
धृत्वावनाय जगतस्तु तवाग्रजोऽभूत् ।
कृष्णावतारवत एव सविश्वरूप-
स्त्रातुं स्थितोऽसि निखिलान् खलु चित्रवाटे ॥ ४८ ॥

श्रीवेङ्कटेश्वर विभो सुगतावतारः
कृत्वा सुशास्त्रमपि मोहयितुं जनांस्त्वम् ।
शक्तोऽद्य सौगतबुधान् सुगतान् करोषि
त्वं पाहि मां स कृपया शरणागतं ते ॥ ४९ ॥

श्रीवेङ्कटेश्वर विभो कलिकावतारं
गत्वाधिरुह्य हयमुत्तममेव विष्णो ।
धृत्वासिमाशु कलिकिंकरकन्धराणि
छित्त्वावनिं सुखवतीमनिशं करोषि ॥ ५० ॥

श्रीवेङ्कटेश्वर विभो तव वत्सलत्व-
ज्ञानादिदिव्यगुणषट्कविराजितत्वात् ।
त्वं पाहि वीक्ष्य पतितं कृपयातिदीनं
कामादिदोषरिपुषट्कपराजितं माम् ॥ ५१ ॥

श्रीवेङ्कटेश्वर जनानसि पातुकाम-
स्त्वर्चात्मनावतरितः कृपयास्मदादीन् ।
क्षेत्रेषु रङ्गवृषशैलगजाद्रिभद्र-
नीलाचलप्रमुखदिव्यनिकेतनेषु ॥ ५२ ॥

श्रीमद्वेङ्कटशैलराण्मम हरे[रि]श्चित्राडवासप्रभो[भुः]
कामारण्यदवानलोद्भवमहाक्रोधानलासारदः ।
लोभासारदमेघवातपटलो मोहप्रवाताहिरा-
ण्मात्सर्याहिखगेश्वरो मदमहामातङ्गकण्ठीरवः ॥ ५३ ॥

श्रीवेङ्कटेश्वर मम प्रबलौ रिपू द्वौ
देहाभिमानजनितौ जगति प्रसिद्धौ ।
ज्ञानासिनातिनिशितेन निकृन्तनीयौ
वैराग्यखेदमुपगृह्य कदा भवेताम् ॥ ५४ ॥

श्रीवेङ्कटेश्वर विभो निखिलाब्जजाण्ड-
जन्मस्थितिप्रलयकारणमप्रमेयम् ।
वेदा रुवन्त्यकृतकाः स्मृतयो भवन्तं
नारायणं परमपूरुषमाहुरार्याः ॥ ५५ ॥

श्रीवेङ्कटेश्वर भवान् पुरुषात् परस्मात्
व्यूहैरवातरदजाण्डकटाहमध्ये ।
संकर्षणाख्यरविमण्डलवासुदेव-
प्रद्युम्ननामभिरतो ह्यनिरुद्धनामा ॥ ५६ ॥

श्रीवेङ्कटेश्वर भवद्विभवावताराः
श्रीरामकृष्णनरसिंहवराहमुख्याः ।
पर्याप्नुवन्त्यमरसाधुजनावनाय
दुष्टक्षितीशजनदैत्यनिबर्हणाय ॥ ५७ ॥

श्रीवेङ्कटेश्वर विभोऽखिलदेवदेव
क्षीरेषु सर्पिरिव वह्निरिवेन्धनेषु ।
देहान्तरात्मसु निविष्टसदन्तरात्मा
शास्तासि भूतनिवहस्य चराचरस्य॥ ५८ ॥

श्रीवेङ्कटेश्वर हरे श्रितवत्सलत्वा-
ल्लोकेऽस्मदाद्यखिलदीनजनावनाय ।
ग्रामाग्रहारपुरवेश्मनदीवनाद्रि-
ष्वर्चात्मनावतरितः सुलभोऽखिलानाम् ॥ ५९ ॥

श्रीवेङ्कटेश्वर जलांशुकधूपदीप-
नैवेद्यपुष्पमुखवासफलार्पणाद्यैः ।
प्रीतः कुचेलमुनयेऽपि यथासि पूर्वं
दाता भवाद्य निजभक्तजनाय लक्ष्म्याः ॥ ६० ॥

श्रीवेङ्कटेश्वर विभो भवदीयसद्म-
संमार्जनाम्बुपरिषेचनलेपनाद्यैः ।
स्तोत्राभिवन्दनपरिक्रमणप्रमोद-
वीक्षादिकर्मभिरकिंचनरक्षकोऽसि ॥ ६१ ॥

श्रीवेङ्कटेश्वर कुशेशयसन्निकाश-
स्वास्यश्रिया हसितशारदशीतरश्मिः ।
सीताशया च पिशिताशविनाशनेशः
कीशेशसंशयनिरासशरासनोऽसि ॥ ६२ ॥

इन्दिराहृदरविन्दमन्दिर
कुन्दसुन्दरशुभाङ्गमण्डन ।
नन्दनन्दन मुकुन्द वन्दनं
कुर्महे श्रितजनस्य चन्दन ॥ ६३ ॥

इन्द्रादिवृन्दारकवन्दिताङ्घ्रिं
चन्द्राननं चन्दनचर्चिताङ्गम् ।
गोवृन्दवृन्दावनसंचरन्तं
गोविन्दमीडे भुजगाचलेन्द्रम् ॥ ६४ ॥

श्रीमद्वेङ्कटनायक द्रुपदजाप्रह्लादवेतण्डराट्-
कालिङ्गाहिविभीषणामरगणाहल्याम्बरीषादयः ।
गोपीगोकुलगोपवृन्दहरिराट्काकार्जुनेन्द्रादय-
श्चैते ते शरणागतार्तिहरणे सन्त्येव मे साक्षिणः ॥ ६५ ॥

श्रीवेङ्कटेश्वर विधुन्तुदचैद्यनक्र-
दैत्यादिदुष्टरिपुकन्धरकर्तनाय ।
पाणौ बिभर्षि निशितं च सुदर्शनं यत्
तस्मै नमोऽस्तु सततं तमसो निहन्त्रे ॥ ६६ ॥

अण्डजेन्द्रनगमन्दिरावमां-
मण्डजेन्द्रतुरगाभिमण्डित ।
कुण्डलीन्द्रशयन स्ववाहिनी-
मण्डलेन्द्रकृतदैत्यदण्डन ॥ ६७ ॥

इन्दिरास[सु]खमन्दिराव मां
पण्डितेन्द्रनतसुन्दराङ्घ्रिक ।
पुण्डरीकजभवेन्द्रवन्दित
खण्डितासुरविरोधिकंधर ॥ ६८ ॥

नारदसंस्तुतदिव्यगुणाकर
क्षीरपयोनिधिमध्यनिकेतन ।
नीरदसन्निभगात्रमनोहर
वेङ्कटनायक मामव माधव ॥ ६९ ॥

कमलासनविनुतामलगुणवैभवचरितं
कमलाकरविलसत्पदकमलानतविबुधम् ।
अचलारुणकमलाकृतिकरपीडितचरणं
भज मानस भुजगाधिपगिरिनायकमधुना ॥ ७० ॥

पन्नगेन्द्रगिरिमस्तकालये
दानवेन्द्रकुलपर्वताशनिः ।
कोसलेन्द्रकुलवार्धिचन्द्रमा
राघवेन्द्र परिपालयाद्य माम् ॥ ७१ ॥

तरुणारुणकिरणारुणकरपङ्कजयुगलं
वरुणालयतरुणीमणिजननाकरचरणम् ।
करुणाकरमरुणाधरमलिकुन्तलमनिशं
भज मानस फणिराड्गिरिशिखरालयमनघम् ॥ ७२ ॥

अरिकेतनकुलिशाङ्कुशजलजाम्बुजकलितं
कलिकल्मषविनिवारणपटुवाहिनिजनकम् ।
जनकाधिपतनयाकरकमलाम्बुजललितं
करवाणि सुचरणं तव शरणं सुमसुगुणम् ॥ ७३ ॥

करुणाकरविनतासुततुरगावनचतुरं
चतुराननुतवैभवफणिराड्गिरिनिलयम् ।
रजसा वरतरुणीकृतदृषदद्भुतचरितं
करवाणि च चरणं तव शरणं सुमसुगुणम् ॥ ७४ ॥

विधिनिर्मितभुवनत्रयपदविक्रमकलितं
खरदूषणशुकसारणतरुखण्डनपरशुम् ।
दशकन्धरकदलीतरुवनभञ्जनपवनं
पवनात्मजविनुतं तव चरणं सुरशरणम् ॥ ७५ ॥

चरणद्वय गमनं कुरु हरिमन्दिरमभितः
कमलापतिचरणं करयुगलार्चय सततम् ।
नयनद्वय भगवन्मुखमवलोकय सुभगं
भज मानस भुजगाधिपगिरिराट्पदकमलम् ॥ ७६ ॥

रसने पिब मम माधवसुकथामृतमधुना
श्रवणे भवहरणाच्युतचरितं बहु शृणुतम् ।
नतिमाचर मधुसूदनपदयोः शिर उभयो-
र्भज मानस फणिराड्गिरिशिखरालयचरणम् ॥ ७७ ॥

चरितं मम कथितं तव विदितं ननु विततं
दुरितं हर मुदितं कुरु हितमाचर सततम् ।
वरवेङ्कटगिरिनायक सुर मामव शरणा-
गतमच्युत कलयामलमनिशं सुरविनुतम् ।। ७८ ।।

प्रायो वसन्ततिलकाभिधवृत्तजात-
पद्यान्यनेकविधलक्षणलक्षितानि ।
सन्तीह वेङ्कटमहीध्रपतिप्रभावात्
शब्दार्थलक्षणविदां शतकेऽस्ति तोषः ।। ७९ ।।

चित्राटग्रामवासी घनरुचिरतनुः पार्श्वयोर्विद्युदाभ-
श्रीभूदेवीसमेतः तरणिशशिलसच्चक्रशङ्खोर्ध्वपाणिः ।
भक्तेभ्यो वेङ्कटेशो विलसति चरणप्रावृतोरुस्थिताभ्यां
हस्ताभ्यामाश्रितेभ्यः प्रविततविरजागाधमुक्तिप्रदेशः (?)।। ८० ।।

पुंसोऽर्थांश्चतुरोऽपि मोक्षसहितान् धर्मार्थकामान् दिशन्
यस्मिन् यस्य मनोरथो यदि भवेत्तं तस्य धर्मादिकम् ।
दासान्नस्तव चित्रवाटनिलय श्रीवेङ्कटाद्रीश्वर
श्रीभूदेविलसत्सुपार्श्वयुगल त्राहि प्रसादार्थिनः ।। ८१ ।।

चित्रं तेऽप्यधुना कुचेलमुनये दातास्यनल्पश्रियो
भिक्षित्वामरवैरिणं मघवते त्रैलोक्यराज्यश्रियः ।
क्षेत्रं यद्यपि वेङ्कटाचलपते चित्राटवासस्य ते
नादत्तं भुवि नोपतिष्ठत इति न्यायः कथं स्यान्मृषा ।। ८२ ।।

ब्रह्माण्डोदरसंस्थिताखिलजनत्राणाय रङ्गस्थले
सौलभ्यादिगुणान्वितः फणिपतेर्भोगे शयानः स्थितः ।
त्वं नाभीकमलोद्भवाद्विखनसः सञ्जातवेदस्तुत-
श्रीभूदेविकरार्पितात्मचरणश्रीरङ्गराणमामव ।। ८३ ।।

विश्वस्यावनकर्मणे विखनसा संप्रार्थितः सात्वतां
वंशे चानकदुन्दुभेर्जनिमगाः कृष्णात्मना यः पुरा ।
दातु[ध्यात]श्चेतसि तत्त्वचिन्तनवशात् सञ्जातवैखानस-
श्रौताराधनराधितः स सततं शेषाद्रिराण्मामव ।। ८४ ।।

वेदाङ्गप्रविराजमानगरुडारूढोऽञ्जसा गां गतो
वेतण्डार्तिनिवारणाय मकरं छिछत्त्वारिणा यः स्वयम् ।
वेतण्डाचलमस्तके वरदराजाख्यातनाम्ना स्थितः
स त्वं वेङ्कटनायकाश्रितजनत्राता भवाद्य प्रभो ।। ८५ ।।

सीतालक्ष्मणमध्यभागविलसन्मूर्त्या घनश्यामलः
कोदण्डेन स खण्डितामररिपुः संरक्षिताखण्डलः ।
रक्षोवानरराजयोरवरजौ संरक्षितौ च त्वया
श्रीमद्वेङ्कटनायक त्वमधुना भद्राद्रिराण्मामव ॥ ८६ ॥

यस्त्वं श्रीबलभद्ररामसहितस्त्वद्दर्शनायागतान्
दासांस्तान् पतितानपि त्रिजगतां नाथः सुभद्रान्वितः ।
क्षेत्रे श्रीपुरुषोत्तमे स्थितिमगाः पातुं प्रसादान्मुदा
स त्वं वेङ्कटनायकाद्य कृपणं नीलाद्रिराण्मामव ॥ ८७ ॥

स्मरामि मनसा श्रिया सकललोकमात्रा स्थितं
वदामि वचसा भुवाप्यखिललोकधात्राश्रितम् ।
नमामि शिरसा गुरुं त्रिजगतां सुसंरक्षकं
सदा परिचराम्यहं वृषगिरीशमिष्टप्रदम् ॥ ८८ ॥

कलये सततं वृषशैलपतिं
कलिदोषहरं करुणाजलधिम् ।
कमनीयवपुःकलितं सरमं
कमलालयवक्षसमाधिहरम् ॥ ८९ ॥

कमलायताक्षममलात्मवैभवं
विमलाम्बुजास्यमतुलाखिलामरम् ।
तरसा नमामि शिरसा च वेङ्कटं
मनसा भजामि वचसा स्तवीम्यहम् ॥ ९० ॥

श्रीमद्वेङ्कटनाथ ते यदि कृपा दीनो धनाढ्यो भवेत्
नो चेत्तद्विपरीतवानिति बुधाः प्राहुर्विशिष्टादयः ।
रक्षां यस्य करोमि तस्य कृपया वित्तं हरामीति य-
त्तथ्यं तद्वचनं हरे प्रियतरं नान्यस्य वित्तं तव ॥ ९१ ॥

मूको वदत्यनिशमेव निरीक्षतेऽन्धो
पङ्गुर्गतिं प्रलभते बधिरः शृणोति ।
दीनोऽप्यतीव धनवान् भवतः प्रसादा-
न्नैतन्मृषा भवति वेङ्कटशैलनाथ ॥ ९२ ॥

सप्तप्राकारभूतावनिधरवरशेषाद्रिकूटाधिरूढ-
श्रीदेवीमन्तरा भूरमणिमपि लसन्नीलमेघोज्ज्वलाङ्गः ।
श्रीमन्नीलाद्रिरामप्रभुवरनगरप्रान्तदेशे विराजत्
चित्राटग्रामवासी मम भवतु मुदे वेङ्कटेशो मुकुन्दः ॥ ९३ ॥

सनकादियोगिवर्यैरनवरतसेव्यमानपदपद्म ।
चित्राटनगरवासिन् क्षिप्रं मे प्रदिश पादभक्तिं ते ॥ ९४ ॥

मित्राब्जनेत्रसुभगः सुत्रामाद्यमरविनुतचारित्रः ।
चित्राटवेङ्कटेशः सुत्रासितदेवतारिरवतान्माम् ॥ ९५ ॥

ब्रह्मेशानसुरेशमुख्यविबुधैर्मान्यैः सुमान्यो दिशा-
वल्याखण्डलपूर्वदेवनिवहैर्मान्यैः सुमान्योऽपि सन् ।
हे चित्राटनिवास वेङ्कटपते नीलाद्रिरायप्रभो-
र्देशे पुण्यजनैरमर्त्यचरितैर्मान्यो ह्यमान्यः कथम् ॥ ९६ ॥

शाखा यस्य तु तैत्तरीयविदिता सूत्रं च वैखानसं
गोत्रं गौतममा[हुतिश्च]हविषां यागाः श्रुतिर्याजुषी ।
कालोऽयं निगमागमप्रवचनैर्विद्यार्थिनां यापितः
स्वाचार्यस्तु पिता पितामहनिभः श्रीपद्मनाभाह्वयः ॥ ९७ ॥

श्रीमद्गौतमगोत्रजस्य विदुषोऽनन्तार्यनाम्नो गुरो-
स्तस्याहं नरसिंहनामविदितः शिष्यस्तुरीयोऽनुजः ।
श्रीमद्वेङ्कटनायकास्पदमिदं हृद्यं सतां शृण्वतां
पद्यानां शतकं चकार विदुषां विद्यानवद्यात्मनाम् ॥ ९८ ॥

श्रीभूदेवीसमेताय भक्ताभीष्टप्रदायिने ।
चित्राटाख्यपुरेशाय वेङ्कटेशाय मङ्गलम् ॥ ९९ ॥

॥ इति श्रीवेङ्कटेश्वरशतकं संपूर्णम् ॥

---

## ६. ॥ अथ श्रीवरदराजस्तोत्रम् ॥

दद्यान्मे देवराजो वितरतु भगवान् मङ्गलं मङ्गलाना-
मावासो हस्तिशैले मणिमयशिखरे शेखरो दीप्यमानः ।
लक्ष्मीनाथो दयालुर्विधिमुखविबुधैर्वन्दितश्रीपदाब्जः
सर्वेषामिष्टदाता स्मितमधुरमुखः श्रीनिधिर्लोकनाथः ॥ १ ॥

हस्त्यद्रौ पुण्यकोट्यां विलसितममलं वत्सलं देवराजं
शेषाद्यैः सूरिसङ्घैर्नतपदकमलं लोकनाथं दयालुम् ।
पारावारप्रसूतापदकमललसल्लाक्षया लक्षिताङ्गं
वेदान्ते पाञ्चरात्रे प्रविदितविभवं वन्दिषीय क्षमाब्धिम् ॥ २ ॥

तीरे श्रीवेगवत्या विलसति विमलैरुत्तरे पुण्यकोट्यां
सर्वाभीष्टप्रदाता प्रवरगुणनिधिर्देवराजो मुकुन्दः ।
वेदान्तेषु प्रसिद्धः सरसिजनयनो भासमानप्रभावः
दिव्यं कल्याणमाद्यं दिशतु मम पदं वत्सलः स्वाश्रितानाम् ॥ ३ ॥

अनन्तगरुडादिभिः प्रणतपादपद्मो रमा-
स्तनस्तबकचञ्चलो वरदराजभृङ्गः सदा ।
मुदा मम हृदम्बुजे रमतु हस्तिशैलप्रभु-
र्नितान्तललिताननः कमलदिव्यनेत्रोज्ज्वलः ॥ ४ ॥

सुवर्णमकुटोज्ज्वलं सुभगदिव्यनीलालकं
ललाटफलकोल्लसत्तिलकपुण्ड्रदीप्राननम् ।
विचित्रमणिभूषणज्वलितनीलगात्रप्रभं
भजे करिगिरीश्वरं वरदराजमत्युज्ज्वलम् ॥ ५ ॥

रथाङ्गजलजाङ्कुशध्वजसरोजरेखादिभिः
स्वलङ्कृततलौ बहिर्विलसदिन्द्रनीलप्रभौ ।
विकासिकमलोपमौ विविधरत्नभूषोज्ज्वलौ
करीशचरणौ भजे सकलभक्तसौख्यप्रदौ ॥ ६ ॥

सुकल्पकतरुश्रिया तुलितदिव्यजङ्घोज्ज्वलं
कनत्प्रभककुत्समज्वलितभास्वदूरुप्रभम् ।
कटीतटसमुल्लसत्सुभगदिव्यपीताम्बरं
भजे करिगिरीश्वरं वरदमब्जनीलप्रभम् ॥ ७ ॥

सनाभिकनकप्रभज्वलितयज्ञसूत्रोज्ज्वलं
मणीन्द्रकमलालसद्विपुलदिव्यवक्षःस्थलम् ।
करीन्द्रकरसन्निभस्फुरितवृत्तबाहोज्ज्वलं
भजे करिगिरीश्वरं विलसदंसभूषोज्ज्वलम् ॥ ८ ॥

लसद्गलसमुज्ज्वलस्फटिकरत्नहारोज्ज्वलं
विलास्यधरपल्लवप्रभवदिव्यमन्दस्मितम् ।
सुफालतलमुन्नसं नमितसुन्दरभ्रूयुगं
भजे करिगिरीश्वरं विकचपद्मनेत्रोज्ज्वलम् ॥ ९ ॥

सुनीलघनसन्निभं सुभगदिव्यरत्नाढ्यक-
स्फुरन्मकुटशोभितं कनकदिव्यभूषोज्ज्वलम् ।
दयागुणपयोनिधिं दरदलत्सरोजाननं
भजे करिगिरीश्वरं वरदराजमत्यद्भुतम् ॥ १० ॥

अव्याादव्याजबन्धुर्दिवि भुवि जगतां वेदशास्त्रप्रशस्तः
लोकानामाभिमुख्ये त्वभिमतवरदो देवदेवाधिराजः ।
भक्तानां दोषभोग्यः करिगिरिशिखरप्रोल्लसत्कल्पवृक्षः
संसाराब्धौ निमग्नं मदनपरवशं दुर्दशं दुर्गुणं माम् ॥ ११ ॥

मेघश्यामः कृपालुः करिगिरिशिखरप्रोज्ज्वलत्पारिजातः
पद्माक्षः पद्मपाणिः सरसिजवदनः सर्ववेदान्तवेद्यः ।
मुक्तादामप्रभास्वन्मणिवरकमलावत्सजाज्वल्यवक्षाः
पित्रादिर्बन्धुवर्गो मम किल विविधः पातु मां देवराजः ॥ १२ ॥

अब्जानाथः पदाब्जप्रणतजननिधिः प्रज्वलत्कौस्तुभादि-
श्रीभूषादीप्रगात्रः प्रवरगुणनिधिर्नीलमेघप्रभाभः ।
सर्वज्ञः सर्वधाता शकनबलयुतः सत्यसङ्कल्पमानो
भूतानामादिबन्धुः करिगिरिवरदः पातु मां देवराजः ॥ १३ ॥

असारं संसारं धिगशुचिमलजं हृदय मे
निराबाधं नित्यं कमलनयनं शेषशयनम् ।
करीशं कन्दर्पप्रभममलकल्याणगुणकं
मुरारिं लोकेशं मधुमथनमाद्यं भज हरिम् ॥ १४ ॥

जगन्नाथं नाथं भज हृदय नाथं प्रणामता-
मनाथं मानाथं कमलभववन्द्यं गुणनिधिम् ।
पयः पारावारप्रभववदनं पद्मचरणं
मदीशं हस्तीशं मदनशततुल्यं मुरभिदम् ॥ १५ ॥

करीशं लोकेशं कमलचरणं भक्तरमण-
मुमेशब्रह्मेन्द्रप्रमुखसुरसङ्घस्तुतपदम् ।
घनाभं श्रीनाभिप्रविलसितसूत्रोज्ज्वलतनुं
भजेयं देवेशं शुभगुणसुधाम्भोनिधिमहम् ॥ १६ ॥

रथाङ्गं श्रीशार्ङ्गं प्रणतजनरक्षार्थममलो
हरिः शङ्खं खड्गं सततमपि बिभ्रन्मुररिपुः ।
गरिष्ठश्रेष्ठानां करिगिरिलसन् कल्पकतरु
र्वरिष्ठं कल्याणं दिशतु मम वात्सल्यजलधिः ॥ १७ ॥

कलानाथःक्षीरप्रभवलसदास्यस्मितरुचि-
र्दयासिन्धुर्बन्धुर्मम तु करिशैलोज्ज्वलतरुः ।
जगन्नाथो दिव्यस्फटिकमकुटप्रोज्ज्वलतनुः
मम क्षेमं दद्यादतुलगुणवात्सल्यजलधिः ॥ १८ ॥

विधीशाधीशानो विनतजनताकल्पकतरुः
   करीशः पद्मेशः परमपुरुषो वत्सलतरः ।
सुशीलो देवेशः कमलनयनः सौम्यवदनः
   मम क्षेमं दद्यादतुलमहिमा भक्तरमणः ॥ १९ ॥

सदामारामोराः करिगिरिशिरोभूषणवरः
   दयापारावारः परमपुरुषो मङ्गलनिधिः ।
गुणानां पाथोधिः सुभगसुलभोदारचरणो
   मम क्षेमं दद्यादतुलमहिमा भक्तरमणः ॥ २० ॥

सकलभुवननाथः सर्वबन्धुर्दयालु-
   र्विमलमधुरमन्दस्मेरवक्त्रारविन्दः ।
कलशजलधिकन्याप्राणनाथो मुकुन्दः
   प्रणतवरदराजः पातु मां देवराजः ॥ २१ ॥

॥ इति श्रीवरदराजस्तोत्रं सम्पूर्णम् ॥

---

## ७. ॥ अथ श्रीनृसिंहशतकम् ॥

चण्डब्रह्माण्डभाण्डभ्रमणभरबृहद्घोषनिर्घातदैर्घ्यै-
   र्दुर्दैत्यव्याघ्रशीघ्रप्रमथनकथनं सर्वदिक्षु प्रकुर्वन् ।
कौटिल्यक्रूरदंष्ट्रोत्कटचटुलनटत्प्रह्वजिह्वामहोल्कः
   प्रह्लादाह्लादहेतुर्दहतु मम महद्रंहसांहो नृसिंहः ॥ १ ॥

नैष्ठुर्यौजस्विचण्डत्रिदशगिरिमहादण्डसन्ताड्यमान-
   ब्रह्माण्डातोद्यभाण्डोड्डमररवसुहृद्भावसंभावनीयः ।
रुष्टेन्द्रद्वेष्टृमुष्टिद्रुघणहतसभामण्डपस्तम्भगर्भा-
   दाविर्भूतो विभूत्यै भवतु नरहरेरादिघोषो विशेषात् ॥ २ ॥

देवद्वेष्टृप्रवेष्टोद्भटमदविटपिभ्रंशघोषाभिघोरो
   दैत्येन्द्रश्रीप्रकोष्ठोत्कटकटकघटाकूजकूटायमानः ।
निर्घोषो दुर्घटं द्राग्घटयतु विकटप्रेतराड्द्वाःकवाटो-
   द्घाटाट्टध्वानकल्पः प्रकटकटकटाकाटवोत्पाटवोऽसौ ॥ ३ ॥

अंहःसंघातघातं घटयतु निनदो रंहसा नारसिंहः
   स्वर्गस्त्रीवर्गरङ्गस्थलपदकलनानन्दिनान्दीनिनादः ।
दैत्येन्द्रापत्यतत्युत्तममहिमभरोद्दामसौभाग्यभेरी-
   भाङ्कारो दिग्द्विदन्तश्रुतिचलनकलाध्यायसन्ध्याब्दशब्दः ॥ ४ ॥

ऊर्मि प्रेङ्खोलखेलामुखरजलनिधिध्वानगानातिपीनः
क्रोधक्रूरस्य शक्रद्विषि हरिवपुषश्चक्रपाणेः प्रघोषः ।
कल्याणं लोकपाल्या विरचयतु हरित्कुञ्जरश्रोत्रपाल्या
बाल्यप्राबल्यशाल्याशुगविकृतिहृतेः श्लाघितो दानपाल्या ॥ ५ ॥

संवर्तारम्भशुम्भज्जलदकुलगलस्तम्भिगम्भीरताभृ-
न्मन्थाद्रिक्षुब्धदुग्धाब्धिजनिनदविधाजग्धिवैदग्ध्यदिग्धः ।
सम्भूयोज्जृम्भमाणे सुघटघनघृणो दीर्घनिर्घातवर्गे
शीघ्रं निर्घोष एष स्फुरतु हृदि बृहद्घर्घराघोर ऐशः ॥ ६ ॥

मोहं सौवर्गवर्गे महति बहलयन् द्राङ्महर्गेहभाजां
निष्पीतश्रौतगीतो नु सनकजनकश्रोत्रबाधिर्यधुर्यः ॥
दिक्कुम्भिस्तम्भकारी प्रतिनिनदसमुत्तालपातालतालु-
श्चण्डो ब्रह्माण्डभेदी भवतु हरिरवः श्रेयसे भूयसे वः ॥ ७ ॥

ऊर्ध्वप्रोद्धूतधूमध्वज ऋजु[विमल]ज्वालमाणिक्यदण्डं
नीलप्रालम्बलीलप्रचलितरसनाराजिविभ्राजिबिम्बम् ।
दीव्यद्दर्वीकरोर्वीपतिविततफणाश्रेणिनिर्माणमन्तः
निर्मायं भावयामः प्रभुशिरसि बृहत्तापमुक्तापहत्यै ॥ ८ ॥

क्षोणीभृत्पक्षपातादनुनृहरितनुक्षिप्यमाणैर्वितानैः
बाणैर्वैमुख्यलक्ष्यैः श्वसितपवनतः क्षुण्णतत्कण्ठलक्ष्म् ।
उद्घूर्णैर्मण्डलाग्रैरपि चरमचरे खण्डनायारिषण्डे
लाङ्गूलोच्चण्डदण्डं दधदवतु विपन्मण्डलात्कुण्डलीन्द्रः ॥ ९ ॥

उद्दण्डैर्ज्वालषण्डैर्ज्वलदनलदृशोऽजाण्डदण्डोर्ध्वखण्ड-
स्फोटो भावीति भीत्या प्रथितपृथुफणश्रेणिविस्तारितश्रीः ।
उर्वीवाहो विनेकार्बुदकुलकलनामौलिनिष्ठप्रतिष्ठः
शीघ्रं नो दीर्घपृष्ठप्रभुरभयभृतो भूषणं भावनीयः ॥ १० ॥

अग्रप्रोदग्रजाग्रन्मणिगणकिरणैस्तारकोन्मेषचोरं
नीचैरुच्चैरुदञ्चद्विततपृथुफणश्रेणिशाखासहस्रम् ।
लग्नैरग्निस्फुलिङ्गैः स्फुटरुचि निटिलाक्ष्णोऽप्यभीक्ष्णं तथाधः
क्रष्टा कष्टानि दृष्टं फणिपतिमुकुटं कूटसिंहोपरिष्टात् ॥ ११ ॥

सोमस्पर्शोत्प्रकर्षं प्रवहति दधती यक्षिणीचित्रलक्ष्मीं
यत्राभाते यदन्तर्विलसति सततं गुह्यकेशप्रसारः ।
गङ्गाम्भश्शुभ्रमभ्रंकषशिवशिखरभ्राजितं राजताद्रेः
देवस्योपर्यहीनोर्जितफणपटलं पाटयेत् संकटं नः ॥ १२ ॥

पायादाकाशकाशोज्ज्वलकुसुमसमज्योतिरुज्जृम्भिताग्रा
प्रत्यग्रप्राग्र्यमुक्ताफलखचितशिखस्वर्णसूचीसखीना ।
क्षुद्रच्छिद्रालिमुद्राविधुपरिधिवलच्चालिनीशालिनीतिः
लीलापारीन्द्रमूर्तेरतिपरुषरुषो भासुरा केसराली ॥ १३ ॥

वैकुण्ठोत्कण्ठितानामणिमगुणजुषां प्राणिनां प्रीतिभाजां
गात्रादुत्क्रान्तमात्रे सुखमयनिलयप्रापणायापयत्नम् ।
ब्रह्माण्डस्योर्ध्वखण्डेऽरचिषत सृतयो निःसृतैर्यैर्विदार्य-
च्छौर्यं हर्यक्षमूर्तेर्निदधतु हृदि ते केसरा भासुरा नः ॥ १४ ॥

हृत्कुण्डान्तःप्रचण्डप्रतिघहुतवहश्रीशिरोरोमकूप-
स्तूपद्वारोद्यदंशुस्तबक इति जने बिभ्रति भ्रान्तिमुच्चैः ।
विद्युज्ज्वालावलीजप्रतिभयरसनाच्छिन्नचाञ्चल्यसंप-
ल्लुम्पेत् प्रत्यूहमत्यूर्जितमिह नृहरेर्भासुरा केसरालिः ॥ १५ ॥

यैरासीद्दैत्यहत्याहृषितहृदमरश्रेणिपूजावितीर्ण-
प्रोन्मीलन्मल्लिपुष्पस्तबकितशिखरस्वर्णदूर्वासवर्णैः ।
विद्युल्लेखासदृक्षैर्नरहरशिरसि स्थूलनक्षत्रलक्षै-
र्लक्ष्मीरक्ष्मीलभावं विदधतु वृजिनोज्जासने केसरास्ते ॥ १६ ॥

स्वीयश्रीलेशचौरीश्चिरमचिररुचः स्वोदरोदारदर्यां
पर्याप्तीकृत्य गोप्तुं नभसि घनघटां कोटिकुन्तच्छटाभिः ।
निर्यत्कीलालकुल्यं किल परुषरुषा पाटयन्तीव चेतो
दैत्योरःपाटनाटीकपटहरिसटाधाटिकाटीकतां नः ॥ १७ ॥

सप्तार्चिर्मित्रसूत्रत्रुटनसुरसृतिस्रस्तनक्षत्रमाला
मल्लीजालाभिसृष्टिद्विगुणितसुमनस्सृष्टिसन्तानवृष्टिः ।
सन्ध्यासंबद्धशोणम्बुदपटलपटीपाटनक्षेपलक्ष्मी-
रज्यत्काष्ठावधूटीकपटहरिसटास्फाटिकाधूतिरव्यात् ॥ १८ ॥

स्तब्धाकल्पाब्ध्यनल्पोच्चलदुरुलहरीघोषकल्पादसीय-
ध्वानादव्यक्तभक्तस्तुतिपदसदयग्राहिका साग्रहेव ।
रीत्या साजात्यभाजामतिपरुषरुषामिन्द्रियाणां चतुर्णां
संकोचं लज्जयेवोर्जितमतिदधती पातु कर्णद्वयी नः ॥ १९ ॥

द्रष्टॄणां दृष्टिसृष्टेरुपरिकृतभयाविष्टतावृष्टिरुष्टे-
न्द्रद्वेष्टृक्लिष्टजुष्टस्मरणनिजजनानिष्टमुष्टिन्धयं तत् ।
लीलाशैलाटमूर्तेरतिपरुषरुषोद्घाटयत्पाटलश्री-
घाटं विष्णोर्ललाटस्थलमतिविकटं पाटयेत् संकटं नः ॥ २० ॥

नृत्यत्कृत्यावलीव प्रलयसमुदयत्कालरात्रीव खेल-
च्चामुण्डामण्डलीवाट्टहसितविकटोत्तालिवेतालिकेव ।
उद्रिङ्गद्रौद्रलक्ष्मीरिव किमुत बृहद्भैरवोद्भासिगर्भा
भ्रश्यत्स्वर्भानुवर्गा ध्रुवमवतु विभोर्भीषणा भालभित्तिः ॥ २१ ॥

उद्यन्निर्धूमधूमध्वजमयनयनाङ्गारधान्याश्रितासौ
तत्तिर्यङ्निर्यदर्चिर्निचयपरिचयेनेव रक्तावसिक्ता ।
साचिव्यक्तत्रिरेखीवलिविलयवती सूतकालाग्निरुद्रे-
वेदानीमेव देवप्रवर तव हरे पातु भालस्थली नः ॥ २२ ॥

नृत्यन्ती कालरात्रीकरतलविचलत्साचिशूलानुकूला
मुद्रा विद्राविरौद्राम्बुनिधिमधिवलल्लोलकल्लोललीलाम् ।
बिभ्रत्येतन्मुखान्तःसमुपगतमहाकोपसोपानपालि-
र्गोपायेन्नस्त्रिरेखी निटिलसहचरी चित्रपारीन्द्रमूर्तेः ॥ २३ ॥

गाङ्गेयाभिख्यया यज्जगति यदुदितं शान्तनुस्फारमोदे
पार्थोनायोधनश्रीरपि यदधिपये चोर्ध्वतेजःप्रसिद्धिः ।
यस्यास्ते कृष्णवर्त्मानुसृतिपरमहो भालताराति दाहि
भ्रूवल्लीमध्यनेत्रं नरहरिवपुषो नौमि भीष्मस्वरूपम् ॥ २४ ॥

रुक्षाभिख्यां विवस्वद्रथचरणरयक्षुण्णरूक्षेऽन्तरिक्षे
स्फारं स्फारं स्फुरद्भिर्विदधति बहलैरुत्पतद्भिः स्फुलिङ्गैः ।
रूक्षश्रेणीसदृक्षे क्षिपति दिशि दिशि ध्वान्तजाले शिखोल्का-
माला लालाटनेत्रे विहरतु नृहरेस्तत्र चित्रे मतिर्नः ॥ २५ ॥

हृष्टान् वृष्टप्रसूनान्नभसि दिविषदो नूत्नरत्नप्रसूनैः
स्फूर्जत्फुल्लस्फुलिङ्गैः सुहृदि हिमहिमैर्ज्वालहस्तैरुदस्तैः ।
शीघ्रं प्रत्यर्घदीर्घीकरणबहुगुणे मज्जयल्लज्जिताब्धौ
नेत्रं सद्वीतिहोत्रं दहतु नरहरे रंहसांहस्तृणानि ॥ २६ ॥

वेल्लज्जिह्वोल्बणेन प्रचलितबहलज्वालजिह्वासहस्रं
स्फारस्फूर्जत्स्फुलिङ्गस्फुटमणिपटलं प्रांशुरत्नांशुभासा ।
सार्धं मूर्धोर्ध्वसिन्धुस्थलवसतिजुषा भोगिमूर्धाभिषिक्ते-
नाबद्धस्पर्धमद्धावतु हरिनयनं भालभद्रासनेद्धम् ॥ २७ ॥

लोके वारप्रवृत्तिः समुदयति यतः सन्नराजीवचित्ते
बिभ्राणश्चक्रबन्धूकरणकुतुकितां यो निशाशेषभातः ।
नित्यं धत्ते सदृक्षोदयमनुविनतानन्दनोल्लासधारी
सश्रीपारीन्द्रमूर्तेरपहरतु तमो भालदृग्बालहेलिः ॥ २८ ॥

चूडापातालपालोल्बणमणिकिरणाकर्षणोदञ्चितैत-
त्स्फूर्जत्फूत्कारसंकोचितविततशिखापाणिरभ्यासभाग्भ्याम् ।
सार्धं दृग्भ्यां सखीभ्यामिव कुतुकवशादंशुपांसुप्रपञ्चै-
रञ्चन्त्वन्योन्यखेलां जयति नरहरेर्भालदृग्बालिकेयम् ॥ २९ ॥

खद्योतद्योतलेशो दिन इव न दरं द्योतते वैद्युतोऽग्निः
यस्याग्रे नोग्रभावाग्रहमपि वहते स ग्रहग्रामणीश्च ।
और्वो दुर्वारदुर्वासित इव विगलद्दर्वमम्भोधिगर्भे
लीनो यद्धेतिहीनो विहरतु नृहरेस्तत्र नेत्रे मतिर्नः ॥ ३० ॥

यन्मित्रो वीतिहोत्रोऽप्यतिशयदहनाध्यायमध्यापितौ तौ
शक्तौ सम्यग्ग्रहीतुं न किमपि निबिडोत्ताडितावंशुवेत्रैः ।
एको रक्तावसेकादरुण इति गतः ख्यातिमन्योऽपि धाम्ना
दुःखादेवस्य तेजो गुरुनिटिलतटीलोचनं मोहयेन्नः ॥ ३१ ॥

लक्ष्मीवक्षोजकुम्भस्थलकृतललितालीकबाह्लीकलेपः
प्रह्वप्रह्लादमौलावतुलवलयिनी शोणशाटी यदर्चिः ।
रूक्षेन्द्रद्वेष्टृसृष्टेरुपरि निपतिता पावकास्त्रस्य वृष्टि-
र्दृष्टिर्लालाटिकी नः कपटहरितनोः पाटयेत् संकटं सा ॥ ३२ ॥

मञ्जिष्ठामञ्जुचेलव्यजनमिव वलत्तन्तुजालं समन्तात्
आस्यान्तर्लास्यवत्याः श्रमशमनकरं रोषलक्ष्मीयुवत्याः ।
घोणादण्डोपरिष्टात् प्रकटितमरुणं श्लिष्टशोणांशुवेष्टं
वृत्तं हन्ता नु दन्तावलदलनतनोरक्षि सन्तापमन्तः ॥ ३३ ॥

उद्वेलज्ज्वालवल्लीच्छलमृदुलचलच्छोणचेलाञ्चलश्री-
स्फारैः फुल्लैः स्फुलिङ्गैः खलु खचितशिखामन्दमन्दारबृन्दैः ।
स्वभ्यातॄणां नृणां साभयवरकरता कीर्तिता सिंहमूर्तेः
बन्धूकच्छायबन्धुच्छविरवतु विभोर्भैरवी भालदृष्टिः ॥ ३४ ॥

माद्यद्दुर्दानवोद्यन्मददलनफलं भक्तभूयोविपत्ति-
प्रत्यादेशं फलं चाकलयितुमसुरश्रेष्ठनिष्ठाफलं च ।
कोपश्रीपाटलायाः कपटनृहरिहृद्भ्राजभानोद्भवायाः
पुल्लत्फुल्लत्रयीवोल्लसतु मदशुभस्यापनेत्री त्रिनेत्री ॥ ३५ ॥

मायागन्धं निरुन्धन् भुवि पदकमलाभोगसम्पादहेतुः
संवादी तापदाने परमहिमकरेणात्तकारुण्यसम्पत् ।
यत्पातः शत्रुजाते सुहृदि च सदृशो दिव्यपारीन्द्रमूर्ते-
र्जैत्री सा नस्त्रिनेत्री भवभयविभवस्यापनेत्री भवित्री ॥ ३६ ॥

ज्वालावल्ली विशाला स्फुरति नरहरेर्भालनेत्रालवाले
तामेवोच्चैः स्फुलिङ्गस्फुटकुसुमघटां कोटिदेशे दधाना ।
अद्धा यद्धेतुकोच्चावचफलपटलप्रायतामायताल्लं
संवर्तोद्वृत्तवह्निद्युमणिगणबृहद्भानुदम्भोलिवर्गः ॥ ३७ ॥

सार्धं योद्धुं समृद्धैर्नभसि भपतिना दुर्जयैर्ध्वान्तयोधैः
घृष्णिश्रेणीभटानामहमहमिकया सत्वरोदित्वराणाम् ।
वाहासंघट्टपिष्टाङ्गदमणिपटलीप्रांशुपिष्टातवृष्टाः
कष्टानां सन्तु नष्ट्यै नरहरिवपुषो फालदृष्टेः स्फुलिङ्गाः ॥ ३८ ॥

भक्तप्राणिप्रहाणिप्रचलदसिलतापाणिदैत्यहत्या-
तिक्रूरक्रोधयोधप्रचलनखचितश्मश्रुलेखासखी नः ।
रौद्रश्रीकाद्रवेयीद्रुतललनवलज्जिह्विका प्रोज्जिहाना
सा नागद्वेषिमूर्तेर्विहरतु हृदये वेल्लिता चिल्लिवल्ली ॥ ३९ ॥

लास्येनोल्लास्यमाना निरवधिविगलद्योधगोधिप्रतोली
यावत्क्रोधावकीर्णोज्ज्वलचपलचलच्चामरोड्डामरश्रीः ।
घोणादण्डाग्रजाग्रज्जयपरिचयकृद्वैजयन्ती जयन्ती
रौद्रस्य द्रागभद्रं विघटयभु हठाद्भ्रूद्वयी नृद्विपारेः ॥ ४० ॥

दुर्दान्तध्वान्तभेकप्रतिभयसरयश्वासफूत्कारघोरा
प्रेङ्खोलश्मश्रुलेखाच्छलचलरसनाद्वन्द्वविभ्राजमाना ।
वेष्टुं वा लम्बमानाननबिलनिलयं भालभित्तेरधस्तात्
स्याद्घोणादीर्घपृष्ठी मदघविघटिनीकूटशैलाटमूर्तेः ॥ ४१ ॥

सूर्यादिज्योतिरूर्जस्वलकरपटलीमोटनालम्पटोऽसौ
दैत्येन्द्रोद्दामधामद्युमणिघृणिघटालङ्घनेनाभिघाती ।
लोकालोकाद्रिरीत्युत्प्रतिघ इव तदुत्तुङ्गशृङ्गत्वभङ्गे
जङ्घालो जङ्घनीतु च्छलहरिपरुषश्वासवातोऽघसङ्घान् ॥ ४२ ॥

क्रूरक्रोधाग्निकीलकथित इव पृथुश्वासभूमा नृसिंह-
स्योग्राणामग्रगाणामनुतनुघटितस्फारविस्फोटकोटिः ।
वार्धीनामैक्यमृद्धं घटयितुमिव जङ्घालजङ्घालताभ्रू[झंझासमीरो]
द्रागंहःसङ्घनीतिर्म[तं म]म सकलशुभोलङ्घनी[ने]जङ्घनीतु ॥ ४३ ॥

द्वीपान्तर्द्योतमानक्षितिधरनिकरक्षुद्रतामुद्रितौजा
लोकालोकाद्रिमूर्धोज्ज्वलचलनघनश्लाघनीयापदानः ।
द्राग्भित्त्याघातजातप्रतिघुरितरयभ्रान्तगाङ्गेयरेणु-
भ्राजद्ब्रह्माण्डभाण्डः स्फुरतु हृदि हरेः श्वासरूपी नभस्वान् ॥ ४४ ॥

घोणाश्वभ्रोरुगर्भोद्दतिपरुषखरश्वासधारानिरस्ता
कालव्यालद्वयीवोद्यतफणयुगलीश्रोत्रगर्भप्रदेशे ।
नेत्रायुर्वायुया[पा]यिन्यसुरपरिषदः स्थूलतालालितान्ता
स्मेरा श्मश्रुद्वयी नो द्विपदलनतनोस्तुङ्गभासङ्गताव्यात् ॥ ४५ ॥

कौटिल्येनैव खल्वाचरितपरिचिता वक्रताशुभ्रताभ्यां
न्यस्यन्ती क्षीरकण्ठद्विजनृपतिघटाकण्ठपीठे प्रकोष्ठम् ।
ताभ्यां तिग्मत्वयुग्भ्यां नगरवरवधूनेत्रकोणान्तमैत्री
दंष्ट्राधाटी स्फुटा नः कपटहरितनोः पाटयेत् पापकूटम् ॥ ४६ ॥

आविर्भूयास्यगर्भाद्रवमसुरवधूगर्भविभ्रंशभीमं
जिह्वां चालोक्य दैत्यक्षतजरसझरीग्रासलोलामिवोग्राम् ।
कूरास्थिग्रन्थिकोटीविघटनकटुतोद्घाटिनीवातिघोरा
पायाच्छैलाटचेष्टानुकृतिकृतिभृतो दन्तधाटी प्रभोर्नः ॥ ४७ ॥

प्रह्लादोद्रिक्तनिद्रप्रमदकुमुदिनीजागरारागराजो
रुष्टेन्द्रद्वेष्टृदृष्टिस्फुटपुटकघटादर्शिताक्षुद्रनिद्राः ।
विध्वस्तातिप्रशस्तामरनिवहमहासाध्वसध्वान्तधाराः
लीलाशैलाटमूर्तेर्दशनशशिकलाश्रेणयः प्रीणयन्तु ॥ ४८ ॥

दैत्योरःपीठपाटप्रकटविकटरुट्ककूखटोद्घृष्टदंष्ट्रा-
संघट्टस्पष्टदृष्टज्वलनकणगणश्रेणयोऽनिष्टनष्टौ ।
जायन्तां जागरूका विदलितदनुजव्यूहवाहोर्जितेजः-
पूगप्रोद्गीर्णचूर्णप्रचयसमरुचो रंहसा सिंहमूर्तेः ॥ ४९ ॥

निर्यल्लालाटदृष्टिज्वलनघृणिघटाप्लुष्टदुष्टौघवंश-
स्थूलास्थिग्रन्थिकूटस्फुटनचटचटाट्टारवस्फारशङ्काम् ।
कुर्वन् गीर्वाणवर्गेऽद्भुतकलननभोभाजि निश्शेषयेन्नो
दोषान् रोषप्रपोषो मिषहरिवपुषो दन्तसंघट्टघोषः ॥ ५० ॥

मन्दारोदारसिन्दूरकशिशुबिसिनीबन्धुबन्धूकसन्ध्या-
निर्यन्निर्यासकार्यार्कृतिरिव कलितारुण्यतारुण्यसम्पत् ।
सप्तार्चिस्तप्तखड्गप्रतिनिधिरधिकोल्लासिलौल्योल्बणश्री-
रास्तां नस्तापभाजां नरहरिरसनावासनाशासनाय ॥ ५१ ॥

सौक्ष्म्येणाग्नेर्निदाने वदन इह सतः क्रोधदोधूयमान-
प्राणद्राघिष्ठभस्त्राजवनपवनतो दीप्तिशीलेव कीला ।
क्रोधान्धानां नखानामसुरवरहृदो दर्शनायेव सम्यक्-
प्रह्वा जिह्वा मदंहः प्रदहतु महिमोन्नाहभृन्नारसिंही ॥ ५२ ॥

निष्क्रान्तेवानय[ना]न्ताद्गलरववलतः साध्वसध्वस्तधैर्यात्
प्रोन्मीलत्कम्पसम्पद्भयमयचरितोद्भावनप्रेक्षयेव ।
दंष्ट्राभिः स्पष्टरोचिःपटलकरघटाघट्टनीभिः प्रहृष्टा-
श्वासेव स्वान्तदेशे नरहरिरसना वासनाशासनी स्यात् ॥ ५३ ॥

दैतेयोद्दामधामद्रुमदहनधृताटोपकोपाग्निकीला
प्रह्लादोद्रिक्तभक्तिच्छलनिलयचलच्छोणकेतुच्छीवर्नः ।
स्याज्जिह्वा नारसिंही विबुधपतिशुभा दृष्टवासन्तवार्ता-
श्लिष्टश्रीवल्लिहृष्टप्रथमकिसलयश्रीरनिष्टप्रणष्ट्यै ॥ ५४ ॥

चञ्चत्पञ्चप्रकारे मुख इह भवितुं साम्प्रतं पञ्च जिह्वाः
व्यक्तैकाग्रे महोग्रा पुनरपि भवितारश्चतस्रोऽधिपार्श्वम् ।
इत्यालोच्येव सीमाजिघटयिषुतया कर्णजाहं जिहाने
स्मर्तव्ये सिंहमूर्तेर्भृशमपशरणैः सृक्वणी चक्रपाणेः ॥ ५५ ॥

प्रेङ्खन्निःश्वासलेखं प्रकटकटकटस्फोटविस्पष्टदंष्ट्रं
श्मश्रुस्मेरत्वभीष्मं कुटिलमविकटभ्रूकुटीभ्राजमानम् ।
क्रोधक्रूराक्षिचक्रं सरभसरसनाभीमतं[र्पणं] श्रीमतङ्ग-
द्वेष्टुर्द्राग्द्वेष्टु वक्त्रं मम विषमदशास्रष्टुरिष्टं गरिष्ठम् ॥ ५६ ॥

दंष्ट्रासंघट्टघोरज्वलदनलकणश्रेणिकर्णप्रसूने
प्रोद्यन्निर्घोषवाद्ये प्रचलितबहलज्वालजिह्वामहोल्के ।
रौद्रश्रीलास्यरङ्गे प्रकटविकटरुट्सूत्रधारप्रचारे
सद्यो विद्योतमानद्विपदलनतनोराननेनो रतिः स्यात् ॥ ५७ ॥

वह्निप्राचीरदीप्रप्रसृमरपरितःकेसरे स्पष्टदंष्ट्रा-
कुड्यासंश्लिष्टयष्टिप्रचयपरिचिते भ्रूलतातोरणाढ्ये ।
जाग्रत्प्रग्रीवमित्रप्रतिभयनयने प्रह्वजिह्वालतोद्य-
त्सोपाने रौद्रलक्ष्मीगृह इव नृहरेराननेमाननास्ताम् ॥ ५८ ॥

निस्त्रिंशस्रंसनं प्राक्सृजति करतलाजिह्वया नारसिंहे
दंष्ट्राभिः कृत्तशस्त्रीपटलविघटने भ्रूलताविभ्रमेण ।
कोदण्डभ्रंशचण्डे शितविशिखहरे श्रीकटाक्षच्छटाभिः
दृष्टानां दृष्टिमात्रात् प्रतिकृतिकृतिनि प्रीतिरास्तां मुखे नः ॥ ५९ ॥

उद्यज्जिह्वामहोल्के मुखरिमखरनिर्घोषनिर्घातघोरे
भ्रूवल्लीश्मश्रुलेखाविलसितविलसद्धूमकेतुप्रकाशे ।
सक्रोधा क्षुद्रचक्षुस्त्रिकविकसनसन्दर्शितार्कत्रयीके
तस्यास्ये स्यान्नमस्यासुरकुलदलना दर्शिता जन्यसैन्ये ॥ ६० ॥

दंष्ट्राधाटीकठोरक्रकचपरिचयेनाप्यखण्डस्वरूपा
संकोचं कण्ठघोषेण च न च दधती भीषणेनोल्बणेन ।
लोके जिह्वापुटेऽप्यस्खलितपदवती भारती यत्र वासं
सा सन्धत्तेऽप्रमत्ते हृदि भवतु हरेर्द्रागुपास्यं तदास्यम् ॥ ६१ ॥

सप्तार्चिःखण्डषण्डस्तबकितकुहरा चुल्लिकेवोल्लसन्ती
दीर्णा दीर्घादरीवोद्धुररुधिरसुहृद्धातुधाराधुरीणा ।
पातालद्वारिवोद्यत्फणिफणमणिरुक्कन्दकीब्रन्दलीढा-
लीलाहर्यक्षमूर्तेः क्षपयतु विपुला वक्त्रकुक्षिर्मदंहः ॥ ६२ ॥

गर्जश्रीनिर्जिताम्भोधरपटलहठाकृष्टविद्युत्कलाप-
प्रायां प्राप्तां समुद्रादपि परिभविनो वैद्रुमीं वल्लरीं वा ।
रौद्रश्रीवीरचर्यावरवरणविधादन्तबन्धूकमालां
बिभ्रद्दैत्यान्त्रमालामतिपरुषरुषः पातु देवस्य कण्ठः ॥ ६३ ॥

माधुर्योद्रेकधुर्यं निजसहजपरिष्कारवर्यं विसृज्य
क्रौर्यश्रीवार्यमाणावसरमपरसंदैत्यपालान्त्रनालम् ।
घोराकारां घृणायाः पदमपि दधती धार्यमाणां हठेन
ग्रीवा श्रीवारणारेः शरणमिह परं पीवरी वामनी वः ? ॥ ६४ ॥

मायाहर्यक्षमूर्तेः क्षयसमयपयोवाहसाहस्रगर्ज-
स्फूर्जन्निर्घोषसम्भावितविदलनदिक्सन्धिसन्धुक्षणाय ।
उन्मीलत्कान्तितन्तूत्कटकरजघटासूचिसाचिव्यभाजो
विष्वद्रीचोऽनुविश्वोपकृतिकृतिभृतो भावये बाहुदण्डान् ॥ ६५ ॥

नम्रा दैतेयसम्राट्प्रतिभयपृतनाघातगुर्वीं किलोर्वीं
दीव्यद्दर्वीकरोर्वीपतिफणपरिषत्खर्वतां पर्वतान्ताम् ।
उद्धर्तुं प्रोद्धुरा नु प्रतिदिशवलिताः सर्वतोऽखर्वमूर्तेः
साहस्रा बाहवस्ते मम हृदि महिमोन्नाहवाहः स्फुरन्तु ॥ ६६ ॥

दीप्रं यद्विप्रचित्तप्रभवमृगदृशां क्षिप्रमोदं[दधानं]
निप्रन्नद्विप्रवर्यप्रतिभयरयभृत्कैटभाटोपलोपम् ।
चक्रं हर्यक्षमूर्तेः शरणमहमहोरात्रमार्तो भृशार्ते
रेमि द्राकालनेमिक्षतजरसलन्नेमि कस्माद्बिभेमि ॥ ६७ ॥

वह्निज्वालाभजिह्वावगलनविकलत्वा[स्वा]म्बुना सन्नवक्त्रं
निर्घोषैः कण्ठकम्बोश्चकितमिव महामौनमुद्रां दधानम् ।
घोणाघ्राणप्रहीणं जलजमिव सितं पाणिभूषायमाणं
शत्रुभ्यस्त्राणहेतोः शरणय नृहरेरम्बुजाक्षस्य कम्बुम् ॥ ६८ ॥

ऋक्षवक्रेणेव चक्रं प्रथनमधिमधुग्रासिकोग्राकृतीति
क्रौर्येण क्रौञ्चभेदे पटुरिति विकटां श्रीमहासेनशक्तिम् ।
दम्भोलिं जम्भशत्रोरहिहननमहासाहसीसन्नद्धसन्तो
दैत्योरस्त्रोटयन्तस्तृणमिव नृहरेः पाणिजाः प्रीणयन्तु ॥ ६९ ॥

दैत्येन्द्रध्वानसन्ध्याध्वनिमुकुलितदिक्पालमालासुखर्धि-
स्वाध्यायारम्भपूर्वोदितसतनुदशोङ्कारिकाकारिभाजः ।
नागानामिन्द्रियाणां दशसृणिसदृशाः प्राणिनां प्रीतिभाजां
प्रायः पारीन्द्रमूर्तेर्मम दश नखरास्ते खराः स्युः सुखाय ॥ ७० ॥

साक्षादालक्ष्यमाणं युधि दलदगदाघातशोथप्रथिम्ना
दिङ्नागानां विषाणोरुमुसलशकलैः पाण्डुनिर्भग्नमग्नैः ।
दैतेयव्याघ्रवक्षःप्रबलमदगदं शीघ्रमुल्लाघयन्तो
भूशल्योद्धारकल्याभवभयभिषजः पाणिजाः पान्तु युष्मान् ॥ ७१ ॥

उन्मीलत्कालखण्डोत्पलममलिनकङ्कालखण्डैः कुमुद्व-
त्तद्वद्ये व्यक्तमुल्कामुकुलितकमलं स्रागसृक्काभिपूर्णम् ।
हंसापत्यातिरक्तं सुररिपुवरहल्लक्ष्यहर्यक्षमूर्तेः
क्रौर्यक्रीडातटाग क्षणमधिविदधुस्ते नखाः स्युः सुखाय ॥ ७२ ॥

उद्रिङ्गद्रक्तलेखारुणवसनलताकर्षमुच्चैस्त्रिलोकी
लक्ष्मीदैत्येन्द्रवक्षःस्थलपृथुलशिलास्थेयसीमिर्ष्ययेव ।
आकर्षन्तो द्विरूढां विबुधपरिवृतेनैव बाढं विधातुं
निर्भीति प्रीणयन्तु छलहरिवपुषः पाणिजाः प्राणिजातम् ॥ ७३ ॥

वक्षःसीमन्तयन्तो नभिदुरभिदुरोरच्छदच्छेददक्षा
यत्किञ्चिद्भिन्ननिम्ना इव घनमघवद्वज्रघातोत्थशोथैः ।
स्थूलास्थिग्रन्थिकूटे निबिडकडकडोड्डामराम्रेडितेन
क्रीडन्तश्शक्रशत्रोर्नरहरिनखरास्ते खराः स्युः सुखाय ॥ ७४ ॥

चापल्येनापतन्तीमिव शिरसि रसज्ञां प्रतप्तासिलेखा-
भीमामालोक्य सीमान्तरगतकमलाकौस्तुभश्रीव भीत्या ।
तारादारांशुधाराप्रतिमघनतमोल्लासवल्लोमवल्ली-
लीनश्रीवत्सलक्ष्म क्षपयतु दुरितं लक्ष्हर्यक्षवक्षः ॥ ७५ ॥

अव्यादाकाशकाशस्तबकपरिणतः कूर्मलोम्नां विवर्तो
दृष्टान्तश्यामशृङ्गस्य च हरिदुदयचित्रलेखैकमित्रम् ।
मिथ्याद्वैरथ्यसज्जद्विपदलनतनोर्देहपूर्वापरर्द्धि-
स्थित्यर्थापत्तिसाध्यं भवभयविकटान्मङ्क्षु नो मध्यमव्यात् ॥ ७६ ॥

दैत्येन्द्रो दीर्घनिद्रामधित शितशिखैस्तन्नखैः खण्डितोरः-
कण्डूतिर्यत्र हस्तस्खलदसिफलकस्फारपादप्रसारः ।
चञ्चज्जानूपधाना तनुरुहनिवहप्रच्छदाच्छादनाढ्या
मञ्चेतः स्थैर्यपट्वाक्रमतु कपटहर्यक्षदक्षोरुखट्वा ॥ ७७ ॥

न्यस्ते रोषेण साचिप्रसृमरपरितो दीधितौ यत्र रक्ते
मध्ये नम्रत्वकम्रं कुवलयमभितः सङ्गतोत्तुङ्गताकम् ।
उत्तानस्वर्णदण्डायुतकनकशलाकालिलालित्यशालि
च्छत्राभामाप तापानपनुदतु हरेर्वामजङ्घाप्रकाण्डः ॥ ७८ ॥

स्तम्भोद्भूतस्य भूमेरुपरि लिपदसृक्चन्दनं स्यन्दमाना-
धोऽनूनारुण्यलक्ष्यादिति सुतपृतनापादघातार्तिभाजः ।
फाले श्रीखण्डपुण्ड्रं लिखदिव नखरज्योत्स्नया वत्सलत्वात्
प्रह्लादस्य प्रणामप्रवणितशिरसः पातु पादद्वयी नः ॥ ७९ ॥

रुन्धन्तीवारिबन्धूनधिरुधिरधुनीबन्धुबन्धूकमूर्ते-
राकृष्याशानुविश्वाः स्वयमपि युगपद्योजयन्तीव भान्ति ।
द्वैतं द्यावापृथिव्योर्दलयितुमुदयन्मांसलानीचवीचिः
विश्वद्रीची मरीचीततिररुणसमीचीनरोचिर्विचिन्त्या ॥ ८० ॥

अस्थानद्वारि तिष्ठन् असुरवरहृदो दारुणायैकनिष्ठ-
क्रोधः श्रीपृष्ठनिष्ठप्रततफणबृहद्दीर्घपृष्ठस्थविष्ठः ।
प्रह्लादाप्तप्रतिष्ठः प्रबलदनुजनुःसैन्यविन्यस्तनिष्ठः
पायाद्देवो वसिष्ठप्रभवभवनुतो देवगोष्ठीगरिष्ठः ॥ ८१ ॥

दन्तेभ्यः पाणिजेभ्यस्तुहिनगुभगिनीस्तोमलेखासुहृद्भ्यो
नो बिभ्यत्यब्धिशब्दश्रवणपरवशाघोरगम्भीरघोषात् ।
और्वज्वालालतायाः कणकुसुमहृदप्युग्रजिह्वालताया
यस्याङ्के निर्विशङ्कं जयति जलधिजा सैष देवोऽवताद्वः ॥ ८२ ॥

एष ब्रह्माण्डभाण्डामितविततवपुः सज्जनस्वान्तदेशे
स्वच्छन्दामन्दलीलो विषयसमुदयाकुञ्चितस्त्वाञ्चितेऽपि ।
काष्ठाकैवल्यलक्ष्म्या जगति कतिपयैः कल्मिभिः कार्यदृष्ट्या
देवः श्रीमान् नृसिंहोऽवतु परममहानप्यणोरप्यणीयान् ॥ ८३ ॥

उच्चैर्घुष्टप्रहृष्टत्रिदशगणघनश्लाघनाघूर्णनोद्य-
न्मूर्धाधोध्वस्तपुष्पस्तबकविकसितैस्तारकाचक्रवालैः ।
दृष्टोरःपाटरुष्टिस्फुटविकटसटाकम्पसम्पत्तिचक्र-
च्छिन्नैराच्छादिताङ्गच्छलनृहरितनुर्यच्छताद्राङ्छ्रितं नः ॥ ८४ ॥

आभातीतेन्दुधामासदरिदरकरः सर्वमानव्यमाभृ-
त्कायोदारस्सदारोचितदशनखरः कोऽपि तत्त्वाधिकारी।
आभातीतेन्दुधामा सदरि[दर]करः सर्वदा नव्यमाभृ-
त्कायोदारः सदारोचितदशनखरः कोऽपि तत्त्वाधिकारी ॥ ८५ ॥

तिष्ठन्नम्भोजपृष्ठे जलनिधिजनुषो रोचिषा राजमानो
विद्युज्ज्वालाकलापोज्ज्वलविपुलसटाकीर्णविस्तीर्णवक्त्रः।
जान्वोर्विन्यस्तहस्तः कटितटविलसद्योगपट्टस्फुटश्री-
भाजोः शङ्खारिधारी जयति नरवपुश्चित्रपारीन्द्रवक्त्रः ॥ ८६ ॥

पातूरःपीठपट्टाश्रितजलधिजनिर्योगपट्टाभिरामो
दैत्योरःपाटकट्टारकखरनखरो भ्राजदट्टाट्टघोषः।
संसारक्लेशहट्टापहरणमहिमा यो हृदट्टाधिवासी
भक्तानां देवभट्टारककलितनुतिः पीतपट्टांशुकः सः ॥ ८७ ॥

सत्रासत्राणकर्त्री रिपुसुतविपदः साधु नाना धुनाना-
मारामाराजिवक्षा नखविदलितदुष्टासुरा भासुराभा।
सामासामादिगीता निजपदकमलालम्बतारावतारा
भीमाभीमार्थदक्षा तनुरवतु सुधा भानुमालानुमाला ॥ ८८ ॥

प्राप्ता मुद्राविलेशेन परममहता येन यः सन्तरण्या-
कारां पृथ्वीं दधानो वरभुजगवरत्रासरक्षां विभाति।
गाङ्गश्रीशोभमानां स्वतनुमवतु नः शं खलूच्चैर्महिम्ना
पारावारप्रभावः स नृहरिरपरा यस्य मैनीह मूर्तिः ॥ ८९ ॥

ज्यायस्याभासमाना भवति न तनुरुट्छालिनी यारिराजी-
श्यामा क्षीरोदनीरोच्छ्वसनकुशलिनी या कृतोद्वृत्तपाता।
हन्यान्मूर्तिर्हरेः सा दुरितमतिबला काच्छपी नाम मात्रा-
तिक्रान्ता दीर्घपृष्ठं परमपि दधती मान्दरश्रीनिधानम् ॥ ९० ॥

देहो यस्याम्बुवाहोपलसितरुचिभृद्यः सरस्वत्युपास्यः
पातालक्ष्माखरांशुप्रतिमनखगणो यो हिरण्याक्षजेता।
यो नन्दोल्लासकान्तो विलसति बहुलोमावली यस्य धाम्नि
श्रेयो दद्यात् स देवो निजजनमहसे लब्धभूदारभावः ॥ ९१ ॥

उद्यत्प्रह्लादसम्पन्नखरकररुचिः सर्वदा राजदन्त-
श्रीधारी योरिधा[दा]रान्नन्थरविवरणो योऽनुरज्यद्रसज्ञः (?)।
चिल्लीलास्याधिकारी विकसिततनुरुट्केसरी कोऽपि लोके
कल्याणं स स्वतुल्यः प्रणयतु परितोऽलंक्रियाभासमानः ९२ ॥

लोकप्रह्लादसङ्घाद्रपदजनमतिप्रोल्लसद्देवकार्या-
याासाराम्भोदधानध्वनिविभववती चुम्बिताकाक्षमाला ।
कौपीनप्रीतधात्रीवलनियमलयालोकहर्षप्रकाशा
शुक्लाक्षी स्फोटभीमा हरितनुरवताद्वामनी चाधिका सा ॥ ९३ ॥

प्रस्वापद्वर्धनीया शशिदरपरशुभ्राजिता दानवार्या
पारीचर्यादितक्ष्मोपकृतिगुरुमहादेवशास्त्राधिकारा ।
भार्गव्याभासमाना हृदि मम बहुशोकार्तिवीर्याविरास्तां
मूर्ति र्देवस्य कापि प्रतिदिनमविताम्नायशैलीमुखश्रीः ॥ ९४ ॥

यो गाधेयाग्निनेत्री गतदुरितशतानन्दसूर्या च तारा-
भर्तुर्लक्ष्मीं दधाराह्वियत किल ययाप्युच्चकैरावणश्रीः ।
या वैदेह्याप्तभीतिक्षयकरमहिमा साधु सा राघवीति
ख्याता मूर्तिर्हरेर्नो वसतु हृदि पराभूतमायाकुरङ्गा ॥ ९५ ॥

योऽभूत् सन्तापसक्ता लवनखरघटाहारिहस्तो यदीया
सच्चक्रे सूतमृत्युङ्करणकुशलता सूर्यजाकर्षशीलः ।
यश्चेतोहारिहालाहलभृति बहलप्रीतिरुत्तालकेतुः
प्रेयो बृन्दावनः कौरवगुरुरभितः श्रीहरी रक्षतां नः ॥ ९६ ॥

प्रत्यक्षादिप्रमाणोनभिमतपरलोकप्रहर्षो नयज्ञे
प्रह्लादे चान्तनिष्ठे घृणयति घृणिमाल्यच्छविद्योतितो यः ।
सर्वेषां मूलहेतुः किल यदभिमतो भावहावप्रसिद्धः
संसारादुद्धरेन्मां कपटहरितनुः शुद्धबुद्धस्वरूपः ॥ ९७ ॥

सार्धं दुष्टैः प्रवृद्धैः कलियुगमलहृत्सिन्धुजारोहशाली
योऽभूद्देवाधिराजप्रणयवशतया लब्धजन्मानुकारः ।
संसारे सत्यधर्मा चरणपरवशो यः कृपाणां समुद्रः
देवोऽभूद्रोगहन्ता भवतु नरहरिर्भास्वदन्तः प्रकाशः ॥ ९८ ॥

दैत्यानां कालदण्डः स्फुरतु हृदि हरेश्चण्डलाङ्गूलदण्डः
शक्रश्रीलास्यदण्डः स्वजनघनकृपाकेतनोल्लासदण्डः ।
आपद्गोषण्डदण्डः सुरपुरतरुणीत्रासभाण्डौघदण्डः
स्वर्लोकच्छत्रदण्डस्त्रिपुरनिजजनुर्घोषणातोद्यदण्डः ॥ ९९ ॥

स्वर्गे संसर्गवत्या दितितनुजभुजा वीर्यलक्ष्मीयुवत्याः
प्रोदस्तं किन्तु दस्ता कलितकचकुलं क्ष्मातले पातनाय ।
क्रोधश्रीबाहुदण्डं वलयितसितरुङ्मण्डलं तत्प्रचण्डं
चेतो ब्रह्माण्डकेतोः स्मरहरिवपुषो वालहस्तप्रकाण्डम् (?) ॥ १०० ॥

ऊष्माकूष्माण्डषण्डो दयतु हृदि न ते यातु नो यातुनो भीः
प्रेताः के तावदष्टौ त्यजत मयि महाभैरवा वैरवार्ताम् ।
रुष्टत्वेतेन दुष्टग्रहगणगणनाकालकङ्कालसम्प-
त्संपन्ना ते मदास्यं मदयितुमुदभून्मापयन्नारसिंहम् (?) ॥ १०१ ॥

क्षिप्रं सर्पापसर्प व्रज वनगजते विद्रव छिद्रदेशा-
दद्रेर्निर्गच्छ तुच्छद्रविण न हि मदादच्छभल्ल प्रयच्छ ।
मा सिंह त्रास रंहः शरभ सरभसं याहि शार्दूल दूरा-
दाह्वा जिह्वाञ्चलं नश्वपलयति यतश्चित्रपञ्चास्यमूर्तेः (?) ॥ १०२ ॥

कश्चित् कौत्सववंशकैरववनीप्राकाशराकापतिः
कृत्वा मर्त्यहरेरमर्त्यकलितां श्लोकैः शतैर्मौक्तिकैः ।
मालां दूषणदू[दा]रणाय गुणवद्विज्ञानशाणार्चितां
सत्कण्ठार्पणतो जगाम परमानन्दं स गङ्गाधरः ॥ १०३ ॥

॥ इति श्रीनृसिंहशतकं सम्पूर्णम् ॥

---

## ८. ॥ अथ श्रीरामचन्द्राष्टकम् ॥

येन नान्दीमुखं नीतान्यागामिन्या रणश्रियः ।
जानकीस्तनकुम्भाभ्यां लक्षितं लक्ष्मणेन च ॥ १ ॥

जागरूकं जगत्त्राणे महस्तज्जयि जायताम् ।
वन्दामहे च[व]र्यं वीर्यं रावणद्वेषिणः प्रभोः ॥ २ ॥

अद्याप्याघुष्यते घोषैर्बद्धसेतोर्यदम्बुधेः ।
चित्रं चरित्रं वीरस्य तस्य किं वर्णयाम्यहम् ॥ ३ ॥

यस्य कीर्तिं निकृन्तैरप्यास्यैरख्यदरिः स्वयम् ।
हनूमत्प्रमुखैर्वीरैरुर्व्यां दिव्यैर्जनैर्दिवि ।
परिवारितमव्याद्वः प्राभवं रावणद्रुहः ॥ ४ ॥

धनुषि निहितपारं वामहस्ताम्बुजेन
प्रगुणितमदबाणं पाणिना दक्षिणेन ।
त्रिभुवनकमनीयस्निग्धकं त्रिप्रवाहं
भजत भजत भावं मैथिलीप्राणबन्धोः ॥ ५ ॥

विलङ्घ्योऽपि भीमं महाम्भोधिमेकं
दयाम्भोधिरन्योऽप्यलङ्घ्योऽङ्गजस्य ।
स लङ्कापुरीवीरभङ्गावतारः
चिरं गाहतां मे गिरं कैटभारिः ॥ ६ ॥

रचिता रसनिर्भरैर्गिरामिति रामायणनायकस्तुतिः ।
विजयाय चिरं विजृम्भतां विदुषां[मोदवहा सदा भुवि] ॥ ७ ॥

कृष्णकेलिशुकभक्तिकन्दलिं पुष्णती भुवनभक्तिभूमिषु ।
कृष्णजां रघुकुलेन्दुसौरभे मुष्णती हृदयमेक ... श्रुतेः (?) ॥ ८ ॥

॥ इति श्रीरामचन्द्राष्टकं सम्पूर्णम् ॥

---

## ९. ॥ अथ श्री अनुभवाष्टकम् ॥

निरवग्रहबोधविग्रहं निजमाधुर्यधुराधुरन्धरम् ।
परितः प्रथतेतरामहो परमं नः परमार्थवैभवम् ॥ १ ॥

अवधूततमिस्रविस्रवं विविधोपाधिप[त]रंगपारगम् ।
अहह स्फुटमद्य भुञ्ज्महे निजसाम्राज्यसुखैकसंप्लवम् ॥ २ ॥

स्वरसस्फुरणस्फुटाधुतः सहजः संप्रसरन् समन्ततः ।
किमपि स्वदतेतरामहो महिमा वाङ्मनसातिलङ्घितः ॥ ३ ॥

सहजन्मसमग्रजन्मिनां प्रथमानप्रथमं महन्महः ।
मधुरं मधुरादयो मुहुर्मुहुरास्वाद्य चमत्कृता वयम् ॥ ४ ॥

न वचांसि न चित्तवृत्तयः पदमेतत् परिमातुमीशते ।
परमं किमपीदमद्भुतं पुनरप्य ... ... ॥ ५ ॥

चरणाभरणे फणिभ्रमादिव दूराय पलायिता वयम् ।
अधुना पुनराद्यविद्यया परमानन्दपदे कथं स्थिताः ॥ ६ ॥

... ... ...णाकत्रणानिरीक्षणाक्षणनिर्वासितसर्वसंज्वराः ।
... ... ... ... ... सर्वतः कलयामः कथयामहे कियत् ॥ ७ ॥

न परः प्रणयेन ... ... ... ... ... ता वयम् ।
सपदि स्वपदेऽभिषेचितास्तदहो कृष्णकृपाविजृम्भितम् ॥ ८ ॥

अनुभवाष्टकमेतदनारतं परिपठन्ति जहन्ति रसान्तरम् ।
निजरसेन चिरं चरितार्थतामनुभवन्तु जगन्ति निरन्तरम् ॥ ९ ॥

॥ इति श्री अनुभवाष्टकं सम्पूर्णम् ॥

---

## १०. ॥ अथ श्रीगणपतिस्तोत्रम् ॥

आस्ते घोरसमुद्रवासवदिशापारस्थलीगोपुरात्
बाह्ये वामकरार्थकाशविषये माद्यं महान् पिप्पलः ।
आस्थानं यदुपान्तधन्यधरणीमास्थाय देवः स्वयं
दन्तीन्द्राननविग्रहस्त्रिभुवनं पुष्णाति तैस्तैर्वरैः ॥ १ ॥

पुरप्रसरदद्भुतं प्रथितदानतिम्यत्करं
विभोरभिनवात्मजं वटतरुस्थलावासितम् ।
मुहुः फलितपिप्पलद्रुमतटीनिरूढास्पदं
महागजमदाननं मणिनिधानमाराधये ॥ २ ॥

परिमलपरिणम्रैः कम्रनानाप्रसूनै-
रविरतमभिरामैरात्तभूषाविशेषम् ।
अपि च निचितलीलाकल्पशिल्पोपचारै-
रुपचितमभिवन्दे दैवतं दन्तिवक्त्रम् ॥ ३ ॥

चलदलतटभूमिभूषणं
मदकलकुञ्जरमञ्जुलाननम् ।
भजत भजत वृष्टिभि ... ... ..
र्हरितहरेण करेण भूषितम् ॥ ४ ॥

आलोकय महाश्चर्यं मूले पिप्पलशाखिनः ।
लीलाकल्पतरुः कोऽपि खेलामुखगजायते ॥ ५ ॥

निष्पतन्निबिडामृतदिवमुदितेषु[द्रवपूरितेन्दु] कलाङ्कितम
शिल्पभारधुराधुरन्धरचित्रभूषणभूषितम्

कल्पमानकृपाकटाक्षनिरीक्षिताखिलवैभवम्
पिप्पलद्रुमविद्रुमस्थलकल्पकद्रुममाद्रिये ॥ ६ ॥

वन्दे बहुलमाधुर्यकन्दलीललिताद्भुतम् ।
मन्देतरमहैश्वर्यमन्दिरं सिन्धुराननम् ॥ ७ ॥

मदजलविलुलितकटतटविलुठित-
मधुकरपरिकरमुखरितपरिमलम् ।
अभिमतवरभरवितरणपरिणत-
मदकलकरतलगजमुख जय जय ॥ ८ ॥

मन्देतरैश्वर्यमहाभिषेक
सन्दोहधार ... ... ... ...पप्रवाहम् ।
भिन्दानमन्तस्तिमिरं दशाननं
वन्दामहे सत्तगजेन्द्रवक्त्रम् ॥ ९ ॥

वितरतु विजयोत्सवे ... ... ...
विजयमहानिधिरोजसां निधिः ।
अभिनवमदगन्धिसिन्धुराननं
नम्रविपद्धनं महत् ... ... ॥ १० ॥

... .. ... सुधारानदाम्बुभारैः
करम्बितं वः क...रंपिराबन् ।
अभीष्टवृष्टिं ... ... ष्टगाढं
निधि[गु]णानां [च] पतिर्गणानाम् ॥ ११ ॥

निरवधिमदधारानिर्झरोभ्राम्यमाण-
भ्रमरसमरलीलाधोरणीदत्तदृष्टिः ।
अभिमतवरदानव्यग्रहस्तारविन्दो
करिकलभमुखी नः कामधेनुं धिनोति ॥ १२ ॥

कल्पितानल्पभूषेण वेषेण बहुलश्रियम् ।
कल्पशाखिनमालम्बे करीन्द्रकलभाननम् ॥ १३ ॥

कारणं किमपि जन्मभागिनां
पूरणं पुलकिताद्भुतश्रियाम् ।
पारणं भुवनसर्वसम्पदां
वारणेन्द्रवदनं भजेमह [भजे महः] ॥ १४ ॥

मदोत्कटकटाङ्गणभ्रमितमत्त [भृं] गाङ्गना-
कलध्वनितधोरणीकलकलोत्सवास्वादिने ।
नमस्त्रिदशमण्डलीमुकुटकोटिकोटीतट-
स्खलच्चरणपल्लवक्रमसहायधाम्ने नमः ॥ १५ ॥

मदपरिमलक्रीडाक्रोडीकृतभ्रमरच्छटा-
निबिडनिबिडश्रीमच्छुण्डातरङ्गिततताण्डवम् ।
त्रिदशपरिषत्सेवादिव्याञ्जलिक्रमरञ्जितं
द्विरदवदनं वेषं वन्दामहे भुवनश्रियः ॥ १६ ॥

विपल्लवान् वः पदपल्लवेन
विधूनुतादानतकल्पशाखी ।
शिखामणिः शिल्पितसिन्धुरश्रीः
श्वश्रेयसानां च गणश्रियां च ॥ १७ ॥

मददुर्दिननिर्दयादरव्यसनारूढमधुव्रज[त]प्रजाम् ।
शिवयोरयि लोचनाद्दृतां शिशिरां पश्यत विश्वतः श्रियम् ॥ १८ ॥

दृढमल्लिदलकुड्मलाग्रमालाभिरालिङ्गितनीलगात्रम् ।
विराजते धाम गजेन्द्रवक्त्रं नक्षत्रमालाभिरिवान्तरिक्षम् ॥ १९ ॥

मङ्गल्यदो हि मदसिन्धुमहाप्रवाहभङ्गीनिरर्गलपरिष्कृतपुष्कराग्रम् ।
तुङ्गानुभावमनुभावशतानुविद्धशृङ्गारभारमवताच्छिववैभवं वः॥२०॥

आलोकयालोकय लोचनाभ्यामाभ्यामुभाभ्यामभिरामसीमम् ।
धामाङ्कुरं कुञ्जरराजवीथिसमुल्लसद्वक्त्रविचित्रभावम् ॥ २१ ॥

नमो नम्रजगज्जन्तुचिन्तामणिनखाङ्घ्रये ।
मत्तहस्तीन्द्रवक्त्राय चित्राय महसे मुहुः ॥ २२ ॥

अविसरद्भ्रमरीनिकरोद्भटं कटतटे कमनीयमदोत्कटे ।
गजमुखं गहनं भुवनश्रियामभिमतं भवतामभिवर्षतु ॥ २३ ॥

सर्वतः कुसुमसंप्लवधारानिर्वृतेन महसा निरवद्यम् ।
गर्वहारि महसां गजवक्त्रं स्वर्वधूसततगीतमुपासे ॥ २४ ॥

अविरलमदधारं क्रीडाकडारमधुव्रत-
व्रजविलुलितव्यक्तामोदप्रमोदितदिङ्मुखम् ।
हरिपुरवधूहस्तोद्वान्तप्रसूनपरम्परा-
परिमलदिशे दत्तव्रीडं भजामि गजाननम् ॥ २५ ॥

सर्वगर्जितमदद्विपच्छटानिर्विवादगजराजसम्पदे ।
निर्वृतिप्रियतमाय तेजसे सर्वलोकसुहृदे नमो नमः ॥ २६ ॥

नमस्त्रिलोकीतिलकाङ्कुराय कराग्रविन्यस्तसमस्तलक्ष्म्यै ।
करीन्द्रवक्त्राय सुरेन्द्रमौलिमालावलीढप्रपदाय धाम्ने ॥ २७ ॥

सिन्धुरबन्धुरवदनं सीमद्वयामाभिरामशिशिररुचाम् ।
बन्धुरबन्धुजनानां बहुमुखमभिमुखमहो महो जयति ॥ २८ ॥

दिनकरकरपरिरम्भाविजृम्भाविलसितं शिल्पविकल्पम् ।
समदृशि दृशि सुतरामभिरामं मदगजमुखमधिदैवमुदीयाम् ॥ २९ ॥

त्वामेकमवलम्ब्यैव स्वाराज्यं गमिता वयम् ।
मामेकमवलम्ब्यैव कारुण्यं गमितो भवान् ॥ ३० ॥

अविकलकृपापाङ्गक्रीडातरङ्गितदिङ्मुखं
मदगजमुखाकारं मन्देतरस्फुटवैभवम् ।
भवतु निभृताशेषश्रेयश्श्रियां नियतास्पदं
त्रिभुवनदृशां दृप्तं भाग्याद्भुतं विजयाय वः ॥ ३१ ॥

भ्रमद्भ्रमरमण्डलीकलकलारवाडम्बर-
स्फुरत्पुलकभूषणं श्रवणशूर्पदर्पोद्धतम् ।
जगज्जयजयध्वनितवैभवोज्जृम्भि .. ..
प्रियप्रसरनिर्भरं भज गजाननक्रीडितम् ॥ ३२ ॥

आर्द्रचन्दनरसानुलिप्तयोराविभाति तव कुम्भयोर्द्वयम् ।
भुक्तिमुक्तिसुधयेव निर्भरं पूर्णयोः क्षरणवेगशङ्कया ॥ ३३ ॥

मत्तहस्तिमुखमस्ति वस्तु वो वाञ्छितानि वितरीतुमुद्यतम् ।
वाञ्छितं ललितकान्तिसम्पदां राशिना च मम मानसेन च ॥ ३४ ॥

कामात्कि [न् कि] रतु वः कामं धाम सामोद्भवाननम् ।
रामणीयकसर्वस्वं सर्वस्वं सर्वसम्पदाम् ॥ ३५ ॥

अयमस्मदीयसुकृताङ्कुरोऽगमो
हरिदङ्गनाः शिशिरयन् दृशां श्रिया ।
विजयत्स्वयं विजयसिन्धुराननो
विजयश्रियं दिशति विश्वतोमुखी ॥ [खीम्] ३६ ॥

शेषाभिरशेषाणामैश्वर्यविशेषबहुधाराणाम् ।
धुरि रचितपट्टबन्धं दैवं दन्तीन्द्रमुखमिदं जीयात् ॥ ३७ ॥

देव त्वदालोकनधन्यवृत्ति नेत्रद्वयं गात्रमिदं च मन्ये ।
किञ्चान्यदावेदयते जनोऽयं कृतार्थतां केलिकटाक्षलक्ष्म्या ॥ ३८ ॥

परिपूर्णमनोरथा वयं भवदालोकनकेलिसम्पदा ।
किमिवापरमत्र कीर्त्यते करुणासागरगर्भकिङ्करैः ॥ ३९ ॥

अथापि कथयामस्ते विस्तरेण गिरां विना ।
भगवन् करुणापाङ्गैः पाहि पाहीति पाहि माम् ॥ ४० ॥

॥ इति श्रीकृष्णलीलाशुकमुनिविरचितं
श्री गणपतिस्तोत्रं सम्पूर्णम् ॥

---

## ११. ॥ अथ श्रीमहाकालाष्टकम् ॥

वचसि मम सन्निधत्तां मधुरस्मितभरितमन्थरापाङ्गी ।
करकलितललितवंशा कापि किशोरी कृपालहरी ॥ १ ॥

गर्वोद्रिक्तदिशागजेन्द्रपरिषत्सेवाप्रणामाहृतं
यातायातसुरेन्द्रसैन्यलहरीमौलिप्रभावन्दितम् ।
वल्गत्पार्थिवसार्ध[र्थ]मण्डलमहायात्रारवाराधितं
कात्स्न्यं कामभुवां ...... गजमुखज्योतिः किमप्याश्रये ॥ २ ॥

भूम्ने भुवनमाधुर्यसीम्ने सकलसम्पदाम् ।
स्थेम्ने सरसगोपालधाम्ने तदिदमों नमः ॥ ३ ॥

अज्ञानमद[थ]नज्योतिः प्रज्ञेशानपदास्पदम् ।
आलम्बितनराकारमालम्बनमभूत् सताम् ॥ ४ ॥

अमुष्य करुणापात्रमस्ति मस्करिणां मणिः ।
आदित्यप्रज्ञसंज्ञं यदादित्यादधिकं महः ॥ ५ ॥

निर्जितः समदृष्टयैव नीलोलं येन मन्मथः ।
अर्जितैरस्त्रकुसुमैराराधयन् ययौ ॥ ६ ॥

आदित्यप्रज्ञपादानामादिकारुण्यभाजनम् ।
ईशानवेद इत्यासीदीशानो मुनितेजसाम् ॥ ७ ॥

आस्पदस्य हि यस्यासीदशेषगुणसम्पदाम् ।
अद्वितीय इति ख्यातिरात्मबुद्धया न केवलम् ॥ ८ ॥

तयोरनुग्रहापाङ्गसङ्क्रान्तज्ञानसम्पदा ।
सागरा इव गम्भीराः सन्ति धन्याः सहस्रशः ॥ ९ ॥

तयोरेव कृपाभूमिः कृष्णलीलाशुको मुनिः ।
यदाश्रमाङ्ग......रमन्ते तत्र विस्तराः ॥ १० ॥

तिलकं कुलपालीनां नीलीति निलयं श्रियाम् ।
यमलं जनयाञ्चक्रे यं च कीर्तिं च शाश्वतीम् ॥ ११ ॥

यस्य दामोदरो नाम सविता सवितृ........ ।
अनृणस्य हि यस्यासन्नधर्माणो मरुद्गणाः ॥ १२ ॥

यस्य तत्प्रियसर्वस्वं राज्यवेशानसंज्ञकम् ।
विनेय विधेय सुहृन्नु य ... ... ... ॥ १३ ॥

यस्य दक्षिणकैलासलीलापरिणतं महः ।
चर्चाचन्दनगन्धेन सुगन्धयति मानसम् ॥ १४ ॥

कृष्णलीलाशुकस्यास्य किशोरमधिदैवतम् ।
[कृष्ण]रत्नमिदं ब्रूते वेणुवादिमुखेन्दुना ॥ १५ ॥

मदक्षीय[ब]भृङ्गाङ्गनालिङ्गिताङ्गं
महद्दैवतं मत्तहस्तीन्द्रगामि ।
पदच्छायया पाटलीकृत्य नृत्यं
परिक्रीडमानं भजध्वं भजध्वम् ॥ १६ ॥

जीयाद्देवो महाकालो जगतामेकभूषणः ।
भाग्यभाजो गता यस्य भूषणत्वं भुजङ्गमाः ॥ १७ ॥

वन्दामहे वयं देवं चन्द्रलेखाशिखामणिम् ।
शङ्केयं कालभङ्गेन महाकालपदं गतम् ॥ १८ ॥

देवं महाकालममी दयाम्भोधिमुपास्महे ।
रतिगौर्यौ दृशा वीक्ष्य येन चोन्मीमूलितः स्मरः ? ॥ १९ ॥

तस्य देवस्य माहात्म्यं महाकालस्य किं ब्रुवे ।
यस्य लीलापदानानि लिह्यन्ते श्रुतिमौलिभिः ॥ २० ॥

महाकालस्य त ... चरित्रे नातिचित्रता।
पञ्चाननेन मु ... निर्जितः कोऽपि कुञ्जरः ॥ २१ ॥

महाकालपदच्छायापाटलिम्ने मुहुर्नमः ।
यदेव दिङ्मुखे शङ्के .. ... .. वतो गतम् ॥ २२ ॥

महाकालपदच्छाया ... ... म वर्षतु ।
यस्यां निर्वृतिसाम्राज्यं निर्विवादं विजृम्भते ॥ २३ ॥

महाकाल महादेव मनोहर तमोहर ।
महाधार जडाधार जयं कुरु दयां कुरु ॥ २४ ॥

महाकालमाहात्म्यगर्भैरदभ्रैः
पञ्चषैरञ्चितं किञ्चिदेतत् ।
दशामष्टकं धन्यधन्यां दुहानं
दिशामक्षकं दीर्घकालं पुनीयात् ॥ २५ ॥

॥ इति श्रीकृष्णलीलाशुकमहाकविमुनिविरचितं
महाकालाष्टकं सम्पूर्णम् ॥

———————

## १२. ॥ अथ श्रीकार्कोटकम् ॥

त्रिभुवनजयविहारी विहरतु हृदि वो महाकालः ।
गिरिवर[तनया]कुचतटविलुठितनयनत्रयीसुभगः ॥ १ ॥

कार्कोटकेश्वरो जीयादर्ककोटिनिभप्रभः ।
कर्कशेतरसौभाग्यतर्कदुर्ग्रहविग्रहः ॥ २ ॥

कार्कोटकेश्वरस्यास्तु स्वस्ति तस्यै वपुःश्रियै ।
कर्कोटकादयो यस्यै शेषेण सह शेरते ॥ ३ ॥

कार्कोटकेश्वरं पश्य करुणावरुणालयम् ।
लक्ष्मीविलोकिते यस्य विषं कण्ठे विजृम्भते ॥ ४ ॥

कार्कोटकेश्वरो देवः कामान् कस्य न वर्षति ।
कामदाहमनुस्मृत्य पश्चात्तापवशादिव ॥ ५ ॥

कर्कोटकेश्वरं नाम कल्पकद्रुममाद्रिये ।
कम्रं किसलयं यस्य कराङ्घ्रिदशनच्छदम् ॥ ६ ॥

कर्कोटकेश्वरं वन्दे कन्दं कमपि जन्मिनाम् ।
धन्या यमुपजीवन्ति तपसा क्लान्तमानसाः ॥ ७ ॥

कर्कोटकेश्वरं देवं के वा कैवल्यवर्षिणम् ।
कामदेहिनमालम्ब्य कृतार्थपदलङ्घिताः ॥ ८ ॥

कर्कोटकेश्वरं चेतः कदा नु मम गाहते ।
यस्मिन् विस्मयमापन्ना यतयः श्रुतयोऽपि च ॥ ९ ॥

कर्कोटकेश्वरं धीरा गाहन्ते हन्त चेतसा ।
नादिर्यस्य न चाप्यन्तो नापि मध्यं सुखाम्बुधेः ॥ १० ॥

कर्कोटकेश्वरभवं नवरत्नमेतत्
इष्टामभीष्टमभिवर्षतु चाश्रितानाम् ।
किञ्च प्रपञ्चपरिलङ्घिमहासुखोर्मि-
मात्मीयमुक्तिमुपदर्शय मोक्षलक्ष्मीम् ॥ ११ ॥

॥ इति श्रीकृष्णलीलाशुकमहाकविमुनिविरचितं
श्रीकार्कोटकं सम्पूर्णम् ॥

---

## १३. ॥ अथ श्रीकृष्णवरदाष्टकम् ॥

परमानन्दसर्वस्वं पाशुपाल्यपरिष्कृतम् ।
चिरमास्वादयन्ती मे जृम्भतां चेतसि[स]स्थितिः ॥

दूरदूरमुपारुह्य पततामपि चान्तरा ।
सकृदाक्रन्दनेनैव वरदः करदो भवेत् ॥ १ ॥

मम चेतसि माद्यतो मुरारेः
मधुरस्मेरमुपाध्वमाननेन्दुम् ।
कमनीयतनोः कटाक्षलक्ष्मीं
कन्ययापि (कलयापि) प्रणतेनु(षु) कामधेनोः ॥ २ ॥

वरदस्य वयं कटाक्षलक्ष्मीं
वरयामः परमेण चापलेन ।
सकृदप्युपगम्य सम्मुखं
सहसा वर्षति योषितोऽपि कामम् ॥ ३ ॥

जृम्भतां वो हृदये ... ... ... जगत्त्रयीसुन्दराः कटाक्षभराः ।
अम्भोदान् गगनचरानाह्वयमानस्य बालस्य ॥ ४ ॥

जृम्भन्तां वः करिगिरिजुषः कटाक्षच्छटा विभोर्मनसि ।
अम्भोधरमधःकृत्वा हषान् (र्षात्स्वै)स्वरं शयानस्य ॥ ५ ॥

व्रजजनवनितामदान्धकेलि-
कलहकटाक्षावलक्षविभ्रमो वः ।
विहरतु हृदये विलाससिन्धु-
र्मुहुरविलङ्घितमुग्धशैशवश्रीः ॥ ६ ॥

वरवितरणकेलिधन्यधन्या
मधुरतराः करुणाकटाक्षलक्ष्म्याः ।
करिगिरिसुकृताङ्कुरस्य कस्या-
भिनववारिवहस्य विभ्रतां वः ॥ ७ ॥

इत्यष्टकं पुष्टरसानुबन्धं
विनोदगोष्ठीसमये वियुङ्क्ताम् ।
व्रजाङ्गनानां कुचयोः करीन्द्र-
शैलस्य मौलौ च मुहुर्विहर्ता ॥ ८ ॥

श्रीकृष्णलीलाशुकवाङ्मयीभि-
रेवंविधाभिर्विबुधादृताभिः ।
पुष्णन्तु धन्याः पुनरुक्तहर्ष-
मायूंषि पीयूषतरङ्गिणीभिः ॥ ९ ॥

॥ इति कृष्णलीलाशुकमहाकविमुनिविरचितं
श्रीकृष्णवरदाष्टकं सम्पूर्णम् ॥

---

## १४. ॥ अथ श्रीबृन्दावनस्तोत्रम् ॥

वाञ्छिताय भवतां विजृम्भतां
मत्तहस्तिवदनं महन्महः ।
लाञ्छितं ललितभृङ्गसुन्दरी-
लेखया च शशिलेखया च यत् ॥ १ ॥

देवी सरस्वती स्वैरं सेवावसरकाङ्क्षिणी ।
देवदेवमियं धन्या सेवतां देवकीसुतम् ॥ २ ॥

अस्ति बृन्दावनं नाम वनं भुवनपावनम् ।
बृन्दया नश्च[न्द] सूनोश्च कृपया परिरक्षितम् ॥ ३ ॥

यत्र गावश्च गोपाश्च गोप्यश्च तरवश्च तम् ।
अवतीर्णाः सह स्वर्गात् सेवन्ते स्म जगत्प्रभुम् ॥ ४ ॥

यत्र रामश्च कृष्णश्च रेमाते बाललीलया ।
निरन्तरपरीरम्भनिर्भरोऽद्भुतहर्षया ॥ ५ ॥

यत्र दृष्ट्वा विषास्पृष्टं कदम्बममृतोक्षितम् ।
स्पृष्ट्वा कृष्णेन निर्भीभ्यां पद्भ्यां पेदे फणित्र[ह्र]दे ॥ ६ ॥

यत्र कालियनागस्य मध्यमं भुवनोत्तमम् ।
फणं चकार भगवान् पादाम्बुरुहलीलया ॥ ७ ॥

यत्र द्वादश मार्ताण्डा शीतार्तं कालियं ह्रदे ।
कृष्णं क्षणमुपस्पृश्य करैर्जग्मुः कृतार्थताम् ॥ ८ ॥

यत्र द्वादश मार्ताण्डाः प्रतापं वीक्ष्य शार्ङ्गिणः ।
तत्क्षणानिव काङ्क्षन्तः सेवन्तेऽद्यापि तैः करैः ॥ ९ ॥

यत्र गोपीसहस्रेण खेलमानं सहस्रशः ।
प्रेक्ष्य देवं सहस्राक्षः सहस्राक्षफलं ययौ ॥ १० ॥

यत्र त्रिभुवनाभोगसुभगां तनुमुद्वहन् ।
धन्यैरन्यापि गोविन्दा लोचनैः परिचुम्ब्यते ॥ ११ ॥

यत्र केशिनमाक्रम्य वामपादेन केशवः ।
वामहस्तेन चाकृष्टैः प्राणैरन्यापि खेलति ॥ १२ ॥

इति यत्र विचित्राणां विष्णोर्बाल्यमुपेयुषः ।
पवित्राणि चरित्राणि गीयन्ते मुनिपुङ्गवैः ॥ १३ ॥

यत्रोद्गीतं गोपिकानां हिमाद्रेः
श्रुत्वा शम्भुर्ध्यानभङ्गानुपेत्य ।
गुप्तस्तृप्तं कृष्णमीशिष्टदीर्घं
शृण्वन् गीतं भाति गोपीश्वराख्यः ॥ १४ ॥

किमत्र बहुनोक्तेन निःश्रेयसविधिः स्वयम् ।
निःश्रेयसवनं गत्वा यत्र रेमे रमासखः ॥ १५ ॥

तदेतदमृतस्यन्दि बृन्दावनमहो दृशोः ।
चिरोत्कन्दितमागम्य जन्मनः फलमाप्नुमः ॥ १६ ॥

वन्दे वनमिदं मूर्ध्ना यत्र चित्रं जगत्प्रभोः ।
प्राप्य प्रतिपदं रेजे स्थलपद्मपदं पदम् ॥ १७ ॥

अपि वा भुवनोल्लङ्घिसौभाग्यं वीक्ष्य चक्रिणा ।
पादमुद्रापदेशेन यच्चक्रेणात्मसात्कृतम् ॥ १८ ॥

जगज्जन्मस्थिति[ल]या लीला यस्य जगत्प्रभोः ।
तस्यास्य कृष्णदेवस्य लीलोद्यानमिदं कियत् ॥ १९ ॥

बृन्दादेव्या बद्धरक्षं तदेतत्
बृन्दारण्यं पुण्यभाजो भजन्ते ।
गोपीरूपैर्यत्र लक्ष्मीसहस्रैः
देवः स्वैरं सेवितो दैवतैश्च ॥ २० ॥

वन्दे भगवतीं बृन्दां वनस्यैतस्य रक्षिणीम् ।
यत्र दत्त[क]हरः स्वैरं चिक्रीडति जगत्प्रभुः ॥ २१ ॥

वन्दे बृन्दावनेन्द्रस्य विश्वनाथस्य शैशवम् ।
वैभवोद्गन्धिमङ्गल्यकटाक्षोक्षितदिङ्मुखम् ॥ २२ ॥

वन्दे कन्दर्पसाम्राज्यबृन्दावनवनेचरम् ।
बृन्दैरिन्दीवराक्षीणां वन्दितं तमितस्ततः ॥ २३ ॥

तावकं भगवन् भातु तत्त्वमस्तमितोपमम् ।
निस्तरङ्गनिरातङ्कनीरन्ध्रसुखसङ्कुलम् ।। २४ ।।

भगवान् पुण्डरीकाक्षो भासतां मम मानसे ।
मृगलाञ्छनवंशस्य मणिलाञ्छनतां गतः ।। २५ ।।

मधुराभिजनं धाम मधुराधरपल्लवम् ।
हृदयङ्गममभ्येतु हृदयं गलितोपमम् ।। २६ ।।

देवकीवसुदेवाभ्यां दत्त्वा नेत्रोत्सवं सकृत् ।
ददौ नन्दयशोदाभ्यां यत्तत्पुत्रोत्सवोत्सवान् ।। २७ ।।

तदेतदवलिभ्या[लंव्या]दौ बाललीलाः सहस्रशः ।
अनुचुम्बितकैशोरकेलिः खेलतु मे हृदि ।। २८ ।।

देवः क्रीडन् गोपगोपीसहस्रैः दत्तास्थाने गोसहस्रैः परीतः ।
क्लृप्तच्छायः कल्पकश्रीसहस्रैर्गायन् वेणुं गाहतां मानसं मे ।। २९ ।।

बृन्दारण्ये पण्यगोपाङ्गनाभिः कूलेकूले क्लृप्तहर्म्ये लताभिः ।
क्रीडन् कृष्णः कृष्णया बद्धदूरं वीचीहस्तैर्भातु बद्धाञ्जलिर्मे ।। ३० ।।

अविशङ्कमनङ्गसङ्कुलाभिर्वनिताभिर्विनताभिरात्तरासः ।
कमलारमणः किशोरवेषं परिपुष्यन् मम चित्तमभ्युदेतु ।। ।। ३१ ।।

मध्ये मध्ये कृष्णमाणिः[क्य]मिश्रा माला काचिद्वल्लवीनां सहस्रैः ।
चित्ताभोगैर्भोगिनां धन्यधन्यैर्जीयादेषा दीर्घमाघ्रायमणा ।। ३२ ।।

व्योमाभोगे विस्मयाविष्टनेत्रैः सार्थैर्दिव्यैर्निर्निमेषं निषेव्यम् ।
गोपीलक्षैः क्लृप्तरासं समन्ताद् गोपं कञ्चित्पञ्चबाणोऽप्युपास्ते ।। ३३ ।।

चपलं भवतु चरित्रमेतत् कमलाकेलिभुजान्तं [न्त]रे निलीना ।
मुनयश्च मुहुर्मुहुर्मुरारे विहरन्ते तव चापलं गृणन्तः ।। ३४ ।।

मदान्धगोपीजनवल्लभाय नमोऽस्तु नारायणचापलाय ।
यद्वीक्ष्य लक्ष्मीर्भुजमध्यलीना हा हन्त लीलावसरप्रतीक्षा ।। ३५ ।।

त्वयि देव दयाम्बुधे मुरारे निखिलं न्यस्य भरं. . . . गतान्ध्य ।
विहराणि विजृम्भमाणतत्वच्चरणाम्भोरुहचुम्बनोत्सवेन ।। ३६ ।।

नन्दव्रजाभरण नीलमणिप्रवाळ नाथ त्वदीयचरणाम्बुजचुम्बनान्धः ।
पुण्यैः पुरा परिणतैः परिरस्यमानैर्भूयो भवेय भगवन् भुवनान्तरेऽपि ३७ ।।

जीयाज्जगत्त्रयीकान्त कृपार्णव जयार्णव ।
जिग्ये फणिफणा येन पादेन च करेण च ।। ३८ ।।

न केवलं भवान् देव पोतो नन्दयशोदयोः ।
किन्तु सिन्धुममुं घोरमुत्तरीतुं च मादृशाम् ॥ ३९ ॥

भुवनेश्वरमालम्बे तन्त्वां बृन्दावनेश्वरम् ।
स्मरताममृतोद्गारिकैशोरकदयाद्भुदुतम् ॥ ४० ॥

बृन्दारण्ये वीरगोपालबालं वारं वारं वारितोदान्तदैत्यम् ।
नागांल्लोकान्निष्पतत्पुष्पवीचीधारावर्षस्मेरमौलिं स्मरामः ॥ ४१ ॥

भजतां हृदयाम्भोजभागधेयमुपास्महे ।
यजतामधिदैवं यद्यच्च व्रजमृगीदृशाम् ॥ ४२ ॥

पङ्केरुहप्रतिभटं पदपल्लवेन पारङ्गतं त्रिभुवनाद्भुतविभ्रमाणाम् ।
पिञ्छावतंसपरिलाञ्छितकेशहस्तं पीताम्बरं किमपि धाम वयं भजामः॥४३॥

यशोदाया यशःपुञ्जमञ्जनाभमुपास्महे ।
विस्मयं यत्र विन्दन्ति बृन्दावनमृगा अपि ॥ ४४ ॥

बृन्दावनचरं देवं बृन्दादृतपदाम्बुजम् ।
नन्दात्मजमुपासीना नन्दाम शरदःशतम् ॥ ४५ ॥

न हन्त तपसा सिद्धा न च मुग्धाः प्र[व्र]जाङ्गनाः ।
तदिह त्वद्दृशोः पात्रं भवितुं देव के वयम् ॥ ४६ ॥

पश्येम तव विश्वेश बृन्दावनविहारिणः ।
वैभवं शैशवोद्गन्धिसिन्धुकन्यास्तनादृतम् ॥ ४७ ॥

कस्तूरिकाकर्बुरकण्ठकाण्डं कञ्चित्किशोरं कमलायताक्षम् ।
विस्तारिणीभिः स्मितचन्द्रिकाभिर्विलोचनं लोचनयोर्वहामः ॥ ४८ ॥

गोगोपीगोपलक्षैः परिवृतमभितः कल्पकच्छायशीतं
गीतं वंश्या दुहानं त्रिदशपुरमहापुष्पवृष्टिप्रहृष्टम् ।
ऊर्ध्वाधस्तिर्यगाशामखशतभरितैर्भाग्यभाजां पराधैः
दैवं लेलिह्यमानं त्रिभुवनविजयं दीप्यतां नेत्रयोर्मे ॥ ४९ ॥

चपला सफला ममास्तु दृष्टिश्चतुरं वीक्ष्य चतुर्भुजस्य बाल्यम् ।
अधरामृतवाहिवेणुनादै रधिबृन्दावनमिन्दिरावलेह्यम् ॥ ५० ॥

इन्दीवरदलश्याममिन्दिरानयनोत्सवम् ।
बृन्दावनचरं बालं वन्देमहि कथं दृशाम् ॥ ५१ ॥

मन्दस्मितामृतार्द्रेण वदनेन मनोहरम् ।
कन्दर्पतातकैशोरं कदा मम दृशोः पदम् ॥ ५२ ॥

नन[त]व्रजाङ्गनालक्षनयनोत्सवनिःसितम् ।
कन्दर्पतातसौभाग्यं कदा मम दृशा स्पृशे ॥ ५३ ॥

साधारणपदातीतराधारणरसादृतः ।
नारायणभवन्बाल्यपारयणपरे दृशौ ॥ ५४ ॥

कदा नु कमलाबन्धो बृन्दावनविलासिनः ।
विलासि वदनाम्भोजं [विलोक्य] विलह्य सफले दृशौ ॥ ५५ ॥

सफले चपले कृष्ण कदा तव मदालसम् ।
वदनाम्बुरुहं बृन्दावनेऽप्याचुम्ब्य मद्दृशौः ॥ ५६ ॥

बृन्दावने विहरतस्तव दिव्यवेषं दृग्भ्यां निपातुमतिलम्पटयोर्दृशोर्मे ।
यावत्प्रशस्यसि जगत्त्रयकान्त कृष्ण तावत्तवानुचरणं चरणे करोमि ॥५७॥

त्वत्पादपङ्कजरजःपरिचारकस्य किन्नाम
किङ्करजनस्य जगत्यसाध्यम् ।
दिव्यां दृशं दिश यया किल दिव्यवेषं त
[अन्त]र्बहिस्तव विलह्य भवन्ति धन्याः ॥ ५८ ॥

यद्वा चित्तपथे विचिन्त्य भवतो भक्तैकचिन्तामणे
भावं भावनया कयापि भगवन् प्राप्स्याम्यभीप्सास्पदम् ।
किं वा केवलया तवैव कृपया हे कृष्ण कृष्णासख
स्वामिन् कामदुघैः कटाक्षविभवैः सार्धं लभे लिप्सितम् ॥ ५९ ॥

बृन्दावनव्यसनिनस्तव देव कृष्ण
लीलाशुकेन रचितं निचितं रसौघैः ।
प्रत्यक्षरं परिदुहन्मधुकर्णयोस्ते
स्तोत्रं तदेतदनिशं विलिहन्तु धन्या ॥ ६० ॥

॥ इति श्रीकृष्णलीलाशुकमहाकविमुनिविरचितं षष्टिसङ्ख्यं
स्तोत्ररत्नसोदरन्नाम बृन्दावनस्तोत्रं
सम्पूर्णम् ॥

---

## १५. ॥ अथ श्रीभक्तिवैजयन्तीस्तोत्रम् ॥

॥ श्रीजीवदेवविरचितम् ॥

श्रीकृष्णाय नमः समस्तहृदयाम्भोजावदाततविषे
भक्तौघस्मयमानमानसवते दैत्यावलीविद्विषे ।
गोपीवल्लविकाय नायकगुणग्रामप्रणालीजुषे
लीलावैणविकाय कायसुषमानीलाम्बुजश्रीजुषे ॥ १ ॥

अव्यक्तं श्रुतिशेखरान्तरवने व्यक्तं च बृन्दावने
गूढं वेदविचारचारुवदनैर्गूढं च गोपीजनैः ।
अस्पष्टं हृदि योगिनामपिः पुनः स्पष्टं च सेवावतां
श्रीकृष्णं कमनीयकान्तिकुहकं ब्रह्माद्भुतं संश्रये ॥ २ ॥

पद्मापीनपयोधरप्रणिहितं प्राणप्रदं प्राणिनां
पिञ्छाडम्बरपीवरं प्रणयिनीप्रेमप्रियं भावुकम् ।
पीतं पद्मविलोचनापरिषदा प्रत्यक्षतः प्रीतया
पायाद्वः प्रतिमाभिनपिहितं पीताम्बरं प्राभवम् ॥ ३ ॥

कालो गत्वर एष केनचिदहो मार्गेण यास्यत्यलं
योगक्षेमविचारघोरनरके रात्रिन्दिवं मज्जताम् ।
येषां याति मुकुन्दचित्रचरितश्रेयोऽमृताकर्णन-
प्रेयोनन्दितचेतसां सुमनसां तेभ्यो महद्भ्यो नमः ॥ ४ ॥

बाह्वोरङ्कितशङ्खचक्रयुगलं कण्ठे तुलस्याञ्चितं
स्वान्ते प्रस्फुटकृष्णपादकमलं नामामृताढ्यं मुखे ।
नेत्रे हर्षजलोज्ज्वलं शुचितरे गात्रे च रोमाञ्चितं
धन्या एव विलोकयन्ति नयनैर्विष्णोः समं वैष्णवम् ॥ ५ ॥

सत्यं ज्ञानमनन्तमेकममलं ज्योतिः स्वतो भास्वरं
ब्रह्मानन्दघनं परं गुरुमुखाद्विज्ञाय वेदान्ततः ।
सद्यः स्मेरसरोजसुन्दरतरं लक्ष्म्या मुदोपासितं
तद्विष्णोः परमं पदं हृदि सदा पश्यन्ति यत्सूरयः ॥ ६ ॥

अव्यक्तं परमं निराकृति हरे रूपं वचश्चेतसोः
दूरं केवलचित्प्रकाशमतुलं ज्ञात्वा श्रुतेः शेखरे ।
व्यक्तं विस्तृतपुण्डरीकनयनं वंशीनिनादप्रियं
बृन्दारण्यविनोदवञ्चनपरं संसेव्यतां मुक्तये ॥ ७ ॥

आर्द्रान्तःकरणं गुणैर्भगवतस्त्यक्तान्यमार्गश्रमं
रोमाञ्चैर्विपुलैः समावृततनुं हर्षाश्रुपूर्णेक्षणम् ।
आनन्दोदयमोदमानमनिशं श्रीकृष्णनामामृतैः
मुक्तिः सन्तनुते स्वयंवरविधिं दृष्ट्वा स्वयं वैष्णवम् ॥ ८ ॥

धिग्जिह्वां पिशुनस्य कृत्तमुसलीपुच्छोपमं विह्वलां
दुस्तर्कोपलताडनैर्भगवतो भक्तेर्द्विषाणां मृषा ।
कैवल्यागमकर्तरीं कलिपटीनिर्माणकाले तुरीं
मर्मोद्भिदनसूचिकां निजहतेः संसूचिकां सूचिकाम् ॥ ९ ॥

भेदोऽयं यदि नाम जीवपरयोः स्वाभाविको वर्तते
यद्वौपाधिक एव मूर्तिपदवीपर्यन्तमत्र ध्रुवः ।
तत्रैवं सति सेव्यसेवकभिदा सिद्धा प्रसिद्धा श्रुतौ
निष्कामो निजमुक्तये परमुपासीतेति वाक्यैः स्फुटम् ॥ १० ॥

एके षोडशषट्पदार्थविषयज्ञानं समाचक्षते
कर्मैवेति विचारयन्ति कतिचिद्योगं च केचिज्जगुः ।
पुंसोऽथ प्रकृतेश्च जीवपरयोर्ज्ञानं परे मेनिरे
सर्वं कृत्नमिदं गुणैर्भगवतो भक्तिः परं मुक्तये ॥ ११ ॥

या काचित् परिकल्पिता खलकथा तामाप्यजातश्रमाः
पाकायातिभयङ्कराय विरसाकाराय लब्धाश्रमाः ।
नाकाधीशपतेरपारपरमानन्दाप्तिमन्दाकिनीं
शाकास्वादपराः सुधामिव सुधा नेच्छन्ति भक्तिं बुधाः ॥ १२ ॥

कं कः सेवत इत्युदीरयति योऽभेदे स कङ्कः स्वयं
का का भक्तिरितीरयन्ति बहु ये काका वराका हि ते ।
ब्रह्माहं विषमेऽत्र मे कृतशमे किं मे भवेदीश्वरः
सेव्योऽसाविति संलपन्नुरुगलः सोऽयं खलश्छागलः ॥ १३ ॥

स्वाध्यायाध्ययने तथोपनिषदां जातेऽक्षराणां ग्रहे
विज्ञाते श्रवणे च जीवपरयोरैक्ये विमुक्तेक्षणः ।
श्रीकृष्णं भजमान एव बहुधा सङ्कीर्तनाद्यैः सदा
सत्यं ज्ञानमनन्तमेकमखिलं तद्ब्रह्म सम्पद्यते ॥ १४ ॥

एतैः षोडशभिः पदार्थनिचयैर्ज्ञातैर्विमुक्तिः कथं
जल्पंस्तत्र फलं परस्य विजयः स्यात्तेन किं वा ततः ।
ज्ञानं चेत् परमेश्वरस्य तदिदं भक्त्यर्थमेवोचितं
सिद्धान्तेष्विदमूचिरे स्फुटतरं प्रामाणिकास्तार्किकाः ॥ १५ ॥

द्रव्यादौ विदिते पदार्थनिवहे कैवल्यसिद्धिः कथं
पाणिन्यादिविवेचनादिव सुखं ज्ञाता भवेत् प्रक्रिया ।
शब्दस्याप्यनुमानभावभजनं बौद्धस्य पन्था न किं
तस्मादीशमुपासितुं श्रुतमिदं द्रव्यादिचिन्ताफलम् ॥ १६ ॥

ब्रूते षोडशषट्पदार्थकलनात् का वा विमुक्तिं श्रुतिः
किं वा संस्मरणं पुराणवचनं न्यायोऽपि कस्तादृशः ।
तर्को वेदविचारणाय घटितेऽनुग्राहकः केवलं
तस्यै तत्प्रतिपक्षता यदि तदा सिद्धा न किं बौद्धता ॥ १७ ॥

भेदोऽयं घटकुम्भयोः समुचितं प्रत्यक्षतो गृह्यते
श्रुत्या केवलमेव जीवपरयोः कैवल्यमुद्भाव्यते ।
भेदाभेदविवेचने प्रभवति प्रत्यक्षमेवास्पदे
तस्यागोचरके कथं प्रसरतु भ्रान्तेऽपि तुल्योदयम् ॥ १८ ॥

भेदं लोकमितं वदिष्यति कथं पश्चादभेदश्रुतिः
भीता लोकमितेर्भविष्यति पुनः स्वार्थोपचारे कथम् ।
बाधं लौकिकमानतः कथमियं गच्छेदथापौरुषी
यद्येषा पुरुषोदिता स पुरुषः किं त्वादृशोऽन्यादृशः ॥ १९ ॥

यस्मिन् सर्वमिदं विभाति निहितं यस्मात् पुनर्जायते
यस्मिन्नेव लयं प्रयाति सकलं कर्मापि यत्प्रीतये ।
सर्वं कर्मफलं विमुक्तिपदवी यस्य प्रसादाद्भवेत्
यच्छ्वासप्रतिमा श्रुतिः स भगवान् कैश्चित् कथं नेष्यते ॥ २० ॥

द्रोहं श्रीपरमेश्वरे विदधते ये लौकिकैः कल्पनैः
वेदान्तैरुपगीयमानचरिते न्यायैश्च संसेविते ।
ते व्यर्थं पशुमारणैकरसिकाः सन्मार्गसन्दूषकाः
कन्थां कर्ममयीं निधाय निभृता मीमांसका राक्षसाः ॥ २१ ॥

कर्मैव प्रतिपाद्यतां स्वसमयैर्न्यायैः सहस्रैः स्फुटं
तस्यानुष्ठितिसिद्धये क्रमवती व्याख्यायतां पद्धतिः ।
जाने यूयमिहात्मनाशरसिका मीमांसका हिंसकाः
यद्द्रोहात् परमेश्वरस्य भवतां स्वर्गोऽपवर्गो हतः ॥ २२ ॥

मोहोऽयं कपिलस्य जैमिनिमुनेर्द्रोहोऽयमीशे परे
तद्भुक्तिं कणभुक् तथाक्षचरणस्तर्केण चक्रे पराम् ।
व्यासः कृष्णमतानुसारि कृतवान् सूत्रं निरस्तभ्रमः
कृष्णोपासनया समाधिविभवः पातञ्जलेः प्रक्रमः ॥ २३ ॥

स्वर्गो दुर्गतिमागतोऽक्षयमुखो मोक्षोऽपि विक्षोभितः
स्वेच्छाकल्पनयानया रचनया वेदोऽपि विप्लावितः ।
मोक्षार्थं मिलतां सुमुधामतिमतां साङ्ख्येन सङ्ख्यावतां
द्वेषार्थः परमेश्वरस्य नितरां लाभो महागौरवः ॥ २४ ॥

वेदानीश्वरसेवनव्यसनिनो मुक्त्वा तदेकव्रतान्
विद्याभावनयाल्पया प्रकटयं तां पल्लवग्राहिणीम् ।
नास्त्येवेश्वर इत्युदीरयति यः सूत्रेण बद्धो गले
नाशायैव कृतोद्यमः स हि पशुः कालस्य नूनं बलिः ॥ २५ ॥

ईशद्रोहपरायणं मतमिदं नैवोज्ज्वलं कापिलं
ग्राह्यं जैमिनिकल्पितं भगवतो द्रोहादृते कर्मताम् ।
नास्त्येवेश्वर इत्युदीरणपरो द्रोहं विषं दोग्धि गां
तत् पीत्वा निपतत्यपारनिरये भूयो विनष्टस्मृतिः ॥ २६ ॥

न्याया यान्तु विदूरमेव भवतां भक्तौ कृतज्ञो यदा
मीमांसे बहिरास्व भक्तिवचने यद्यर्थवादाध्वनी ।
वेदान्ताः सुतरां न दान्तहृदया भक्तेर्न शेषा यदा
भक्त्यर्था यदि वो नमः समुचिते मार्गे सुखं स्थीयताम् ॥ २७ ॥

भेदाक्रन्दनवावदूकरसनस्तर्केण तर्केण किं
तत्तद्भेदकथाविमर्दकुहनासाङ्ख्येन साङ्ख्येन किम् ।
स्वान्ताश्रान्तनिरोधयोधकलनोद्योगेन योगेन किं
भक्तिं भागवतीं श्रयन्तु सुधियः स्वर्गापवर्गप्रदाम् ॥ २८ ॥

यद्वेदाः समुदीरयन्ति बहुधा स्वेषां च तज्जन्यतां
स्वेनैव प्रतिपादयन्ति नियतां तच्छेषतां कर्मणाम् ।
एषामर्पणमेव यत्र नियतं मोक्षाय सञ्जायते
तस्याभावमुदीरयन् विजयते स स्यात् कथं वैदिकः ॥ २९ ॥

लब्ध्वा मानुषजन्म पूर्वसुकृतैः पुण्यां च मेधावितां
तत्तज्जातिनिजाश्रमस्थितिमिमां श्रीवैष्णवैः सङ्कथाम् ।
शोच्या यूयममी भविष्यथ तदा ज्ञानं श्रिता दुर्लभं
मुक्तम्मन्यतया यदा भगवतो भक्तिः परित्यज्यते ॥ ३० ॥

यूयं तत्त्वविदः श्रुतिस्मृतिगिरां ज्ञानेन धौताशयाः
मुक्त्यै भागवती परं भगवती भक्तिः समाश्रीयताम् ।
संसाराम्बुधिपारमाप्तुमनसो धृत्वैव वो मज्जयन्
धीराः कोऽपि दुराग्रहो हि भवतां ग्राहो भविष्यत्ययम् ॥ ३१ ॥

ज्ञानं स्त्यानमिदं कुरुध्वममलैः श्रीविष्णुभक्ते रसैः
कर्माणि प्रतिकर्मनर्मसुभगं भक्त्या तनुध्वं हरेः ।
योगं भोगसमाश्रितं भगवतो रूपैः श्रयध्वं सदा
भक्तेः शेषतया विधाय सकलं धीराः समाध्वं सुखम् ॥ ३२ ॥

योगो रोग इवेह दुर्लभतरः खेदाय सञ्जायते
ज्ञानं ग्लानिमिदं प्रयाति नितरां यत्नेन सम्पादितम् ।
मर्मच्छेदनमेव कर्म कलितं क्लेशाय सञ्जायते
विष्णोर्भक्तिरियं यदा न भवतां मुक्तिः प्रियंभावुकी ॥ ३३ ॥

बेदान्ताध्ययनादतः प्रकृतता तस्योचिता वृत्तता
तस्यानन्तरताथ शब्दघटिता तत्राधिकारीदृशः ।
तेन ब्रह्मणि वेदमातृविदिते ज्ञातुं विशेषेण तत्
कार्येच्छेत्यनुवक्ति वेदवचनं सूत्रं च वैयासिकम् ॥ ३४ ॥

जन्माद्यस्य यतो भवेत् स भगवान् ब्रह्मेति वेदोदितं
सूत्रेणानुकृतं ततोऽस्य जगतां निर्मातृता लक्षणम् ।
तत्सामान्यविशेषतः श्रवणतो ज्ञात्वा विशुद्धाशयः
तस्योपासनमाचरेदविरतं मुक्त्यै निरस्तेषणः ॥ ३५ ॥

विश्वं विश्वकृता कृतं पुनरिदं तस्यैव माया स्फुटं
सा तद्भक्तिविशेषतो यदि निवर्तेतेति वेदोदितम् ।
उत्सूत्रः श्रुतिलक्षणेन रहितस्तत्कल्पनानिष्फलः
शास्त्रारम्भसमर्थनाय विकलोऽध्यासः कथं वर्तते ॥ ३६ ॥

ईशाद्विश्वमितीरणं श्रुतिगिरां तेन प्रकारेण तत्
ज्ञात्वोपासनमामनन्ति विदुषः कैवल्यसंसिद्धये ।
अध्यस्तं परमेश्वरे जगदिदं नैतादृशो दृश्यते
वेदः कोऽपि वृथैव जल्पनमिदं कैश्चिद्बलात् कल्पितम् ॥ ३७ ॥

भ्रान्तिश्चेत् परमेश्वरस्य विहता सर्वज्ञता तद्गता
जीवस्येति यदा स एव कथमन्योऽन्याश्रयाज्जीयताम् ।
तत्रानादितया यदा परिहृतिर्जन्मान्तरीयं स्मरन्
किं सर्वं कथमुल्लसेदनुभवो नैतादृशो विभ्रमः ॥ ३८ ॥

अज्ञाते यदि रङ्गसीसशकले जायेत रूप्यभ्रमः
तस्याभावविनिश्चितेः स न भवेत् क्वाधिष्ठितेर्ज्ञातृता ।
तज्ज्ञानं यदि पूर्वमिष्टममलब्रह्मात्मनाधिष्ठितेः
संसारभ्रम ईदृशः किमुदये कस्मात् पुनर्लीयताम् ॥ ३९ ॥

यत्रेदं रजतं विभाति निहितं ज्ञातं पुरा किं ततो
बाधे तव्द्यतिरेक एव रजतं नेदं भवेदित्यतः ।
तत्तत्वप्रथनं निवर्तयति न भ्रान्तिं ततस्तेन किं
न ज्ञानेन निवर्तयेत् क्षतरुजः शङ्खस्मृतेः पीतिमा ॥ ४० ॥

अज्ञानाद्यदि जीवता कथमिदं सर्वेश्वरो जायतां
जीवे चेन्नितरां परस्परहतं माया ततः श्रीहरेः ।
ज्ञानाभावनिवर्तकं तत इदं ज्ञानं मतं ज्ञानिनां
मायासन्तरणे परं भगवतो भक्तेः श्रुतौ श्रूयते ॥ ४१ ॥

येयं नाश्रयमोहिनी परवशा कर्तुश्च माया हि सा
यासावाश्रयमोहिनी निगदिता विद्या न कर्तुर्वशा ।
सा ज्ञानेन निवर्तते भगवती माया पुनर्वैष्णवी
भक्त्यैवेह विलीयते भगवतो लीलाकृतेः श्रीपतेः ॥ ४२ ॥

स्वेनाध्यस्तमिदं जगद्भगवता स्वस्मिन् यदेतीर्यते
का युक्तिः श्रुतिरेव का न सकलज्ञानस्य युक्तो भ्रमः ।
ईशाज्जातमिदं समस्तमिति चेत् सूत्रं श्रुतिः श्रूयते
बुद्धेर्बन्धनमेव कैश्चिदुदिताध्यासे वृथा फक्किका ॥ ४३ ॥

सर्वज्ञस्य कुतो भ्रमः कथमसौ जीवो नु भूयः स्मरेत्
अध्यस्येदिह यद्भवेन विदितेऽध्यासः कथं जायताम् ।
नैवाधिष्ठितिनिश्चयाद्विघटतेऽध्यासो यथा पीतिमा
शङ्खे रोगशमात् परं न खलु तज्ज्ञानं भवेन्निश्चितम् ॥ ४४ ॥

अज्ञातेऽपि पुरेह शुक्तिशकले रूप्यानुभूतिस्मृतेः
तत्ख्यातिभ्रमबाधनं च रजताभावप्रकाराद्भवेत् ।
आरोप्यानुभवो यथा यदि तथाधिष्ठानसंवेदनं
पूर्वं ब्रह्म यदा मतं कथमसौ संसाररूपो भ्रमः ॥ ४५ ॥

तज्ज्ञानेन विना यदा कथमधिष्ठानं भ्रमो बोधयेत्
बाधस्तत्र न हि प्रभुः स हि समारोप्यस्य विध्वंसकः ।
नात्मा चेद्विदितः षडूर्मिरहितो देहाद्विभिन्नो विभुः
नित्यं कः कुरुतां धनक्षयकरं दुःखाकरं कर्म तत् ॥ ४६ ॥

अज्ञात्वाक्षरमत्र यो हि यजते तस्याखिलं क्षीयते
श्रुत्यैवं प्रतिपादितं भगवता गीतासु तद्व्याकृतम् ।
ज्ञानं मोचकमत्र बन्धकमिदं कर्मेति कैश्चिन्मतं
तज्ज्ञाने भगवन्मते न घटते वेदैः सदा सम्मते ॥ ४७ ॥

बन्धार्थं फलमेव तत्परिहृतं कर्मैव भक्त्यात्मना
श्रीकृष्णर्पितमेककं विजयते संसारतो मुक्तये ।
ज्ञानानन्तरमीरितं भगवतः संसेवनं भूरिभिः
वाक्यैर्मुक्तिफलान्वितैः श्रुतफलं नैवार्थवादायते ॥ ४८ ॥

ज्ञानं पापविनाशनं यदि भवेत्तत्रापि मोक्षश्रुतिः
सैषाङ्गेषु फलश्रुतिर्नियवशादत्रार्थवादायते ।
ज्ञानञ्चेन्न विधीयते तव जना नैतत्प्रधानं भवेत्
तस्याङ्गं किमिहास्तु यस्य भविता भाव्यश्रुतेर्वादता (?) ॥ ४९ ॥

भक्तिर्ज्ञानमपेक्ष्य साधयति ते द्वारं विमुक्तिं[क्तेः]तदा
तस्याः कारणता मतं श्रवणतस्तत्स्यादिति व्याहतम् । (?)
ब्रह्माहं न हि मे भिदा भगवता काचिद्यथार्था श्रुतिः
कैवल्यप्रतिपादिका भगवती किं त्वेकमभ्यर्थये ॥ ५० ॥

यावत्कालमुपाधिरेष कलितो देहात्मना दृश्यते
तावत्कालमहं भजामि सततं भक्तप्रियं श्रीप्रियम् ।
पीतं पङ्कजलोचनाक्षिपुटकैः पीतं विलासाम्बरे
रक्तं गोपनितम्बिनीकुचतटे रक्तं वरोल्लासने ॥ ५१ ॥

शुक्लं कोमलमन्दहासकुसुमे शुक्लं युगोपक्रमे
कृष्णं चारुकलेबरे गुणवरे कृष्णं श्रिये संश्रये ।
जातिः काचिदिहास्तु कश्चन विधिः प्राप्तस्तथैवाश्रमः
तद्धर्मस्थितिपालनं फलपरित्यागेन कृष्णार्पणम् ॥ ५२ ॥

ज्ञानं तस्य निजाधिकारनियमैः सम्पाद्य लक्ष्मीपतेः
पादाम्भोरुहसेवनं हि तनुते लोकस्य निःश्रेयसम् ।
सञ्जाते श्रवणे ततः समुदिते ज्ञाने परात्माश्रये
शुद्धेऽन्तःकरणे नरस्य सुकृते जात्याश्रमस्थे कृते ॥ ५३ ॥

कामे निर्गलिते मुकुन्दपदयोराविष्कृतायां रतौ
साकारस्य हरेरुपासनमिदं सिद्धं श्रुतौ मुक्तये ।
सत्यं ज्ञानमनन्तमेकमखिलं ब्रह्मामृतं निश्चितं
सर्वात्मा परमेश्वरः स सकलं सन्निर्ममे मायया ॥ ५४ ॥

निर्माय स्वयमेव तत्र कृतवान् स्वस्य प्रवेशं प्रभुः
तत्रोपाधिसमावृतस्य नियता भक्तिर्भवेदात्मनः ।
ज्ञा[ना]नासूत्रकृतस्तथोपनिषदां व्याख्याकृतः पण्डिताः
तत्राप्युत्तमबुद्धयो मतकृतः केचिद्विवादप्रियाः ॥ ५५ ॥

श्रीकृष्णस्य कला भवन्तु न समास्तेनेति निर्धारितं
तस्मात्तन्मतबाधनं कथमिदं तेषां मतेर्जायते ।
अव्यक्तं समुपास्यमित्युपहतव्यक्तस्य सेवा श्रुता
सर्वासूपनिषत्सु निश्चितमिदं कृष्णेन गीतामृतैः ॥ ५६ ॥

भक्तेर्मुक्तिरितीरितं भगवता सारूप्यचिन्तात्मिका
स्पष्टे राजपथे सुखामृतरसे धीरा रमध्वं सुखम् ।
हे धीराः किमिहोदितैर्बहुतरैश्चित्तस्य चिन्ताकरैः
युष्माभिः सकलं श्रुतिस्मृतिगतं व्याख्याशतं ज्ञायते ॥ ५७ ॥

ज्ञाने शास्त्रकृते कृतं मतिमतामर्थार्थमत्यादरैः
सर्वं तत्परिमुच्यतां निजकृते कृष्णः परं सेव्यताम् ।
वादैर्भक्तिरियं गतेति हृदयं भूयस्तरां वेपते
विद्वांसो विमलाशयाः प्रतिभयात् सर्वं स्वयं जानते ॥ ५८ ॥

निर्णीतं परमेश्वरेण बहुधा गीतासु सर्वं मतं
स्पष्टं भागवतं[भागवते तथा]निगदितं स्वर्गापवर्गप्रदम् ।
एकं ब्रह्म यथार्थमेतदखिलं तद्व्याकृतं जृम्भते
सर्वे निर्जरनायकाश्च तदिमे सर्वं जगत्तन्मयम् ॥ ५९ ॥

सर्वा मूर्तिरियं स्फुटा भगवतो नारायणस्य प्रभोः
चेतः केवलमीहते कलयितुं गोपाललीलं महः ।
. . . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . । ॥ ६० ॥

मायासैर्बहुभिर्विवादविहितैः सिद्धान्तचिन्ताभवैः
मायामभ्यसनैरलं श्रुतिशिरस्तत्त्वं परं चिन्त्यताम् ।
मायाविभ्रमदायिनी मरकतश्यामा मनोमोहिनी
माया काचन मानसे मिलतु मे मायूरपिञ्छप्रिया ॥ ६१ ॥

सेवा भक्तिरपि प्रपत्तिरपरा तत्संश्रितिः प्रह्वता
तद्भक्तपरता तदीयपरतोऽपास्ता शरण्या गतिः ।
इत्येकार्थपदैः श्रुतिस्मृतिपुराणाद्यैः समुल्लासिता
भूयाद्वो भवबन्धभेदनकरी भक्तिर्विभोर्भासुरा ॥ ६२ ॥

यो ध्यातो विमलेन्द्रनीलरुचिरः कृष्णेति सङ्कीर्तितः
सद्यः क्लेशचयं निहत्य वितरत्यानन्दबोधोदयम् ।
हे धीरा बहुशास्त्रतत्त्वकलनासंशुद्धबुद्धाशयाः
श्रीकृष्णे विलसत्युदारमहिमाम्भोधौ कथं खिद्यते ॥ ६३ ॥

तल्लीलाश्रवणं शुभेन मनसा तन्नामसङ्कीर्तनं
तन्मूर्तिस्मरणं च तत्प्रतिकृतेः पादाम्बुजोपासनम् ।
तत्पूजा विविधा नमस्कृतिनुतिस्तस्मिंश्च तद्दासता
तत्सख्यात्मनिवेदनेन विविधा भक्तिः श्रुता वैष्णवी ॥ ६४ ॥

एषा षोडशधेति केऽपि नवधा केचित्तथैवाष्टधा
प्राहुः केऽपि तथैकधेति मुनयो यस्मिन्न कश्चिद्ग्रहः ।
एकाग्रेण तदाश्रितेन मनसा तिष्ठन् मुहुर्वैष्णवः
सर्वं युक्तमिदं करोति पिबतस्तृप्तिः सुधायां कथम् ॥ ६५ ॥

पीतं कर्णपुटेन यादवपतेश्चित्रं चरित्रामृतं
गीतं वैणिकशेखरेण मुनिना मत्या[भक्त्या]महत्या मुहुः ।
नीतं भावनयानुरागघनया स्वस्यान्तरं सान्तरं
पीतं दुर्लभसौरभोज्ज्वलरसं तापत्रयोन्मूलनम् ॥ ६६ ॥

स्वादु स्वादुरसायनं श्रवणयोः सन्तर्पणं चेतसः
कामायासपिपासुतोपशमनं निर्वाणमाशाक्षुधाम् ।
आलानं भ्रमतो मदेन बहुशः सङ्कल्पदुर्दन्तिनः
संसारज्वरनाशनं भगवतो वार्तामृतं पीयाताम् ॥ ६७ ॥

केशिक्लेशन कंससूदन कृपाम्भोधे कलानां निधे
क्रीडाकोल कलापचूड कमलाकान्त क्रमकीडन ।
कल्किन् केशव केशय क्रतुपते कञ्जाक्ष कम्बुप्रिय
क्रोधाधीश्वर कालकाल कलये कल्याणदां ते कथाम् ॥ ६८ ॥

विस्फोटप्रतिमे दृशौ भगवतो रूपावलोकं विना
हस्तौ तत्परिचर्यया विरहितौ दुर्दग्धदर्वीसमौ ।
तन्नामामृतपानरङ्गरहिता जिह्वा जलव्यालिका
पुच्छं वृश्चिकजं मनो हरिकथाहीनं नृणामान्तरम् ॥ ६९ ॥

नेत्रे प्रेरय मे तवाकृतिकृते कर्णौ कथाकर्णने
घ्राणं पूजितमाल्यगन्धकलने पादाम्बुशैत्ये त्वचम् ।
नैवेद्यान्नरसायनं रसयितुं जिह्वां मनः सन्ततं
लीलाकल्पितरूपचिन्तनविधौ भक्तप्रिय श्रीपते ॥ ७० ॥

सख्यं श्रीपुरुषोत्तमेन कलयेत् को वा जनः प्राकृतः
तस्याभिन्नतया परप्रियतया किञ्चैतदुज्जृम्भते ।
प्रेमानन्दविशृङ्खलस्य मनसः किं किं न सम्भाव्यते
सत्यं तस्य परेशितुर्निरवधि प्रेमास्पदं तत्पदम् ॥ ७१ ॥

इष्टं दत्तमिदं हुतं निशमितं दत्तं च तप्तं च यत्
क्षेत्रापत्यकलत्रमित्रभवनोद्यानानि यद्यत् प्रियम् ।
तत्सर्वं विनिवेदये भगवते कृष्णाय हृष्टात्मना
प्रारब्धोपहृतं वपुः परमुपासार्थं परस्याश्रयन् ॥ ७२ ॥

श्रीकृष्णाच्युत देव राम नृहरे जिष्णो हरे श्रीपते
विष्णो माधव केशवेश्वर विभो विश्वेश वाणीपते ।
गोपालाव्यय गोप यादवपते गोविन्द गोपीपते
नामैकावलिका गले मिलतु मे मोक्षाय लक्ष्मीपतेः ॥ ७३ ॥

मल्लीकोरकमुग्धमाल्यमहिता मन्दारमूलाश्रिताः
माकन्दाञ्चितमाधवीमधुझरीमेदस्विमन्दस्मिताः ।
मन्दान्दोलनमोदमानमुरलीमाधुर्यमाद्यज्जनाः
मोदन्तां मम मानसे मधुपतेर्मुक्तिप्रदा मूर्तयः ॥ ७४ ॥

मन्दोदञ्चितहासमुन्नतमुखं माकन्दमूलस्थितं
मारोन्मादकरं मनोरमगुणं मायूरबर्हाञ्चितम् ।
मन्द्रापूरितवंशिकामुखरितं मालासमालालितं
मायामानवविग्रहं मुररिपुं मोक्षाय मन्यामहे ॥ ७५ ॥

केकारावकरम्बिते कुतुकितां कुञ्जे कनत्केतके
क्रीडाक्लृप्तकदम्बकोरककुलालङ्कारकल्लोलिनीम् ।
काशत्कल्पितकाञ्चनारकुसुमां कार्तस्वराभास्वरां
कैवल्याक्रमकौतुकाय करुणाकादम्बिनीं कामये ॥ ७६ ॥

माकन्दस्य मनोरमस्य महिते मूले मिलन्तं मुदा
मारोदञ्चितमन्दहासमुखरं मल्लीस्रजा मण्डितम् ।
मुग्धं मौरलिकं मरालगमनामुक्तावलीमध्यगं
मायामाणवकं महोदयमहो मान्यं महो मन्महे ॥ ७७ ॥

वेदान्तैर्बहुधोदितं बुधगणैर्बृन्दारकैर्वन्दितं
बृन्देन स्फुरितं गवां विदधतं बाल्योचितां विक्रियाम् ।
विश्वस्तं व्रजयौवतस्य विलसद्वक्रालकं बालकं
विद्मो वैणविकं विलासविवशं बृन्दावने वञ्चकम् ॥ ७८ ॥

चातुर्यागमदेवता परिचिता चर्यावती चामरैः
चाम्पेयस्तबकावतंससुभगा चर्चावती चम्पकैः ।
चन्द्राकारविशोभमानवदना चूडावती चन्द्रकैः
चर्चा काचन चेतसि स्फुरतु मे चर्चावती चन्दनैः ॥ ७९ ॥

चूडाचुम्बितचारुचन्द्रकचयं चामीकराभास्वरं
चञ्चच्चन्दनसौरभं चटुतरं चातुर्यचर्चाचणम् ।
चारीरञ्जितचाल्यमानचरणं चाम्पेयमालाधरं
चेतश्चिन्तय चञ्चलापरिवृतं चर्चासु चन्द्राननम् ॥ ८० ॥

नित्योत्सारितभेदवेदशिरसां नीलोत्पल[1]स्थासकं
गोपीनां मृगनाभिलेपरचनावक्षोजकुम्भान्तरे ।

---

1. स्थासकं=पटवासः ।

भक्तानां परितापशान्तिविधये कल्याणकादम्बिनी
जन्मारम्भफलं दृशां च जयतात् काचित् कला कैशवी ॥ ८१ ॥

नानारङ्गवशो निरञ्जनरसो निःश्रेयसोद्भावनो
नेत्रानन्दकरो नवोदयवरो नीलोत्पलश्रीधरः ।
नादास्वादपरो नवीनमदनो नन्दात्मजो नायको
नित्यं नोऽस्तु निरन्तरं नयनयोर्नित्यप्रियो नीलिमा ॥ ८२ ॥

कालिन्दीकमनीयकूलमिलितं कस्तूरिकाकन्दलं
कन्दर्पोदयकार्मणैकवदनं कर्पूरकुन्दस्मितम् ।
कृष्णा[चु]म्बिकदम्बकुञ्ज[ञ्ज]कुहरे केलिक्रियाकोमलं
कृष्णाख्यं कलये कदा नु कलये कौतूहलं केवलम् ॥ ८३ ॥

रासोल्लासरसायने च रसिकं रामाभिराराधितं
राकाचन्द्रसमाननं रतिकरं राजीवराजेक्षणम् ।
रक्तिप्रस्तुतरङ्गरागरचनं रक्तोल्लसत्कुण्डलं
रक्ताशोकतरोरधो रसमयं राधासखं राधये ॥ ८४ ॥

गत्वा श्रीहरिमन्दिरं भगवतो रूपं विलोक्याद्भुतं
प्रक्षाल्यास्य भवादिवन्द्यचरणं गङ्गादितीर्थाम्बुभिः ।
मालाभूषणगन्धपीतवसनैर्नानोपहारक्रमैः
धन्या एव दिवानिशं भगवतः सेवासुखं तन्वते ॥ ८५ ॥

सर्वव्यापिकदम्बमूलमिलितं लोकत्रयीपालकं
गोपालं परिपूर्णसंविदमहो गोपीजनैर्वञ्चितम् ।
इन्द्रादीप्सितदायकं व्रजवधूसन्तोषयाच्ञापरं
कौमारोपचितं पुराणपुरुषं ब्रह्म प्रपद्ये परम् ॥ ८६ ॥

राधाकिङ्करमीश्वरं त्रिजगतां सर्वज्ञमज्ञं व्रजे
चिन्तारत्नविराजमानचरणं मुक्ताविभूषाञ्चितम् ।
पीयूषास्पदलालसं विरचितस्तेयं पुनर्गोरसे
संसेवे महिमानमद्भुतगुणं नानागुणं निर्गुणम् ॥ ८७ ॥

कर्पूरैः कुसुमैर्मनोज्ञसुषमैर्धूपैः प्रदीपोत्तमैः
सूपैः स्वादुरसैर्नवोदितघृतानूपैरपूपैः सदा ।
पूजा श्रीपुरुषो[त्तमस्य विभवो]यद्यस्ति विस्तार्यतां
नो चेदस्ति जलं फलं वनभवं देव्यास्तुलस्या दलम् ॥ ८८ ॥

चञ्चच्चम्पकसारसारसदलं नीलोत्पलप्रोल्लस-
न्मल्लीकेसरनागकेसरलसत्पुन्नागभाजा स्रजा ।

मूर्तिः श्रीमधुसूदनस्य महिता सुस्थैर्गृहस्थैर्यथा
वन्यैः काशकुशै रसादपचितैर्दुःस्थैर्वनस्थैस्तथा ॥ ८९ ॥

उत्तालैः कलकाहलीकलकलैर्मूर्च्छन्मृदङ्गारवैः
घण्टाघोंकृति[घण्टौघैः कृत]घोषणैर्बहुतरैर्भेरीरवाडम्बरैः ।
गानैरुत्तमधातुमातुरचनैः संशुद्धगानैर्घनैः
साटोपैर्नटनैर्मनोज्ञघटनैः पद्मापतिं प्रीणये ॥ ९० ॥

गानैर्वैणिकमाधुरीसममिलत्तानैः समानैः शुभैः
वाद्यैः श्रोत्ररसायनीयमहसामाद्यैः सतोद्यैस्ततैः [ततातोद्यकैः] ।
नृत्यै रम्यरसानुरूपघटनाकृत्यैः स्वभृत्यैः कृतैः
नव्यैः स्तोत्रपदैर्वचोमय[1]गवीगव्यैः सुभव्यैर्यजेत् ॥ ९१ ॥

कस्तूरीसुरभीकृतैर्जलकणासिक्तैस्तुलस्या दलैः
पन्नीरागुरुसारचन्द्रकणिकासम्मेलितैश्चन्दनैः ।
क्लृप्तोपाहृति पूजयन् यदुपतिं देवासुरैः पूजितं
तस्मिन्नेव महोदये स्वसमये तेजोमये युज्यते ॥ ९२ ॥

उत्फुल्लैः कुसुमैर्मनोज्ञसुषमै रत्नोपमैः सद्रुमैः
कर्पूरारचनैरशेषमनसामानन्दनैश्चन्दनैः ।
नानाकारनिवेदनै रसघनैः [पीयूषकल्पैर्नवैः]
येऽत्रार्चन्ति रमापतिं सविभवास्तेषां भवोऽसम्भवः ॥ ९३ ॥

एषा षोडशिभिस्तथैव दशभिस्तद्वत् पुनः पञ्चभिः
पूजा श्रीपुरुषोत्तमस्य रचिता येनोपचारैः क्रमात् ।
तस्मिन्नेव तनोति मुक्ति[2]महिला कामेन रागोदयं
तस्यायुः कृतकृत्यभावमयते तस्यैव जन्मोज्ज्वलम् ॥ ९४ ॥

पारावारशयं परावरमयं पारायणं पापिनां
पुण्यप्रच्युतिपूरकं प्रभुवरं पार्थप्रियं पूर्वजम् ।
पुष्पामोदपरिष्कृतं पुलकितं पारिप्लवं पावनं
प्रत्युप्तं प्रमदाशतैः प्रमुदितं प्राणाधिकं पूजये ॥ ९५ ॥

रोमाञ्चैः समुदञ्चितैश्चुलुकितं बिभ्रद्वपुः सुन्दरं
नेत्रे हर्षजलोज्ज्वले विकसितस्मेरारविन्दश्रिणी ।
चेतः प्रेमपरिप्लुतं भगवतो लीलाप्रवीणैर्गुणैः
यः स्तौति प्रतिवासरं मुरहरं मुक्त्यै स शक्तः परम् ॥ ९६ ॥

---

1. गवीगव्यं=गोक्षीरम् ।     2. महिला=स्त्री

संसारज्वरचन्दनैः सुमनसामानन्दनैर्वन्दनैः
आनन्दादति नन्दनन्दनममुं वन्देतयस्सुन्दरैः।
तद्बृन्दारकवन्दितं पदमिदं धिक्कृत्य पौरन्दरं
विन्दत्यव्ययसंविदं स परमानन्दाद्वितीयं महः॥ ९७॥

योगी तं तनुते पुरो मुररिपोर्नामामृतैरायतैः
योगीन्द्रः श्रुतिशासने सुषमतो मोहोल्लसन्मानसः।
भोगीशस्फुटतल्पकल्पनममुं सेवेत यः केशवं
भोगीशः स पुमान् स एव चतुरो भुक्तेश्च मुक्तेः क्षमः॥ ९८॥

कालोल्लासिकदम्बकोरककुले कार्पूरिते केतकैः
केलीकुञ्जकुटीरके कलकलैः कल्लोलिते केकिनाम्।
क्लिष्टानां कमनीयकान्तिसुषमः कस्तूरिकाकोमलः
कल्याणानि करोतु कौतुकमयः क्लप्तोदयः कालिमा॥ ९९॥

मौलौ नीलमणिच्छटा मृगदृशां नीलोत्पलं कर्णयोः
चक्षुष्यञ्जनरञ्जनं कुचयुगे कस्तूरिकालेपनम्।
नीलं [1]नेत्रदलं नितम्बफलके पादाम्बुजे षट्पदं
सर्वस्वं श्रुतिशेखरस्य कलये बृन्दावने व्याकृतम्॥ १००॥

मुग्धेन्दीवरमालिकाविरचनं वृन्दावनक्ष्मारुहा-
मामोदाय गवां नवाम्बुदसमं सारं तमालाङ्कुरम्।
माद्यन्मन्मथमानयौवनमदाघूर्णभ्रुवां सुभ्रुवा-
मास्वाद्यं महये महो महदहो माधुर्यमूलायनम्॥ १०१॥

दिक्पालावलिमौलिरञ्जितपदाम्भोजं त्रिलोकेश्वरं
गोपस्त्रीजनवस्त्रमोषणकलापरीणपाटच्चरम्।
लक्ष्मीकल्पितदिव्यतल्पविलसत्पर्यङ्कपर्याकुलं
कालिन्दीतटसैकतीयशयने स्वेच्छासुषुप्तं श्रये॥ १०२॥

यद्दण्डग्रहणं कषायवसनादानं शिरोमुण्डनं
भक्तिं भागवतीं विना हतमतेः तत्केवलं दण्डनम्।
कृष्णाग्रे यदि दण्डवन्निपतनं तद्यातनां दण्डयेत्
यातायातकृतां भवेत् [वे] परिभवे तत्सम्भवेन्मण्डनम्॥ १०३॥

दण्डेनैकतरेण किं गुरुतरैर्दण्डैस्त्रिभिः किं कृतं
दीर्घश्मश्रुभवैर्जटायतजटाभारैरपारैरलम्।

1. नेत्रम्=जटा वस्त्रांचलं च।

केशक्लेशनवेष एष भगवद्भक्तिं विना सज्जनाः
श्रीनारायणमाश्रयध्वमिह वो मुक्तौ यदा कामना ॥ १०४ ॥

नैवेद्यौदनभोजनं भगवतो निर्माल्यमाल्योत्तमैः
भूषा तच्चरणाब्जकुङ्कुमकणैर्फालस्थलोद्धूलनम् ।
तन्मुक्ताम्बरडम्बरैरनुपमैरुष्णीषसंवेष्टनं
भूयासुर्मम मुक्तये मुनिमताः सेवाभिषेकोत्सवाः ॥ १०५ ॥

नैवेद्यं पुरुषोत्तमस्य सुरसं पीयूषसारोपमं
सामोदैस्तुलसीदलैः परिचितं सर्वाघगर्वापहम् ।
कर्पूरोत्करसौरभं शुभतरं चक्षुर्मनोरञ्जनं
भुञ्जानो भवरञ्जनं कलयते विष्णोः पदं केवलम् ॥ १०६ ॥

दास्याय क्षणिकायुषां प्रभवते देवावलीसम्पदां
नैराश्याय फलेषु दर्शितमहालोभेषु भोगेच्छया ।
लास्याय प्रियसम्पदां विदधते विख्यातमाचार्यकं
दास्याय स्पृहयामहे भगवतो मोक्षैकदीक्षागुरोः ॥ १०७ ॥

नित्यं कर्मकरौ करौ शुचितरौ सेवाकथातत्परौ
पादौ सुन्दरमन्दिरागमसुसंवादौ सदार्द्रौ कृतौ ।
घ्राणं मौलिविमुक्तमुग्धतुलसीघ्राणे कृतप्रीणने
विद्वत्ता कविता विचित्रचरिते कृष्णस्य मे नन्दताम् ॥ १०८ ॥

जारत्वं गुरुतल्पदोषशमनं गोपीषु यस्य प्रभोः
सद्यो ब्रह्मवधं धुनोति बहुधा यद्ब्रह्मरक्षोवधः ।
स्त्रीभिः शीधुनिषेवणं गुरुसु[रा]धापानं क्षिणोति क्षणात्
स्तेयं गोरसमोषणं शतमहो तत्सङ्गमः सङ्गमः ॥ १०९ ॥

वेदान्तैर्बहुधावृतं श्रुतिशतैः संघाकृतं श्रीकृतं
सिद्धान्तैरुररीकृतं मुनिवरैः सर्वैः पुराणैर्वृतम् ।
चित्त[त्ता]स्वास्थ्यहृतं हरेण विवृतं मोक्षार्थमत्यादृतं
श्रीकृष्णस्य निपीयतां रसभृतं श्रोत्रेण नामामृतम् ॥ ११० ॥

लीलासंश्रवणे हरोऽतिरसिकः श्रीनारदः कीर्तने
ब्रह्मा संस्मरणे पदाम्बुरुहयोः संसेवने पद्मजा ।
पूजायां सुरनायकः स्तुतिविधौ व्यासो गरुत्मान् पुनः
दास्ये सख्यकृते नरोऽप्यतिरतः स्वात्मार्पणे श्रीपतेः ॥ १११ ॥

एकोऽपि त्रिगुणानुबिम्बकलया त्रैविध्यमाभासयन्
मायाकल्पलताश्रयः शुकमुखैः संसेवितो यो द्विजैः ।

आयासैरफलैरलं कृतधियः सोऽयं परं सेव्यतां
नीलक्ष्माधरमौलिमण्डनमणिः कैवल्यकल्पद्रुमः ॥ ११२ ॥

देवश्रेणिकिरीटपङ्कजविसंवादेन पादेन त-
द्वेदोदीरितचित्प्रकाशपरमाह्लादेन नादेन तत् ।
सिद्धं चेदखिलं मनोज्ञमुरलीनादेन मादेन नो
वागाडम्बरजृम्भमाणकल्लोन्मादेन वादेन किम् ॥ ११३ ॥

इत्येषा पुरुषोत्तमस्य कथिता भक्तिर्विमुक्तिप्रदा
नास्यां वादकथा तथा मतिमतां कल्याणिनी शोभते ।
साकारस्य हरेरुपासनमिदं नाकारसम्मेलनं
पुंसः सन्तनुते तनोति परमब्रह्मामृतं केवलम् ॥ ११४ ॥

को मूढः सुपथे स्थितेऽपि चतुरैर्विद्वज्जनैःसंश्रिते
नानोपद्रववर्जिते स्वसुकृतैरावर्तितैरर्जिते ।
यैः कैश्चित् कृपणैः कृतं परिहृतं विज्ञैः कदर्थीकृतं
कर्तुं दुष्करमुग्रदुःखविकटं दुष्टं दुरध्वं श्रयेत् ॥ ११५ ॥

हे सौमत्य जितं त्वया भगवता पाण्डित्यकृत्यं कृतं
वादित्वप्रतिपादितं तदशुभं तत्त्वे कवित्वस्थितम् (?) ।
मार्गान् दुर्गमकण्टकातिविकटान् भूयः कृताधोगतीन्
यन्मुक्त्वा हरिराश्रितः सुमनसां स्वर्गापवर्गप्रदः ॥ ११६ ॥

श्रीजीवः कविडिण्डिमो नृपगुरुः षड्दर्शिनीपण्डितो
भक्तिप्रस्थितदेशिकोऽखिलकलालङ्काररत्नाकरः ।
विंशत्यूर्ध्वशतीमितैर्व्यरचयत् पद्यैः क्रमादूगुम्भितैः
श्रीकृष्णस्य समर्चनाविधिकृते श्रीवैजयन्ती शुभाम् ॥ ११७ ॥

श्रीनीलाचलवासिनो भगवतो मोक्षैकचिन्तामणेः
लीलाविग्रहशालिनः श्रुतिशिरोराजिष्णुचूडामणेः ।
श्रीमज्जीवककवीश्वरेण चरणाम्भोजातयोरर्पिता
सम्मृष्टा गुणशालिनी विजयतां श्रीवैजयन्ती चिरम् ॥ ११८ ॥

॥ इति श्रीमत्कविराजराजगुरुत्रिलोचनाचार्यतनय श्रीमद्भक्तिप्रस्थानप्रणयनाभिनव-
बादरायण श्रीनारायणचरणपरायणकविडिण्डिमवाहिनीपति-
गजराजराजगुरु श्रीजीवदेवाचार्यबिरचितं
भक्तिवैजयन्तीस्तोत्रम्
सम्पूर्णम् ॥

## १६. ॥ अथ श्रीवेङ्कटेशस्तोत्रम् ॥

क्षेमं मे कमलापतिर्वितरतु श्रीवेङ्कटाद्रीश्वरः
कारुण्यामृतवारिधिस्त्रिजगतां क्षेमंकरो वत्सलः ।
श्रीमद्भाष्यकृता सुबोधनिधिना रामानुजस्वामिना
भक्त्या दत्तपरत्वचिह्नविलसद्बाहुर्महावैभवः ॥ १ ॥

रेखारूपमनोज्ञदिव्यकलशश्रीपाञ्चजन्यध्वज-
ज्ञानाब्जाङ्कुशकल्पचक्रविलसत्पादारविन्दद्वयम् ।
लक्ष्मीदिव्यपदाम्बुजातयुगलीजाज्वल्यमानोल्लस-
ल्लाक्षालक्षितवक्षसं सुशरणं श्रीवेङ्कटेशं भजे ॥ २ ॥

सद्योजातमनोज्ञपल्लवलसत्पाण्यम्बुजाभ्यां रमा
बिभ्राणौ सभयं तु यस्य चरणौ संवाहनेऽपि क्लमम् ।
शीघ्रं किञ्च सरोरुहारुणतलौ मञ्जीरभूषोज्ज्वलौ
तं देवं श्रितपारिजातमतुलं श्रीवेङ्कटेशं भजे ॥ ३ ॥

ब्रह्मेशादिकिरीटकोटिघटितप्रत्यग्रनानाविध-
श्रीमद्रत्नमहःप्ररोहनिकरैर्नीराजितश्रीपदम् ।
आनन्दाख्यविमानदिव्यनिलये लक्ष्म्या सह क्रीडितं
साक्षान्मन्मथमन्मथं गुणनिधिं श्रीवेङ्कटेशं भजे ॥ ४ ॥

श्रीपादौ चरणागतैः प्रथमतो यस्यावगाह्यौ जनैः
देदीप्रावमृतायिताविव शिशोर्मातुः स्तनौ श्रीपतेः ।
गोत्रायां विपिने वृषाद्रिशिखरे चित्तेऽप्यनन्यात्मनां
वेदान्ते सममाहितौ तमतुलं श्रीवेङ्कटेशं भजे ॥ ५ ॥

अत्यन्तप्रियदर्शनं कमलया प्रारूढवक्षःस्थलं
नानाभूषणभूषितं प्रविलसत्पीताम्बरप्रोज्ज्वलम् ।
सर्वाभीष्टवरप्रदं प्रणमतां जाज्वल्यमानप्रभं
बालार्कोज्ज्वलदिव्यरत्नमकुटं श्रीवेङ्कटेशं भजे ॥ ६ ॥

अम्भोजामृतसिन्धुजातकलशप्रस्पर्धिदिव्याननं
सुभ्रूसुन्दरमध्यचन्द्रविलसत्फालं मनोज्ञस्मितम् ।
आकर्णायतलोचनं मणिमयश्रीहारभूषोज्ज्वलं
श्रीवत्साङ्कितवक्षसं श्रितनिधिं श्रीवेङ्कटेशं भजे ॥ ७ ॥

सर्वज्ञं कलिकल्मषघ्नममलं लक्ष्मीनिवासोरसं
शक्तं सन्नतवत्सलं विधिमुखैर्देवैः सदा वन्दितम् ।
संसारार्णवतारकाङ्घ्रियुगळं कन्दर्पकोटिप्रभं
षाड्गुण्यात्मकदिव्यमङ्गलतनुं श्रीवेङ्कटेशं भजे ॥ ८ ॥

अन्धः पश्यति दुःखिनस्तु सुखिनो मूकः प्रवक्ति स्फुटं
पङ्गुर्धावति वेगतस्तु लभते वन्ध्या च भव्यं सुतम् ।
आर्ताश्चापि निरामयास्तु बधिराः शृण्वन्ति सम्यक् ततो
यस्यानुग्रहवैभवेन विमलं श्रीवेङ्कटेशं भजे ॥ ९ ॥

भक्ताभीष्टदभाष्यकारगुरुणा दत्ताब्जचक्रोज्ज्वल-
द्वाहुं भक्तजनानुभाव्यमनिशं नीलाम्बुदश्यामलम् ।
सर्वाधीश्वरता प्रकाशकलसन्मुक्ताकिरीटोज्ज्वलं
राकाचन्द्रमुखं दयागुणनिधिं श्रीवेङ्कटेशं भजे ॥ १० ॥

लक्ष्मीगेहभुजान्तरं कलियुगप्रत्यक्षनारायणं
सत्यानन्दचिदात्मकं परिनुतं पञ्चाननाद्यैर्बुधैः ।
श्रीशेषाचलशृङ्गमङ्गलमहाभूषायितश्रीपदं
सर्वेषां जगतामभीष्टवरदं श्रीवेङ्कटेशं भजे ॥ ११ ॥

सर्वेषां सुहृदं सुशीलमनघं श्रीमङ्गलाशासनं
कुर्वद्भिः परिशुद्धमानसयुतैः श्रीवैष्णवैः संवृतम् ।
बिम्बाभाधरमुद्यदिन्दुवदनं कर्णान्तलोलेक्षणं
श्रीमद्दिव्यललाटपट्टतिलकं श्रीवेङ्कटेशं भजे ॥ १२ ॥

कौशेयपुष्पितकटीतटमम्बुजाक्षं
कान्ताकुचाम्बुरुहकुड्मललोलदृष्टिम् ।
कन्दर्पदर्पहरसुन्दरदिव्यमूर्तिं
श्रीवेङ्कटेशमगतिः शरणं प्रपद्ये ॥ १३ ॥

आपादमौलिमभिजातमनोहराङ्ग-
मादित्यकोटिकिरणोज्ज्वलहेतिराजम् ।
आताम्रदिव्यमधुराधरपल्लवं च
श्रीवेङ्कटेशमगतिः शरणं प्रपद्ये ॥ १४ ॥

दिव्यैर्दन्तिकरोपमैर्मृदुतरैः सुस्निग्धवर्णैः शुभैः
नानाभूषणभूषितैः शुभनखैः कल्याणरेखाञ्चितैः ।
वृत्तैर्ज्याकिणकर्कशैरभयदैः पीनैश्चतुर्भिः सतां
श्रीमद्बाहुभिरायतैर्विलसितं श्रीवेङ्कटेशं भजे ॥ १५ ॥

दातारं किल सम्पदां स्वचरणद्वन्द्वाश्रितानां सतां
दैत्यानां तु निघातिनं त्रिजगतां नाथं महावत्सलम् ।
सिंहस्कन्धमनेकरत्नरचितश्रीहारवक्षःस्थलं
श्रीमत्पुण्ड्रलसल्ललाटफलकं श्रीवेङ्कटेशं भजे ॥ १६ ॥

लक्ष्मीनिवास निखिलाश्रितलोकबन्धो
वैकुण्ठनाथ निरवद्यगुणैकसिन्धो ।
श्रीवेङ्कटेश भुवि विश्रुतदिव्यकीर्ते
पाहि प्रपन्नमगतिं शरणागतं माम् ॥ १७ ॥

वरगुणमणिसिन्धुर्वत्सलः श्रीनिवासः
कलशजलधिकन्याप्राणनाथो दयालुः ।
[1]मणिवरमणिभूषा [2]वत्सजाज्वल्यमानो
वितरतु मम सौख्यं वेङ्कटेशो मुकुन्दः ॥ १८ ॥

कनकमयकिरीटो दिव्यलावण्यसिन्धुः
प्रणतवरदबन्धुः पद्मपत्रायताक्षः ।
सुलभचरणयुग्मः स्वाश्रितानां कृपालुः
वितरतु मम सौख्यं वेङ्कटेशो मुकुन्दः ॥ १९ ॥

मरतकगिरिमूर्तिर्मङ्गलानां निवासः
स्फटिकमकुटमूर्धा पीतकौशेयवासः ।
कनकवलयभूषाप्रोज्ज्वलद्दिव्यबाहुः
वितरतु मम सौख्यं वेङ्कटेशो मुकुन्दः ॥ २० ॥

सरसिजमुखपाणिः सर्वलोकैकनाथः
विकचकमलनेत्रः श्यामलः कोमलाङ्गः ।
जलजचरणयुग्मः श्रीनिवासो दयालुः
वितरतु मम सौख्यं वेङ्कटेशो मुकुन्दः ॥ २१ ॥

विधिविबुधनियन्ता विश्वभक्तार्तिहन्ता
विनतविविधजातिक्षेमकल्यणमन्ता ।
विमलमधुरमन्दस्मेरदिव्याननाब्जो
वितरतु मम सौख्यं वेङ्कटेशो मुकुन्दः ॥ २२ ॥

अत्यर्कानलदीप्तमुत्तमपदं वैकुण्ठमत्यद्भुतं
त्यक्त्वानुग्रहकाम्यया प्रणमतां लक्ष्म्या सह क्रीडितः ।

---

1. मणिवरमणिः=कौस्तुभमणि    2. वत्सः=श्रीवत्सः

श्रीमद्वेङ्कटभूधरे मणिगणैर्नानाविधैर्धातुभि-
र्देदीप्रे भगवान् ममास्तु गुणवान् क्षेमंकरः सर्वदा ॥ २३ ॥

भक्तानां दोषभोग्यः प्रवरगुणनिधिर्मङ्गलानां निवासः
विख्यातः सर्वधाता सरसिजनयनो वेदवेदान्तवेद्यः ।
शेषाद्रौ शेषतल्पे जलधितनयया सार्धमिन्दीवराक्ष्या
क्रीडन् देवाधिराजो मम तु वितरतान्मङ्गलं श्रीनिवासः ॥ २४ ॥

विधिशिवविबुधेन्द्रप्राणिरक्षैकदीक्षो
विविधकलिनिहन्ता वत्सलः स्वाश्रितेषु ।
श्रुतहृदयनिवासः शीलवान् पङ्कजाक्षो
विलसतु मम चित्ते वेङ्कटेशो मुकुन्दः ॥ २५ ॥

मरतकमणिरत्नस्फाटिकच्छन्नदिव्य-
प्रवरकनकभूषाभूषितः संश्रितार्थम् ।
नयनसुभगदिव्यश्यामकल्याणगात्रो
विलसतु मम चित्ते वेङ्कटेशो मुकुन्दः ॥ २६ ॥

वरद निखिलबन्धो क्षान्तिसौशील्यसिन्धो
कमलनयन विष्णो शङ्खचक्रासिपाणे ।
दिवि भुवि मम बन्धो श्रीपते वेङ्कटेश
श्रितजनशुभकल्प श्रीनिधे त्राहि दासम् ॥ २७ ॥

दिवि भुवि मम सौख्यं संप्रयच्छ प्रयच्छ
श्रुतिशिरसि विदीप्त श्रीनिधे वेङ्कटेश ।
चलमतिमविनीतं मां च कन्दर्पवश्यं
तव किल दयनीयं पाहि पाहि प्रसीद ॥ २८ ॥

कलौ लोकनाथ प्रशस्त प्रशस्त
प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ।
हरे दीनबन्धो प्रसीद प्रसीद
सदा वेङ्कटेशं स्मरामि स्मरामि ॥ २९ ॥

स्वामिपुष्करिणीतीरे श्रीमद्वेङ्कटभूधरे ।
वसते रमया सार्धं वेङ्कटेशाय मङ्गलम् ॥ ३० ॥

॥ इति श्रीवेङ्कटेशस्तोत्रं सम्पूर्णम् ॥

## १७. ॥ अथ श्रीगोविन्दराजस्तुतिः ॥

सेवे गोविन्दराजं सुरनरमुनिभिः सेव्यमानाङ्घ्रिपद्मं
लक्ष्मीभूभ्यां लसन्तं मणिमयमकुटोद्भासमानाननाब्जम्।
बिभ्राणं शङ्खचक्रे शशिरविलसिते हस्तपद्मद्वयाभ्यां
प्रत्नं[भोगीन्द्रतल्पं]वरगुणजलधिं मेघसच्छायदेहम् ॥ १ ॥

मुग्धनीलाळकास्येन्दुमुत्फुल्लाम्भोजलोचनम् ।
कुन्दकुड्मलसच्छा[च्छा]त्रदशनं [पल्लवाधरम्] ॥ २ ॥

सुभ्रूलतं चम्प[काली]विडम्ब्युन्नतनासिकम् ।
चारुमन्दस्मितं हेमकर्णभूषणमञ्जुळम् ॥ ३ ॥

चलत्कुण्डलसंशोभिकपोलफलकद्वयम् ।
ग्रैवेयकोल्लसत्कम्बुकण्ठं कौस्तुभभूषितम् ॥ ४ ॥

सुगन्धतुलसीमालामुक्ताहारकवक्षसम् ।
शङ्खचक्रधरं रुक्मवलयाङ्गदबाहुकम् ॥ ५ ॥

कटीतटीप्रविलसद्द्रुतहेमाम्बरं प्रभुम् ।
गजशुद्धास्वर्मिसक्थिं[गजशुण्डास्पर्धिसक्थं]मुकुरामुग्धजानुकम् ॥६॥

कामतूणीरसदृशजङ्घादण्डोपशोभितम्
क्वणत्प्रत्युप्तमाणिक्यमञ्जीरपदपङ्कजम् ॥ ७ ॥

कन्दर्पकोटिसंकाशं नीलाम्बुधरविग्रहम् ।
आनन्दकन्दलं गोपरमणीनयनोत्सवम् ॥ ८ ॥

पुण्यराशिं वेदवेद्यं दयाजन्मनिकेतनम् ।
लोकदुःखतमोबृन्दचण्डभानुं नरोत्तमम् ॥ ९ ॥

नित्यं निरञ्जनं भक्तजनाम्बुधिकलानिधिम् ।
दशरूपधरं देवं सृष्टिस्थित्यन्तकारिणम् ॥ १० ॥

निबिडोत्फुल्लकुसुमफलकोरकमण्डितैः ।
शङ्खस्वनत्परभृतप्रमुखाण्डजशोभितैः ॥ ११ ॥

चम्पकाशोकपुन्नागचिञ्चाम्रवकुळद्रुमैः ।
रम्ये विशाले स्वच्छाम्बुपुण्डरीकसरस्तटे ॥ १२ ॥

प्राकारगोपुरोदग्रमण्डपान्वितसन्निभौ[धौ] ।
शान्तं गोविन्दराजं तमहर्निशमहं भजे ॥ १३ ॥

रङ्गाधिपं रविकुलीननृपैः सुपूज्यं
भोगीन्द्रभोगशयनीयतले शयानम् ।
ज्ञानप्रदं तनुभृतां वरदं वरेण्यं
श्रीनाथमादरमहं सततं भजामि ॥ १४ ॥

॥ इति सुदर्शनवरदनारायणदासकृता श्रीगोविन्दराजस्तुतिः सम्पूर्णा ॥

---

## १८. ॥ अथ श्रीरङ्गनाथस्तोत्रम् ॥

श्रीरङ्गे शेषशायी विलसति भगवान् दिव्यवैकुण्ठनाथः
कावेरी दिव्यगन्धा विलसति विरजा दिव्यतीर्थप्रशस्ता ।
श्रीरङ्गं दिव्यरङ्गं विलसति नगरं दिव्यवैकुण्ठमेव
श्रीमन्तः सूरिसङ्घा दिवि च विलसिता रङ्गदेशस्थभक्ताः ॥ १ ॥

प्रत्युप्तैः पद्मरागस्फटिकमरकतैर्दिव्यमाणिक्यसङ्घैः
प्राकारैर्गोपुराद्यैर्विलसति विमले दिव्यवैकुण्ठतुल्ये ।
श्रीरङ्गे शेषशायी शतमखमणिभिस्तुल्यकल्याणगात्रो
भक्तानां कल्पवृक्षो दिशतु मम सुखं रङ्गनाथो दयालुः ॥ २ ॥

अम्भोजाक्षः सुशीलः शुभगुणनिलयश्चन्द्रकान्ताननाब्जः
वक्षःस्थल्यां विराजन्मणिवरकमलावत्सजाज्वल्यमानः ।
माणिक्यच्छन्नमौलिर्मणिमयवलयो भक्तकल्याणदाता
वैकुण्ठः शेषशायी दिशतु मम सुखं रङ्गनाथो दयालुः ॥ ३ ॥

सर्वज्ञः सर्वशक्तः सकलगुणनिधिः सत्यकामः सुरेशः
श्रीवत्सःश्रीनिवासः श्रितजनवरदः सर्वसौहार्दसिन्धुः ।
श्रीरङ्गे दिव्यदेशे सकलजननिधौ शेषतल्पे शयानो
मेघश्यामः कृपालुर्दिशतु मम सुखं रङ्गनाथो मुकुन्दः ॥ ४ ॥

श्रीरङ्गश्रीनगर्यां ज्वलितमणिफणे नागराजे शयानः
ब्रह्माद्यैः सूरिसङ्घैः स्तुतपदकमलः सर्वलोकप्रसिद्धः ।
मुग्धस्मेरः श्रुतीनां शिरसि विलसितः सिन्धुजावत्सवक्षाः
कारुण्याब्धिर्वदान्यो दिशतु मम सुखं रङ्गनाथो मुकुन्दः ॥ ५ ॥

प्रत्यक्षं परमं पदं दिवि भुवि श्रीरङ्गमत्यद्भुतं
तत्र श्रीभगवान् फणीन्द्रशयनः श्रीरङ्गराजो विभुः ।
लक्ष्मीदिव्यनिवासकौस्तुभमणिः श्रीवत्सवक्षःस्थलो
जीयाद् भूतदयालुरम्बुजमुखः श्रीवैष्णवानां निधिः ॥ ६ ॥

विलसतु मम चित्ते रङ्गनाथो दयालु-
र्वितरतु मम सौख्यं कल्पकः स्वाश्रितानाम् ।
स जयतु विबुधानां राजराजो मुकुन्दो
विविधकनकभूषाप्रोज्ज्वलद्दिव्यगात्रः ॥ ७ ॥

वैकुण्ठतुल्यविमलाखिलदिव्यदेश-
प्राधान्यलक्षितविलक्षणरङ्गपुर्याम् ।
कल्याणकल्पकतरुं कमलायताक्षं
शेषाङ्कशायिनमहं शरणं प्रपद्ये ॥ ८ ॥

रेखामयाब्जकलशध्वजशङ्खचक्र-
वज्राद्यलंकृततलौ जितपद्मरागौ ।
कान्ताववाङ्मनसगोचरसौकुमार्यौ
श्रीरङ्गराजचरणौ शरणं प्रपद्ये ॥ ९ ॥

कालाम्बुदश्यामलकोमलाङ्गं
श्रीवत्सपीताम्बरकौस्तुभाद्यैः ।
श्रीभूषणैर्भूषितमम्बुजाक्षं
श्रीरङ्गराजं शरणं प्रपद्ये ॥ १० ॥

श्रीरङ्गनाथ मम नाथ तवाङ्घ्रिपद्म-
कैङ्कर्यनिष्ठपरिचारकभृत्यभृत्यम् ।
मां रक्ष दिव्यकृपया करुणामृताब्धे
शीलादिमङ्गलगुणाकर भक्तबन्धो ॥ ११ ॥

मणिभूषणभूषितनीलतनो
शरणागतवत्सल रङ्गनिधे ।
कमलाधव मङ्गलवारिनिधे
परया कृपया परिपालय माम् ॥ १२ ॥

निखिलामलदैवतमौलिमणे
भुवनाधिप मङ्गलसारनिधे ।
शरणागतकल्पक रङ्गपते
परया कृपया परिपालय माम् ॥ १३ ॥

अन्येषां किल दुर्लभश्च सततं स्वस्मिन्नभक्तात्मनां
भक्तानां सुलभः प्रसन्नवदनः कल्याणदो वत्सलः ।
स्वस्ति श्रीस्तनकुङ्कुमादरुणितश्रीनीलगात्रः सदा
दद्यान्मे भगवान् फणीन्द्रशयनः श्रीरङ्गराजो विभुः ॥ १४ ॥

उन्मीलत्पद्मगर्भद्युतितलमहसा न्यक्कृताः पद्मरागाः
बाह्यैस्तेजःप्ररोहैः शतमखमणयो न्यक्कृता नीलवर्णाः ।
उद्यद्दिव्यप्रकाशैर्नखमणिमहसां न्यक्कृताश्चन्द्रभासो
भक्तानामिष्टदातुश्चरणकमलयो रङ्गनाथस्य विष्णोः ॥ १५ ॥

तत्तादृशौ विधिशिवादिकिरीटकोटि-
प्रत्युप्तदिव्यनवरत्नमहःप्ररोहैः ।
नीराजितौ मणिमयोज्ज्वलनूपुराढ्यौ
श्रीरङ्गराजचरणौ शरणं प्रपद्ये ॥ १६ ॥

आनूपुरार्पितमनोहरदिव्यपुष्प-
सौरभ्यसौरभकरौ मणिनूपुराढ्यौ ।
पद्मोज्ज्वलौ निखिलभक्तजनानुभाव्यौ
श्रीरङ्गराजचरणौ शरणं प्रपद्ये ॥ १७ ॥

अम्भोजस्फारपादो नयनसुभगताकल्पकस्फारजङ्घः
सौन्दर्यस्फारजानुः करिकरकदलश्रीलसद्दीप्यदूरुः ।
जाज्वल्यद्दिव्यशाटीविलसितकटिकः कौस्तुभस्फारवक्षाः
चक्राब्जस्फारबाहुर्दिशतु मम सुखं रङ्गनाथो मुकुन्दः ॥ १८ ॥

कम्बुग्रीवप्रभातः किसलयविलसद्विद्रुमस्मेरभास्व-
द्दीप्रोष्ठः कल्पवल्लीमधुरशुभनसः पद्मपत्रायताक्षः ।
सुभ्रूरेखः सुफालो मणिमयमकुटस्त्वञ्जनश्यामकेशः
श्रीरङ्गे शेषशायी दिशतु मम सुखं लोकनाथो मुकुन्दः १९ ॥

मणिप्रवरभूषणं मकुटदीप्रनीलालकं
विचित्रमणिनूपुरप्रविलसत्पदाम्भोजकम् ।
सरोभवनिभाननं सरसिजेक्षणप्रोज्ज्वलं
भजे नयनसौख्यदं प्रणमतां तु रङ्गेश्वरम् ॥ २० ॥

सुशीलमखिलामरप्रवरभोग्यपादाम्बुजं
शशाङ्कसदृशाननं कनकदीप्रपीताम्बरम् ।
दशाननिघातिनं मधुरबिम्बदिव्याधरं
सुशोभितकराम्बुजं खलु भजामि रङ्गेश्वरम् ॥ २१ ॥

महेन्द्रमणिभास्वरं मणिवरादिभूषोज्ज्वलं
जपाकुसुमविद्रुमज्वलितबिम्बदिव्याधरम् ।
कृपामृतपयोनिधिं सुमुखमन्दहासोज्ज्वलं
लसद्विपुलवक्षसं किल भजेम रङ्गेश्वरम् ॥ २२ ॥

भजेयमहिशायिनं रजतशैलकालाम्बुद-
प्रभानिभमहर्निशं प्रणतदिव्यसौख्यप्रदम् ।
सुधामयपयोधिजापदसरोजलाक्षामय-
प्रभारुणितवक्षसं सुलभमेव रङ्गेश्वरम् ॥ २३ ॥

न क्लिश्यन्ते प्रसिद्धं मनसिजकदनैर्भीष्यकारस्य भक्ताः
भक्तोऽपि स्वामिनोऽहं मदनपरवशः पापकर्मास्मि मूर्खः ।
तस्मान्मे दिव्यबन्धो सकलगुणनिधे लोकनाथ क्षमाब्धे
त्यक्तुं शक्यस्त्वयाहं न खलु मम निधे रक्ष मां रङ्गनाथ ॥ २४ ॥

कल्याणकल्पकतरो करुणामृताब्धे
श्रीरङ्गराज जगदेकशरण्यमूर्ते ।
भक्तप्रवत्सल मनोहरदिव्यमूर्ते
पाहि प्रसीद मम वृत्तमचिन्तयित्वा ॥ २५ ॥

॥ इति श्रीरङ्गनाथस्तोत्रं सम्पूर्णम् ॥

---

## १९. ॥ अथ श्रीवराहाष्टकम् ॥

कमलायतनेत्राय कमलायतनोरसे ।
वराहवपुषे दैत्यवराहवपुषे नमः ॥ १ ॥

वामांसभूषायितविश्वधात्री-
वामस्तनन्यस्तकरारविन्दः ।
जिघ्रन् मुखेनापि कपोलमेनां
जीवातुरस्माकगुरोः स जीयात् ॥ २ ॥

वेदिस्तनूराहवनीयमास्यं
बर्हींषि लोमानि जुहूश्च नासा ।
शम्या च दंष्ट्राजनि यस्य यूपो
वालो मखात्मा स पुनातु पोत्री ॥ ३ ॥

पापेन दैन्येन भवाम्बुराशौ
निपातितं मां निरवग्रहोर्मौ ।
धूतारिरुद्धृत्य धरामिवोच्चैः
कुर्यान्मुदं मे कुहनावराहः ॥ ४ ॥

वेशन्तति व्रतजुषां हृदयं मुनीनां
वेगापगाविहृतिकाननचङ्क्रमाणाम् ।
मुस्तागणन्ति किल यस्य सुरारिवर्गाः
कोलः स कोऽपि कुशलं कुरुतादजस्रम् ॥ ५ ॥

कल्याणमङ्कुरति यस्य कटाक्षलेशा-
द्यस्य प्रिया वसुमती सवनं यदङ्गम् ।
अस्मद्गुरोः कुलधनं चरणौ यदीयौ
भूयः शुभं दिशतु भूमिवराह एषः ॥ ६ ॥

कल्पान्तसन्ततघनाघननिर्विघात-
निर्घातवातरवनिष्ठुरतारधीरम् ।
मायाकिटेर्बधिरितद्रुहिणश्रवस्कं
घोणापुटीघुरघुरारसितं पुनातु ॥ ७ ॥

झटिति विलुठदूर्मीचाटुवाचाटसिन्धु-
स्फुटपटहविदस्त्रस्फोटदीप्तोटमुद्यम् ।
खरखुरपुटघाताधूतखाटारिवाटः
कपटकिटिरघौघाटोपमुच्चाटयेन्नः ॥ ८ ॥

यत्कारिकादर्पणाख्यकृतिनावा भवाम्बुधिम् ।
सन्तस्तरन्ति वरदगुरवे श्रीमते नमः ॥ ९ ॥

॥ इति श्रीवराहाष्टकं सम्पूर्णम् ॥

---

## २०. ॥ अथ श्रीरामानुस्मृतिः ॥

ब्रह्मोवाच—

वन्दे रामं जगद्वन्द्यं सुन्दरास्यं शुचिस्मितम् ।
कन्दर्पकोटिलावण्यं कामितार्थप्रदायकम् ॥ १ ॥

भास्वत्किरीटकटककटिसूत्रोपशोभितम् ।
विशाललोचनं भ्राजत्तरुणारुणकुण्डलम् ॥ २ ॥

श्रीवत्सकौस्तुभलसद्वक्षसं वनमालिनम् ।
मुक्ताहारसुशोभाढ्यं मुद्रिकारत्नभासुरम् ॥ ३ ॥

सर्वाङ्गसुन्दरं हृद्यं द्विभुजं रघुनन्दनम् ।
नीलजीमूतसङ्काशं नीलालकवृताननम् ॥ ४ ॥

ज्ञानमुद्रालसद्दक्षोबाहुं ज्ञानमयं हरिम् ।
वामजानूपरिन्यस्तवामहस्ताम्बुजं प्रभुम् ॥ ५ ॥

वीरासने समासीनं विद्युत्पुञ्जनिभाम्बरम् ।
कोटिसूर्यप्रतीकाशं कोमला[ङ्गसमु]ज्ज्वलम् ॥ ६ ॥

जानकीलक्ष्मणाभ्यां च वामदक्षिणशोभितम् ।
हनुमद्रविमुख्यादिकपिमुख्यैश्च सेवितम् ॥ ७ ॥

दिव्यरत्नसमायुक्तसिंहासनगतं प्रभुम् ।
प्रत्यहं प्रातरुत्थाय ध्यात्वैवं राघवं हृदि ॥ ८ ॥

एभिः षोडशभिर्नामपदैः स्तुत्वा नमेद्धरिम् ।
(ओं) नमो रामाय शुद्धाय बुद्धाय परमात्मने ॥ ९ ॥

विशुद्धज्ञानदेहाय रघुनाथाय ते नमः ।
नमो रावणहन्त्रे ते नमो वालिविनाशिने ॥ १० ॥

नमो वैकुण्ठनाथाय नमो विष्णुस्वरूपिणे ।
नमो यज्ञस्वरूपाय यज्ञभोक्त्रे नमो नमः ॥ ११

योगिध्येयाय योगाय परमानन्दरूपिणे ।
शङ्करप्रियमित्राय जानकीजानये नमः ॥ १२ ॥

य एवं प्रातरुत्थाय भक्तिश्रद्धासमन्वितः ।
षोडशैतानि नामानि रामचन्द्रस्य नित्यशः ॥ १३ ॥

पठेद्विद्वान् स्मरन् रामं स एव स्याद्रघूत्तमः ।
श्रीरामे भक्तिरचला भवत्येव हि सर्वदा ॥ १४

समये समनुप्राप्ते राघवः सीतया सह ।
हृदि संदृश्यते तस्य साक्षात् सौमित्रिणा सह ॥ १५ ॥

नित्यं चापररात्रेषु रामस्यैतां स (त्य) माहितः ।
मुच्यतेऽनुस्मृतिं जप्त्वा मृत्युदारिद्र्यपातकैः ॥ १६ ॥

॥ इति ब्रह्मप्रोक्तं श्रीरामानुस्मृतिस्तोत्रं सम्पूणम् ॥

---

## २१. ॥ अथ श्रीहरिहरस्तोत्ररत्नमाला ॥

गोविन्द माधव मुकुन्द हरे मुरारे
शम्भो शिवेश शशिशेखर शूलपाणे ।
दामोदराच्युत जनार्दन वासुदेव
त्याज्या भटा य इति सन्ततमामनन्ति ॥ १ ॥

गङ्गाधरान्धकरिपो हर नीलकण्ठ
  वैकुण्ठ कैटभरिपो कमठाब्जपाणे ।
भूतेश खण्डपरशो मृड चण्डिकेश
  त्याज्या भटा य इति सन्ततमामनन्ति ॥ २ ॥

विष्णो नृसिंह मधुसूदन चक्रपाणे
  गौरीपते गिरिश शङ्कर चन्द्रचूड ।
नारायणासुरनिबर्हण शार्ङ्गपाणे
  त्याज्या भटा य इति सन्ततमामनन्ति ॥ ३ ॥

मृत्युञ्जयोग्र विषमेक्षण कामशत्रो
  श्रीकान्त पीतवसनाम्बुधिनील शौरे ।
ईशान कृत्तिवसन त्रिदशैकनाथ
  त्याज्या भटा य इति सन्ततमामनन्ति ॥ ४ ॥

लक्ष्मीपते मधुरिपो पुरुषोत्तमाद्य
  श्रीकण्ठ दिग्वसन शान्त पिनाकपाणे ।
आनन्द रङ्गधरणीधर पद्मनाभ
  त्याज्या भटा य इति सन्ततमामनन्ति ॥ ५ ॥

सर्वेश्वर त्रिपुरसूदन देवदेव
  ब्रह्मण्यदेव गरुडध्वज शङ्खपाणे ।
त्र्यक्षोरगाभरण बालमृगाङ्कमौले
  त्याज्या भटा य इति सन्ततमामनन्ति ॥ ६ ॥

श्रीराम राघव रमेश्वर रावणारे
  भूतेश मन्मथरिपो प्रमथाधिनाथ ।
चाणूरमर्दन हृषीकपते मुरारे
  त्याज्या भटा य इति सन्ततमामनन्ति ॥ ७ ॥

शूलिन् गिरीश रजनीशकलावतंस
  कंसप्रणाशन सनातन केशिनाश ।
भर्ग त्रिणेत्र भव भूतपते पुरारे
  त्याज्या भटा य इति सन्ततमामनन्ति ॥ ८ ॥

गोपीपते यदुपते वसुदेवसूनो
  कर्पूरगौर वृषभध्वज फालनेत्र ।
गोवर्धनोद्धरण धर्मधुरीण गोप
  त्याज्या भटा य इति सन्ततमामनन्ति ॥ ९ ॥

स्थाणो त्रिलोचन पिनाकधर स्मरारे
कृष्णानिरुद्ध कमलाकर कल्मषारे ।
विश्वेश्वर त्रिपथगाद्रिजटाकलाप
त्याज्या भटा य इति सन्ततमामनन्ति ॥ १० ॥

अष्टोत्तराधिकशतेन सुचारुनाम्नां
सन्दर्भितां ललितरत्नकदम्बकेन ।
सन्नायकां दृढगुणां निजकण्ठगां यः
कुर्यादिमां स्रजमहो स यमं न पश्येत् ॥ ११ ॥

॥ इति श्रीहरिहरस्तोत्ररत्नमाला सम्पूर्णा ॥

---

## २२. ॥ अथ श्रीवैद्यनाथस्तवः ॥

वेदवेद्य कृपाधार जगन्मूर्ते शुभप्रद ।
अनादिवैद्य सर्वज्ञ वैद्यनाथ नमोऽस्तु ते ॥ १ ॥

गङ्गाधर महादेव चन्द्रवह्न्यर्कलोचन ।
पिनाकपाणे विश्वेश वैद्यनाथ नमोऽस्तु ते ॥ २ ॥

वृषवाहन देवेश कचिकित्सचिकित्सक ।
करुणाकर गौरीश वैद्यनाथ नमोऽस्तु ते ॥ ३ ॥

विधिविष्णुमुखैर्देवैरर्च्यमानपदाम्बुज ।
अप्रमेय हरेशान वैद्यनाथ नमोऽस्तु ते ॥ ४ ॥

रामलक्ष्मणसूर्येन्दुजटायुःश्रुतिपूजित ।
मदनान्तक सर्वेश वैद्यनाथ नमोऽस्तु ते ॥ ५ ॥

प्रपञ्चभिषगीशान नीलकण्ठ महेश्वर ।
विश्वनाथ महादेव वैद्यनाथ नमोऽस्तु ते ॥ ६ ॥

उमापते लोकनाथ मणिमन्त्रौषधीश्वर ।
दीनबन्धो दयासिन्धो वैद्यनाथ नमोऽस्तु ते ॥ ७ ॥

त्रिगुणातीत चिद्रूप तापत्रयविमोचन ।
विरूपाक्ष जगन्नाथ वैद्यनाथ नमोऽस्तु ते ॥ ८ ॥

भूतप्रेतपिशाचादेरुच्चाटनविचक्षण ।
कुष्ठादिसर्वरोगाणां संहर्त्रे ते नमो नमः ॥ ९ ॥

जात्यन्धप(ङ्कु)[ङ्गु] कुब्जादेर्दिव्यरूपप्रदायिने ।
अनेकमूकजन्तूनां दिव्यवाग्दायिने नमः ॥ १० ॥

देवाः—

स्वामिन् सर्वजगान्नाथ सर्वरोगचिकित्सक ।
क्षुद्ररोगभयार्तान् नस्त्राहि त्राहि महाप्रभो ॥ ११ ॥

अचिकित्स्याचिकित्साय चाद्यन्तरहिताय च ।
सर्वलोकैकवन्द्याय वैद्यनाथाय ते नमः ॥ १२ ॥

अप्रमेयाय महते सुप्रसन्नमुखाय च ।
अभीष्टदायिने तुभ्यं वैद्यनाथाय ते नमः ॥ १३ ॥

मृत्युञ्जयाय शर्वाय मृडानीवामभागिने ।
वेदवेद्याय रुद्राय वैद्यनाथाय ते नमः ॥ ४१ ॥

श्रीरामभद्रवन्द्याय जगतां हितकारिणे ।
सोमार्धधारिणे तुभ्यं वैद्यनाथाय ते नमः ॥ १५ ॥

श्रीनीलकण्ठाय सौमित्रिपूजिताय मृडाय च ।
चन्द्रवह्नयर्कनेत्राय वैद्यनाथाय ते नमः ॥ १६ ॥

शिखिवाहनवन्द्याय सृष्टिस्थित्यन्तकारिणे ।
मणिमन्त्रौषधेशाय वैद्यनाथाय ते नमः ॥ १७ ॥

गृध्रराजाभिवन्द्याय दिव्यगङ्गाधराय च ।
जगन्नाथाय सर्वाय वैद्यनाथाय ते नमः ॥ १८ ॥

कुजवेदविधीन्द्राद्यैः पूजिताय चिदात्मने ।
आदित्यचन्द्रवन्द्याय वैद्यनाथाय ते नमः ॥ १९ ॥

॥ इति श्रीवैद्यनाथस्तवः सम्पूर्णः ॥

---

## २३. ॥ अथ श्रीनटेशस्तवः ॥

ह्रीमत्या शिवया विराण्मयमजं हृत्पङ्कजस्थं सदा
ह्रीणाना शिवकीर्तने हितकरं हेलाहृदा मानिनाम् ।
ह्रीबेरादिसुगन्धवस्तुरुचिरं हेमाद्रिबाणासनं
ह्रीङ्कारादिकपादपीठममलं हृद्यं नटेशं भजे ॥ १ ॥

श्रीमज्ज्ञानसभान्तरे प्रविलसच्छ्रीपञ्चवर्णाकृतिं
श्रीवाणीविनुतापदाननिचयं श्रीवल्लभेनार्चितम् ।
श्रीविद्यामनुमोदिनं श्रितजनश्रीदायकं श्रीधरं
श्रीचक्रान्त[र]वासिनं शिवमहं श्रीमन्नटेशं भजे ॥ २ ॥

नव्याम्भोजमुखं नमज्जननिधिं नारायणेनार्चितं
नाकौकोनगरीनटीलसितकं नागादिनालङ्कृतम् ।
नानारूपक(नृत्त)[नर्त]नादिचतुरं नालीकजान्वेषितं
नादात्मानमहं नगेन्द्रतनयानाथं नटेशं भजे ॥ ३ ॥

मध्यस्थं मधुवैरिमार्गितपदं मद्वंशनाथं प्रभुं
मारातीतमतीव मञ्जुवपुषं मन्दारगौरप्रभम् ।
मायातीतमशेषमङ्ग[ल]निधिं मद्भावनाभावितं
मध्येव्योमसभागुहान्तमखिलाकाशं नटेशं भजे ॥ ४ ॥

शिष्टैः पूजितपादुकं शिवकरं शीतांशुरेखाधरं
शिल्पं भक्तजनावने शिथिलिताघौघं शिवायाः प्रियम् ।
शिक्षारक्षणमम्बु(शा)[जा] सनशि(रोबं) [रस्सं] हारशीलप्रभुं
शीतापाङ्गविलोचनं शिवमहं श्रीमन्नटेशं भजे ॥ ५ ॥

वाणीवल्लभवन्द्यवैभवयुतं वन्दारुचिन्तामणिं
वाताशाधिपभूषणं परकृपावारांनिधिं योगिनाम् ।
वाञ्छापूर्तिकरं वलारिविनुतं वाहीकृताम्नायकं
वामङ्गात्तवराङ्गना[नं] मम हृदावासं नटेशं भजे ॥ ६ ॥

यक्षाधीशसखं यमप्रमथनं यामिन्यधीशासनं
यज्ञध्वंसकरं यतीन्द्रविनुतं यज्ञक्रियादीश्वरम् ।
याज्यं याजकरूपिणं यमधनैर्यत्नोपलभ्याङ्घ्रिकं
(या)[वा]जीभूतवृषं सदा हृदि ममायत्तं नटेशं भजे ॥ ७ ॥

मायाश्रीविलसच्चिदम्बरमहापञ्चाक्षरैरङ्कितान्
श्लोकान् सप्त पठन्ति येऽनुदिवसं चिन्तामणीनामकान् ।
तेषां भाग्यमनेकमायुरधिकान् वि(ध्यध्व)[द्वद्व]रान् सत्सुतान्
सर्वाभीष्टमसौ ददाति सहसा श्रीमत्सभाधीश्वरः ॥ ८ ॥

॥ इति श्रीनटेशस्तवः सम्पूर्णः ॥

---

## २४. ॥ अथ श्रीपञ्चाक्षरार्थस्तवः ॥

### ॥ षडक्षरश्लोकाः ॥

ओमित्येकाक्षरोऽसि प्रकृतिविरहितस्त्वोमितीदं च सर्वं ।
त्वत्तो भिन्नं न चैतच्छिव तव महिमां[महितं]वक्ति वेदः सदैवोम् ।
... ... ... ... ... ... ...
.. ... ... ... ... ... ... ॥ १ ॥

ईशानस्त्वं सर्वविद्याधिनाथ उद्गीत[थ]स्त्वं वाचकस्त्वं तथैवोम् ।
माता मानं मातृकाख्यानसिद्धिः शब्दादीनां मूलमीशस्तथैवोम् ॥ २ ॥

नमस्ते रुद्रस्त्वं श्रुतिगतमनोऽन्तैकवचसां
भवानन्तो नाथो नतिकरणनानाविधतनुः ।
न हि त्वत्तो भिन्नं जगदपि च नानैव हि मृषा
नमः शेषी देवो न हि शिव विवादः श्रुतिबलात् (?) ॥ ३ ॥

महानात्मा मायाविरहितशरीरो मनुगतो
महेशो मन्त्रार्थस्त्वमसि मतिदाता मनसिगः ।
मनस्वी मध्यस्थो मरणजननाद्यन्तरहितो
मधुर्मन्ता माता भवसि हर मन्वर्चितपदः ॥ ४ ॥

शिवः शिष्टो निष्ठो भवसि शिपिविष्टः शिवतरः
सिनीवाल्यः खल्यः शशिधर शिखासूक्तिमहिमा ।
शिखी नेत्रो यन्ता भवसि शितिकण्ठस्त्वमसिधृक्
शतावर्तो हर्ता त्वमसि भवहर्तासि जगताम् (?) ॥ ५ ॥

वाहीकृतोक्ष भगवन् हर वामदेव
वाताशनाधिपतिभूषितदिव्यकाय ।
वास्तव्यवास्तुप महेश्वर वामनेत्रा-
क्लृप्तार्धकाय भगवन् नववारणारे ॥ ६ ॥

यतो जातं विश्वं यमयति तथान्ते च यद्दते
न हि स्वस्थं यस्मान्न भवति तथा नो नगतिकम् ।
यमात्मानं सर्वे न हि खलु विजानन्ति तमसः
परं पारं यत्तद्भवसि यततां वै नियमिता ॥ ७ ॥

पञ्चाक्षरार्थस्तवमेत(दे)[मे]वं पठन्ति ये(वाध्यवसन्तमांशिवे)[चाध्यवसायवन्तः]।
त एव धन्या जगतीतलेऽस्मिन् तेषां हि मुक्तिः करगा भवेन्ननु ॥ ८ ॥

॥ इति श्रीशिवपञ्चाक्षरार्थस्तवः सम्पूर्णः ॥

---

## २५. ॥ अथ श्रीत्यागेशस्तुतिः ॥

यस्याज्ञया नवच्छिद्रे स्तब्धस्तिष्ठति मारुतः ।
तं नमामि महादेवं त्यागेशं भक्तवत्सलम् ॥ १ ॥

शासनात् पावको यस्य सर्वेषामन्तरा स्थितः ।
तं नमामि महादेवं त्यागेशं भक्तवत्सलम् ॥ २ ॥

बडबामुखवह्निश्च ज्वलत्यब्धौ यदाज्ञया ।
तं नमामि महादेवं त्यागेशं भक्तवत्सलम् ॥ ३ ॥

भूतान्यपि विरुद्धानि मिलितानि यदाज्ञया ।
तं नमामि महादेवं त्यागेशं भक्तवत्सलम् ॥ ४ ॥

फलमन्वेति कर्तारं कर्मणां यस्य शासनात् ।
तं नमामि महादेवं त्यागेशं भक्तवत्सलम् ॥ ५ ॥

विनाधारं जगद्येन साधारमिव निश्चलम् ।
तं नमामि महादेवं त्यागेशं भक्तवत्सलम् ॥ ६ ॥

औषधे वा मणौ मन्त्रे भाति शक्तिर्यदाज्ञया ।
तं नमामि महादेवं त्यागेशं भक्तवत्सलम् ॥ ७ ॥

नात्येति समयं ज्योतिः सिन्धुः कालश्च यद्भयात् ।
तं नमामि महादेवं त्यागेशं भक्तवत्सलम् ॥ ८ ॥

ब्रह्माच्युताद्यविदितं च शिरः पदं ते
नासा शिलाविहित ... सुहृत् प्रियायाः ।
तस्मै नमोऽस्तु भवते प्रणतार्तिहन्त्रे
त्यागेश्वराय मयि देहि दयावलोकम् ॥ ९ ॥

॥ इति श्रीत्यागेशस्तुतिः सम्पूर्णा ॥

---

## २६. ॥ अथ श्रीत्यागराजस्तवः ॥

नीलकन्धर फाललोचन बालचन्द्रशिरोमणे
कालकाल कपालमाल हिमालयाचलजापते ।
शूलहस्त नमूल शङ्कर मूलयोगिवरस्तुत
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ १ ॥

हारकुण्डलमौलिकङ्कणकिङ्किणीकृतपन्नग
भूतिगात्र कुबेरमित्र कलत्रपुत्रसमावृत ।
नारदादिमुनीन्द्रसंनुत नागचर्मकृताम्बर
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ २ ॥

भूतनाथ परान्तकातुलभुक्तिमुक्तिसुखप्रद
शीतलामलमन्दमारुतसेव्यदिव्यकलेबर ।
लोकनायक पाकशासनशोकवारणकारण
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ ३ ॥

शुद्धम(ञ्जु)[दे]लतालकाहलशङ्खदिव्यवरप्रिय
नृत्तगीतरसज्ञ नित्यसुगन्धिगौरशरीर भो ।
चारुहास सुरादिपूजित पूजनीयपदाम्बुज
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ ४ ॥

सर्पराजविभूषणाव्यय चित्सभेश सदाशिव
नन्दिभृङ्गिगणेशवन्दितसुन्दराङ्घ्रिसरोरुह ।
वेदशेखर सर्वसुग्रहनामरूप दयाकर
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ ५ ॥

सारमोहमहान्धकारदिवाकराखिलभुक्तिद
चैकनायक पादपङ्कजसङ्गिचित्तजनामृत ।
पापतूलहुताशनाखि[तु]लकोपवन्मुनिपूजित
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ ६ ॥

पङ्कजासनसूत वेदतुरङ्ग मेरुशरासन
भानुचन्द्ररथाङ्ग भूरथ शेषशायिशिलीमुख ।
मन्दहासशिलीमुख त्रिपुराम्बुधेर्बडबानल
त्यागराज दायानिधे कमलापुरीश्वर पाहि माम् ॥ ७ ॥

दिव्यरत्नमयासनस्थितमेरुतुल्यमहारथ
छत्रचामर बर्हिबर्हसमूह दी[दि]व्यशिखामणे ।
नित्य शुद्ध महावृषध्वज निर्विकल्प निरञ्जन
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ ८ ॥

सर्वलोकविमोहनास्पद तत्पदार्थ वियत्पते
शक्तिविग्रह युक्त्यदीन सुवर्णवर्ण विभूतिमन् ।
पापकेतुदिवाकराक्ष परात्परामितकीर्तिमन्
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ ९ ॥

तात मत्कृतपापवारण दक्षयज्ञभयङ्कर
दारुकावनतापसाधिपसुन्दरीजनमोहक ।
व्याघ्रपादपतञ्जलिस्तुतिसान्द्रसादृशशैलज
त्यागराज दयानिधे कमलापुरीश्वर पाहि माम् ॥ १० ॥

॥ इति श्रीत्यागराजस्तवः सम्पूर्णः ॥

## २७. ॥ अथ श्रीत्यागराजाष्टकम् ॥

चन्द्रार्धचूडाय सदाशिवाय साम्बाय लक्ष्मीपतिसेविताय ।
भक्तानुरक्षाय महेश्वराय त्यागाधिराजाय नमः शिवाय ॥ १ ॥

सुमेरुचापाय सुशोभनाय ब्रह्मेन्द्रनारायाणवन्दिताय ।
वाचाम(धी)[ती]ताय मनोन्मनाय त्यागाधिराजाय नमः शिवाय ॥ २ ॥

वेदान्तवेद्याय विभूतिदाय विराजमानाय शुचिस्मिताय ।
शुद्धाय सूक्ष्माय सुरार्चिताय त्यगाधिराजाय नमः शिवाय ॥ ३ ॥

देवादिदेवाय जगन्मयाय जन्मादिहीनाय निरञ्जनाय ।
राजाधिराजाय सुरेश्वराय त्यागाधिराजाय नमः शिवाय ॥ ४ ॥

रत्नादिभूषाय जटाधराय कल्पान्तहीनाय कलाधराय ।
कालान्तकायाखिलनायकाय त्यागाधिराजाय नमः शिवाय ॥ ५ ॥

पञ्चाननाय फणिराजविभूषणाय स्वर्गापवर्गफलदाय विमोक्षणाय ।
मीमांसकादिभुवनत्रयपालकाय त्यागाधिराजगुरवे च नमः शिवाय ॥ ६ ॥

मुक्ताय लोकस्य परात्पराय पञ्चाक्षरीपाठकमोक्षणाय ।
नेत्राग्निरूपाय जगत्त्रिणेत्रे त्यगाधिराजाय नमः शिवाय ॥ ७ ॥

सिंहासनस्थाय दिगम्बराय शीतांशुवर्णाय जटाधराय ।
श्रीपार्वतीशाय सदाशिवाय त्यागाधिराजाय नमः शिवाय ॥ ८ ॥

॥ इति श्रीत्यागराजाष्टकं सम्पूर्णम् ॥

---

## २८. ॥ अथ श्रीषड्वर्णमन्त्राष्टकम् ॥

धनुर्धरित्रीधरसार्वभौमो मौर्वी च दर्वीकरसार्वभौमः ।
शरस्तु सर्वामरसार्वभौमः पायात्स नो दैवतसार्वभौमः ॥ १ ॥

वेदान्ततत्त्वमथितं नवनीतसारं चिद्रूपहृत्परमशैवरहस्यमन्त्रम् ।
ज्योतिर्मयोज्ज्वलनिरञ्जनरूपमन्त्रं वन्दे षडक्षरिसदाशिवनाममन्त्रम् ॥ २ ॥

अश्रान्तदुर्भवसमुद्रतरीशमन्त्रं पापाम्बुराशिबडानलतुल्यमन्त्रम् ।
ब्रह्माच्युतेन्द्रसुरमौलिजपैकमन्त्रं वन्दे षडक्षरिसदाशिवनाममन्त्रम् ॥ ३ ॥

कामादिवर्गविपिनप्रलयाग्निमन्त्रं दुर्दोषशैलकुलिशाधिकभीममन्त्रम् ।
मायान्धकारपरिशोषितभानुमन्त्रं वन्दे षडक्षरिसदाशिवनाममन्त्रम् ॥ ४ ॥

अत्रष्टयाष्ट[अष्टत्रयाष्ट]पुरवायुविकारकोशक्लेशाष्टपाशबहुदुःखविनाशमन्त्रम् ।
दुश्चिन्तदुर्व्यसनदातृविभेदमन्त्रं वन्दे षडक्षरिसदाशिवनाममन्त्रम् ॥ ५ ॥

पञ्चप्रसादमहिताक्षरबीजमन्त्रं मन्त्राग्रगण्यभुवनस्तुतमन्त्रराजम् ।
सर्वोऽपि मन्त्रजनकप्रणवात्ममन्त्रं वन्दे षडक्षरिसदाशिवनाममन्त्रम् ॥ ६ ॥

ओङ्कारबिन्दुसहिताधिकशक्तिबीजं पञ्चाक्षरत्रितयवर्णकमेकवर्णम्
एकादशाक्षरसमन्वितहंसमन्त्रं वन्दे षडक्षरिसदाशिवनाममन्त्रम् ॥ ७ ॥

श्रीसज्जनात्मबहिरन्तरदी(त्कराग्र)[प्रिकृद्र]क्षाभागगर्भितनिरन्तरघोषमन्त्रम्।
षट्चक्रमण्टपविहारविशुद्धमन्त्रं वन्दे षडक्षरिसदाशिवनाममन्त्रम् ॥ ८ ॥

षडवर्णमन्त्राष्टकमद्भुतार्थं सर्वागमप्रोक्तजगत्प्रकाशम् ।
यः संपठेन्मुक्तिसमस्तभोगान् प्राप्नोति सत्यं सति सिद्धमन्त्रम् ॥ ९ ॥

॥ इति श्रीषड्वर्णमन्त्राष्टकं सम्पूर्णम् ॥

---

## २९. ॥ अथ श्रीपञ्चलिङ्गस्तोत्रम् ॥

ताम्रयुग्विलेपितं दिगम्बरोपशोभितं
वनभ्रमाद्विहारितं विडम्बिताण्डवं नटम् ।
धूम्रयुक्तलोचनं सधूम्रदिव्यभाषितं
महाप्रतिष्ठमुर्वितमेकाम्बरेश्वरं भजे (?) ॥ १ ॥

ध्यायते सुनिर्गुणं सहायते सुरावलिं
हयायते चतुःश्रुतिं हरायते महाखलम् ।
लीयते चराचरं प्रभायते चतुर्यमं [च यामिनीं]
प्रीयते विशाखज[म]म्बुनायकेश्वरं भजे ॥ २ ॥

बाणभक्तवत्सलं कृपाणहस्तमण्डितं
करेण चैणधारिणं पुराणपौरुषाञ्चितम् ।
स्थाणुरूपरञ्जनं प्रमाणमग्निसेवनं
धुरीणलोकधारिणं च शोणनायकं भजे ॥ ३ ॥

निस्तुलप्रशस्तसुप्रशस्तनन्दिवाहनं
करस्थले धनञ्जयं भुजस्थले फणाधरम् ।
अस्थिमाल्यशोभितं पदस्थलं सुवायुसे-
वितस्थलप्रबोधकालहस्तिनायकं भजे ॥ ४ ॥

अम्बुजासनार्चितं विडम्बमानसोज्ज्वलं
करांम्बुजाम्बुधीश्वरं महाम्बुशक्तिधारिणम् ।
कुम्भिनीमहारथं[च]जम्भभेदिवन्दितं
त्रियम्बि(कुम्भि)काधवं[शिवं]चिदम्बरेश्वरं भजे ॥ ५ ॥

वटविटपिसमीपे भूमिभागे निषण्णं
सकलमुनिजनानां ज्ञानदातारमारात् ।
त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं
जननमरणदुःखच्छेददक्षं नमामि ॥ ६ ॥

॥ इति श्रीपञ्चलिङ्गस्तोत्रं सम्पूर्णम् ॥

---

## ३०. ॥ अथ श्रीमहादेवाष्टकम् ॥

मोक्षलक्ष्मीगृहद्वारकवाटोद्घाटनध्वनिः ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥ १ ॥

वैवस्वतमहाराजमौलिसङ्कुट्टनध्वनिः ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥ २ ॥

कैलासनगरद्वारमहाघण्टारवध्वनिः ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥ ३ ॥

महापातकमत्तेभत्रासकण्ठीरवध्वनिः ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥ ४ ॥

महेश्वरमहोक्षस्य घण्टाघणघणध्वनिः ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥ ५ ॥

मुक्त्यङ्गनाकरस्पर्शविवाहपटहध्वनिः ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥ ६ ॥

मत्सेवनासमायातजयश्रीदुन्दुभिध्वनिः ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥ ७ ॥

पापाटवीप्रविष्टाग्निज्वालाचटचटध्वनिः ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥ ८ ॥

महादेवस्य वाग्वल्ली चतुरक्षरपल्लवा ।
भक्तिसिद्धा भवत्येषा चतुर्वर्गफलप्रदा ॥ ९ ॥

॥ इति श्रीमहादेवाष्टकं सम्पूर्णम् ॥

---

## ३१. ॥ अथ श्रीगणेशपूर्वशतकम् ॥

सत्यज्ञानानन्दं गजवदनं नौमि सिद्धिबुद्धीशम् ।
कुर्वे गणेशशतकं कुतुकेनाहं स्वबुद्धिशुद्ध्यर्थम् ॥ १ ॥

दिङ्मात्रेण गणपतेर्गुणगणविभवादिवर्णनारूपम् ।
प्रायो वैनायककृतिविदितमतप्रक्रियाविवृतिपूर्वम् ॥ २ ॥

यद्यपि मन्दमतिरहं गुणलवमवगन्तुमतितरां नालम् ।
प्रयते तथापि वदितुं लम्बोदर ते दयावलम्बेन ॥ ३ ॥

जगतः सर्गादाद्यात् प्रागप्येकस्त्वमेव भासि विभो ।
तस्माद्गणप भवन्तं निखिलनिदानं गदन्ति निगमान्ताः ॥ ४ ॥

त्वमतो मायातीतं सकलजगत्कल्पनाद्यधिष्ठानम् ।
अद्वैतसीमभूतं वाङ्मानसागोचरं परं ब्रह्म ॥ ५ ॥

सगुणब्रह्मात्मानो गणपतिशिवशक्तिकेशवार्का ये ।
तेषां कारणमाहुः शुद्धाद्वैतानुगा यमात्मानम् ॥ ६ ॥

यः सर्ववेदवेद्यस्तत्त्वमसिपदाद्यतीतरूपो यः ।
यो योगिवृन्दमृग्यः परमात्मानं तमाश्रये नित्यम् ॥ ७ ॥

यत्पूर्णयोगलभ्यं भूमात्मकमामनन्ति गाणपताः ।
शुद्धं स्वमहिमसंस्थं ब्रह्मास्मिन् मे मनः सदा स्मरताम् ॥ ८ ॥

भूमा ब्रह्मैतत् ते षष्ठं गणपं च पञ्चमं प्राहुः ।
तुर्यं गणेशमस्य हि कार्यान् सगुणात्मनोऽपि तान् पञ्च ॥ ९ ॥

तत्रोपासनकाण्डे परकाष्ठाभूतमसिपदार्थमयम् ।
स्वानन्दं ब्रह्मैतद्गजवदनमहं भजे जगद्वन्द्यम् ॥ १० ॥

गाणपतपुङ्गवाः किल पादमयान्यस्य पञ्चमस्याहुः ।
शैवाद्वैतादीनां मुख्यब्रह्माणि यानि चत्वारि ॥ ११ ॥

अव्याकृतं तुरीयं ब्रह्म त्रिगुणात्मकं गु[ग]णेशाख्यम् ।
विद्यात्मकं गणपते सततं दूरीकरोतु मम दुरितम् ॥ १२ ॥

यस्य हि नाभिर्ब्रह्मा वदनं विष्णुश्च लोचनं रुद्रः ।
शक्तिश्च वामपार्श्वे दक्षिणमर्कोऽस्मितामयस्त्वात्मा (?) ॥ १३ ॥

जाग्रत्स्वप्नसुषुप्तब्रह्म त्रिगुणात्मकं च यत्प्रोक्तम् ।
व्याकृतमाविद्यकमपि तदपि व्यक्तं चकास्तु मे चित्ते ॥ १४ ॥

ब्रह्म स्वानन्दात्मकविद्याऽविद्यात्मकप्रभेदेन ।
भूमब्रह्म चतुष्पात् प्रकाशतां मेऽनिशं हृदाकाशे ॥ १५ ॥

मायासमरसयुक्तं शान्तिगतं निष्कलं परं ज्योतिः ।
यद्ब्रह्म पादरूपं गाणेशाद्वैतलक्ष्यभूतमसि ॥ १६ ॥

[यो ब्रह्मपाद आद्यः संयोगायोगपादयुगयुक्तः ।
तौ पादावप्युदितावध्यारोपापवादपरकाष्ठे ॥]

सदसत्सहजसमात्मकचतुर्विधानन्दपादरूपस्त्वम् ।
रविशक्तीशहरीणां सङ्घातस्त्वं श्रुतोऽसि गणराज ॥ १७ ॥

बिन्दुः सोऽहम्बोधः साङ्ख्यश्चेति प्रसिद्धभेदयुतः ।
विद्यापादोऽपि त्वं योगिसमाधौ गृहीतसुविशेषः ॥ १८ ॥

तुर्याविद्यापादस्त्वमेव सत्यानृतो जगद्रूपः ।
स विराट् हिरण्यगर्भावीशगुणेशाविति प्रभेदयुतः ॥ १९ ॥

ब्रह्मांशस्थितिभेदाः सर्वे चैते स्फुरन्तु मम चित्ते ।
प्रायोऽसम्प्रज्ञातसमाधिज्ञेया गणेश करुणाब्धे ॥ २० ॥

सिद्धिर्बुद्धिश्चेति द्विधा हि वैनायकी महामाया ।
लोकैकनायिका सा तदुपाधिवशात् किलासि बहुधा त्वम् ॥ २१ ॥

एवं मायोपाधिकपरात्मरूपं हि पञ्चधा भिन्नम् ।
तदवस्थागुणभेदान्नीरूपस्यापि ते समाम्नातम् ॥ २२ ॥

सद्ब्रह्म किल प्रथमं सकलजगद्बीजभूतरूपं त्वम् ।
मूर्तिं विनायक इति स्वेच्छावशतो गणेश गृह्णासि ॥ २३ ॥

बीजस्य भूमिरूपा केवलमायाद्वितीयमूर्तिस्ते ।
वर्तयति कृत्यमखिलं भुवनेशी सा शिवो पराशक्तिः ॥ २४ ॥

मायेशं तु तृतीयं रविमण्डलगं हिरण्मयं पुरुषम् ।
त्वामामनन्ति वेदा ह्यनवरतं कालचक्रनेतारम् ॥ २५ ॥

उपहिततुरीयमूर्तिर्मायायुक्तः परः शिवो गिरिशः ।
कल्पान्तकालरूपी त्वमेव सर्वं च सञ्जरीहर्षि ॥ २६ ॥

मायामयो हि विष्णुर्मायोपाधेश्च पञ्चमी मूर्तिः ।
सोऽपि त्वमेव निखिलं लोकं पालयसि लीलया सततम् ॥ २७ ॥

एवं मायावशतो रविशिवशक्त्यादिनामपञ्चकभाक् ।
दिशतु मदीप्सितमखिलं शुद्धब्रह्मात्मकं भवद्रूपम् ॥ २८ ॥

मायाबद्धः षष्ठः प्रथमशरीरी हिरण्यगर्भस्त्वम् ।
तत्तत्कर्मानुगुणं करोषि सर्गं समस्तलोकस्य ॥ २९ ॥

प्राक् पञ्चासनरूपग्रहणाद्भवतोऽप्युपाधितो भिन्नाः ।
एताश्च सगुणमूर्तीरालम्ब्य मतानि पञ्च जातानि ॥ ३० ॥

एते हि पञ्च देवाः स्वस्वाधारेषु सन्ति सर्वत्र ।
वर्णस्वधर्मविभवात्तेजोरूपास्त्रिवर्णदेहेषु ॥ ३१ ॥

गायत्रीग्रहणेन हि तत्ततेजो विशेषतो भाति ।
तत्तज्जातिगुणा अप्युत्कृष्टत्वेन तेन जायन्ते ॥ ३२ ॥

मूलाधारे गणपो मणिपूरे हरिरनाहते शम्भुः ।
राजति रविर्विशुद्धौ ब्रह्मरन्ध्रे शिवा परा शक्तिः ॥ ३३ ॥

अपि च षडाधारेषु प्राप्यैवं ध्यानयोगचित्तलयौ ।
मुक्ता भवन्ति तस्मात् पञ्चायतनार्चनेऽतिहर्षस्ते ॥ ३४ ॥

गणपतिपञ्चायतनं पञ्चायतनं रवीश्वरादीनाम् ।
यद्वा तद्वा कृतमपि पूजाविषयेऽतिमात्रतृप्तिस्ते ॥ ३५ ॥

प्रासादशुद्धपूजा अत एव विहाय पञ्चदेवानाम् ।
पञ्चायतनसपर्यां सगुणसमष्ट्यर्चनां वदन्ति बुधाः ॥ ३६ ॥

हर्यादिगणेशान्ताः पञ्चैता ब्रह्ममूर्तयो मुनिभिः ।
अत एव प्रणवस्य च गायत्र्याश्चापि देवताः प्रोक्ताः ॥ ३७ ॥

व्याचक्षते हि ऋषयो गायत्र्याः पञ्चदेवतापराम् ।
प्रणवस्यापि तथैव प्रपञ्चयन्ति स्म पञ्चधाप्यर्थान् ॥ ३८ ॥

अत एषां पञ्चानां ब्रह्मत्वनिरूपणे निष्णाताः ।
उत्तरमीमांसाः षट् शुद्धाद्वैतेन तेनिरे मुनयः ॥ ३९ ॥

प्रतिपादयन्ति चैते यद्यप्यापाततो विभिन्नान् वै ।
सर्वेषां हि ऋषीणां प्रायस्त्वय्येव परमतात्पर्यम् ॥ ४० ॥

एते पञ्च मतस्था भवतः सर्वेषु पूर्वपूज्यत्वम् ।
विघ्नाधिपत्यमङ्गीकुर्वन्ति यतो गणाधिपत्यं च ॥ ४१ ॥

भूगतबीजादि यथा पादपरूपेण जायते जगति ।
ब्रह्मैव बीजभूतं प्रकृतिः पृथिवी तया हि संयोगात् ॥ ४२ ॥

कारणसूक्ष्मस्थूलप्रपञ्चरूपेण जायते क्रमशः ।
मूलं गणपतिरूपं प्रपञ्चरूपस्य पादपस्यैवम् ॥ ४३ ॥

बुद्धिः सिद्धिश्च फले मूलं गणपोऽस्य विश्वरूपतरोः ।
शाखाः केशाः कन्दं त्वर्कोऽखिलमूलमुच्यसेऽतस्त्वम् ॥ ४४ ॥

मूले जलसेकात् किल तरुपत्रफलादयोऽपि वर्धन्ते ।
तव पूजया गणपते रविशिवशक्त्यादयोऽपि तृप्यन्ति ॥ ४५ ॥

एवं सगुणब्रह्मव्यपदेशवतां च पञ्च देवानाम् ।
पूर्णकलांशांशांशावताररूपाश्च मूर्तयोऽनन्ताः ॥ ४६ ॥

भवतः कतिपयमूर्तीराविर्भावावतारतारमुखाः ।
वैनायकमतविदितप्रक्रिययैव ब्रवीमि हेरम्ब ॥ ४७ ॥

सत्यं ज्ञानमनन्तं ज्योतीरूपं च निर्गुणं ब्रह्म ।
एतन्निर्व्यापारं गजपदवाच्यं लयादिहेतुत्वात् ॥ ४८ ॥

योगीन्द्रा गच्छन्ति हि समाधिनात्रेति गः स्मृतो मुनिभिः ।
प्रणवात्मकजगदस्माज्जायत इति जः स्मृतिप्रतीतार्थः ॥ ४९ ॥

गश्चासौ जश्चेति व्युत्पादयति स्मृतिर्हि गजशब्दम् ।
एष प्रतिपदायति प्रभवाप्ययकारणं परं ब्रह्म ॥ ५० ॥

मूलप्रकृतिस्त्रिगुणा शुक्तौ रजतं यथा ततो जाता ।
तद्गतचित्प्रतिबिम्बं सगुणब्रह्मेति कीर्तितं मुनिभिः ॥ ५१ ॥

ओङ्कारब्रह्मेति च नर इति नाम्नी प्रकीर्तिते तस्य ।
सकलज्योतीरूपं सगुणस्योक्तं हि तत्त्वविद्भिः ॥ ५२ ॥

मूलाविद्यागतनरमद्वैतब्रह्मरूपमपि बिभ्रत् ।
निर्गुणसगुणज्योतीरूमुभयथा तृतीयमप्युक्तम् ॥ ५३ ॥

अद्वैत इति सदात्मेत्याम्नायन्ते तथा महावाक्याः ।
इत्युक्तानि क्रमतो नामान्येषां स्मृतीतिहासादौ ॥ ५४ ॥

नरवाच्यसकलरूपो गजवाच्यो निष्कलस्वरूपस्त्वम् ।
विघ्नेश सकलनिष्कलरूपमहावाक्यमूर्तिधारी त्वम् ॥ ५५ ॥

ओं तत्सदिति हि भेदाद्ब्रह्म प्रोक्तं त्रिधा सुधीभिरपि ।
प्रथितं मूर्तममूर्तं मूर्तामूर्तं त्रिधा तदेवमपि ॥ ५६ ॥

नामान्तराणि सर्वाण्येतान्युदितानि वेदशीर्षेषु ।
कमलावल्लभ भवतः पूर्वोक्तत्रिविधरूपधारयितुः ॥ ५७ ॥

अपि चान्यानि गणपते नामानि सहस्रशः प्रसिद्धानि ।
कर्मज्ञानोपासनकाण्डेषु पृथग्विनायकादीनि ॥ ५८ ॥

निर्गुणरूपध्यानं न साधकानां प्रसिध्यति क्षिप्रम् ।
तदनुग्रहाय धरसे[धत्से]धीपरिपाकानुरूपरूपाणि ॥ ५९ ॥

मन्दाधिकारिणामपि यथा रुचिः स्यात्तदानुगुण्येन ।
विग्रहवरा गृहीताः सर्वे ते मां सदानुगृह्णन्तु ॥ ६० ॥

कैलासे वैकुण्ठे हिरण्मयपुरे च या मणिद्वीपे ।
पूज्यन्तेऽन्यस्मिन् वा सर्वा मूर्तीश्च तास्तवोपासे ॥ ६१ ॥

अष्टोत्तरं शतं वा सहस्रमत्यष्ट[मधिका]श्च मूर्तयो वा ते ।
मुख्यत्वेन ख्याताः खेलन्त्वखिलाः सदा मम स्वान्ते ॥ ६२ ॥

काश्चन पत्नीहीना बहुशक्तियुताश्च मूर्तयः काश्चित् ।
पान्त्वेकदन्त भवतोऽप्येकव्यष्टादिशक्तयः सर्वाः ॥ ६३ ॥

बहुफलपुष्पमहीरुहनिकरारामं निघाटितकवाटम् ।
आरामेशसमीपे निष्ठन् [कृत्वाह्यारामेशितृसविधे]
यथोपवनपालः (?) ॥ ६४ ॥

नोद्घाटयति कवाटं स्वाम्यादेशं विना प्रवेशाय ।
तद्वन्नोद्घाटयति स्वाधिष्ठानादि निजकवाटानि ॥ ६५ ॥

सर्वशरीरिशरीरे मूलाधारस्थिता हि कुण्डलिनी ।
[मूलाधारस्थकुण्डलिनीशक्तिः]
आवृत्य षडाधारान् मृद्भाण्डमिवास्ति मूलवह्नेर्या ॥ ६६ ॥

यद्वच्छमीद्रुमेऽग्निस्तद्वन्मूलानले भवान[गणेशो]स्ति ।
तत्रत्यसिद्धिबुद्धया[द्धि]युतभवदाज्ञां[गणपाज्ञां]विना कदाचिदपि ॥ ६७ ॥

यदि तव पूजा क्रियते विनायकोद्घाटिताः षडाधाराः ।
अत एव पूर्वपूज्यः सर्वा[कर्मा]रम्भे त्वमेव देवाद्यैः ॥ ६८ ॥

शुक्लाम्बरेतिमन्त्रं प्रोच्चार्य चतुर्मुखादयोऽपि त्वाम् ।
श्वेतविनायकमूर्तिं ध्यात्वा कुर्वन्ति कुट्टनं मुष्ट्या ॥ ६९ ॥

सर्वशरीरिशिरस्था मूर्धनि करकुट्टनात् सुधा गलिता ।
पतति सुषुम्नानाडिद्वारा मूलादुपर्युपोद्गतया ॥ ७० ॥

सिद्ध्या बुद्ध्या च युते मूलाधारस्थगणपतौ भवति ।
तेन प्रसीदति भवान् करोति कर्मार्हमन्तरात्मानम् ॥ ७१ ॥

तादृशकुट्टनतुष्टं श्वेतविनायकमनारतं कलये ।
पीयूषमथनसमये पुरुहूतमुखैश्च पूजितो योऽभूत् ॥ ७२ ॥

भवतस्तेजोरूपं नरामराद्यैर्न शक्यते द्रष्टुम् ।
अत एव नयनविषयं गृह्णासि त्वं गजाननशरीरम् ७३ ॥

नृगजात्मकरूपत्वान्निर्गुणसगुणस्वरूपवत्त्वाच्च ।
हेलम्बोदर[स्यादेकदन्त]भवतो गजाननाख्या सुविश्रुताम्नाये ॥७४॥

गजपदवाच्यं हि मुखं प्रथमं कार्यं हि यस्य देवस्य ।
अत एव वा स कथितो गजमुखनामेति मन्वते मुनयः ॥ ७५ ॥

त्यक्त्वा मायावदनं गजवदनं निर्गुणं दधौ देवः ।
यो लीलया गणेशस्तं त्वां शरणं सदा प्रपद्येऽहम् ॥ ७६ ॥

विगतो नायक इति सा विनायकाख्या श्रुतौ समाम्नाता ।
सर्वेषां हि विशेषान्नायक इत्यप्यभिप्रयन्त्यर्थम् ॥ ७७ ॥

विघ्नोऽभिहितो जगतां सामर्थ्यस्य हि विशेषतो हननात् ।
उक्तः स एव कालस्तन्नाथत्वात् त्वमेव विघ्नेशः ॥ ७८ ॥

जीवेश्वरा हि वशगा भवन्ति कालात्मनः परेशस्य ।
तदधीश्वरस्य भवतो विघ्नेशत्वे किमस्ति वक्तव्यम् ॥ ७९ ॥

सर्वब्रह्माण्डानां स्वतन्त्रदेवो विनायको राजा ।
राजप्रतिनिधिरर्कः सहायभूता शिवा महाराज्ञी ॥ ८० ॥

सृष्टिस्थितिसंहारान् कर्तारो धातृहरिगिरीशाश्च ।
राज्याधिकारसचिवाः सन्ति भवानी दिवाकराद्याश्च ॥ ८१ ॥

यद्राज्यरक्षणायैतत्सेनापतितां गुहो महासेनः ।
तज्ज्येष्ठराजनामा गजाननोऽभूदितीरितं मुनिभिः ॥ ८२ ॥

यस्य ज्येष्ठाभावाज्ज्येष्ठत्वादपि च राजभाववताम् ।
तज्ज्येष्ठराजनाम प्रोक्तं स सदा विराजतां चित्ते ॥ ८३ ॥

यस्योदरमवलम्बश्चराचराणां हि सर्वजन्तूनाम् ।
मातापितरावपि [प्रलये स्थित्यादावपि] [जन्मादावपि]
यः सदैव लम्बोदरं तमवलम्बे ॥ ८४ ॥

शूर्पस्तुषमिव कलुषं निरस्यतीत्यस्य शूर्पकर्णाख्या [कर्णादस्यति हि शूर्पकर्णोऽतः]
विगलितरजस्तमोमलमतिपूतं मां करोतु स गणेशः ॥ ८५ ॥

ब्रह्मात्ममस्तकत्वात् कण्ठाधो मायिकस्वरूपत्वात् ।
वक्रं देहविलक्षणमस्य तु तुण्डं स वक्रतुण्डोऽतः ॥ ८६ ॥

मायावाचक एकः दन्तः सत्तात्मवाचकश्च तयोः ।
योगो गणेश इत्यत उक्तोऽसावेकदन्ताम्नापि ॥ ८७ ॥

ब्रह्मात्मनां पतित्वान्मायागौरीमहेश्वरादीनाम् ।
अन्नप्राणप्रभृतिप्रणवान्तब्रह्मणां पतित्वाच्च ॥ ८८ ॥

यं ब्रह्मणस्पतिरिति प्राहुर्वेदाधिपत्यतोऽप्येवम् ।
तमहं सर्वाधीशं सततं परिशीलयामि विघ्नेशम् ॥ ८९ ॥

ब्रह्मादिस्तम्बान्तप्राणिगणानामधीश्वरो यतः ।
सगुणब्रह्मगणानामपि तस्मात् त्वं गणेश इत्युक्तः ॥ ९० ॥

यन्नामरूपभोगान् मायागूढोऽन्तरेव मुष्णाति ।
तन्मूषकः स्ववाहो यस्य स गणपो विहरतु मम मनसि ॥ ९१ ॥

मूलप्रकृतिः पत्नी जहाति चैनां तु भुक्तभोगां यः ।
पत्नीहीनोऽभिहितस्ततो गजास्योऽनिशं स मां पातु ॥ ९२ ॥

ब्रह्मणि वेदे चरतीत्यर्थमभिप्रेत्य वेदगम्यत्वात् ।
तं ब्रह्मचारिशब्दं कुञ्जरवदने प्रयुञ्जते कवयः ॥ ९३ ॥

ब्रह्मात्ममस्तकत्वात्तस्य महावाक्यगणपतेश्च विभोः ।
तेन च सहसञ्चारादाहुर्वा ब्रह्मचारीति ॥ ९४ ॥

आत्मारामत्वादपि चरति ब्रह्मण्यबाह्यवृत्तिरिति ।
यमिहामनन्ति मुनयः पायात्स ब्रह्मचारिदेवो [गणपो] माम् ॥ ९५ ॥

सन् द्वापरे पराशरपुत्रः सिन्दूरदानवं न्यवधीत् ।
यद्ब्रह्मचर्यवर्ती गदितोऽतो ब्रह्मचारिशब्देन ॥ ९६ ॥

विमलकमण्डलुतटिनीतीरमयूरेशनगरवर्ये यः ।
भूस्वानन्दे सुचिरादाविर्भूतोऽद्भुतानि कृत्यानि ॥ ९७ ॥

लोकानुकूलभूतान् सिन्धुवधादींश्च बहुविधान् व्यदधात् ।
निखिलानुग्रहनिरतः सततं द्वैमातुरः स मां पायात् ॥ ९८ ॥

यत्कोपपावकार्चिष्यसुरौ चण्डप्रचण्डनामानौ ।
प्राप्तौ पतङ्गभावं पालयतु स मां सदैव विघ्नेशः ॥ ९९ ॥

यश्चाष्टगन्धनिर्मितचन्दनगणपो पुरा भृगोः सुतया ।
रमया प्रपूजितः सन् विवाहसमये पुराणपुरुषस्य ॥ १०० ॥

दुर्गन्धासुरमवधीन्मधुकैटभमेदसः समुद्भूतम् ।
योऽपि च गव्यगणपतिर्महितो गोलोकराधया पूर्वम् (?) ॥ १०१ ॥

गव्यैः पयोदधिघृतैर्जघान पापासुरं दुरात्मानम् ।
वरिवस्याम्यनवरतं तं विघ्नेशं दयापयोराशिम् ॥ १०२ ॥

यं हारिद्रगणपतिं हिमवद्दुहिता महेश्वरश्चापि ।
स्वीये विवाहसमये ह्यपूजयेतां च दम्पती प्राञ्चौ ॥ १०३ ॥

यश्च हरिद्राबिम्बादाविर्भूतो गणेश्वरः सद्यः ।
अवधीदमङ्गलासुरमन्यमपस्मारनामकं ह्यसुरम् ॥ १०४ ॥

गौरीहरवचनाद्यं च शुभादौ प्रपूजयन्त्यद्य ।
मम हारिद्रगणपतिर्हरतु स दुरितं समस्तमपि सद्यः ॥ १०५ ॥

कृतयुगसमये योऽसौ काश्यपपुत्रो महोत्कटो भूत्वा ।
देवान्तकं नरान्तकमपि नाम्ना तावहन्महादुष्टौ ॥ १०६ ॥

प्रापयदानन्दभुवं सशरीरं काशिराजमपि भक्तम् ।
अकरोचाद्भुतलीलामहोत्कटं त्वामहं सदार्हामि ॥ १०७ ॥

योऽपि वरेण्याय पुरा गणेशगीतां हितामुपदिदेश ।
स वरेण्यराजपुत्रो गजाननो मे तनोतु कुशलततिम् १०८ ॥

धूम्रविनायकमूर्तिं ग्रहीष्यसि त्वं कलेर्युगस्यान्ते ।
सर्वांश्च निग्रहिष्यसि विप्लुतमतकृत्यनास्तिकप्रायान् ॥ १०९ ॥

शिश्नोदरमात्रपरा जातिविभागादिवर्जिताः सर्वे ।
धूम्रविनायक[धूमध्वजेन]भवता समूलघातं हता भविष्यन्ति॥११०॥

॥ इति श्रीगणेशपूर्वशतकं सम्पूर्णम् ॥

---

## ३२. ॥ अथ श्रीगणेशोत्तरशतकम् ॥

एवं सृष्ट्यवनादीन् ब्रह्माण्डानामनेककोटीनाम् ।
कुर्वन् क्रीडावशतो विनायकत्वं विराजसे मुदितः ॥ १ ॥

भौतिकपरमाणूनां पुञ्जैर्जातं यथा नरशरीरम् ।
ब्रह्माण्डात्मविराजो वपुर्हि जातं तथैव बहुगोलैः ॥ २ ॥

चन्द्राद्या उपगोलास्तेषु हि विश्वम्भरादयो गोलाः ।
सूर्यादिमहागोलाः सुमणिद्वीपादयः परमगोलाः ॥ ३ ॥

सर्वावयवसुपूर्णो मातुर्गर्भे यथा शिशुर्भवति ।
एवं बहुविधगोलैः पूर्णावयवं विराट्स्वरूपं तत् ॥ ४ ॥

तस्य विराजो देहे कटयूर्ध्वे चैकविंशतिस्वर्गाः ।
षोढा विभागवन्तस्तेषां मध्ये ह्य[त्व]यं परमगोलः ॥ ५ ॥

द्वीपश्चिन्तामणिरिति मूलाधारो विराट्शरीरस्य ।
ब्रह्माण्डमध्यदेशे तिष्ठत्यचलः सदा निरालम्बः ॥ ६ ॥

परमात्मकल्पितेषु स्वपथेषु गोळा यथा भ्रमन्त्यन्ये ।
न कदापि तथा भ्राम्यति चिन्तामणिरित्ययं परमगोलः ॥ ७ ॥

तत्तद्ब्रह्माण्डात्मकविराट्समूहो महाविराड्ब्रह्म ।
तस्य हि सर्वावयवा निखिलैर्ब्रह्माण्डकोटिभिः पूर्णः ॥ ८ ॥

अखिलाण्डकोटिसमुदयजगदात्माभून्महाविराट्पुरुषः ।
ब्रह्माण्डकोटिमध्ये मूलप्रकृतिस्वरूपको द्वीपः ॥ ९ ॥

नाम्ना चिन्तामणिरिति मूलाधारे महाविराड्रूपे ।
सहसिद्धिबुद्धिरस्मिन् सगुणमहावाक्यगणपतिर्भवसि ॥ १० ॥

मूलाविद्याप्रतिगतदेवस्त्वं हि प्लुतप्रणवरूपी ।
विरिञ्चिहरिहररविभिस्तेषां शक्त्यात्मजादिभिर्विनुतः ॥ ११ ॥

एकार्णपत्तनाभिधमूलस्थानं विभाति तन्मध्ये ।
तत्रापि कल्पवृक्षोद्यानगतोङ्कारमण्टपो भाति ॥ १२ ॥

सिंहासने हि चिन्तामणिमयसोपानसंयुते तस्मिन् ।
एकाक्षरगणपतिमहमनिशं ध्यायामि सिद्धिबुद्धियुतम् ॥ १३ ॥

तत्र मयूरेशादिममूर्तिविशेषान् समन्ततोऽभिगतान् ।
तच्छक्तिमूर्तिसहितान् सहपरिवारान् समाश्रये सततम् ॥ १४ ॥

तत्र प्रथमावरणे युवराडव्यक्तगणपतिं वन्दे ।
गणकं हंसगणपतिं भजेऽहमन्यांस्तदीयपरिवारान् ॥ १५ ॥

अद्भुतरचनावत्यस्तत्र चतुष्षष्टिविधयः सन्ति ।
तत्तत्स्थलाधिकारानुरूपगणपाश्च कोटिशः सन्ति ॥ १६ ॥

नात्रत्यवैभवादीन् शेषोऽपीष्टे यथावदाख्यातुम् ।
अत्यल्पबुद्धिविभवः प्रभुर्भवेयं कथं नु वर्णयितुम् ॥ १७ ॥

एकार्णपत्तनस्य तु दक्षिणपार्श्वे पुरं वरं भवति ।
नाम्ना षडर्णपत्तनमाज्ञास्थानं स्थलं हि कृत्यानाम् [कार्याणाम्]॥१८॥

अत्र हि षडर्णरूपी निजशक्तिभ्यां चकास्ति विघ्नेशः ।
तं त्वां नमामि सततं प्रायः प्रागुदितवैभवादियुतम् ॥ १९ ॥

निचितचतुर्दशभुवनं सप्तमहाद्वीपवसुमतीमध्यम् ।
लोकालोकवलयितं ब्रह्माण्डमिदं तथान्यदपि सर्वम् ।। २० ।।

गगने खद्योत इव ह्यण्डः प्रद्योततेऽयमेकैकः ।
अण्वणुमात्रावयवः परिणतजगदाकृतेः किल [महा]प्रकृते ।। २१ ।।

निखिलब्रह्माण्डोपरिभागे स्वानन्दभवनलोकस्ते ।
अन्वर्थनामधेयो मुद्गलकपिलादियोगिभजनीयः ।। २२ ।।

स द्वादशान्तदेशो महाविराजोऽखिलाण्डरूपस्य ।
ऐक्षवसागरमध्ये प्रदीप्यते कोटियोजनं विततः ।। २३ ।।

कोटिदिवाकरदीप्तिर्यत्र च पुरुषार्थसम्परिसमाप्तिः ।
यत्र न पुनरावृत्तिर्यश्च महावाक्यगणपतेर्वसतिः ।। २४ ।।

तत्र हि मूलस्थानं शतयोजनविस्तृतायतोत्तुङ्गम् ।
ओङ्कारवलयरूपामृतसागरमध्यगं विभाति तव ।। २५ ।।

तत्र सहस्रस्तम्भे चिन्तामणिमण्टपे विचित्रतमे ।
एकाक्षरपीठे तव तेजोमयविग्रहं हृदा कलये ।। २६ ।।

भवदीयसव्यभागे स्मितवदनां ब्रह्मभावदां दयिताम् ।
ध्यायामि सिद्धिदेवीं पीताम्बरधारिणीं च जगदम्बाम् ।। २७ ।।

कल्हारकुसुममालां कस्तूरीतिलकविज्वलत्फालाम् ।
करुणापूर्णकटाक्षां कनकसवर्णा[सदृक्षां]ञ्च मोक्षलक्ष्मीं ताम् ।।२८।।

शशिशेखरां त्रिणयनां सुवर्णसरसीरुहे सुखासीनाम् ।
भासुरसर्वविभूषणबृन्दां सर्वाङ्गसुन्दरीं वन्दे ।। २९ ।।

ध्यायामि बुद्धिदेवीं ब्रह्मज्ञानप्रदयिनीं दयिताम् ।
भवदीयदक्षभागे घनसारतुषारसन्निभशरीराम् ।। ३० ।।

मन्दस्मितमुखपद्मां मन्दारमुखप्रसूनकृतमालाम् ।
वन्दारुमधुज[भजन]लोलां बृन्दारकमुख्यमृग्यपदमूलाम् ।। ३१ ।।

कस्तूरिकाविशेषकविलसितनिटिलां गणेशकृतलीलाम् ।
सिततामरसासीनां त्रिलोचनां चन्द्रशेखरां रुचिराम् ।। ३२ ।।

भवतो भवनं परितः प्रथमावरणे विचित्ररत्नानि ।
क्रीडागानादीनि स्थानानि मनोहराणि सुबहूनि ।। ३३ ।।

तत्तत्स्थानानुगुणं गृहीतकमनीयविग्रहविशेषः ।
सिद्ध्या बुद्ध्या च युतो विहरसि मुदितस्तदर्हपरिवारः ।। ३४ ।।

कन्दर्पकोटिपरिभूसौन्दर्यझरीतरङ्गिताकाराः ।
क्रीडागानादिगता मङ्गलमूर्तीश्च मन्महे मनसि ॥ ३५ ॥

भवतः कटाक्षवीक्षां प्रतीक्षमाणाश्च किङ्करप्रवराः ।
आज्ञाकरणप्रवणा अभ्यर्णे सन्ति कोटिकोटिगणाः ॥ ३६ ॥

भवतो हि वामपूर्वे किञ्चिन्न्यूने महेन्द्रमणिपीठे ।
आसीनं युवराजं सिद्धिसुताऽव्यक्तगणपतिं वन्दे ॥ ३७ ॥

दूर्वादलवच्छ्यामलकोमलमूर्तिं निशाकरापीडम् ।
कन्दर्पसुन्दराङ्गं कौस्तुभचिन्तामणिप्रभादीप्रम् ॥ ३८ ॥

निजलोकवासिसर्वाभीप्सितविज्ञापनादिवार्तानाम् ।
विज्ञापयति विशेषान् स किल महावाक्यगणपतेः सविधे[भवते] ॥ ३९ ॥

भवदीयसन्निधाने तस्मादन्यो न कोऽपि गणवर्गः ।
गन्तुं स्थातुं वापि प्रभवति किमुत प्रभाषणादिविधौ ॥ ४० ॥

अपि चाव्यक्तनिवेदितनिजभक्तजनानुकूलकृत्यानि ।
आकर्णनमात्रादपि सद्यः कर्तुं कृतादरो हि भवान् ॥ ४१ ॥

भवतो हि याम्यपूर्वे स्फाटिकपीठे गुरुं सुखासीनम् ।
अतिसुन्दरं युवानं बुद्धेः सूनुं वि[सु]लेखनीपाणिम् ॥ ४२ ॥

चूडाशशिप्रकाशं शुद्धस्फटिकप्रभाप्रतीकाशम् ।
गणकं गणकाधीशं हंसगणेशं नमाम्यमात्ये[नमामि सचिवे]शम् ॥ ४३ ॥

लोकं देशं ग्रामं ब्रह्माण्डस्थितपरात्मभक्तानाम् ।
पूर्वाचरितान् गणको धर्मादींश्च स्वपुस्तके लिखति ॥ ४४ ॥

गणकविलेखनमात्रात् सकलान्निजभक्तपुङ्गवाकलितान् ।
प्रणिदापयस्यनल्पान् कामकलापान् सुरादिदुरवापान् ॥ ४५ ॥

ब्रह्म महत्तत्त्वगतं गणकं प्राहुः समस्तयोगीन्द्राः ।
यो निबबन्ध ग्रन्थान् गणपतिविषयान् महेतिहासादीन् ॥ ४६ ॥

ध्यायन्ति हंसरूपं परमगुरुं यं सहस्रदलपद्मे ।
आसीनं गणकेशं हृदये किल योगिपुङ्गवाः सततम् ॥ ४७ ॥

निखिलब्रह्माण्डस्थितभक्तजनानां हिताहितं वक्तुम् ।
वरदादिकोटिगणपा विकटस्यान्ते वहन्ति सचिवत्वम् ॥ ४८ ॥

अखिलाण्डकोटिनिवसद्भक्तानानन्दभवनमानेतुम् ।
आधिकारपदनियुक्ता आमोदमुखा भवन्ति कोटिगणाः ॥ ४९ ॥

त्वद्भक्तिमात्रसुलभानीदृशतत्रत्यसर्वपरिवारान् ।
मनसा नुमो [नौम्य]नवरतं द्वारीभूतान् भवत्समीपाप्तौ ॥ ५० ॥

त्रिणयनचन्द्रापीडा ब्रह्मानन्दाम्बुधौ भृशं मग्नाः ।
आनन्दभवनभुवने गणपतिसारूप्यभागिनोऽनन्ताः ॥ ५१ ॥

बहुकल्पकोटिकालं भवतः सदुपासनात् प्रमोदन्ते ।
शुण्डादण्डविराजत्तुण्डाविगलन्मदाम्बुयुतगण्डाः ॥ ५२ ॥

सालोक्यमुक्तिभाजोऽसङ्ख्येयाश्चाखिलाण्डभक्तजनाः ।
एवं सामीप्यपदप्राप्त्या सुखभूमभागिनोऽनन्ताः ॥ ५३ ॥

स्वर्गादिवासिनामपि दुष्टासुरबाधशापबाधादिः ।
प्रारब्धकर्मभोगः कदाचिदपि मातृगर्भवासादिः ॥ ५४ ॥

आनन्दभवनवासी नैतादृगुपद्रवं कदाचिदपि ।
अनुभवति किं त्वखण्डं ब्रह्मानन्दं न दुःखसंभिन्नम् ॥ ५५ ॥

सङ्कल्पमात्रसुलभानाहारविहारकामभोगादीन् ।
परिहृत्य नित्यतृप्ता नित्यानन्दात्मना महात्मानः ॥ ५६ ॥

ज्ञानयोगादिनिष्ठा जीवन्मुक्ता गता हि ये तत्र ।
ब्रह्मविचारपरास्ते प्रापुरनन्ता विदेहकैवल्यम् ॥ ५७ ॥

केशाधिकारयुक्ता योगिजना ये तु पूर्वकल्पेषु ।
ब्रह्माच्युतादयस्ते विद्यन्ते तत्र कोटिशः परितः ॥ ५८ ॥

अवतारमूर्तयस्ते सन्ति समन्तात् सहस्रशस्तत्र ।
तव तत्र[तत्रैव]मूर्तिमन्तो ह्याम्नायान्ताः स्तुवन्ति महिमानम्
[तव रूपम् ]॥ ५९ ॥

सर्वावरणसमेतास्तत्तत्त्वच्छक्तिसिद्धिबुद्ध्यंशाः ।
तत्तदवसरा[काल]नुगुणाः सन्ति सहस्रं हि मूर्तयस्तत्र ॥ ६० ॥

इत्यानवमावरणं विचित्ररूपा विभूतिविभवाद्याः ।
कविवाङ्मनसोऽविषयाः सन्ति स्वानन्दभवनलोके ते ॥ ६१ ॥
एतेभ्यश्च निजेभ्यो लोकानुग्राहिमूर्तिभेदेभ्यः ।
जीवन्मुक्तादिभ्योऽत्रत्यमहद्भ्यो नमोऽस्तु सर्वेभ्यः ॥ ६२ ॥

दूरे भवतः पुरतो[सिंहासनस्य मूले]मूषकराजो विराजते सुतराम् ।
दस्युरिवान्तर्यामी भुङ्क्ते भोगांश्च सर्वजन्तूनाम् ॥ ६३ ॥

अव्यक्तगणपतिस्तव सेवार्थं प्राप मूषकाकारम् ।
भवदीयवाहनेष्वपि कुरुते सर्वेष्वनुप्रवेशमयम् ॥ ६४ ॥

यद्यपि हंसो विलिखति चण्डो वा नग्नभैरवो दाता ।
भवदालये गणपते सततं सेवाफलं हि भक्तेभ्यः ॥ ६५ ॥

पूर्वं तव सेवार्थं प्रवेशकालेऽस्य मूषकस्य तथा[स्यान्ते] ।
न लभेत चेदनुज्ञां सेवाफलमपि सुदुर्लभं तस्य ॥ ६६ ॥

सेवानभिज्ञमपि मामनीशमन्यादृशोपचारविधौ ।
चण्डादयोऽनुगृह्णन्त्वेते भवदीयभवनपरिवाराः ॥ ६७ ॥

तव भक्तकोटिमहिमा वक्तुमशक्योऽत्र मुद्गलः प्रवरः ।
यच्छिष्याः कपिलाद्याः सन्ति चतुष्षष्टिकोटिमित्रसिद्धाः ॥ ६८ ॥

त्वन्नाममात्रजापा समूलकाषं कषन्ति कलुषाणि ।
विषहरणसिद्धमन्त्रो जपमात्रादिव विषं निरवशेषम् ॥ ६९ ॥

कुङ्कुमकर्पूरागरुमृगमदगोरोचनदियुतगन्धम् ।
यद्भक्ता दधते तद्वस्तु गजास्यं सदास्तु मम चित्ते ॥ ७० ॥

श्वेतार्कमूलमूर्तिं जीवद्गजदन्तमूर्तिमपि भवतः ।
शोणशिलामपि मनसा प्रवालरत्नादिमूर्तिमपि मह्ये ॥ ७१ ॥

दूर्वार्चनमन्त्रजपा व्रतं चतुर्थ्यां यदीयचिह्नानि ।
सिन्दूरधारणाद्यपि स गणाध्यक्षः सदास्तु मम शरणम् ॥ ७२ ॥

दूर्वारहितसपर्या विफला भवतः कृतापि हेरम्ब ।
निजशक्तिदत्तबीजद्वयरूढा यत् शताङ्कुरा देवी ॥ ७३ ॥

दुःस्वप्ननाशिनी सा स्वार्चकपापापनोदनैकचतुरा[परा] ।
भक्तजनविघ्नहन्त्री दूर्वायां ते ततो महाप्रीतिः ॥ ७४ ॥

यद्यपि दूर्वान्नमयी दुर्गाशप्ता तृणात्मना जाता ।
आराध्य सिद्धिबुद्धी श्वेतहरिद्भेदतो द्विधाभूत् सा ॥ ७५ ॥

दुर्गार्चने तु निन्द्या श्लाघ्यतममेवार्चनेऽन्यदेवानाम् ।
भवतोऽतिश्लाघ्यतमा युग्मत एकैकविंशतिभ्यां वा ॥ ७६ ॥

तुलसी नीला देवी वैष्णवमाया गणेशशप्ता सा ।
भवतोऽत एव निन्द्या अर्ह्या ग्रहदेवतान्यदेवानाम् ॥ ७७ ॥

श्वेतार्ककुसुमनिकरैर्मन्दारसुमैस्तथा शमीपत्रैः ।
भक्तैरर्चितमात्राद्यथातितृप्तिस्तथा न ते क्वापि ॥ ७८ ॥

श्वेतार्कमूलमणिभिर्मन्दारशमीमयैश्च मणिनिचयैः ।
ग्रथितां किलाक्षमालां धारयितारः प्रसादपात्रं ते ॥ ७९ ॥

विजयप्रवालनगरो भौममयूरेशनासिकादीनाम् ।
क्षेत्राणां यात्रायामशक्तमपि मां पुनातु विघ्नेशः ॥ ८० ॥

न मम ज्ञाने निष्ठा योगे वा मन्त्रकर्मनामादौ ।
त्वत्पादाश्रयणान्मामुद्धर संसारतश्च सिद्धिपते ॥ ८१ ॥

निर्वाणदीक्षयाहं न संस्कृतो नापि योगदीक्षाद्यैः ।
सामान्यदीक्षयापि च पुनीहि बुद्धीश भावनालेशात् ॥ ८२ ॥

मामकृतसुकृतसञ्चयमनुपासितमुख्यदेवतामूर्तिम् ।
केवलभक्तिबलान्मां कृतार्थयेथाः[स्त्वं]कृपापयोराशे ॥ ८३ ॥

इच्छामात्रादणुमपि मेरुं कुरुषेऽनलं च सलिलमिव ।
मरुमपि जलधिं भवतो मदघनिरासे गणेश को भारः ॥ ८४ ॥

आकस्मिकयसि कामान् दुरवापानपि विचित्रयस्यर्थान् ।
सर्वमकिञ्चित्करमप्यपेक्षसे किन्न्वनुग्रहार्हं माम् ॥ ८५ ॥

यो देशकालवस्तुभिरपरिच्छिन्नोऽपि हृद्गुहावर्ती ।
प्रेरयति सर्वजन्तूननवरतं तं गणेशमर्हामि ॥ ८६ ॥

कालस्वभावनियतिप्रभृतिममन्यन्त ये जगद्बीजम् [ये जगद्बीजमुद्गिरन्ति]।
अविदन्तस्तव तत्त्वं संसृतिचक्रे भ्रमन्ति मुह्यन्तः ॥ ८७ ॥

संसृतिधर्मासङ्गी तत्साक्षी त्वं तदानुरूप्येण ।
उच्चावचफलदातुस्तव च न वैषम्यं नापि नैर्घृण्यम् ॥ ८८ ॥

यमुपासेऽस्मिञ्जन्मनि देवं यावच्छरीरहानमहम् ।
प्रेत्य प्रतिपत्स्येऽहं तमेव भावं च तत्क्रतुन्यायात् ॥ ८९ ॥

प्रागुत्पत्तेस्त्वमिदं जगच्च सर्वं स्थितेरवस्थायाम् ।
प्रलयावस्थायां त्वं ध्यायेयं कं कथं त्वदन्यमहम् ॥ ९० ॥

कामतरङ्गाभिहतं गभीरसंसारसागरे मग्नम् ।
विषयग्रहगृहीतं भवाब्धिपोतस्त्वमेव तारय माम् ॥ ९१ ॥

बहु[सुख]दुःखमोहस्वरूपप्रपञ्चजालाङ्कुरप्ररोहार्हम् ।
मूलाविद्याबीजं दग्धुं नान्यद्विना भवज्ज्ञानम् ॥ ९२ ॥

मायाविलासितमेतत् प्रपञ्चजालं न वस्तुतः किञ्चित् ।
न हि रज्जुशुक्तिकादिव्यतिरेकेणास्ति सर्परजतादिः ॥ ९३ ॥

तज्ज्ञानं मे सुलभं यज्ञतपोदानसाधनाभावात् ।
त्वद्भक्तिमात्रसाधनमतिदीनं मामनुगृहाण विभो ॥ ९४ ॥

गन्धर्वनगरकल्पं सर्वं स्वाप्नप्रवृत्तिसदृशञ्च ।
मायामात्रं मन्ये त्वद्व्यतिरिक्तं त्वदेकतानोऽहम् ॥ ९५ ॥

अग्राह्योऽनिर्देश्योऽचिन्त्योऽतर्क्योऽप्रमेयमहिमा त्वम् ।
विक्षिप्तचित्तवृत्तिः प्रभवेयमहं कथं मम‌द्ध्याने ॥ ९६ ॥

भूतभवद्भव्येषु त्वद्व्यतिरिक्तः कदापि नासेऽहम् [नासीय]
त्वद्भावापत्तिस्तु भ्रमापगमनात् सदा त्वदात्माहम् ॥ ९७ ॥

श्रृङ्गग्राहिकयेदृश आत्मेत्युक्तौ श्रुतिस्त्वनीशाना ।
चकिता प्रतिपादयति ह्यध्यारोपापवादरीत्या त्वाम् ॥ ९८ ॥

त्वामेवाहं जाने त्वदन्यभावभ्रमापगमनाय ।
त्वद्भावभावितोऽहं [न्यं] न भोग्यवर्गञ्च कामये कमपि ॥ ९९ ॥

लम्बोदर हेरम्ब द्वैमातुर दन्तिवदन विघ्नेश ।
अव्याजदयासिन्धो भक्तपराधीन दीनजनबन्धो ॥ १०० ॥

भवतानुग्राह्योऽहं संसृतिबन्धादहं प्रमुच्येय ।
नाल्पेन लोभनीयः विषयानन्दं न चाभिनन्देयम् ॥ १०१ ॥

न स्वर्गस्वानन्दं कार्यस्वानन्दमप्यहं नेहे ।
आनन्दभवनमीयां तद्विन्देयं विदेहकैवल्यम् ॥ १०२ ॥

यद्यपि शुद्धाद्वैती बाह्यसुपूजनादिनापि शैवोऽहम् ।
परमात्मभावितगणपतिभावः कदापि मापैतु ॥ १०३ ॥

श्रुत्यादिषु प्रसिद्धा गुणगण[गणपति]विभवा यथावदाख्याताः ।
कविसमयसहजसिद्धा वाचोयुक्तिः प्रतायते न मया ॥ १०४ ॥

यद्यपि गणपतिगुणगणवर्णनमेव प्रधानतः प्रकृतम् ।
मतविमतनान्तरीयकनिरूपणञ्चानुषङ्गतो ग्रथितम् ॥ १०५ ॥

अत एव पूर्वमेव प्रतिश्रुतश्लोकशतकतोऽप्यधिका ।
विघ्नेशभिन्नविषयप्रतिपादनतत्पराः कृताः श्लोकाः ॥ १०६ ॥

इति नीलकण्ठशास्त्री विद्वद्रत्नोपनामवान् विबुधः ।
शङ्करभगवत्पदस्थापितषट्दर्शनी सुसारज्ञः ॥ १०७ ॥

गामिषु [भवत्सु] सप्तदशाधिकपञ्चसहस्रेषु कलि[युगाब्देषु] ।
अकरोद्गणेशशतकं तद्गुणलेशैः स्ववाग्विशुध्यर्थम् ॥ १०८ ॥

तं क्षाम्यन्तु महान्तो यदि प्रमादप्रयुक्तदोषः स्यात् ।
जीयादियं कृतिर्मे सुचिरं भूयान्मुदे च सिद्धिपतेः ॥ १०९ ॥

संसारदशायामपि मोक्षदशायां तथैकरूपत्वम् ।
आत्मन उक्तोऽत एव शान्त ब्रह्मप्रवादिभिः साङ्ख्यैः ॥ ११० ॥

मीमांसकास्तु कथयन्त्यात्माहंप्रत्ययेन वेद्य इति ।
अन्ये त्वन्यं सर्वं न वस्तुतः किन्त्वपक्वसोपानम् ॥ १११ ॥

विगतद्वैताभासो वेद्यान्तरविषयवृत्तिहीनोऽहम् ।
त्वद्रूपचित्तवृत्तिः किन्न भवेयं सदा त्वदाकारः ॥ ११२ ॥

निरतिशयान्दात्मभवत्स्वरूपे महापयोराशौ ।
विषयानन्दो नार्हति बिन्दुशततमांशमात्रमपि भवितुम् ॥ ११३ ॥

॥ इति श्रीविद्वद्रत्नोपनामकेन वैयाकरणशिरोमणिना
वैदिकषड्दर्शनीसारवेदिना नीलकण्ठशास्त्रिणा
विरचितं गणेशशतकद्वयं
समाप्तम् ॥

---

## ३३. ॥ अथ श्रीव्याघ्रालयेशशतकम् ॥

चित्रं कालस्य शक्त्या प्रशिथिलभुवनैश्वर्यभूम्ना समिन्धे
यत्र त्रैलोक्यनाथः पथि पथिकजनाराधनार्थं कपाली ।
पुत्रः श्रीषण्मुखश्चोत्तरभुवि भगवान् वासुदेवश्च शैवं
सत्रं किं वर्ण्यते तच्छिवशिव शिवलोकायते व्याघ्रदेशः ॥ १ ॥

सङ्केते योजनाभिस्तिसृभिरभिमिते शङ्करस्य प्रसिद्धे
सन्त्यद्यापि प्रतिष्ठाः शतमखहरमष्टोत्तरं देवतानाम् ।
सङ्ख्या नास्ति द्विजानां सदनमिह सहस्राधिकं यत्र सर्वे
सन्तुष्यन्त्याशु तं द्रागखिलभयहरं व्याघ्रदेशं प्रपद्ये ॥ २ ॥

आस्ताञ्चोरारिराजग्रहपरिभवभीरन्तकस्याप्यशङ्कं
शास्ता यत्रास्ति संवत्सरभजनमृते मण्डलेनापि चित्रम् ।
भक्तानां भुक्तिमुक्ती वितरति भगवानाशुतोष्यस्तमेतं
भक्त्या वैयाघ्रदेशं वयमपि शरणं प्राप्नुमो वाञ्छिताप्त्यै ॥ ३ ॥

शिष्टा यं यान्ति दिश्यः[दिग्भ्यः]स्वयमपि च यतो हन्त धावन्ति दिष्ट्या
दुष्टाः सर्वेऽपि तस्मादभयदमनिशं व्याघ्रदेशं शरण्यम् ।
पुष्टं सम्प्राप्य शम्भुं शरणमुपगतोऽस्मीश्वरस्य प्रसादात्
कष्टे कालेऽप्यकस्मात् कलयति करुणां केषुचित् कामवैरी ॥ ४ ॥

वन्दे वर्णानशेषान् परतरभगवद्ग्रामगानाश्रमान् वा
वन्द्यान् भक्तानभक्तानजमृगगजगोपक्षिसर्पादिजन्तून् ।
पुण्यानप्यग्रहारानखिलमठगणानापणान् वृक्षपङ्क्तिं
तृण्यां च व्याघ्रगेहत्रिणयनकृतसान्निध्यसङ्केतरूढाम् ॥ ५ ॥

मा भून्मे जन्म भूमौ मम यदि मरणानन्तरं व्याघ्रदेशे
शोभातीतत्रिलोके भवतु भगवतो धाम्नि मानुष्यमास्ताम् ।
जीवोऽयं जङ्गमत्वेऽप्यनतिरतिरिह स्थावरत्वेऽपि जन्मी
देवैरप्यर्च्यते तद्विदुरजविदुरव्यासवाल्मीकिमुख्याः ॥ ६ ॥

पश्याम्यन्तः पवित्रं परमपशुपतिस्थानमानन्दभूम्ना
विश्वं विस्मृत्य लीये विमलतरपरब्रह्मसायुज्यसौख्ये ।
नश्यत्प्राये समाधौ नगवरतनयावल्लभे भक्तिमैत्री-
विश्वासान् प्रार्थये प्राञ्जलिरहमनिशं व्याघ्रगेहेश ईशे ॥ ७ ॥

यत्र त्रैलोक्यनाथत्रिणयनभगवन्नित्यसान्निध्ययोगात्
सत्रं सान्द्रं समस्तास्सुरसुरमुनयो मानुषीभूय यात्वा ।
धन्यैः सर्वैर्मनुष्यैः सहचरभजनं कुर्वते सर्वलोकाः
मन्ये यान्तीश्वरस्योदर इव सततं व्याघ्रगेहे च चित्रम् ॥ ८ ॥

ब्रह्मण्यास्तिक्यसत्यार्जवविनयदयौदार्यदाक्षिण्यभाजां
साम्योनस्थानमानस्वजनधनवतां व्याघ्रदेशद्विजानाम् ।
योगो योग्येऽत्र पात्रे कलयतु करुणामर्थिने नीवृदन्त-
र्भागे भाग्यैकलभ्ये दिशतु च शरणं नीलकण्ठोपकण्ठे ॥ ९ ॥

योगे यः सज्जनानां त्रिजगति महतां व्याघ्रदेशद्विजानां
योगे यः सम्यगिन्धे रजनिकर इव व्योमदेशद्विजानाम् ।
भागेनेशो यदात्मा भवति स भगवत्कार्यकर्तैहिकान् मे
भोगान् पुष्णातु शोणाचलनिलयमहादेवदेशद्विजन्मा ॥ १० ॥

भस्मव्यालिप्तभक्तावलिपरिकलितस्नानपानादिपूते
यस्मिन् स्नाता नरौघा यमपुरगमनं यातनाद्यं च हित्वा ।
सेवन्ते व्याघ्रगेहाधिपपरमशिवं प्राप्य सारूप्यवन्तो
देवन्ते तत्र नित्यं भवतु भवतटाकोत्तमे मज्जनं मे ॥ ११ ॥

विश्वव्याप्तं विरिञ्चादिभिरपि विचितं तत्त्वमत्यन्तशुद्धं
शश्वच्छान्तं शशाङ्काङ्कितमतिधवलं दृष्टवान्यस्य मूले ।
विश्वामित्रप्रभावः शिव शिव भगवान् व्याघ्रपादः स भास्वा-
नश्वत्थोऽस्माकमंहो हरतु हरिहरब्रह्ममुख्यामरात्मा ॥ १२ ॥

यच्छाया पादभाजां हरति भवपरीतापमध्वश्रमान्तं
तुच्छो वृक्षस्तुषारो मरुदपि कुरुते यस्य वेदिं पवित्राम् ।
अच्छामारुह्य लोकस्त्यजति परमधःपातशङ्कां स मुक्त्या-
मिच्छामीशस्य शाखी दिशतु मम महान् व्याघ्रगेहान्तगाही ॥ १३ ॥

मूलं पाताललोके मुनिभिरपि नुतं सत्यलोके किलाग्रं
भूलोके मध्यमात्रं मणिकटकदृढं दृश्यते यस्य पीनम् ।
सेवारोहावरोहानसुरसुरजना येन तन्वन्ति मन्ये
देवस्य व्याघ्रगेहे बहिरुपनिहितं चिन्तयन्तं ध्वजेन्द्रम् ॥ १४ ॥

स्थूलं तुङ्गं गभीरं परिकलितमहावेदिमूलं पताका-
मालाभिः किङ्किणीभिर्मणिमयकटकैः कङ्कणैश्चोल्लसन्तम् ।
तालाकारं कठोरं वृषभपरिवृढेनाङ्कितं काङ्कटीकं
व्यालोक्यं व्याघ्रगेहे बहिरुपनिहितं भावये केतुदण्डम् ॥ १५ ॥

शिष्टानिष्टातिदुष्टासुररुधिरझरी तुन्दिला तुङ्गदंष्ट्रा
तुष्टा रुष्टाट्टहासत्रुटितविधिकटाहोदरोदारवीर्या ।
तिष्ठन्ती [1]तिन्दुकाधोभुवि भुजधृतनानायुधा भद्रकाली
कष्टं तीव्रं कलिं नः शमयतु विशदं व्याघ्रदेशेशकन्या ॥ १६ ॥

भद्रान् भर्गस्य भक्तान् भसितसितजटाभस्मरुद्राक्षमाला-
जालालङ्कारकान्तानभिनवपरिधानोत्तरीयाभिरामान् ।
दन्तश्रीभिर्दिगन्तानपि धवलयतः सन्ततं व्याघ्रपुर्या-
मन्तर्भूताननन्तानहमनुकलये पावनान् पापशान्त्यै ॥ १७ ॥

प्रादक्षिण्यानिशाम्रेडिभिरतिनिबिडैर्जङ्गमानेकपङ्क्ति-
प्राकारभ्रान्तिरीशाङ्गणभुवि मिषतां तन्यते यैर्जनानाम् ।
प्रातः प्रारभ्य शश्वत्प्रगुणितभगवन्नामसङ्कीर्तनाढ्यान्
प्राज्ञान् व्याघ्रालयाधीश्वरभजनजनान् प्राञ्जलीन् भावये तान् ॥ १८ ॥

दिव्या दीपा यदीया दिवि भुवि भुवने भोगिनां चान्धकारं
अव्याप्तं द्रावयन्ति प्रबलतममलं बाह्यमाभ्यन्तरं च ।
नव्या नानाश्मक्लृप्ता नयनपथनभोनाकलोकातिगा सा
भव्याय व्याघ्रगेहाम्बरवरसहजा वेदिका नोऽस्तु नित्यम् ॥ १९ ॥

कालारेः कार्यकाराः शिव शिव करदा वावनीन्द्राश्च काले
काले नित्यान्नदानोत्सवनियमविधेः सर्वसम्भारजातम् ।
भूलोकात् कृत्स्नतोऽस्मादनवधिमनुजैराहरन्तीह यस्यां
स्थूलाकारातुला सा लसतु मम हृदि व्याघ्रगेहाग्रशाला ॥ २० ॥

1. तिन्दुकः=कश्चित् वृक्षविशेषः ।

राज्ञां कैङ्कर्यमास्ताममरपरिवृढा शङ्कराज्ञाकरत्वात्
प्राप्य प्रायो यतन्ते यजनसदनतश्चातिपूते यदन्ते ।
शक्रः सर्वङ्कषोऽग्निः पचति पटुतरं वाति वायुर्यथेष्टं
पाथः सूतेऽम्बुपालो लसतु मम हृदि व्याघ्रगेहाग्रशाला ॥ २१ ॥

अन्येषां सक्तिरास्तामतिरजतगिरीनन्नशैलानसङ्ख्या-
नह्नायैवोपदंशानपि विरचयतो यस्य वह्न्याद्यपेक्षा ।
मन्ये मर्त्यत्वसिद्ध्यै भवतु भगवतो व्याघ्रगेहाग्रशाला
धन्या यत्पादधूल्या धरणिरपि नमो भूमिदेवाय तस्मै ॥ २२ ॥

यातायातत्रिलोकीजनजनितजगत्कुड्यकुट्टाकघुष्ट्या
प्रातः सायं सदापि प्रबलबहुलकोलाहलैर्यत्र नित्यम् ।
मध्याह्ने मान्यवर्णार्णवमणिमकुटान्यन्यवर्णार्णवेभ्यो
वर्धन्ते व्याघ्रगेहाम्बरवरमनिशं नस्तदन्तः समिन्धाम् ॥ २३ ॥

विप्राः कत्यस्तसङ्ख्या अपि भुवि विबुधाश्चावतीर्य द्विजत्वं
बिभ्राणा यत्र शङ्के सह सकलमहीदेवसङ्घेन भुक्त्वा ।
भुक्तीच्छाभूमनित्यक्षतनिजयजनांशामृतेच्छा भवन्ति
व्यक्तं वैयाघ्रगेहाम्बरवरमनिशं नस्तदन्तः समिन्धाम् ॥ २४ ॥

भक्तः श्रीबिल्वम[ा]ङ्गल्यक य[इ]ति भगवान् भक्तिसाक्षात्कृतश्री-
कृष्णः कृत्स्नः प्रदेशं शिवशिवजटिलं वीक्ष्य देहेन गेहम् ।
गत्वा गौरीशमश्नु द्विजजनवनगं यत्र दृष्ट्वा सजगिंध
चक्रे वैयाघ्रगेहाम्बरवरमनिशं नस्तदन्तः समिन्धाम् ॥ २५ ॥

ब्रह्मक्षत्रार्यशूद्राद्यनवधिजनताभुक्तभूयिष्ठभिस्सा-
शिष्टोच्छिष्टान्नसम्भावितसकलचरस्थावरात्मप्रपञ्चम् ।
ब्रह्मज्योतिःस्वरूपं यदखिलमनघं शुद्ध्यशुद्धी न यस्मिन्
सम्यग्वैयाघ्रगेहाम्बरवरमनिशं नस्तदन्तः समिन्धाम् ॥ २६ ॥

इन्द्राद्या लोकपाला प्रतिदिशमधिकारास्पदभ्रंशभीत्या
तन्द्रां त्यक्त्वा तपस्यां विदधति हिमवातातपासारसाह्याः ।
चन्द्रापीडस्य विष्वग्बहुलबलिशिलात्मना यत्र नित्यं[रूपतां प्राप्य यत्र]
सन्द्रष्टव्यं तदाभ्यन्तरमजिरमवेद्व्याघ्रगेहेशितुर्माम् ॥ २७ ॥

स्तम्भौघैः शातकौम्भैः शमनजिदभिषेकाम्बुकुम्भैरसङ्ख्यैः
शुम्भन्तं शम्भुभक्तैर्विगतभवभयैर्वीतडम्भैर्विभान्तम् ।
कुम्भिन्याधारमम्भोधरसरणिरुधं सम्भृताभोगयोगं
गम्भीरं व्याघ्रगेहत्रिपुरहरमहामण्डपं गन्तुमीहे ॥ २८ ॥

श्रीमद्रामायणं भागवतमपि महाभारतं सेतिहासं
धीमत्सङ्घैः पुराणं सकलमपि सदा पठ्यते यत्र नित्यम् ।
सामाद्याम्नायमन्त्रव्रजजपभगवन्नामगानादिमन्तं
सामोदं व्याघ्रगेहत्रिपुरहरमहामण्डपं चिन्तये तम् ॥ २९ ॥

भाट्टप्राभाकरव्याकरणविधिभिर्वेदवेदान्तचिन्ता-
भाग्भिर्भट्टारकौघैरमितमखिशतैः शास्त्रिभिश्च भान्तम् ।
श्रेष्टं[ष्ठं]साष्टाङ्गयोगाभ्यसनकृतधियां प्रौढयोगीश्वराणां
प्रेम्णा वैयाघ्रगेहत्रिपुरहरमहामण्डपं भावयेऽहम् ॥ ३० ॥

कैलासं काशिकां दुस्त्यजमसुरपतेर्गोपुरं भूयसा किं
त्रैलोक्यान्तर्गतान्यस्थलकुलमखिलं प्रोज्य[ज्झ्य] सर्वात्मनायम् ।
शैलापत्यस्य भर्ता भजति सविरगो ब्रह्मघोषेण मन्ये
शैवोऽहं व्याघ्रगेहत्रिपुरहरमहामण्डपं भावये तम् ॥ ३१ ॥

विन्यस्ताश्वत्थदीपद्वितयविलसितं वीतमायाविरोधं
संन्यासिस्तोमसान्द्रं सनकमुखमुनिव्रातसञ्चिन्त्यमानम् ।
मन्ये वैयाघ्रगेहत्रिपुरहरमहामण्डपं मण्डपानां
धन्यं धर्मार्थकामाद्यविरलपुरुषार्थप्रदं पूजयेऽहम् ॥ ३२ ॥

धाम्नो धावल्यवृद्ध्या धवलितभुवनं स्थूलतातुङ्गताभ्यां
स्थेम्ना चाणूकृताद्रीश्वरमतुलककुत्पुच्छश‍ृङ्गास्यनासम् ।
भूम्ना वैयाघ्रगेहत्रिपुरहरमहामण्डपे भासमानं
नाम्ना नन्दीति गीतं नयनसुखकरं वृद्धमीडे वृषेन्द्रम् ॥ ३३ ॥

रुद्रं यद्रूपधारी वहति हरिरशेषाण्डभाण्डैकधुर्यं
क्षुद्रैरन्यैरधार्यं हरमुपरि कथं कुर्युरैरावताद्याः ।
शक्तः सिंहोऽपि गौरीं शरणमुपययावेव किं भूयसा तं
व्यक्तं व्याघ्रालयाधीश्वरवृषवपुषं भावये वासुदेवम् ॥ ३४ ॥

यस्यैकस्यैव हीह त्रिजगति सुमहत्यग्रपूजा तदास्ता-
मस्मिन्वैयाघ्रगेहे निखिलजनमहातृप्तिकृत्यन्नवृष्ट्याम् ।
दस्युष्वप्यत्र भावादनुदिनमधिकं शिष्ययत्तदन्नं
यत्सिन्धुं याति मन्ये सततमपि नमो विघ्नराजाय तस्मै (?) ॥ ३५ ॥

मन्थाग्रं दध्यमत्रादिव कनकमयं यस्य रूपी वराग्रं
हन्त ब्रह्माण्डभाण्डात् बहिरुपरि मुदा दृश्यते मुक्तभक्तैः ।
मन्तव्यो मध्यभागः सुरनरसुखदो मूलदेशोऽसुरौघं
हन्ति श्रीव्याघ्रगेहोदरगृहमनिशं नस्तदन्तः समिन्धाम् ॥ ३६ ॥

निष्ठापात्युज्ज्वलाष्टापदमयमखिलं भाति यद्यस्य दिव्यो
दिष्ट्यास्यां विष्टपाण्डोदरभुवि घटदीपायते दीप्तिभूमा।
मृष्टानां यन्मणीनां द्युतिततिभिरिनो याति खद्योतभावं
द्रष्टव्यं व्याघ्रगेहोदरगृहमनिशं नस्तदन्तः समिन्धाम् ॥ ३७ ॥

श्रद्धालूनां नृणां यच्छ्रवणमननसन्दर्शनाद्यैरघौघं
दग्ध्वाशूत्पाद्य भक्तिं भवमपि हृदये भावयित्वात्मसाम्यम्।
दत्ते देवालयौघैरवनितलगतैरर्चनीयं जनानां
स्मर्तव्यं व्याघ्रगेहोदरगृहमनिशं नस्तदन्तः समिन्धाम् ॥ ३८ ॥

द्वीपत्वं दिव्यसेवारवरतभगवद्भक्तपाथोधिमध्ये
दीपत्वं भक्तिभाजां मनसि च भजते भावनीयं यदैशम्।
गोपानस्यातिगुप्तं गुरुगुणसुजनं क्रान्तसोपानमन्तं
तापानां व्याघ्रगेहोदरगृहमनिशं नस्तदन्तः समिन्धाम् ॥ ३९ ॥

पारं पश्यामि नाहं परमशिवापदाभ्यन्तरागाररत्न-
द्वारे सोपानपार्श्वद्वितयमितवतां भक्तपारावराणाम्।
दारूर्म्याध्मातघण्टाघणघणरणिताघोषपुष्येषु तेषां
पूरे वैयाघ्रगेहाधिपपुरुकृपया विन्दुभावं वहेयम् ॥ ४० ॥

पीनाविच्छिन्नघण्टाघणरणिताम्रेडनाजेल्यभिख्या-
गानानन्दो[द]याभ्युच्चरितजयनमोनादवानान्यघौघैः।
नानाभट्टादिभक्तैरविरतनिबिडं नीलकण्ठालयाग्र-
स्थानं वैयाघ्रगेहोदरगतमनिशं मानसे नः समिन्धाम् ॥ ४१ ॥

नृत्तैर्गीतैश्च वाद्यध्वनिभिरपि जगन्मोहनैर्देहिनो ये
नित्यं व्याघ्रालयेशं शमनरिपुमहोरात्रमाराधयन्ते।
तेषां तौर्यत्रिकं नः शमयतु शमलं शश्वदन्तर्महान्तं
तोषं पुष्णातु चोपर्युपरि पुरुपरब्रह्मसम्मोदकल्पम् ॥ ४२ ॥

सम्यग्वैयाघ्रगेहाधिपपदमखिलं शोधयन्तीह भक्त्या
सम्मार्जन्यम्बुगोविट्प्रभृतिभिरपि ये कर्म येषामकामम्।
सन्मानुष्यैकसाध्यं मुनिभिरपि मुहुः श्लाध्यते मुक्तिमूलं
सन्मार्गस्थानहन्तानघशतशमनायानहन्तानुपास्ये ॥ ४३ ॥

निर्मायं व्याघ्रगेहोदरगतभगवद्गर्भगेहं गभीरं
ब्रह्माद्यैरप्यगम्यं बहुमतमिह ये सम्प्रविश्यानुवेलम्।
निर्माल्यौघं निरस्य स्वयममलजलैः शोधयन्ते वयं तान्
ब्रह्मप्रायान् प्रयामः शरणमशरणाश्चन्द्रचूडद्विजेन्द्रान् ॥ ४४ ॥

माल्यं पुष्पं च पूतं पुरुपुररिपवे दीयते यैरमूल्यं
काल्यादिष्वत्र कालेष्वनुदिनमतुलं येषु दैवानुकूल्यम् ।
पाल्या वैयाघ्रगेहाधिपपरमशिवोद्यानवाटीह यैस्तान्
बाल्यादारभ्य भक्त्या कृतबहुसुकृतान् मालिकान् मानये तान् ॥ ४५ ॥

भक्त्या भर्गादवाप्तं शबलतुलसिकाशङ्खगङ्गापगाम्भो
भस्मादिव्याजभाजं भवभयभिदुरं भासुरं भूसुरा ये ।
भक्तौघेभ्यः प्रसादं ददति भगवतो व्याघ्रगेहस्थगौरी-
भर्तुर्गर्भालयस्थान् भवद्धृदयविदो देवलान् भावये तान् ॥ ४६ ॥

सन्त्वन्ये देवला ये भुवि भुवनभराः केवलं स्वार्थतन्त्रैः
किं तैः कार्यं जनानां जगदुपकृतये यत्स्वरूपेण दिष्ट्या ।
हन्त श्रीशङ्करोऽवातरदिह कृपया शङ्कराख्योऽनुकम्पा-
सिन्धुः स व्याघ्रगेहाधिप इव दयते देवलाद्योऽतिथीनाम् ॥ ४७ ॥

स्थूलं वैयाघ्रगेहद्युतिततिततये नालमेतत्त्रिलोकं
भूलोके तच्च दिव्याम्बरवरमनलं गर्भगेहांशुभूम्ने ।
गर्भागारं तदन्तर्गतमणिमहसां गर्वितानां प्रकाशं
गर्भे धत्ते कथञ्चित् शिव शिव भगवत्प्राभवप्रौढिभूमा ॥ ४८ ॥

सन्ध्या रात्रिः प्रभातं दिनमपि सकलं यत्र साम्यं भजन्ते
वन्ध्याः कालस्य भेदावरमणिमयता वञ्चितोदञ्चिताभाः ।
सन्ध्यादानेन दीपा विदधति विविधा यत्र रत्नातपौष्ण्यं
तं ध्येयं व्याघ्रगेहेशितुरनुकलये गर्भगेहस्य गर्भम् ॥ ४९ ॥

किं दीपैः किं मणीन्द्रैः किरणिभिरिह किं किङ्करीभूतवह्निः
किं दा[ग्ला]नैरिन्दुसूर्यादिभिरपि सुषमाकन्दलीसुन्दराङ्गम् ।
सन्दीप्तं तुल्यकालोदिततुहिनकरादित्यकोटिप्रकाशं
मन्दीकुर्यान्महोऽस्मन्मतितिमिरभरं व्याघ्रगेहस्थमैशम् ॥ ५० ॥

किं भूम्ना भारतीनां भवतु भगवतो व्याघ्रगेहेशितुः श्री-
शम्भोः पादारविन्दद्वितयतलयुगे भक्तिरस्माकमग्र्या ।
सम्भाव्यं भाव्यतेऽम्भोरुहनयनमुखैरीश्वरैरन्तरङ्गे
गम्भीरे यद्गभस्तिप्रतिहतगरुडभ्रातृकोटिप्रकाशम् ॥ ५१ ॥

लीयन्ते यत्र मुक्ता मुहुरहह मुदा यत्र लीना न भूयो
जायन्ते यत्सितानप्यरुणयति नखानातमरामाभिवृद्ध्या ।
व्यक्तैः श्रीशङ्खचक्राङ्कुशकलशसरोजादिरेखासहस्रै-
र्युक्तं तद्व्याघ्रगेहाधिपपदतलयोर्युग्ममव्यात् सदास्मान् ॥ ५२ ॥

इन्द्रोपेन्द्रादिवृन्दारकनिकरकिरीटाग्ररत्नारुणाना-
मिन्दुप्रायत्वदा ये नतिषु सुषमया सुन्दरास्ते ममान्ध्यम् ।
सन्द्राव्य व्याघ्रगेहेश्वरचरणनखाः सन्ततं भान्तु भासां
सन्दोहेन प्रदीपा इव हृदि महितस्नेहयोगेन हृद्ये ॥ ५३ ॥

धन्यैर्धार्यं धियैकं प्रपदमहिवराधारभूतादिकूर्मं
मन्ये पादाग्रमन्यन्महदतिसुभगं मन्दरोद्धारकूर्मम् ।
हन्येते यत्र मुक्तिः कथमुपरि न चेत्तद्द्वयी जह्नुभूभृत्-
कन्याढ्यं विश्वभारैरधितमिह बिभृयाद्व्याघ्रगेहेशदेहम् ॥ ५४ ॥

शङ्के वैयाघ्रगेहप्रभवितुरतुले शङ्करस्याभिजाते
जङ्घे पङ्केरुहेषोरिषुधियुगकृतौ मातृके प्रागभूताम् ।
न्याङ्कादह्नाय भस्मीकृतवति भगवत्यङ्गजं भग्नवाञ्छा-
सङ्गाप्यङ्काधिरूढा भजति भवमुमा यद्दयाप्तस्मरार्त्या ॥ ५५ ॥

जानेऽहं व्याघ्रगेहेशितुरलमतुले जानुनी जह्नुकन्या-
जानेरानन्दमूर्तेरखिलमुनिमनोमौक्तिकानां समुद्गौ ।
पीनावङ्कौ च चीनांशुकपरिपिहितौ नौमि तत्रापि मान्य-
स्थानं वन्दे भवान्याः परममनुपमं वाममङ्कं विशेषात् ॥ ५६ ॥

नग्नं केचित्किलाहुः कनकवसनिनं केचनान्येऽद्रिकन्या-
मग्नं शार्दूलचर्माम्बरमपरे दन्तिचर्मान्तरीयम् ।
भग्नारिं व्याघ्रगेहेश्वरमभिदधते भाषणं भक्तिभाजा-
मग्नीन्द्वादित्यनेत्रो वितथमपि विभुर्भूषणं वेत्ति मन्ये ॥ ५७ ॥

कारुण्याभीष्टपट्टाम्बरपरिकलितस्वर्णकाञ्च्यञ्चितं वा
कारुण्योपात्तकार्कोटककलितकरित्वग्वरालङ्कृतं वा ।
सारोदारोरुसर्पान्तरदृढघटितव्याघ्रचर्माम्बरं वा
सारोग्यं व्याघ्रगेहाधिपतिकटितटं चिन्तये चित्तशुद्ध्यै ॥ ५८ ॥

अन्तःस्थानन्तकोटित्रिभुवनकृतया कार्श्यविश्लेषभीत्या
सन्ध्यर्थं धार्यते यः सदुदरनहनव्याजभाजा हि भर्त्रा ।
हन्त श्रीनाभिरोमावलिवलिविलसन् विश्ववोहा[ढा]पि यो वा
वन्ध्यापुत्रायते तं स्मरतु मम मतिर्व्याघ्रगेहेशमध्यम् ॥ ५९ ॥

हारं हाराहिमालापरिवृतवनमालास्थिमालादिमाला-
धारं धाराधिकाक्तं विलसितभसितोद्धूलितं धूसराभम् ।
वारं वारं वरोरःस्थलमखिलमहापापपाथोधिपोतं
स्मारं स्मारं स्मरारिं भजतु मम मतिर्व्याघ्रगेहेशितारम् ॥ ६० ॥

गौर्या गाढाङ्कपालीपिशुनमतिशुभं भस्म यस्मादवाप्तं
गौराभं कुङ्कुमाङ्के कठिनकुचतटे तारहारादिरम्ये ।
दिव्येभ्यो भूषणेभ्योऽप्यतिशयसुभगं भाव्यते मां पुनीता-
मव्याजं व्याघ्रगेहत्रिपुरहरमहोरःस्थलं तद्विशालम् ॥ ६१ ॥

स्थूलस्थूणर्द्धिकूलङ्कषघनसुषमानायतानात्तशुम्भ-
च्छूलश्रेष्ठासिटङ्काभयवरमृगरुद्राक्षभिक्षाकपालान् ।
लोलाँल्लोकैकपालानहिकटकधरानाकृतास्थ्यङ्गुलीयान्
व्यालोकेऽन्तर्बलिष्ठान् व्ययजितबहुदान् व्याघ्रगेहेशबाहून् ॥ ६२ ॥

क्षीराब्धेः सर्वदेवासुरवरमथितादुत्थितान्यद्भुतानि
स्त्रीरत्नादीनि तैस्तैरहमहमिकया स्वीकृतानि त्रिलोकीम् ।
भस्मीकर्तुं समर्थं सरभसमुदितं क्ष्वेलमद्यापि देवो
यस्मिन् धृत्वावतीदं जगदवतु स मां व्याघ्रगेहेशकण्ठः ॥ ६३ ॥

हन्त श्रीकण्ठकाष्ण्यौदयमधिकमधःकृत्य धावल्यमग्र्यं
दन्तश्रीसन्ततीनां तिरयति नितरां योऽरुणिम्नां महिम्ना ।
गन्धर्वाच्यम्बिका यद्गतममृतरसं सम्यगापीय गङ्गा-
गन्धायाप्यभ्यसूयत्यलमवतु स मां व्याघ्रगेहेश्वरोष्ठः ॥ ६४ ॥

कर्णौ सत्कुण्डलिभ्यां विरचितविलसत्कुण्डलौ कान्तिदानैः
कर्णौ कानीनतोऽन्यौ कपिलसितकपोलस्थलादर्शबिम्बे ।
बिब्बोकं बिम्बितत्वात् कमपि विदधतौ कम्रबिम्बाधरश्री-
सम्बन्धाद्व्याघ्रगेहेशितुरतिसुभगौ सन्ततं चिन्तयेऽहम् ॥ ६५ ॥

व्यासाद्यैः कालिदासादिभिरपि कविभिर्वर्णिता कर्णपूर-
व्यासक्त्यासन्नभास्वत्फणिफणमणिभामण्डलीमण्ड्यमाना ।
नासाराया यमारेरपि सरति यया प्राणवायुः सदा सा
नासास्मान् व्याघ्रगेहेशितुरवतु चिरं चिन्मयस्यातिचित्रा ॥ ६६ ॥

आदित्याकारमाद्यं जनयति दिवसं चन्द्ररूपं द्वितीयं
मेदिन्यामत्र रात्रिं रचयति मुहुरप्यग्निरूपं तृतीयम् ।
कालं सन्ध्याभिधानं कलयति जगतां भूतये येषु तेभ्यः
कालारेर्व्याघ्रगेहत्रिपुरविजयिनो वीक्षणेभ्यो नमोऽस्तु ॥ ६७ ॥

ब्रह्मण्यं बन्धहीनं द्रुहिणहरिहरातीतमाद्यन्तशून्यं
ब्रह्म व्याघ्रालयस्थं प्रकटयति यया स्वीयमैश्वर्यमस्यै ।
दृष्टित्रय्यै नमोऽस्तु त्रिपुरविजयिनस्त्रीक्षणस्य त्रिलोकी-
सृष्टिस्थित्यन्तकृत्त्रीश्वरविषयजुषे विश्वभूतिप्रदात्र्यै ॥ ६८ ॥

चिल्लीलीलालवोत्थापितविलसदसत्प्रायमायाप्रपञ्चं
मल्लीबाणादिभस्मीकरणचणतृतीयेक्षणोद्भासमानम् ।
चिल्लीनस्याष्टमूर्तेरवतु चिरमरं व्याघ्रगेहेशितुः श्री-
मल्लारीड्यस्य शम्भोरलिकतलमलीकाकुलं मामजस्रम् ॥ ६९ ॥

भ्रूवल्लीलास्यरङ्गं भुवनजनमनःक्षोभदं भूतिदिग्धं
धावल्यावल्यगारं तिलकमिव तलेनाग्निनेत्रं दधानम् ।
सावर्ण्यातीतवर्णोज्ज्वलसजलजटाजूटसञ्जातनाना-
लावण्यैकालवालं स्मरतु मम मतिर्व्याघ्रगेहेशफालम् ॥ ७० ॥

प्रागद्भिर्विश्वमम्भोमयमिदमखिलं कर्तुकामेव वेग-
प्रागल्भ्यच्याविताेच्चावचमकरमहामत्स्यनक्रोरगाभ्रात् ।
भागीरथ्यात्तपाता महितलमगता मार्गमध्ये यदन्त-
र्भागग्रस्ता जटाटव्यवतु भगवतो व्याघ्रगेहेशितुर्माम् ॥ ७१ ॥

सारा सा दिव्यसिन्धुर्यदुदरसरसीभावमाप्तापि भौमान्
सारासान् सर्वसिन्धुप्रचुरितसलिलान् सप्तसिन्धूनपीमान् ।
सारङ्गाद्युग्रयादोमुखरितजलभूम्नात्यधःकुर्वतीन्वे
सारं गुर्वी जटाटव्यवतु भगवतो व्याघ्रगेहेशितुर्माम् ॥ ७२ ॥

दर्पान्धाबन्धसर्पप्रवरनिकरशूत्कारवातौघघूर्ण-
त्कल्पान्ताम्भोधिकल्पद्युसरिदुदकसङ्घोषसम्पूर्णगर्भम् ।
कोटिश्लिष्टान्तरिक्षं विविधविधिशिरोमुण्डकोटीकुटीरं
कोटीरं व्याघ्रगेहेशितुरतिरुचिरं चिन्तयामीन्दुचिह्नम् ॥ ७३ ॥

गर्भे गाङ्गं प्रगल्भं प्रलयजलनिधिप्रायमम्भः सशब्दं
बिभ्रन्नीशेच्छयोपर्युपरिपिठरवद्ब्रह्ममुण्डांश्च पीनान् ।
बद्धत्वात् सर्पसङ्घान् बहिरपि मुकुटे मुग्धमिन्दुं कपर्दो
बुद्धिव्यामोहकारी भवति शिवशिव व्याघ्रगेहेशभूमा [म्ना] ॥ ७४ ॥

प्रेङ्खत्प्राचीनमुण्डप्रकरसहचरासङ्ख्यगङ्गातरङ्ग-
प्रेङ्खाखेलत्किरीटामृतकिरणमहोमोहियादःकदम्बम् ।
दृप्तैर्दर्वीकरेन्द्रैर्दृढपरिकलितं तप्तताम्राभमाभा-
लिप्ताशं व्याघ्रगेहत्रिपुरहरसटाबन्धमन्तः समीक्षे ॥ ७५ ॥

श्रीमन्मुग्धेन्दुचूडं जलमुखरजटाजूटजुष्टं त्रिनेत्रं
नासालक्ष्मीविलासोज्ज्वलमुखकमलश्रीलसन्नीलकण्ठम् ।
भूयो भूयो भुजङ्गाङ्गदभुजगमृगाद्यञ्चितं चिन्तयेऽहं
हारीभूतोरगोरःस्थलमुदरकृशं व्याघ्रगेहेशदेहम् ॥ ७६ ॥

कृत्तार्तिं कृत्तिचेलाकलितकटितटं सर्पकाञ्चीकलापं
चारूरूरुं सुजानुं सुजनजननभित्सुन्दराकारजङ्घम् ।
पादाग्रीदग्रभङ्गय्ख्चितममलनखं रागरम्योदराङ्घ्रिं
वन्देऽहं देहमैशं मुहुरतिसुभगं व्याघ्रगेहस्थमाद्यम् ॥ ७७ ॥

भास्वद्भस्माङ्गरागाधिकधवलितसर्वाङ्गमप्यङ्घ्रिमूले
दोस्सीमस्वोष्ठबिम्बेऽप्यरुणिमकलितं कण्ठनालेऽतिकालम् ।
भास्वत्सोमाग्निनेत्रोपरि शिरसि जटाजूटलक्ष्म्या लसन्त्या
लास्येनानन्ददं मे हृदि मुहुरुदियाद्व्याघ्रगेहेशगात्रम् ॥ ७८ ॥

पातालाङ्घ्रिं वरोर्वीवलयकटितटं सत्यलोकोत्तमाङ्गं
पातारं विष्टपानां परिकलितविराडात्मना चानुवेलम् ।
पातिव्रत्येन चिन्ता भजतु मम महापापपाकोपजातात्
पातित्यात्तूर्णमुत्तारयतु च कृपया व्याघ्रगेहेश्वरो माम् ॥ ७९ ॥

शैवं पादादि केशावधि वपुरथ केशादिपादावसानं
चैवं संस्तूय भूयो हृदयभुवि समाधाय सञ्चिन्त्य भक्त्या ।
कैवल्यं प्रार्थयामो मुहुरमितदयं व्याघ्रगेहस्थमाद्यं
दैवं द्राक् नोऽकूलं भवतु भवभयापायदानन्दरूपम् ॥ ८० ॥

सत्सङ्क्रान्त्युत्सवाष्टम्यभिनवशिवरात्र्यादिकालेषु मन्ये
यत्सायुज्यं प्रयातास्त्रिभुवनजनताः सम्यगम्भोजजन्मा ।
वत्सस्तेयेन कृष्णात् पुनरधिगतया पुष्ट्या सृष्टिशक्त्या
चित्स्वच्छात्मा चरीकर्त्यवतु स भगवान् व्याघ्रगेहेश्वरो माम् ॥ ८१ ॥

धर्मार्थौ काममोक्षावपि भुवि पुरुषार्था हि तेष्वर्थकामौ
जन्मोपेक्ष्यापि गृह्णन्त्यलमखिलजना जीविताद्प्यभीष्टौ ।
धर्मो मोक्षश्च[श्च]धात्र्यामधिकमशरणौ[णाः]तद्द्वयार्थं यतन्ते
सम्यग्व्याघ्रालयाधीश्वरकृतकृपया यत्र तेभ्यो नमोऽस्तु ॥ ८२ ॥

नित्यन्यायार्जिता यैरधिकतममनःशुद्धिपूर्वं विधेयो
मर्त्यैर्धर्मस्तदर्थं विदधति विविधाधर्मवृन्दं वृथान्धाः ।
पृथ्व्यां व्याघ्रालयाधीश्वरपुरहरमुद्दिश्य यैर्दिश्यतेऽन्नं
पथ्यं भक्त्या यथाशक्त्यतिथिषु हृदि तान् कुर्महे धर्मशीलान् ॥ ८३ ॥

मोक्षोपायेषु मुख्यं त्रयमिह भगवत्प्रापकं प्राकृतानां
साक्षाज्ज्ञानं च सत्कर्म च मदनरिपौ पुंसि भक्तिश्च भद्रा ।
राक्षस्या शिक्षया स्यादनवधिजनिभिर्ज्ञानमर्थाद्यशुद्ध्या
रूक्षं कर्मापि भक्तिर्भवतु मम भृशं व्याघ्रगेहाधिनाथे ॥ ८४ ॥

तर्कग्रन्थान्तराणामतिकठिनतया दुर्गमो ज्ञानयोगो
निष्कामः कर्मयोगो भगवति निहितो दुष्करः किञ्च ताभ्याम् ।
भूयान्नानाभवान्ते त्रयसुलभतमे भक्तियोगेऽधिकारो
भूयान् स व्याघ्रगेहत्रिनयनकरुणापाङ्गपातेन मे स्यात् ॥ ८५ ॥

गीतादीनामगाधादतिशयविशदं यस्य नारायणीये
गीतं ज्ञानादियोगत्रयगुणगणने साम्यभाजोऽप्यसाम्यम् ।
भीतानां मादृशानां गतिरिह यमृते नास्ति तं भक्तियोगं
भूतानामेकबन्धुर्वितरतु भगवान् व्याघ्रगेहेश्वरो मे ॥ ८६ ॥

बाहुश्रुत्यं तपश्च व्रतकुलमखिलं ब्रह्मचर्यं च वाचां
या[बा]हुल्येनालमैन्द्रं सदनमपि विफलं यां विना यां प्रसिद्धाम् ।
प्राहुः प्रेमस्वरूपां त्रिजगति मुनयो मुक्तिमाप्ताः पुरा या-
मूहुस्तां भक्तिमाशु प्रदिशतु भगवान् व्याघ्रगेहेश्वरो मे ॥ ८७ ॥

जायादायादवित्तादिषु विगतदयेष्वत्यधःपातपाश-
प्राया मायामयेषु स्वयमुदयति या सैव देवे दयाब्धौ ।
जायेत व्याघ्रपुर्यां वसतिविषयभेदोद्भवद्भक्तिसंज्ञा
सायुज्यस्यापि दोग्ध्री सपदि मम रतिः कापि सर्वार्थसिद्ध्यै ॥ ८८ ॥

भक्तिः प्रेमैव हि प्रेम च सुभगजनेषूचितं दुर्भगस्त्री-
सक्तास्तत्सौभगाब्धौ भगवति सुकरं स्त्रीषु कृच्छ्रेण कृत्वा ।
भुक्तेश्चाधःपतन्तीश्वरविमुखतया तादृशो मा स्म भूवं
भक्तानां सङ्गमो मे भवतु च सततं व्याघ्रगेहेशभाजाम् ॥ ८९ ॥

सत्सङ्गावाप्तभक्तिर्भ[ग]वति हृदयं न्यस्य हृद्यष्टमूर्ते-
रुत्सङ्गारूढगौरीकरकलितपरिष्वङ्गमङ्गं सगङ्गम् ।
चित्स्वच्छं व्याघ्रगेहस्थितमतिमहितं चिन्तयन् भस्मधूली-
भृत्स्वच्छन्दं चरेयं चिरमिह शिवरामादिनामानि गायन् ॥ ९० ॥

नाम्नां नानाकथानामपि निशमनया योदिताभाग्यभाजा-
माम्नायाचार्यबोधादपि परमतमन्तत्वसूक्ष्मं प्रसूते ।
धाम्ना संसारतापस्त्रिजगति परमानन्दतामेति यस्या
भूम्ना किं व्याघ्रगेहाधिपमुपरि ततो भक्तितोऽन्यं न याचे ॥ ९१ ॥

कर्मज्ञानादिकक्ष्या दुरधिगमतमं सम्मतं साम्यहीनं
ब्रह्मज्ञानं प्रसूते बत भुवि बधिरस्यापि या पातमात्रे ।
धर्मज्ञानां जनानां जनिमृतिहनने जाग्रतीस्ता वृणेऽहं
ब्रह्मघ्नामप्यघघ्नीं व्यसननिरसनीं व्याघ्रगेहेशभक्तिम् ॥ ९२ ॥

यल्लाभे भाग्यभाजामहिजगदवनीचक्रमेकातपत्रं
स्वर्लोकश्च स्वयं द्रागहमहमिकया पाहि पाहीत्यभीक्ष्णम् ।
संल्लापैः पादमूले पतति हि तरसा पारमेष्ठ्येन साकं
दुर्लभ्याशैव तस्यै सततमपि नमो व्याघ्रगेहेशभक्त्यै ॥ ९३ ॥

निःस्वः पापोऽपि नेच्छाम्यहमवनिमिमां नापि वस्वौकसाराः
न स्वर्गं नापवर्गं न नरकहरणं चार्थये चार्थमेकम् ।
सस्वातन्त्र्यो भवेयं प्रतिभवमितया व्याघ्रगेहेशभक्त्या
दुःस्वप्नप्रायमङ्गं जगदपि सकलं विस्मरन्नासञ्चरेयम् ॥ ९४ ॥

सोऽहं देहात्मबुद्धिद्रढिमदमदनेन्धानमाहात्म्यमाया-
मोहान्धो गेहगेहाधिकगहनतया साहसेनाभिभूये ।
द्रोहव्यूहावगाढव्यसनमकलयन् व्याघ्रगेहेशभक्त्या
सो[मो]हापोहं सुसूक्ष्मं मनसि भगवतस्तत्त्वमुद्भावयेयम् ॥ ९५ ॥

दारिद्र्यैर्व्याधिभिश्चाधिभिरपि विविधैः शत्रुभिश्चाभिभूये
दारद्र्व्याधिचौर्यैच्छुभिरतिपिशुनैर्दाम्भिकैः कालशक्त्या ।
कारुण्यार्द्रैः सुहृद्भिर्गुरुभिरपि दुरात्मेति दूरीक्रियेऽस्यां
कारयां व्याघ्रगेहत्रिनयनकरुणापातकालं प्रतीक्षे ॥ ९६ ॥

भावे भावे भवानीपतिभजनमहावासना मेऽस्तु माता
देवस्तातो गुरुश्चास्त्विह मम सुहृदः सन्तु भक्ताः सहस्रम् ।
भक्तिर्भार्यास्तु पुत्रो भवतु भगवतस्तत्त्वबोधो बुधैश्च
त्यक्तो मा भूवमेवं व्यसनिनमवताद्व्याघ्रगेहेश्वरो माम् ॥ ९७ ॥

व्यक्तं व्यामोहदं च व्यसनमितमिदं साम्प्रतं मे चिराय
त्यक्तं येनेश्वराराधनमतिकठिनानीश्वराराधनार्थम् ।
धिक् तं मां स्त्रैणमन्धं मुखरयति मुदा यः स्वभक्त्यर्थमित्थं
भक्तः स्यां व्याघ्रगेहत्रिपुरविजयिनस्तस्य सर्वात्मनाहम् ॥ ९८ ॥

कल्पाद्युत्पन्नमेतत्त्रिभुवनमखिलं यत्पदाम्भोजधूली-
कल्पं मन्ये महत्त्वं मधुरिपुरपि नो वेद साक्षाद्यती[दी] यम् ।
स्व[:]पाताजो हरियैः स्वयमपि भगवान् यत्कला यस्य भूम्नः
स्वल्पा देवाश्च भक्त्या सततमपि भजे व्याघ्रगेहेश्वरं तम् ॥ ९९ ॥

वेदे शास्त्रे पुराणादिषु च बहुविधं वर्ण्यते वस्तु नाम्नां
भेदेनाभिन्नमेकं यदिह हरिहरब्रह्मशक्रादयोऽमी ।
ये देवास्ते तदंशाः किमु पुनरपरे कृष्णरामार्जुनाद्या
मोदायोदेतु तत्वं मनसि तदनिशं व्याघ्रगेहस्थितं मे ॥ १०० ॥

गात्रं कैलासगोत्रप्रभवमपि हृतं यस्य शास्त्रेण नेत्रं
श्रोत्रं वेदेन लूनं रसनमपि पुराणेन नूनं क सोऽहम् ।
स्तोत्रं काहो पवित्रं परतरभगवद्भक्तिमाहात्म्यपाली-
पात्रं व्याघ्रालयाधीश्वरशतकमिदं कस्य काव्यं न जाने ॥ १०१ ॥

॥ इति श्रीव्याघ्रालयेशशतकं सम्पूर्णम् ॥

---

## ३४. ॥ अथ श्री आत्मार्पणस्तुतिः ॥

कस्ते बोद्धुं प्रभवति परं देवदेव प्रभावं
यस्मादित्थं विविधरचनासृष्टिरेषा बभूव ।
भक्तिग्राह्यस्त्वमिति भगवन् त्वामहं भक्तिमात्रात्
स्तोतुं वाञ्छाम्यतिमहदिदं साहसं मे सहस्व ॥ १ ॥

क्षित्यादीनामवयववतां निश्चितं जन्म तावत्
तन्नास्त्येव क्वचन कलितं कर्त्रधिष्ठानहीनम् ।
नाधिष्ठातुं प्रभवति जडो नाप्यनीश भावः
तस्मादाद्यस्त्वमसि जगतां नाथ जाने विधाता ॥ २ ॥

इन्द्रं मित्रं वरुणमनिलं पद्मजं विष्णुमीशं
प्राहुस्ते ते परमशिव ते मायया मोहितास्त्वाम् ।
एतैः साकं सकलमपि यच्छक्तिलेशे समाप्तं
स त्वं देवः श्रुतिषु विदितः शंभुरित्यादिदेवः ॥ ३ ॥

आनन्दाब्धेः कमपि जघनीभावमास्थाय रूपं
शक्त्या सार्धं परममुमया शाश्वतं भोगमिच्छन् ।
अध्यातीते शुचिदिवसकृत्कोटिदीप्रे कपर्दिन्
आद्ये स्थाने विहरसि सदा सेव्यमानो गणेशैः ॥ ४ ॥

त्वं वेदान्तैर्विविधमहिमा गीयसे विश्वनेतः
त्वं विप्राद्यैर्वरदनिखिलैरिज्यसे कर्मभिः स्वैः ।
त्वं दृष्टानुश्रविकविषयानन्दमात्रावितृष्णै-
रन्तर्ग्रन्थिप्रविलयकृते चिन्त्यसे योगिवृन्दैः ॥ ५ ॥

ध्यायंस्तत्त्वं कतिचन भवं दुस्तरं निस्तरन्ति
त्वत्पादाब्जं विधिवदितरे नित्यमाराधयन्तः ।
अन्ये वर्णाश्रमविधिरताः पालयन्तस्त्वदाज्ञां
सर्वं हित्वा भवजलनिधावेष मज्जामि घोरे ॥ ६ ॥

उत्पद्यापि स्मरहर महत्युत्तमानां कुलेऽस्मिन्
आस्वाद्य त्वन्महिमजलधेरप्यहं शीकराणि ।
त्वत्पादार्चाविमुखहृदयश्चापलादिन्द्रियाणां
व्यग्रः कृच्छ्रेष्वहह जननं व्यर्थजन्मैष पापः ॥ ७ ॥

अर्कद्रोणप्रभृतिकुसुमैरर्चनं ते विधेयं
प्राप्यं तेन स्मरहर फलं मोक्षसाम्राज्यलक्ष्मीः ।
एतज्जानन्नपि शिव शिव व्यर्थयन् कालमात्मन्
आत्मद्रोही करणविवशो भूयसाऽधः पतामि ॥ ८ ॥

किं वा कुर्वे किमुचितमिह क्वाद्य गच्छामि हन्त
त्वत्पादाब्जप्रपदनमृते वैन पश्याम्युपायम् ।
किं वा कुर्वे विषमविषयस्वैरिणावैरिणाहं
बद्धः स्वामिन् वपुषि हृदयग्रन्थिना सार्धमस्मिन् ॥ ९ ॥

अक्ष्णा दर्पज्वरभरजुषा शोकबृन्देन[सास्रमेकत्र]नद्धः
श्राम्यन्वत्सः स्मरहरयुगे धावता किं करोतु ।
नाहं रोद्धुं करणनिचयं दुर्णयं पारयामि
स्मारं स्मारं जनिपथरुजं नाथ सीदामि भीत्या ॥ १० ॥

उल्लङ्घ्याज्ञामुडुपतिकलाभूष ते विश्ववन्द्य
त्यक्ताचारः पशुवदधुना मुक्तलज्जश्चरामि ।
एवं नानाविधभवततिप्राप्तदीर्घापराधः
क्लेशाम्भोधिं कथमिह ऋते त्वत्प्रसादात्तरेयम् ॥ ११ ॥

क्षाम्यस्येव त्वमिह करुणासागरः कृत्स्नमागः
संसारोत्थं गिरिश सभयप्रार्थनादैन्यमारात् ।
अद्याप्येवं प्रतिकलमहं व्यक्तमागःसहस्रं
कुर्वन् मूर्खः कथमिव तथा निस्त्रपं प्रार्थयेऽहम् ॥ १२ ॥

सर्वं हर्तुं प्रभवति जनः संसृतिप्राप्तमागः
चेतः श्वासप्रशमसमये त्वत्पदाब्जे निधाय ।
तस्मिन् काले यदि मम मनो नाथ दोषत्रयार्तं
प्रज्ञाहीनं पुरहर भवेत् तत्कथं मे घटेत ॥ १३ ॥

प्राणोत्क्रान्तिव्यतिकरदलत्सन्धिबन्धे शरीरे
प्रेमावेशप्रसरदमितक्रन्दिते बन्धुवर्गे ।
अन्तःप्रज्ञामपि शिव भजन्नन्तरायैरनन्तै-
राविद्धोऽहं त्वयि कथमिमामर्पयिष्यामि बुद्धिम् ॥ १४ ॥

अद्यैव त्वत्पदनलिनयोरर्पयाम्यन्तरात्मन्
आत्मानं मे सह परिकरैरद्रिकन्याधिनाथ ।
नाहं बोद्धुं तव शिव पदं न क्रिया योगचर्याः
कर्तुं शक्नोम्यनितरगतिः केवलं त्वां प्रपद्ये ॥ १५ ॥

यः स्रष्टारं निखिलजगतां निर्ममे पूर्वमीशः
तस्मै वेदानधित सकलान् यश्च साकं पुराणैः ।
तं त्वामाद्यं गुरुमहमसावात्मबुद्धिप्रकाशं
संसारार्तः शरणमधुना पार्वतीशं प्रपद्ये ॥ १६ ॥

ब्रह्मादीन् यः स्मरहर पशून् मोहपाशेन बद्ध्वा
सर्वानेकश्चिदचिदधिकः कारयित्वा स्वकृत्यम् ।
यश्चैतेषु स्वपदशरणान् विद्यया मोचयित्वा
सान्द्रानन्दं गमयति परं धाम तं त्वां प्रपद्ये ॥ १७ ॥

भक्ताग्र्याणां कथमपि परैर्येश्चिकित्सामम्त्यैः
संसाराख्यां शमयति रुजं स्वात्मबोधौषधेन ।
तं सर्वाधीश्वरभवमहादीर्घतीव्रामयेन
क्लिष्टोऽहं त्वां वरद शरणं यामि संसारवैद्यम् ॥ १८ ॥

ध्यातो यत्नाद्विजितकरणैर्योगिभिर्यो विमुक्त्यै
तेभ्यः प्राणोत्क्रमणसमये सन्निधायात्मनैव ।
तद्व्याचष्टे भवभयहरं तारकं ब्रह्मदेवः
तं सेवेऽहं गिरिश सततं ब्रह्मविद्यागुरुं त्वाम् ॥ १९ ॥

दासोऽस्मीति त्वयि शिव मया नित्यसिद्धं निवेद्यं
जानास्येतत्त्वमपि यदहं निर्गतिः संभ्रमामि ।
नास्त्येवान्यन्मम किमपि ते नाथ विज्ञापनीयं
कारुण्यान्मे शरणवरणं दीनवृत्तेर्गृहाण ॥ २० ॥

ब्रह्मोपेन्द्रप्रभृतिभिरपि स्वेहितप्रार्थनाय
स्वामिन्नग्रे चिरमवसरस्तोषयद्भिः प्रतीक्ष्यः ।
द्रागेव त्वां यदिह शरणं प्रार्थये कीटकल्प-
स्तद्विश्वाधीश्वर तव कृपामेव विश्वस्य दीने ॥ २१ ॥

कर्मज्ञानप्रचयमखिलं दुष्करं नाथ पश्यन्
पापासक्तं हृदयमपि मेऽपारयन् सन्निरोद्धुम् ।
संसाराख्ये पुरहर महत्यन्धकूपे विषीदन्
हस्तालम्बप्रपदनमिदं प्राप्य ते निर्भयोऽस्मि ॥ २२ ॥

त्वामेवैकं गतजनिपथं नाथमस्मिन् प्रपञ्चे
मत्वा जन्मप्रलयजलधेर्बिभ्यतः पारशून्यात् ।
यत्ते धन्याः सुरवरमुखं दक्षिणं संश्रयन्ति
क्लिष्टं घोरे चिरमिह भवे तेन मां पाहि नित्यम् ॥ २३ ॥

एकोऽसि त्वं शिव जनिमतामीश्वरो बन्धमुक्त्योः
क्लेशाङ्गारावलिषु लुठतः का गतिस्त्वां विना मे ।
तस्मादस्मिन्निह पशुपते घोरजन्मप्रवाहे
खिन्नं दैन्याकरमतिभये मां भजस्व प्रपन्नम् ॥ २४ ॥

यो देवानां प्रथमशुभदश्रेष्ठदो भक्तिभाजां
पूर्वं विश्वाधिकशतधृतिं जायमानं महर्षिः ।
दृष्टयाऽपश्यत्सकलजगतीसृष्टिसामर्थ्यदात्र्या
स त्वं ग्रन्थिप्रविलयकृता विद्यया योजयास्मान् ॥ २५ ॥

यद्याकाशं शुभदमनुजाश्चर्मवद्वेष्टयेयुः
दुःखस्यान्तं तदपि पुरुषः त्वामविज्ञाय चैति ।
विज्ञानं च त्वयि शिव ऋते त्वत्प्रसादान्न लभ्यं
तद्दुःखार्तः कमिह शरणं यामि दैवं त्वदन्यम् २६ ॥

किं गूढार्थैरकृतकवचोगुम्भनैः किं पुराणैः
तन्त्राद्यैर्वा पुरुषमतिभिः दुर्निरूपैस्तदर्थैः ।
किं वा शास्त्रैरफलकलहोल्लासमात्रप्रधानैः
विधाविद्येश्वरकृतधियां केवलं त्वत्प्रसादात् ॥ २७ ॥

पापिष्ठोऽहं विषयचपलः सन्ततं द्रोहशाली
कारुण्यैकस्थितिनिवसतिः पुण्यगन्धानभिज्ञः ।
यद्यप्येवं तदपि शरणं त्वत्पदाब्जं प्रपन्नं
नैनं पीनं पुरहर तवोपेक्षितुं नाथ युक्तम् ॥ २८ ॥

आलोच्यैवं यदि मयि भवान् नाथ दोषाननन्ता-
नस्मत्पादाश्रयणपदवीं नार्हतीति क्षिपेन्माम् ।
अद्यैवेमं शरणविरहाद्विद्धि भीत्यैव नष्टं
ग्रामे ग्राहग्रसिततनयं किं नु माता निरस्येत् ॥ २९ ॥

क्षन्तव्यं वा निखिलमपि मे भूतभावि व्यलीकं
दुर्व्यापारप्रवणमथवा शिक्षणीयं मनो मे ।
न त्वेवार्त्या निरतिशयया त्वत्पदाब्जं प्रपन्नं
त्वद्विन्यस्ताखिलभय[र]ममुं युक्तमीश प्रहातुम ॥ ३० ॥

अत्यन्तार्तिव्यथितमगतिं देव मामुद्धरेति
क्षुण्णो मार्गस्तव शिव पुरा केन वा नाथनीयम् ।
कामालम्बे बत तदधिकां प्रार्थनारीतिमन्यां
त्रायस्वैनं सपदि कृपया वस्तुतत्त्वं विचिन्त्य ॥ ३१ ॥

एतावन्तं भ्रमणनिचयं प्रापितोऽयं वराकः
श्रान्तः स्वामिन्नगतिरधुना मोचनीयस्त्वयाहम् ।
कृत्याकृत्यव्यपगतमतिर्दीनशाखामृगोऽयं
सन्ताड्यैनं दशनविवृतिं पश्यतस्ते फलं किम् ॥ ३२ ॥

सर्वज्ञस्त्वं निरवधिकृपासागरः पूर्णशक्तिः
कस्मादेनं न गणयसि मामापदब्धौ निमग्नम् ।
एकं पापात्मकमपि रुजा सर्वतोऽत्यन्तदीनं
जन्तुं यद्युद्धरसि शिव कस्तावताऽतिप्रसङ्गः ॥ ३३ ॥

माता तातः सुत इति समाबद्ध्य मां मोहपाशै-
रापात्यैनं भवजलनिधौ वा किमीशाद्य मग्नम् ।
एतावन्तं समयमिति मामार्तिमापादितेऽस्मिन्
कल्याणी ते किमिति न कृपा कापि मे भाग्यरेखा ॥ ३४ ॥

भुङ्क्ष्वागुप्तं बत सुखनिधिं तात साधारणं त्वं
भिक्षावृत्तिं परमभिनयन् मायया मां विभज्य ।
रम्या दायाः सकलजगतां नायकः स्थापकस्त्वं
युक्तं किं तद्वद विभजनं योजयस्वात्मना माम् ॥ ३५ ॥

न त्वा जन्मप्रलयजलधेरुद्धरामीति चेद्धी-
रास्तां तन्मे भवतु च जनिर्यत्र कुत्रापि जन्तौ ।
त्वद्भक्तानामनितरसहैः पादधूलीकिशोरै-
राव्याप्तं मे भवतु भगवन् भावि सर्वं शरीरम् ॥ ३६ ॥

कीटा नागास्तरव इति ते किं न सन्ति स्थलेषु
त्वत्पादाम्भोरुहपरिमलोद्वाहिमन्दानिलेषु ।
तेष्वेकं वा सृज पुनरिमं नाथ दीनार्तिहारिन्
सन्तोषान्मां मृड भवमहाङ्गारनद्यां लुठन्तम् ॥ ३७ ॥

कालेकण्ठस्फुरदसुकलालेशसन्नावलोक-
व्यग्रोदग्रव्यसनरुदितस्निग्धरुद्धोपकण्ठे ।
अन्तःस्तोदैरवधिरहितामार्तिमापाद्यमानोऽ-
प्यङ्घ्रिद्वन्द्वे तव निविशतामन्तरात्मा मदीयः ॥ ३८ ॥

अन्तर्बाष्पाकुलितनयनानन्तरङ्गानपश्यन्
अग्रे घोषं रुदितबहुलं कातराणामशृण्वन् ।
अत्युत्क्रान्तिश्रममगणयन्नन्त्यकाले कपर्दिन्
अङ्घ्रिद्वन्द्वे तव निविशतामन्तरात्मा ममात्मा ॥ ३९ ॥

चारुस्मेराननसरसिजं चन्द्रलेखावतंसं
फुल्लन्मल्लीकुसुमकलिकादामसौभाग्यचोरम् ।
अन्तः पश्याम्यचलसुतया रत्नपीठे निषण्णं
लोकातीतं शुभद सततं रूपमप्राकृतं ते ॥ ४० ॥

स्वप्ने वापि स्मरहर दलद्दिव्यपङ्केरुहाभं
पश्येयं किं तव पशुपते पादयुग्मं कदाचित् ।
क्वाहं पापः क्व तव चरणालोकभाग्यं तथापि
प्रत्याशां मे घटयति पुनर्विश्रुता तेऽनुकम्पा ॥ ४१ ॥

भिक्षावृत्तिं चर पितृवने भूतसङ्घैर्भ्रमेदं
विज्ञातं ते चरितममलं विप्रलिप्सोः कपर्दिन् ।
आवैकुण्ठद्रुहिणमखिलप्राणिनामीश्वरस्तं[स्त्वं]
नाथ स्वप्नेऽप्यहमिह न ते पादपद्मं त्यजामि ॥ ४२ ॥

आलेपनं भसितमावसतिः श्मशान-
मस्थीनि ते सततमाभरणं करोषि ।
निह्नोतुमेतदखिलश्रुतिसारसिद्ध-
मैश्वर्यमम्बुजभवोऽपि न वा क्षमस्ते ॥ ४३ ॥

विविधमपि गुणौघं वेदयन्त्यर्थवादाः
परिमितविभवानां पामराणां पुराणाम् ।
तनुहिमकरमौले तावता तत्परत्वे
कति कति जगदीशाः कल्पितास्ते भवेयुः ॥ ४४ ॥

बलमबलममीषां बल्बजानां विचिन्त्यं
कथमपि शिव कालक्षेपमात्रप्रधानैः ।
निखिलमपि रहस्यं नाथ निष्कृष्य साक्षात्
सरसिजभवमुख्यैः साधितं नः प्रमाणम् ॥ ४५ ॥

विहर पितृवने वा विश्वपारे पुरे वा
रजतगिरितटे वा रत्नसानुस्थले वा ।
शिव भवदुपकण्ठे देहि मे भृत्यभावं
परमशिव तव श्रीपादुकावाहकानाम् ॥ ४६ ॥

न किञ्चिन्मे चेतस्समभिलषणीयं त्रिभुवने
सुखं वा दुःखं वा शिव भवतु यद्भावि भगवन् ।
समुन्मीलत्पाथोरुहकुहरसौभाग्यमुषिते
पदद्वन्द्वे चेतः परिचयमुपेयान्मम सदा ॥ ४७ ॥

उदरभरणमात्रं साध्यमुद्दिश्य नीचे-
ष्वसकृदवनिबद्धामाहितोच्छिष्टभावाम् ।
अहमिह नुतिभङ्गीमर्पयित्वोपहारं
तव चरणसरोजे तात जातापराधः ॥ ४८ ॥

सर्वं सदाशिव सहस्व ममापराधं
मग्नं समुद्धर महत्यमुमापदब्धौ ।
सर्वात्मना तव पदाम्बुजमेव दीनः
स्वामिन्ननन्यशरणः शरणं गतोऽस्मि ॥ ४९ ॥

आत्मार्पणस्तुतिरियं भगवन्निबद्धा
स्वामिन्ननन्यमनसा न मया तथापि ।
वाचापि केवलतया [मयं] शरणं प्रयातो
दीनो वराक इति रक्ष कृपानिधे माम् ॥ ५० ॥

॥ इति श्री आत्मार्पणस्तुतिः सम्पूर्णा ॥

---

## २५. ॥ अथ श्रीरङ्गनाथस्तुतिमाला ॥

विघ्नविघाताय परं चित्ताश्रय वाहिनीपतिं रुचिरम् ।
सद्रत्नावलिविततं कमलाकरभावतः प्रथितम् ॥ १ ॥

राजदनल्पकवनितासहवासपरं सुचिन्तनीयपदम् ।
अमरकृतादरमाश्रय रङ्गपतिं चित्त सत्कविप्रथितम् ॥ २ ॥

रङ्गेश नामसदृशं खलु चेष्टितं ते
रथ्यासु हन्त वनितां च पुरस्करोषि ।
गृह्णासि वेषनिचयं च सहस्रधा त्वं
लोकांश्च नर्तयसि कर्मगुणैर्निबद्धान् ॥ ३ ॥

रङ्गेश तिष्ठसि रमानिकटे कुतस्त्वं
नृत्ताय किं कथय युक्तमिदं तथा चेत् ।
रत्नाकरस्य दुहिता खलु सर्वदात्री
भक्ताय दातुमिति किन्नु विरक्तयत्नः ॥ ४ ॥

सम्राजत्कमालाङ्कके सुविमले भास्वद्रथाङ्गप्रिये
पद्मानन्दविधायिनि प्रकलितावास्ते तवास्थेकथा ।
भक्तानाममृतप्रदे द्विजवरैः संसेव्यपादे सति
श्रीरङ्गोडुपदा(ता)वपूर्वविभवे कोऽसावलज्जः शशी (?) ॥ ५ ॥

तिष्ठन् किं गृहकार्यं कमलायै रङ्गनाथ वेदयसि ।
रत्नाकरतनयायै धनिकश्वशुरत्वमेवमेव भुवि ॥ ६ ॥

श्रियञ्च भूमिञ्च सुपश्यताद्य
श्रीरङ्गबन्धो भवतोपदिष्टा ।
अस्त्यप्रमादाय धनाधिकैर्हि
कर्तव्यता कार्यवशेन लोके ॥ ७ ॥

सूर्यप्रभाख्यपेटीमध्येन्द्रमणिप्रभासुपरिपाटी ।
रङ्गेन्दुदृष्टिघाटी लसति स्मरतापपात्रितवधूटी ॥ ८ ॥

भास्वन्मण्डलशोभिते नरवरैः सम्मानिते सत्करैः
आज्ञापालनतत्पराखिलजने हस्त्यश्वसेनाधने ।
सिंहाङ्कासनशोभमानवपुषि प्रोद्वेजितस्वद्विषि
श्रीरङ्गाम्बुधिमेखलापरिवृढे वन्दीबुभूषामहे ॥ ९ ॥

कारुण्यमञ्जुलदरस्मितकान्तिपूरा
शक्रोपलासितशरीरसुकान्तिधारा ।
आनन्दनीं कुवलयस्य चिरं गतेव
सूर्यप्रभापि भवतास्ति शशिप्रभेव ॥ १० ॥

आराधितो द्युमणिनासि पुरा तदानीं
दत्ता कथं नु भवते परमा प्रभा स्वा ।
तेनार्यमेव भुवने प्रथितेन भाव्यं
प्राप्तेन विष्णुपदमप्यरुणेन पूर्वम् ॥ ११ ॥

या विनतानन्दनता तार्क्ष्यस्य हि रङ्गधुर्य विख्याता ।
तां हंसाय च दिशता प्रथिता भवता कृपाकरता ॥ १२ ॥

तावकमरालपत्रं मनसामीशाद्य मृग्यते चित्रम् ।
तव च पदाब्जं सत्रं वहतीदं किं न चित्रपदमित्रम् ॥ १३ ॥

सत्स्वेव पत्रिनिवहेषु चकोरचक्र-
क्रौञ्चादिमेषु जवनेषु च रङ्गधुर्य ।
सत्सङ्गमाप कुत एष स राजहंसः
ज्ञातं निदानमिह तन्मुखराग एव ॥ १४ ॥

हंसं गतं भवन्तं भजन्ति लोकाश्च रङ्गशिशिरकर ।
ये तेऽहंसंगततां भजन्ति युक्तं यथाक्रतुन्यायात् ॥ १५ ॥
श्रीरङ्गनरपते तव सङ्गात्सिंहः स्वरूपताशाली ।
सद्विपदमनायासं हिनस्ति वनदेशशयनमातनुते ॥ १६ ॥

श्रीरङ्गचन्द्र भवदासनसङ्गतोऽयं
पञ्चाननस्तु चतुराननमत्यशेत ।
यत्संज्ञया भवति युक्तमिदं परं तु
षट्पञ्चवक्त्रसहितावपि चेति चित्रम् ॥ १७ ॥

इभेन वृत्तिं चरतोऽस्य रङ्गिन्
तवास्ति सङ्गादनिभास्यवृत्तिः ।
वने कृतासक्तिरयं मृगेन्द्रोऽ-
वने कृतासक्तिरिदं च चित्रम् ॥ १८ ॥

स्वामिन् सुवर्णशुभकेसरिवाहनश्री-
रङ्गेशितुस्तव च कुत्र सुवर्णलब्धिः ।
ज्ञातं दिशन्ति कवयो भवते सुवर्ण-
जातं हि नाम तु तथा धनरक्षणाय ॥ १९ ॥

कमलसदनाङ्कपालीकुङ्कुमयुततावकाङ्कसृतधूली ।
इभहिंसनकरवाली विलसति रङ्गक्ष्मापते व्याली ॥ २० ॥

हस्तीष्टदानतत्पर तद्दारणसादराममुं भुवने ।
आलोच्य मृगविशेषं रङ्गिन् किं शिक्षयन्नधः कुरुषे ॥ २१ ॥

व्यालीप्रियोऽसि भगवन् भुजगेन्द्रतल्प
तस्मादमुं वरहितां सुविलक्ष्य यालीम् ।
वाहाधिकारमदिशः प्रबलं जनेभ्यो
गृह्णासि सोऽञ्जलिवधूः सुविचार्यमेतत् ॥ २२॥

यालीवाहनशोभिनि कालीकृतदेववैरिमुखशशिनि ।
रङ्गक्ष्मामघोनि स्तुतिक्रियाकर्तृतां बुभूषानि [णि] ॥ २३ ॥

शेषस्थितिं भूषयतापि सम्य-
गशेषवृत्तिर्भवतोपक्लृप्ता ।
न चित्रमेतत्त्रिजगद्विरूढ-
स्वभावशीलाकृतिरूपभाजा ॥ २४ ॥

रङ्गेशिता त्वं स भुजङ्गवर्यः
सम्बन्धितास्ते ह्युभयोः समाना ।
फणां सुकान्तां भवददङ्गजात-
वराय यत्प्रादिशदेष मुख्याम् ॥ २५ ॥

उत्सङ्गभाजा भवताद्य राज-
त्यत्यद्भुतं कुण्डलिराजवर्यः ।
अमूल्यशक्रोपलदर्शनीया
रङ्गप्रभो स्फाटिकपेटिकेव ॥ २६ ॥

चक्रित्वकुण्डलित्वे गूढपदत्वं बिलेशयत्वं च ।
पर्यायतोऽस्य यद्वच्छेषस्य तथा तवेत्युभौ मिलितौ ॥ २७ ॥

आश्रितसुवर्णगरुडं श्रितजनकल्याणसम्पदां नीडम् ।
कृतरिक्तभावपीडं भज रङ्गपतिं श्रुतित्रयीचूडम् २८ ॥

आरुढपक्षिराजे सेवागतनिखिलनिर्जरसमाजे ।
हृदय वस रङ्गराजे सुन्दरतररूपविजितचेतोजे ॥ २९ ॥

अधिगतसुपर्णवृत्तो रङ्गपतिश्चापि कनकधाराणाम् ।
दाता भवसि सदा त्वं रत्नाकरकन्यकाश्रयेण किमु ॥ ३० ॥

मुष्णासि चेतांसि न चित्रमेतत्
किशोरभावे दधिहारिवृत्तिः ।
पुष्णासि रङ्गाधिप वीनशोभां
नवीनशोभाकृदसीति चित्रम् ॥ ३१ ॥

एतत्सहायभूम्ना धरणीजाताप्तिरिह बभूव पुरा ।
कुशलवसुवृद्धिहेतुस्त्विति हि सुवर्णीकरोषि कपिमेनम् ॥ ३२ ॥

तव परिचयतः कपिरपि पीताम्बरधरणमातनुते ।
नर इव तथापि शाखापरिचयतो नैव निववृते युक्तम् ॥ ३३ ॥

अरुणमुखहनुमदंसप्रतिष्ठितं त्वां स्मरामि संलक्ष्य ।
इन्दिन्दिरस्य रङ्गिन्नशोकसुमगुच्छवृन्तलग्नस्य ॥ ३४ ॥

निशिचरलोककृतान्तं निजांसभागप्रकाशितानन्तम् ।
भक्तावलिषु महान्तं विषयीकुरु लोचने हनूमन्तम् ॥ ३५ ॥

कल्पतरुमूलशालिनमाकलयन् कल्पते भवाटव्याः ।
सञ्चरणाय न चैनं पञ्चशराभिख्यचोरदुर्गायाः ॥ ३६ ॥

रङ्गिन् परिग्रहवशात्तव कल्पवृक्षो
दातृप्रसिद्धिमगमत् सति चान्यवृक्षे ।
स्यालं तमेनमपरं च विचार्य वृक्ष-
मस्यालमस्य विषये सदनुग्रहेण ॥ ३७ ॥

स्यालत्वमेव कलयन्नकृथा वदान्य-
मेनं स चेन्मधुपसङ्गतिभाक् सुराणाम् ।
पाता भवत्यहह रङ्गपते सुरद्रुः
यत्संविचार्य करणीयमतस्त्रिलोके ॥ ३८ ॥

भूमौ वदान्यविभवं किमयं प्रकाशं
कर्तुं भुवं सुरतरुर्हि परिष्करोति ।
सत्युज्ज्वले सकलकल्पककल्पकद्रौ
त्वय्येनमाश्रयतु को जडभावभाजम् ॥ ३९ ॥

चन्द्रप्रभापि प्रथते प्रभाते
सङ्गेऽपि भास्वत्त्वदुरुप्रभायाः ।
रङ्गप्रभो युक्तमिदं विभाति
भवत्पदाप्तावविरोधिभावः ॥ ४० ॥

नामायोगः क्षीणता नैव बिम्बे
सत्येवं किं भास्वताप्तोत्वथाद्य ।
रङ्गिन् सङ्गं चन्द्रमाः स्यादथैव-
मायोगं ते वीक्ष्य सक्तस्त्वपूर्वम् ॥ ४१ ॥

तुभ्यं स्वबिम्बादमृतं सुधांशु
रङ्गिन् समुद्धृत्य गृहागताय ।
तुभ्यं ददौ रन्ध्रमतोऽस्य जातं
मध्येऽशुकं त्वं च ददासि तस्मै ॥ ४२ ॥

स्थानं ददावक्षिणि यस्य नित्यं
तस्मै क्षमः स क्षणदाधिनाथः ।
दत्ते प्रभामुत्सववासरे स्वा
मादानदानोचितमेव पात्रम् ॥ ४३ ॥

करिवरमिह पूर्वं ग्राहबन्धादरक्ष-
स्तदधिगतगरिम्णा दन्तिवाहस्पृहाभूत् ।
तव पतदिनवाह ग्राहनिर्बन्धतो मां
मदजुषमिह मोक्तुं कः समर्थस्त्वदन्यः ॥ ४४ ॥

सद्गोत्रभेदपरदाररतं सुरेन्द्रं
त्यक्त्वागमत् कथमसौ सुरदन्तिराजः ।
गोत्रोद्धृतौ प्रथितधर्मजदारमान-
दाने रतं भुवि समीक्ष्य भवन्तमेव ॥ ४५ ॥

सुरदन्त्यपि बर्हिर्मुखभावं भजते विभो तव तु ।
दन्तीन्द्रो बत रङ्गपतेऽश्नात्यघानि सर्वेषाम् ॥ ४६ ॥

सुरदन्तिनमासाद्य च चलस्थितिं कलयते विभो सुकृति[ती] ।
सुकृतं विनाश्य भजतेऽचलस्थितिं त्वां गजस्थमालोक्य ॥ ४७ ॥

हारिद्रचूर्णसुविलेपनलोभनीयां
मूर्तिं कथं कलयसे बत रङ्गबन्धो ।
आभीरवामनयना इव वञ्चनीया
नैतास्तु चोलवनिताः कुटिलस्वभावाः ॥ ४८ ॥

नीलाम्बुदप्रकरकान्तिसुहृच्छरीर
रम्यद्युते कथय किं भवितुं सुरक्तः ।
हारिद्रचूर्णसुविलेपनमातनोषि
को वेद रङ्गचरितं न जगत्प्रसिद्धम् ॥ ४९ ॥

चञ्चत्पयोधररुचिं सुहरिद्रयाक्तं
पीताम्बरं भ्रमतु वीक्ष्य च देहमद्य ।
पद्मां ततः सविधगां स्ववशं नयामो
रङ्गिन् मनः किमिति सापि च रङ्गनिष्ठा ॥ ५० ॥

हारिद्रचूर्णसङ्गादुज्ज्वलवपुषस्तव श्रियो रङ्गिन् ।
धिक्कुर्वन्ति हि शोभां धातुविचित्रितविधूपलग्राव्णः ॥ ५१ ॥

परस्परं दर्पणदर्शनीये गण्डस्थले ते जयतः श्रियश्च ।
सत्योस्तयोर्दर्पणधारणं किं रङ्गेश द्रष्टुं नु समं निजाङ्गम् ॥ ५२ ॥

मुकुरसदनमध्यस्थास्नु किं नीलरत्नं
सितरुचिशुभरोचि श्यामलं किं नु नूत्नम् ।
इति विविधपदव्या वर्णितं निःसपत्नं
भवतु सकललोकश्रेयसे रङ्गरत्नम् ॥ ५३ ॥

मुकुरसदनमध्ये प्रस्फुरद्दीप्ररूपं
दिशि दिशि च भवन्तं वीक्ष्य पद्मा द्विरूपा ।
नयनहृदयचोरं मायया धावनोत्कं
बहुलकलितरूपं त्वां रुणद्धीति शङ्के ॥ ५४ ॥

प्रतिफलसि मुकुरदेशे जडेऽपि हृदये न मे कथं स्फुरसि ।
विमलय पदरजसा तत्समलं चेद्रङ्गभूमिपते ॥ ५५ ॥

स्वामिन् योषाद्वयमपि रङ्गक्ष्मापाल युक्तमेव तव ।
एकप्रकृतिकतापि च तयोर्मुदे ते भवत्यधिकम् ॥ ५६ ॥

पार्श्वद्वयेऽपि लक्ष्मीभूम्योर्मध्यस्थतां प्रपन्नेन ।
रङ्गिन् भवता भार्याद्वयानुसृतिरत्र शिक्ष्यते नृणाम् ॥ ५७ ॥

सेनेशप्रमुखेषु विश्व[ज]निषु त्वच्छासनप्रेप्सुषु
स्वामिन् सत्सु कथं नु धान्यगणनां त्वं द्रष्टुमुद्युङ्क्षसे ।
कार्पण्यात् स भवान्न विश्वसिति किं कार्पण्यमात्रैर्न रै-
स्तुभ्यं वेद्यत एव तत्परिचयाज्जातं स्थिरं किं त्वयि ॥ ५८ ॥

स्वयमेव धान्यगणनां पश्यति सति भवति सत्सु मित्रेषु ।
मित्रं हेम्नोऽर्थेऽलं धान्यार्थे स्वयमिति स्फुटा नीतिः ॥ ५९ ॥

कथं निशीथेऽस्त्वभिषेककालस्तव श्रियश्चापि च रङ्गबन्धो ।
कालव्यवस्था भवता कृतैव यद्वा स कालो युवयोः प्रभुर्न ॥ ६० ॥

गर्भीकृतानि भुवनानि बहून्नते श्री-
रङ्गक्ष्मादयित सन्ति तथापि चाद्य ।
यन्मज्जनं तव च वक्षसि संस्फुरन्त्या
लक्ष्म्याश्च साधु भुवनैरिति चित्रमेतत् ॥ ६१ ॥

सुविमलपवित्रवपुषोर्भवतोः श्रीरङ्गनायकौ स्नानम् ।
सम्पश्यतां नराणामलमशुचिं व्यपोहति विचित्रम् ॥ ६२ ॥

शिबिकान्तःस्फूर्तिरियं युक्तं पुरुषार्थदाननिरतस्य ।
रङ्गेन्दौ स्फुरति दिने रूपं ह्यकलङ्कमसितमिति चित्रम् ॥ ६३ ॥

सङ्केतमैश्वरं यन्न सदर्थं नैव तद्विभाति मम ।
चतुरन्तत्वं भजते वाहनमिदमद्य येन रङ्गपते ॥ ६४ ॥

दानं शोभनकरता स्ववशागतहार्दवृतियुक्तम् ।
सद्यूथपते तव बत शिबिकारोहो रजस्कताप्यन्ते ॥ ६५ ॥

स्वामिन् जगद्गुरुरसि प्रथते च भार-
वाहो वहन्ति बत पञ्चजनास्त एते ।
आलोचयंस्तव सुवैभवमद्भुतस्य
वासं दिशेन्न हृदये भुवि रङ्गभूप ॥ ६६ ॥

घोटोद्यत्खरकूटगाढघटनासञ्जातभूयोरजः-
पालीफेनरसार्दिता समलगन्मेरोस्तवोर्ध्वस्थले ।
रङ्गिन् देवपदं ततो विरचितं तस्यां धरित्र्यां न चेत्
इत्थं राजसमाधिकारिकपदं विज्ञैः कुतः कथ्यते ॥ ६७॥

चञ्चद्भवद्घोटखुराभिघातमाशङ्क्य सूर्योऽगमदस्तशैलम् ।
चन्द्रेऽस्ति लग्नं तदिदं हि चिह्नं रवेस्तदारभ्य तथैव वृत्तिः ॥ ६८ ॥

रङ्गिन् भवद्घोटशिखानिबद्ध-
भूषाविशेषोल्लसितोर्ध्वसीम्नः ।
चञ्चत्खरापसृतिसाहचर्यं
सच्चामरौ पार्श्वयुगे दधाते ॥ ६९ ॥

मद्वृत्तियोग्योऽर्हति जिह्मगत्व-
मित्थं तदध्यापयसीव सप्तिम् ।
आस्तामिदं ताक्ष्र्यमथोऽमृतस्य
दाता त्वयं तद्विषदो न हि स्यात् ॥ ७० ॥

मोचेक्षुमधुरवृत्तौ पत्रिप्रवरोज्ज्वले रथे वृत्तिः ।
सद्रूपशोभितेऽस्मिन्नुद्याने रङ्गभूप युक्तमिदम् ॥ ७१ ॥

कृतप्रतिकृतं भुवि प्रथितमेव रङ्गप्रभो
यदत्र मनुजा भवत्समुपकृष्टचित्तास्तदा ।
भवद्रथसुकर्षणादिह कृतज्ञतां तन्वते
क्षमं खलु यतस्तुतैर्जयति नित्यसख्यं तव ॥ ७२ ॥

अधिगतरथं भवन्तं पश्यन्तो भुवि मनोरथं प्राप्य ।
मोदन्ते रङ्गपते दाता त्वं खलु मनःपूर्वम् ॥ ७३ ॥

आलोक्य रथनिविष्टं नित्यसुतुष्टं जगल्लये शिष्टम् ।
न भजति कदापि कष्टं रङ्गिणमिष्टं जनो दृशा स्पष्टम् ॥ ७४ ॥

आरोहति स्यन्दनमम्बुजाक्षे रोहन्ति चक्षूंषि तमाश्रितानाम् ।
तस्मिन्न चक्षुर्विषये मनांसि तत्स्थानमेषां तु समाक्रमन्ति ॥ ७५ ॥

श्रीरङ्गनाथ नवमोत्सववासरेषु
ये तीर्थवारिणि निमज्जनमाचरन्ति ।
ते बाह्यमान्तरतमं च रजो व्यपोह्य
जन्मान्तरेऽपि शुचितामुपयान्ति हन्त ॥ ७६ ॥

श्रीरङ्गराज किमिदं विपरीतमास्ते
यस्तीर्थवारिषु विगाहनमातनोति ।
पुंसोऽपि तस्य रजसा विगमोऽपि सत्त्व-
प्रादुर्भवश्च शुचिभूतशरीरता च ॥ ७७ ॥

परिणीतामपि पद्मां वर्षे वर्षे किं तु परिणयसि ।
प्रणयवशा खलु नवा नवा सा विभाति रङ्गविभो ॥ ७८ ॥

जितेन्द्रियोऽस्मीति बभाण पूर्वं
रङ्गक्ष्मापालक यादवत्वे ।
रुचिर्विवाहे कथमाविरासी-
ज्ज्ञातं पतत्रीश्वरवाहनोऽसि ॥ ७९ ॥

प्राप्ताब्जोदररम्यकान्ति भवतो रङ्गेश दृष्ट्योर्युगं
कुञ्चद्वक्त्रसरोजवासरसिकापादाब्जयोः संस्फुरत् ।
पश्यद्भिः प्रणयापराधकुपितां पद्मां पदाम्भोजयोः
पाणिभ्यामगृहीस्त्वमित्यनुकलं लोकैः समालोक्यसे ॥ ८० ॥

परिणयविधौ न भवतो रङ्गपते मातुलाहेर्वाहः ।
न हि हीनता ततः स्यादहीनवृत्त्योः सदा युवयोः ॥ ८१ ॥

डोलाधिरोहस्तव रङ्गधुर्य-
प्रभो विवाहे भवतीति चित्रम् ।
पिता पुराणोऽसि भवान् रमापि
प्रसूर्जनानामिति विश्रुता यत् ॥ ८२ ॥

परिणयनविधौ ते रङ्गबन्धो रमायाः
करतलकृतमल्लीसूनगुच्छात् पतद्भिः ।
अरुणमणिधरित्र्यां पुष्पवृन्दैर्विशीर्णैः
कृत इव हि हुताशे लाजहोमप्रकारः ॥ ८३ ॥

कस्त्वं रङ्गपतिः प्रदर्शय शुभं वेषं नु किं दीयते
किं तेऽभीष्टतमं ददासि यदि तत् तद्वाञ्छितं कथ्यते ।
अद्यैवाभिगृहाण ते परिणये वाञ्छेति मां लोभयन्
अन्योन्यालपनेन सोऽयमधुना गृह्णाति तस्याः करम् ॥ ८४ ॥

करग्रहविधौ श्रियो मणिमयावनौ बिम्बितं
जिघृक्षति करं तदा भवति रङ्गपृथ्वीपते ।
करग्रहसमर्थता बत नृपेत्यनाकर्णयन्
सखीगिरमिव प्रभो लिखसि लज्जया भूतले ॥ ८५ ॥

उद्वाह्य पद्मां धरणीञ्च ताभ्यां पद्मालयाद्रङ्गपतेऽर्धवीथ्या ।
त्वां संप्रयान्तं सदनं निरीक्ष्य नो यान्ति याम्यं सदनं पुमांसः ॥ ८६ ॥

राज्ञौ न दृश्ये सकलैरिति त्वं
प्रावृत्य वस्त्रैः शिविकां प्रयासि ।
युक्तं हि राज्ञस्तव तत्परं तु
नान्ये पुमांसोऽत्र तनूभवेभ्यः ॥ ८७ ॥

पद्मावनिभ्यां रुचिरद्विपार्श्वे
श्रीरङ्गधात्रीपतिसार्वभौमः ।
चाम्पेयगुच्छावलिमध्यगालि-
रीतिं ह्यपूर्वां प्रकटीकरोति ॥ ८८ ॥

पार्श्वद्वयगतमहिलं परमपुमांसं पयोजपदमृदुलम् ।
परतरचञ्चत्खुरलं पश्य विलोचनपयोजरुचितरलम् ॥ ८९ ॥

व्यालम्बिकुसुममालं जगदवनासक्तसकलशुभलीलम् ।
उज्ज्वलवासवनीलं हृदये कुरु जन तमेनमयमूलम् ॥ ९० ॥

जागरणकिञ्चिदरुणप्रभाक्षिनीलोत्पलप्रभापूरैः ।
श्रितजनताम्बूलभारं रङ्गपते त्वं ददासीव ॥ ९१ ॥

परिणयकाले राज्ञां मुच्यन्ते निगलबद्धजनबृन्दाः ।
भवता किं रङ्गपते बध्यन्ते प्रेमपाशतः सर्वे ॥ ९२ ॥

रक्षा श्रुता यथा वा भवतो न तथा किमाश्रितानां च ।
स्ववशा निराश्रयाश्चेदिति किं रङ्गिन् श्रिताघमभिहंसि ॥ ९३ ॥

पूर्वं यादवतायामुक्तं गोपैरवाद्यघोषमिति ।
तत्परिचयवशतः किं ह्यवाद्यघोषं विराजसे रङ्गिन् ॥ ९४ ॥

स्कन्धस्य रुचिकृदेतद्वाहनमिति लोभयन्मनुजान् ।
संवाह्य तैश्च रङ्गिन् धत्से तेषां भरन्यासम् ॥ ९५ ॥

तोलुक्किनियानिति हि प्रसिद्धिरेतस्य वाहनस्य भुवि ।
रङ्गपते लोचनयोरप्येतद्रोचते नितराम् ॥ ९६ ॥

निगमशिखरोक्तमधुना प्रकटीकुर्वन् विराजसे शब्दः [म्] ।
दशमामुत्सवरात्रिं नवमान्तेनातनोषि रङ्गपते ॥ ९७ ॥

पुष्पशिबिकान्तरङ्गे दुष्परिहरपापभञ्जनोत्तुङ्गे ।
तनुकान्तिजितानङ्गे धिनु सङ्गं चित्त रङ्गिणि शुभाङ्गे ॥ ९८ ॥

वहन्त एते जडसालभञ्जिकाकृतीन्नरान् वीक्ष्य च राघवत्वे ।
शिलावधूकृत्कपटत्वधारिणीं सञ्चिन्त्य रङ्गिन् स्ववशेऽद्य सन्ति॥९९॥

शिबिकादण्डकृतांसप्रतिमा रङ्गिन् विभीषयन्तीव ।
वहतो भगवद्दृष्टा वयमपि शक्नुमोऽत्रेति ॥ १०० ॥

कुसुमचतुरन्तयाने शोभिनि यद्वत् कुबेरसुविमाने ।
सजलपयोद[ा]यमाने रमस्व रङ्गिणि मनो रमेशाने ॥ १०१ ॥

पुष्योत्सवो यथामत्यमुष्य रङ्गप्रभोरवर्णितराम् ।
कौण्डिन्यवंशमुक्तामणिना श्रीविजयराघवाख्येन ॥ १०२ ॥

कविगौरवेण नास्मिन् रमतां कविपरिषदत्युदारवचाः ।
कस्य कवेरस्य विभोरुपरि निबद्धं स्वदेत न जगत्सु ॥ १०३ ॥

रोगनिवारणकामैः सह्यन्ते ह्यौषधेषु कटुकत्वम् ।
भवदूरीकरणपरैः साधारणतापि चात्र सोढव्या ॥ १०४ ॥

रुचिरार्थेषु न गच्छंस्तेषां दोषैकदृष्टिरिह कोऽपि ।
निम्बदलरुचिरभावामौष्ट्रीं रीतिं समेतु का हानिः ॥ १०५ ॥

अवशेन गृह्णन्नामाप्यजामिलो मुक्तिमेति किल विदितम् ।
ज्ञात्वा जनिता कविता प्रसविष्यति भक्तिमद्भुतामस्मिन् ॥ १०६ ॥

रङ्गविभुस्तुतिमालां स्वीकुरुतां स स्वयं सुकारुण्यात् ।
निरवधिदयापयोधिः श्रीरङ्गनिवाससादरो भूमा ॥ १०७ ॥

सद्गुणगुम्भनमधुरां ग्राह्यां सर्वैर्विशिष्य विषयधुराम् ।
स्तुतिमालामम्लानां स्वीकुरु रङ्गक्ष्माविभो स्वामिन् ॥ १०८ ॥

॥ इति श्रीरङ्गनाथस्तुतिमाला सम्पूर्णा ॥

## ३६. ॥ अथ श्रीश्वेतारण्यस्तुतिः ॥

श्रीमत्कीर्तिपवित्रितत्रिजगतश्वे[ःश्वे]तस्य रक्षाच्छला-
च्छ्वेतारण्यपुरे चिराय विहरन् देवो विभूत्यै भुवः ।
सत्यज्ञानसुधैकमूर्तिरखिलानर्थान् कृतान्तद्विषन्
दाता मे भवतादपारकरुणापीयूषपाथोनिधिः ॥ १ ॥

श्रीमानद्भुतसत्कवित्वपदवीनित्याध्वनीनो वशी
यो जागर्ति जगत्प्रकाशमहिमा वीरः प्रकाशेश्वरः ।
तस्य श्रीरविवर्मदेवनृपतेर्वाचा कृतान्तद्रुहः
श्वेतारण्यविहारिणो भगवतः सेवाक्रमो वक्ष्यते ॥ २ ॥

जय जय जगदेकनाथ जनिमरणजलधितरणपोतायमानकरुणाकटाक्षलेश निशाकरकलापीड विशालतरभक्तिनिरतिशयश्वेतमानमानसश्वेतमुनिजीवितजीवातुलतापल्लवस्य निशातशूलविदारितकृतान्तभुजान्तरालस्य भगवतः परक्रोडपुरे परिक्रीडमानस्य चरणसरसिजयुगलमगलितादरमनुदिनमुपासे उदयशैलशिखरमधिरुक्षत्युपचिततमःपटलपाटनोद्वेगिनि उद्वेलवियोगवेदनाकलुषितचक्रवाकमहिलाचक्रवालसंप्रेक्ष्यमाणोदये भगवति दिवाकरे सपद्युज्जृम्भमाणप्राभातिकमहितमङ्गलशङ्खध्वनिश्रवणविद्राणनिद्राविशेषसमधिकमनःप्रसादः समुत्थाय समाहितात्मा सकललोकप्रसिद्धमत्यन्तपुण्यं श्वेतारण्यं पुरोत्तममुत्तरेण प्रकाशमानमप्रमेयानुभावप्रकाशभूपालमौलिमण्डनेन माहाजनिककर्मणा महाराजेन रामवर्मणा निर्मापितमम्लानपराक्रमप्रसरप्रतिहतप्रतिमपक्षशर्मणा चातुराश्रम्यधर्मैकवर्मणा परितः प्रकल्पितानल्पशिल्पबन्धुरोदारमणिशिलाबन्धं सर्वकालमनोहरं सरोवरमवगाह्य कृताप्लवः शनैरुत्तरगोपुरद्वारेणान्तः प्रविष्टो विमलकान्तकमलाकरान्तरवगाहवारिक्लिन्नविग्रहः समग्रकल्याणोदयकारणस्य देवस्य कारणेश्वरस्य पुरः परिभ्राजमाने नभसीव सदा ग्रहसत्कदम्बकशोभमानमानस इव स्फुरदवदातप्रकाशराजहंसावतरभासुरे कालजरणकेलिकलितयौगिकाभिधाने निरवधिकदुरितपुञ्जभञ्जने कारञ्जरमहातीर्थे विहितमङ्गलस्नानविधिरुभयतः सलिलसम्भेदसंभृतरामणीयकमधिष्ठाय मणिकुट्टिममनुष्ठितप्रगेतनक्रियाकलापः शुचिभसितविहितशिरोव्रतः त्रिमूर्तिमयत्रिपुण्डकधारणपवित्रितगात्रः तमेव भगवन्तमुमाकान्तं श्रीकारणपुरेश्वरं पुरस्तादुपतिष्ठे ॥ ३ ॥

ततश्च निर्गतस्तेनैव मार्गेण उत्तरगोपुरबहिष्ठस्य सरोवरस्यैव पश्चिमतीरे विराजमानं दुश्च्यवनवैरिसीमन्तिनीजनसान्तापिकापदानं मान्धातृमङ्गलमपुरीमण्डनं पुण्डरीकाक्षमभिवन्द्य वृत्तः प्रणतजनतानिर्वाणकारणस्य दक्षिणतो वर्तमानं तदीयपादारविन्दन्यासविभास्वरं वैरपुरकुटजारण्यमध्यमभवनाभिधानं पुरत्रयं परिष्कुर्वाणं पुरत्रयवैरिणं क्रमेण प्रणम्य श्रीमत्पुरे क्रोडपुरोत्तरद्वारपार्श्वसन्निहितस्य निःसीमकरुणासागरस्य सागरसुतासुकृतावलेपलक्षणवक्षःस्थलस्य श्वेतमुनिपरिरक्षणाय किल समासेदुषो विषयमयतिमिङ्गिलसङ्कुलभीषणभवाम्बुराशितारणपरमनाविकस्य नावापुरनायकस्य नरकान्तकस्य चरणसरसिजद्वन्द्वमभिवन्दे ॥ ४ ॥

अवस्थाय च तत्रैव पुनरवहितकरणकलापो दक्षिणदिशाभिमुखो दैवायवैवस्वतत्रामलोचनावैधव्यव्रतोपदेशदेशिकाय विहितप्रणामाञ्जलिरनवरतनिषेवणोत्सुकायमानजनताछनसंक्षुण्णया प्रदक्षिणसरण्या सञ्चरमाणे दक्षिणेन पुरोत्तममक्षीणशिक्षाविशेषधुरीणतक्षवरकरकौशलीसीमानं अक्षामरक्षानुलेपधवलाम् अतिकरालगरलायुधमण्डलिमण्डनाम् अधिकसुकुमारकरारविन्दकलितनिशितशिखत्रिशिखशिखरनिर्भिद्यमानकठोरकीनाशवक्षःपीठामयित्वर्य (?) अप्रतिमां

प्रतिमां शैलीं प्रणिपत्य प्रतिष्ठमानो दक्षिणापरस्यां हरिति हरिदुपलमणिप्रकाशचौरिका-धौरेयकशरीरं मृदुकुटिलनीलकचनिचयनिबन्धनवखण्डमण्डलमिन्दिरपटल-विलसदलकाञ्चलसञ्चलनशङ्कमानपङ्केरुहायतविलोचनं इन्दुकिरणसुन्दरमन्दहासम्-मितंपचमदनावेशवशंवदपशुपालबालिकाकुचकलशघुसृणपङ्किलतुङ्गविशालभुजान्तर-वलमानतुलसीदाममेदुराभोगवनमालम् उन्निद्रकान्तिभरहारिद्रवसनप्रभापरिहसित-क्षणप्रभाविलासमतिवेलरुचिरचामीकरनूपुरपरिष्कृतपादपल्लवमधरितसुधारस-मधुरिममुरलीनादतरलीकृतगोगोपिकागोधननयनसमापीयमानकामनीयकं गोशाल-विहारिणं भगवन्तं नन्दनन्दनमुपासे ॥ ५ ॥

पुरतश्च तस्य पुरुषोत्तममत्तकाशिनीरूपनिस्तुलगात्रलक्ष्मीनिरीक्षण-क्षणसमेधमानमनोभवावेशविवशीकृतशशिशेखरपोषपीयूषनिष्यन्दमिन्द्रनीलमणि-श्यामलकोमलाकारम् इन्दिरारमणप्रसादैकमन्दिरं इन्द्रारिवीरभयङ्करकरसरसीरुह-विरोचमानशरशरासनमुत्कटबुक्कनध्वाननिर्धूयमानभक्तभयकुक्कुरनिकुरुम्बसंभृत-मुद्गटाटोपलुब्धकवरपरीतपार्श्वमाखेटलीलापरिश्रमकन्दलितस्वसुधाबिन्दुसुन्दर-वदनेन्दुमण्डलममरमण्डलमकुटमण्डनीकृतचरणपुण्डरीकमखिलभुवनतिलकमूतं भूतनाथं प्रणिपातपुरःसरं प्रदक्षिणीकृत्य तत उत्तारां मुक्तनिखिलदोषेण लुप्त-विषयाभिलाषेण भक्तजनेनाधिष्ठितस्य स्फुरदतुलविमलविविधबृन्दसुन्दरस्य बलिपीठिकामन्दिरस्य पश्चात् प्राङ्मुखतया अवस्थाय समस्ताधारभूताय निर-स्तानर्थाय कार्तान्तभयाक्रतन्तश्वेतमुनिपरिरक्षणार्थमवनीलोकमलङ्कृतसात्वताया महेश्वराय शिरसि विरचिताञ्जलिः साष्टाङ्गपातं नमस्कृत्य प्रत्यक्प्रतिहारमार्गेण शनैरन्तःप्रवेष्टुमुपक्रमे ॥ ६ ॥

उभयतश्चोपविष्टैः खण्डितसांसारिकाभिलाषैरविरतविहितभगवदुपासना-विशुद्धचित्तैरवनिदेवविशिष्टैः अनुमोदितप्रवेशः प्रशस्तभसितविरचितत्रिपुण्ड्रमण्डने विद्योतमानरुद्राक्षमालाभारिणा शश्वदभ्यस्यमानशतरुद्रीयेण पावनपञ्चाक्षरमहा-मन्त्रसन्ततजपासक्तचित्तेन सततसङ्कीर्त्यमानभगवन्नामधेयेन विपुलभागधेयेन परमशिवपदारविन्दद्वन्द्वनिरन्तरध्यानजनितस्वरूपानन्दानुभवविगलदश्रुधाराविल-वदनेन महता भक्तवर्गेण नित्यविराजितस्य सत्यलोकस्येव चतुराननोच्चार्य-माणत्रयीविद्यापावनस्य श्वेतद्वीपस्येव नित्यप्रसादविकस्वरनेत्रनारायण-सन्निधानमहनीयस्य राशिचक्रस्येव सदामन्दभास्वद्गोत्रोद्भवबुधगुरुकविद्विजाधिप-मण्डितस्य मणिमण्डपस्य पश्चादवस्थितः किञ्चिदालक्ष्यमाणविग्रहं सर्वलोकैकनाथं शर्वाणीसुचरिताभोगसर्वस्वं निर्वासितकृतान्तगर्वोदयमीश्वरं नमस्कुर्वे ॥ ७ ॥

ततश्च प्रादक्षिण्यक्रमादुत्तरतो गच्छन्नुत्तरद्वारमार्गस्य पश्चादेव स्थितमुपस्थायुक्तजनसमस्तानर्थनिर्वर्तकमुत्तुङ्गरजतपर्वत... वं सर्वंकषधामानम् उच्चतरककुदशिखरलम्बमानमन्दारमालिकानिर्झरोद्गारप्रवर्धमानप्रभामण्डलमङ्काव-

सक्तगाङ्गेयकिंकिणीदामसौदामिनीरां(?)तापशोभितं(?)सर्वेश्वरोपवाह्यंश्रीनन्दिनामानम् अपरिमेयमाहात्म्यभूम.नं प्रत्यक्षधर्ममूर्तिं महोक्षं प्रणम्य प्राङ्मुखं किञ्चिदुपगम्य भगवत्प्रासादाग्रजाग्रच्छातकुम्भकुम्भप्रणामानन्तरयथागतमावर्तमानः सुमुखिनीयसमस्तनाथाय निबद्धाञ्जलिः शर्ववामाङ्कमङ्गलालङ्कारांसर्वमङ्गलां नमस्यामि ॥ ८ ॥

ततो हस्तं[हं तु]दक्षिणेन पथा प्राचीनं[च्यां]दिशि प्रस्तुतप्रचारः दक्षिणतो दीव्यमानआप्यानतनुकारिसन्तानदूरीकृतसिन्दूरपूरसौभाग्यालेपमिन्दुशकलालङ्कारमहामस्तकम् अस्तिमितकर्णयुगलसमीरणगतागतकेलिडोलायमान इव च चक्रमत्तमातङ्गवक्त्रं भगवन्तं द्वैमातुरं समातृवर्गं समानम्य तत्सविधवर्तिनं दुःसहभववेदनासमुत्सारणदक्षिणं दक्षिणामूर्तिं दक्षिणभित्तिभुवि चित्रनिवेशिताकारं चित्रीयमाणचरित्रसन्तानमनन्तम् अनन्तानन्दचिद्घनम् अनन्तशायिनं चिरन्तनं पुमांसं प्रणिपत्य तथैव गत्वा विहितचण्डेश्वरप्रणामविधिः आवृत्तिपथाभिवन्दितस्य दन्तावलवदनस्य भवनमुत्तरेण भक्तजनदुस्तरहस्तापविस्तारर्तनकर्तरीमरालकोमलकालिमोपचितकेशपाशनववलाहकजालवलाकायमानशेखरशशाङ्कलेखामक्षोभणीयदक्षविपक्षहृदयविक्षोभणदक्षचटुलकुटिलकटाक्षपातामधरितकम्बुराजकण्ठकाण्डविरोचमानमङ्गलालङ्कारमहिमोदयहेलागलितकरालहालाहलानुभावामुत्तङ्गनिस्तलनिरन्तरमनोज्ञकुचकुम्भपरिशुम्भदतिधवलभसितलेपसमुन्नेयस्मरविवशपुरमथनपरिरम्भमहोत्सवामधिकबहलपुण्यलावण्यनदीविपुलपुलिनायमानजघनमण्डलाम् अखिलविबुधलोकवतंसीकृतपादारविन्दाम् अनेकविभूषणमणिमयूखजालशबलिताकारामाकरमिव सौन्दर्यस्य, आभोगमिव सौभाग्यस्य, निलयमिव विलासलक्ष्म्याः, विलयमिव विपदुदयस्य, परमशिवपरमशक्तिभूतां भवानीमभ्यवर्तिनं च विस्तीर्णदुरितनिकरदावशिखिनं शिखिवाहनं शिरसा प्रणमामि ॥ ९ ॥

उत्तरेण च देवीमत्युदारबहुविधस्तुतिवचनमुखरितमुखैर्महाशैवैः अनवरतमशून्योपकण्ठं सोपानदेशमधिगम्य सम्यगवनम्रमस्तकरस्थलसंन्यस्तप्रणामाञ्जलिरुत्तंसीकृतमुग्धमृगाङ्कलेखानिर्मलप्रभावलेपदत्तहस्तनिस्तुषानेकप्रदीपजालप्रकाशप्रकामप्रतिहन्यमानतिमिरावतारम् अखिलभुवनसुचरिताभोगमिव गृहीतविग्रहम् उदग्रगर्वोदयदुर्वारपरेतराजजीवनग्रसनरसिकसदरुणकोमलपाणिपङ्केरुहं श्रीमत्पुरक्रोडपुरविहारिणम् अशेषलोकैककारणं परमशिवमवनमामि ॥ १० ॥

निष्क्रान्तश्च पुरोत्तमाद्विहितनिखिलदैवतप्रणतिः कृतदेवयात्रः क्वचन विहतान्तराये विविक्ते प्रदेशे भगवत्पदपयोज एव निवेशितमानसः कमपि समयं विश्राम्यामि ॥ ११ ॥

लम्बमाने च पुनरम्बरपथादम्बरमणौ निष्क्रम्य तस्मादुत्तरलभसल[द्]पाळि-कम्बलितगगनतलेन आरामवर्त्मना कौबेरीं ककुभं प्रतिष्ठमानो नातिदूर एव नवीनबिसकुसुमाभिरामसुषमां उग्रतरविक्रमक्रशितशक्रपराक्रमसमुद्धतकासारासुर-जीवितभासुरशुम्भासुरडम्भोदयहरणनिपुणशातमुखशूलवररुचिरकरसरोरुहां महा-र्थेशौर्यगरिमोष्मायमाणभुजासंभारसंभूताहंभावभासुरशुम्भनिशुम्भासुरडम्भोदय-निष्कलीकरणनिष्करुणां चरणनलिननिषेवणपरायणजनतासकलमङ्गलदायिनीं अल्पेतराक्रान्तपद्मपद[पद्मपाद]मुनिपरिपालनच्छद्मना (?) विश्वलोकभवायाविर्भूतां शर्करवरारामविहारिणीं कात्यायनीमुपासे ।। १२ ।।

ततः पश्चिमायामाशायाम् आशापालमृगलोचनाजनबलापकारकचग्राह-जाग्रदुदग्रपराक्रमदारुणदारुकनामदानवेश्वरदावानलहेलाकनिरवशेषीकरण...... ......तकालिकां अमलमरकतशिलातलप्रतिमल्लगण्डमण्डलप्रतिबिम्बितलम्बमान-महावेतण्डकुण्डलाम् आत्मपदनिषेवणप्रवणक्षोणिदेवप्रवरानुजिघृक्षया तदुपसर मुपसेदुषीमनुवत्सरवर्तमानवल्गुतरफल्गुनीयात्रासमागतमहाजनपरिपालनजाग-रूकनिर्मलहृदयरविवर्मक्षितिपतिनिरुपमानुग्रहकरकटाक्षपातचरितार्थीकृतसमस्त-भक्तवर्गाम् अप्रतिमभक्तिभरितपिप्पलग्रामनिर्भरविलसदगदङ्कारपुङ्गलमङ्गलकुल-देवतामतिविपुलसङ्क्रमाभिधानपरमारामविरचितविहारां समरमुखसरभसपरि-हिण्डमानचण्डमुण्डमहासुरमुण्डपिण्डखण्डनपण्डितमण्डलाग्रकोदण्डमण्डलाग्र-प्रचण्डभुजदण्डां चामुण्डां चाभिवन्द्य पुनः कारञ्जराख्ये महातीर्थ एव सायन्तनं विदधे ।। १३ ।।

सांध्यमहनिषेवणकुतूहलसमागतस्य महाजनकस्य महता कलकलेन किञ्चिदुन्मनायमान इव प्रविश्याभ्यन्तरमभितः सोपानमवतिष्ठमानैः अतिवेल-भक्तिभारविनम्रकन्धरैरनेकशङ्खवेणुकाहलमुखमुरजमुखविचित्रवादित्रनिनदभेद-व्यतिकरितजयजयध्वानबधिरितदिगन्तरैः अधीयद्भिः ऋग्यजुषी गायद्भिः सामाथर्वे भावयद्भिः भागीरथीदेवताभञ्जनं वर्णयद्भिः पुण्यजनाधिराजभुजवनाटोपपाटव-मुच्चारयद्भिः अव्य[च्युत]थरथाङ्गविश्राणनोदन्तं व्याचक्षाणैर्दक्षाध्वरविध्वंससंरम्भं शीलयद्भिः कालकूटक्ष्वेलकबलीकारकारुण्यमभ्यस्यमानैः रभससंचारसंहारि-त्रिपुरीनिवासनदुरासददेवारातिवीरविशसनापदानं चिन्तयद्भिरन्धकमहासुरमथना-नुभावं संवदद्भिः शम्बरपरिपन्थिशरीरशातनं पाठयद्भिः पार्वतीपरिणयपरमोत्सवा-डम्बरं प्रपञ्चयद्भिः विरिञ्चिशिरःकर्तनलीलां प्रशंसद्भिः प्रकृतिनिरवग्रहप्रेतराज निरुपमाहोपुरुषिकाविलोपनवैभवमुपवीणयद्भिः उपश्लोकयद्भिः नदद्भिः नन्दद्भिः नृत्यद्भिश्च भक्तजनैः असङ्ख्यैः निवसितेन[निबिडितेन]पथा समेत्य बद्धाञ्जलिः अस्तशैलविलीयमानसवितृसमर्पितप्रभातिशयप्रदीपप्रकरज्वालाजालजाज्वल्यमान-कनकाभरणसुषमानुविद्धमणिगणकिरणघटितशतमखशरासनशतशातितसदेश-

नानार्तवनव्यतमसुमनोविशेषविरचितनूतनमालासहस्रविराजमानं सत्यज्ञानानन्दरूपंभगवन्तं मृत्युञ्जयमत्यादरेण प्रणमामि प्रणमामि च ॥ १४ ॥

जय जय जगदन्तकान्तक देवदेव वेगजितलोकनिरवधिकदुरितभरतिमिरप्रकरप्रभाकर प्रसीद मयि प्रणमति प्रणमति। त्वमेव खलु सत्यविज्ञानरसैकरूपमनुपाधिकमद्वितीयमात्मतत्त्वमसि । स एव पुनरपि विद्यावस्थायामगुणान्तरसंपृक्तसत्त्वगुणप्रतिबिम्बितात्मा सकलसाक्षितामवलम्बसे। त्रिगुणप्रधानं च प्रधानतत्त्वमधिष्ठाय मूर्त्तित्रयपरिग्रहेण जगतः सर्गादिकमावर्तयसि । सृज्यमात्रानुवेशेन च जीवभावमावहसि । सन्ततं च नियन्तृत्वेन वर्तमानो निजपदपयोजमभजतां बन्धनं भजतां चानुग्रहं विदधासि । इच्छया च स्वच्छचेतसां भक्तिभाजां तेषु तेषु विविधेषु क्षेत्रेषु सन्निधत्से । तेषु तेषु चर्यशन्तेषु [चत्वरान्तरेषु] ते ते महात्मानं तैस्तैः प्रशस्तैर्विधानैर्भवन्तमेव समाराध्य तत्तदभिलषितमशेषेण लेभिरे ॥ १५ ॥

तथा च किल कार्तान्तिकादिष्टादकालमृत्योः अत्यन्तमुद्विजमानो मुनिदारकः श्वेतो नाम विश्रुतो विश्वजनीनशीलात् भगवतो नारदादवाप्तमहामन्त्रः तदुपदेशेन भवन्तमेव तन्निरसनकर्मण्यलंकर्मीणं प्रसादयिष्यन् इलातलप्रथितस्य निलानिकटवर्तिनः पिप्पलतरोरधस्तात् अपहस्तितदेवतान्तरं चिरात् तपस्यति स्म । अवसितप्राये चायुषि भीषणाकारमवाचीनदिशः समायान्तमवारणीयरभसावलेपमन्तकमारादुपलभ्य भयविक्लबात्मा सहसैव पलायमानः पारेनिलं परिशोभमानं नावाक्षेत्रं समासाद्य पुरातनानामपि नवानां कविमुख्यानामपि तत्तद्विषयप्रबन्धविमुखानां महायोगिनामृषभदेवभुवामभिलाषेण तस्मिन् कृतसन्निधानं भगवन्तं मधुकैटभान्तकं शरणमुपजगाम । स च भगवान् महामायानियन्ता शरणागतं ऋषिकुमारं परिपिपालयिषुः 'तात, मा भैषीः। श्रीकारणपुरेश्वरस्त्वां महेश्वर एव परिपालयिष्यति । तत्सविधं च भवन्तमहं प्रापयामि ।' इत्यभिधाय तन्मात्रलक्ष्यमूर्तिः तमृषिं कारणपुरोपकण्ठं प्रापय्य 'वत्स नारदोपदिष्टेन पथा भगवन्तं महेश्वरमाराधय' इति निगदन्नेव अन्तरधात् ॥ १६ ॥

तत्रान्तरे च प्ररूढप्रतिघावेशरूक्षतराक्षिपातः साक्षाद्वैवस्वतः प्रचण्डेन भुजदण्डेन स्वदण्डमवगारमवगारममुमभ्यपद्यत । प्रत्यासन्ने सति दण्डधरे स महामनाः महीयसा साध्वसेन 'रक्ष रक्ष भगवन् इति भवन्तमेव क्रोशन्नवनितले निपत्य निजभुजद्वयससंभ्रमसमूढसिकतामयीं भवत्प्रतिमामनन्यशरणो गाढतरमालिलिङ्ग। तस्मिन् क्षणे च निरतिशयदयामृतपरिप्लुतान्तरात्मापि कृतान्तविषयनितान्तप्रवृद्धरोषभीषणाकारः कारणपुरतः प्रत्यक्षमेव निर्गत्य सितभसितानुलेपद्विगुणितशरीरद्युतिः सरभससमाक्रमणपरिलोलुठज्जटाजूटतटिनीतुङ्गतरतरङ्गसंसिच्यमानभुवनान्तरालः प्रचलदतिभीषणभूषणफणीश्वरद्राघिष्ठनिःश्वासवात-

व्यतिकरजाज्वलन्निटिलतटविलोचनानलज्वालामण्डललेलिह्यमानगगनाभोगः करतलकमलविभ्राजमानजगत्त्रयमयधारात्रयोग्रत्रिशूलाग्रविस्फुरदनिलसखस्फुलिङ्गशतपिशङ्गितदिशावलयः पदवीविन्यस्तपदत्रयान्तरप्रमाणानुमेयवर्ष्मा तथापतितमृषिदारकं किलाभ्यवापद्यथाः । तत्किल पदत्रयं त्रीणि शिवक्षेत्राणि समवृतन् ॥ १७ ॥

आदित्समानं च जीवितं मुनेरवार्यवीर्यतया गर्वायमाणं सर्वाभिभाविनं परेतराजमतिनिशितशूलप्रहारविह्वलमधिवसुधमपातयः । गाढतरप्रहारवेदनया च भुवि विवेष्टमानस्य विनष्टमानस्य चरणसरसिजसरभसमाक्रान्तस्य नितान्ततान्तस्य जीवितं जीवितेशस्य स्वात्मन्युपसञ्जहर्थ । उत्थापितं च महाभागधेयं समाश्वास्य मुनिकुमारकमनुगृह्य परमया कृपया तदीयकरयुगलसमाकलितामेव सैकतीं मूर्तिमधितिष्ठन्नखिललोकप्रतीतः श्रीमत्परक्रोडेश्वर इति शाश्वतं नामधेयमाबिभ्राणः प्रकाशसे ॥ १८ ॥

स त्वमपारसंसारपरिभ्रमणजनितविविधवेदनाविवशचेतसमनन्यगतं शरणागतमनुगृहाण भगवन्नमुं जनम् । अविकलपुरुषार्थदायी भवदीयपदाम्बुजे मम निरुपमाधिको भवतु भक्तिरसः । जय जय जगदीश्वर पाहि पाहि सकलनिष्कलरूपाय सकलनाथाय भगवन्नमस्ते नमस्ते इति प्रणुत्य सायन्तनबलिमहाय बहिर्निष्क्रान्तं निरन्तरप्रहतबहुबिधमहावाद्यनिवहनिर्घोषनिर्भिद्यमानभुवनकटाहमच्छिदुरसमुच्चरदुच्चतरस्तुतिशतालापवाचालजनतासमाकुल[र]सावलयान्तरालं भगवन्तमन्वीयमानस्त्रिः परीत्य पुरोत्तमं भवनाभ्यन्तरं प्रविष्टं विनष्टनिखिलतापः प्रणिपत्य मृत्युञ्जयं सम्प्राप्तदुरापप्रसादशेषाभिमर्शपवित्रितगात्रः प्रकटनिरुपमानन्दतुन्दिलान्तरात्मा शनैर्निर्गच्छामि । एवमेव दिवसेदिवसे देवदेवेशं श्रीमच्छ्वेतारण्यपुरनायकं महेश्वरं निषेवमाणोऽहमविकलवितथमायुरभिलषितमशेषमदोषानुषङ्गमनुपसर्गमपवर्गसुखं च सम्यगवाप्नुयाम् ॥१९॥

आधत्ते चतुरोऽपि यैव न चिरादर्थान् यथेच्छं सता-
माहुर्यामृषयो गरीयसितरामाद्यां विमुक्तेरपि ।
तामेतां भवदङ्घ्रिपद्मविषयामेकान्तभक्तिं मम
श्वेतारण्यपुराधिनाथ भगवन् देया दयावारिधे ॥ २० ॥

॥ इति श्रीश्वेतारण्यस्तुतिः सम्पूर्णा ॥

---

## ३७. ॥ अथ श्रीभक्तिसंवर्धनशतकम् ॥

### ॥ पूर्वभागः ॥

जातं जातं खलु जगदहो चित्रमेतत् समस्तं
क्षीणं क्षीणं मुहुरपि परादृ[दृ]श्यते यत्प्रभावात् ।
तस्मै साक्षात् स्वरसपरमानन्दवीचीमयाय
ब्रह्माख्याय[ब्रह्मण्याय] त्रिभुवनपते देव तुभ्यं नमोऽस्तु ॥ १ ॥

जीवात्मा यद्भ्रमति बहुशोऽप्यत्र संसारचक्रे
तत्त्वन्मायाविलसितमतः प्राञ्जलिः प्रार्थयेऽहम् ।
मामानाहं [मायाधीनं] जगति भगवन् जन्म सम्पद्यते चेत्
कर्माभ्यर्हं भवतु भवनाधीश मानुष्यमेव ॥ २ ॥

चातुर्वर्ण्यप्रभृतिविभिदामुद्रिते मानुषं चेत्
ब्रह्मण्याय स्पृहयति जगन्नाथ नित्यं जनोऽयम् ।
तत्राकुर्वन्नमृतमशुभं कर्म कुर्वन्नकामं
भक्तो भूयाद्भवतु भगवन् मार्गयन् मुक्तिमार्गम् ॥ ३ ॥

बन्धः कर्मण्यथ बहुविधे स्त्रीगुहायां प्रविष्टः
पुंसो रेतःकणशबलिते शोणिते वर्तमानः ।
विट्पङ्कोत्थैः कृमिभिरभितः ताडितः पीडितात्मा
यावत् सीदाम्यवशमरविन्दाक्ष तावत् प्रसीद ॥ ४ ॥

क्षारैरुष्णैरपि च कटुभिर्मातुराहारजातैः
उद्यद्बाधो जठरकुहरे सङ्कुचत्सङ्कुलाङ्गः ।
श्वासोच्छ्वासेष्वहमतितरां क्लेशशाली यदा स्यां
गोविन्द त्वं प्रशमय तदा भक्तिभाजो ममार्तिम् ॥ ५ ॥

प्राचीनानामनुशयवतो जन्मनां कर्मणां च
स्मारं स्मारं मनसि सहसा लब्धबोधोदयस्य ।
गर्भागारे रुधिरकृमिविण्मूत्रपूर्णे स्थितस्य
प्रादुर्भूयान्मधुविमथन त्वत्स्वरूपस्मृतिर्मे ॥ ६ ॥

मध्येगर्भाशयमत इतो भ्रान्तिमान् वर्तमानो
मासि प्राप्ते तदनु दशमे पूर्यमाणाखिलाङ्गः ।
व्यासेधेन व्यथितहृदयो रक्तजम्बालसिक्तो
वैकुण्ठ त्वां जननसमयप्राप्तखेदः स्मराणि ॥ ७ ॥

भूयो भूयः प्रसृमरकठोरामनस्यार्दितायां-
माक्रन्दन्त्यां प्रसवसमये स्रस्तगात्र्यां जनन्याम् ।
यन्त्रच्छिद्रात् सपदि विवृताद्दुःखतः सूतिवातै-
र्नीतं जातं भुवि निपतितं पाहि मामार्तबन्धो ॥ ८ ॥

अद्भिः प्रक्षालितवपुरपि स्वच्छतां नोपगच्छन्-
मातुः स्तन्यं गलितमुपजातार्तिरास्वाद्य सद्यः ।
अस्वातन्त्र्यादधिकविमनाश्चेष्टितेष्वप्रवीणः
प्राप्तो मोहं मुहुरहमहो रक्षणीयोऽस्मि विष्णो ॥ ९ ॥

शीतोष्णाभ्यां प्रबलमरुता क्षुत्तृडार्तिप्रसक्त्या
यूकादंशप्रभृतिभिरपि प्रत्यहं बाध्यमानः।
आत्मोत्सृष्टैरविषहशकृन्मूत्रपङ्कैश्च लिप्तः
साक्रन्दोऽहं तव मुररिपो बालकः पालनीयः॥ १०॥

दन्तोत्पत्तेः प्रथम [समृदु] प्रायमाहारजातं
भोक्तुं वाञ्छन्ननिपुणतया दूयमानो निकामम्।
यावत् क्रन्दाम्यहमतितरां दीनदीनः क्षुधार्तः
तावदेव प्रसरतु मयि क्षिप्रमेकः कटाक्षः॥ ११॥

उत्तिष्ठासुः कथमपि समुत्थापितो बालवर्गैः
मन्दं मन्दं किमपि चरणन्यासमाकाङ्क्षमाणः।
नालम्भूष्णुर्झटिति पतितं निष्ठुरे भूमिपृष्ठे
यावन्मुह्याम्यजित भवता रक्षणीयोऽस्मि तावत्॥ १२॥

क्रीडालौल्याद्गुरुभिरसकृत् प्रेरितः क्रूरवाग्भिः
विद्याभ्यासे प्रचकितमना हन्त शोचामि यावत्।
यावद्दूये दशनपतनैः कर्णवेधेन चाहं
तावत् पीताम्बर तव कृपालोक एवावलम्बः॥ १३

सस्नेहाभ्यां परवशतया पुष्यमाणः पितृभ्यां
क्रीडालौल्यप्रथितबहुचापल्यमुल्लङ्घ्य बाल्यम्।
द्वैतीयीकं पुनरथ वयः प्राप्नुवन् दृप्तचित्तो
लक्ष्मीजाने तव पदयुगं विस्मरन् मास्म भूवम्॥ १४॥

धर्माचारं दिनमनुपरित्यज्य विध्वस्तलज्जः
पापान्यापादयितुमुदितौद्धत्यमुद्योगशाली।
अर्थापत्यप्रियसुतकलत्रादिसक्ताशयोऽहं
गर्हाभ्यर्थः सदसि विदुषां मा भवेयं मुरारे॥ १५॥

आशापाशैर्निगलितमहंताग्रहग्र[हक्र]त्त
स्वस्थावस्थापरिचयमनुष्ठाननिष्ठाविहीनम्।
दृप्तं चित्तं मम कुरु तमोधाम कामभितप्तं
मा मा [मग्नं] नरकमथन स्त्रीविषाब्धौ दयाब्धे॥ १६॥

त्यक्त्वा धैर्यं व्यपगतपरीपाकमुच्चैर्विपाकं
मुक्त्वा हित्वा सपदि च कृपां वाक्पटुत्वं च कृत्वा।
क्रोधोद्वृत्तं भवति यदि मे ध्वस्ततत्त्वप्रबोधं
चित्तं चक्रायुध तव पदस्थास्तु कर्तव्यमेव॥ १७॥

देहे मांसक्षतजभरिते रूपवत्ताभिमानात्
कञ्चित् कालं वपुषि मिलितो यौवनस्योदयाच्च ।
ऐश्वर्यादप्यहह सहसा नश्वराद्विश्वमूर्ते
चित्तं मत्तं प्रचलति यदि त्वामृते का गतिर्मे ॥ १८ ॥

विद्यावत्त्वं द्रविणगुरुता पुत्रमित्रादिसौख्यं
कस्यापि स्याद्यदि सवयसः प्रायशो जायमानः ।
अन्तः सन्तापकृदविरतं मत्सरो दुःसहा[त्मा]
[मा मा]नाथ प्रसभमभवं प्रश्न यस्यापनेता ॥ १९ ॥

यस्मिन् कस्मिन्नपि लघुतरे कार्यवस्तुन्यवस्थां
कालं देशं पुनरगणयन् द्रव्यजातं त्यजामि ।
यस्मात्क्षोभात् समुचितमपास्यामि धर्मं च तस्मात्
चेतो डम्भाद्विरमतु ममेत्यद्य याचे हरे त्वाम् ॥ २० ॥

कञ्चिद्दृष्ट्वा सपदि विपदे भर्त्सये तत्समक्षं
वेगाद्धावामि च पथि जले निष्पताम्युत्पतामि ।
किञ्चाहेतोर्मुहुरपि हसाम्युच्चकैर्यत्प्रभावात्
दर्पः सोऽयं न भवतु मम त्वत्प्रसादान्मुकुन्द ॥ २१ ॥

मातुर्वाक्यं पितुरपि निराकृत्य नित्यं गुरूणा-
माज्ञामुल्लङ्घ्य च गुरुतराज्ञातिबिभ्यन्महद्भ्यः ।
अभ्यस्यन्नप्यविनयमहो स्त्रैण एव प्रवृत्तो
नाम त्वामप्यपरिगणयन् मा दिनान्येष नैषम् ॥ २२ ॥

बद्धोत्साहः प्रतिमुहुरसत्कर्मणे धर्मदारान्
दूरात्त्यक्त्वा रहसि परदारैः समं रन्तुकामः ।
निन्द्याकारोऽप्यतिजडमतिः सुन्दरम्मन्य एव
स्वेच्छाकारी मदनविवशो मा भवं देवदेव ॥ २३ ॥

वामां वामां कुटिलहृदयां काममात्मन्यकामा-
मागृह्णानः प्रणयचपलः कामतप्तान्तरात्मा ।
तत्तादृग्भिः कपटचरितैर्वञ्च्यमानस्तयाहं
योषित्क्रीडाकपिरिति विभो मापहास्येय सद्भिः ॥ २४ ॥

स्त्रीभ्यो दत्त्वा सकलमचिरात् स्वापतेयं स्वकीयं
दारिद्र्यैकः स्वयमनुदिनं जाड्यवान् पीड्यमानः ।
अन्यायेन द्रुतमथ परद्रव्यमप्याजिहीर्षु-
र्मैव श्रीवल्लभ दुरितमित्यार्जितं प्राज्यकीर्ते ॥ २५ ॥

मोहेनोपप्लुतमतिरतिक्रम्य तारुण्यमुद्रां
पापं कुर्वन् विषमविषयाकृष्टचित्तः प्रमत्तः।
आधिव्याधिप्रभृतिभिरपि प्रत्यहं बाध्यमानः
कर्णाभ्यर्णाकलितवलितः त्वां विभो भावयानि ॥ २६ ॥

क्षुत्प्रक्षीणं निजमवशधीर्बिभ्रदेकः कुसुम्बं
नैष्णि[ष्कि]ञ्चन्यात्तमनभिलषन् मित्रवर्गादविन्दन्।
कर्माधीने वपुषि जरसा जर्जरे लज्जमानः
सत्संगे भवति भगवन् भक्तचित्तो भवानि ॥ २७ ॥

अस्वातन्त्र्यात् परमनिपुणः क्लेशलेशासहिष्णुः
पुत्रैर्दारैः सततरुदितैः सेर्ष्यमाभाष्यमाणः।
शय्यापर्याकुलमधिशयारोहमुद्वृत्तलक्ष्मा
यावद्दूये मुरमथन ते नाम तावत् स्मराणि ॥ २८ ॥

कासश्वासप्रसरविधुरेऽजीर्णतापूर्णगात्रे
नेत्रश्रोत्रप्रभृतिकरणग्रामशक्त्या वियुक्ते।
अस्पष्टाभिर्वदति विकृतं वाग्भिरुद्भूतपश्चा-
त्तापे जाते मयि सकरुणं वीक्ष्यतां तार्क्ष्यकेतो ॥ २९ ॥

अन्येनोत्थापितमकृपया शायितं जीर्णतल्पे
लालाजालं वदनकुहराद्भ्रष्टदन्ताद्वमन्तम्।
कष्टं दष्टं वपुषि मशकैर्मत्कुणैर्मक्षिकाभि-
र्मुह्यन्तं मामजित कृपया पाहि पाहीति पाहि ॥ ३० ॥

क्षुत्क्षामत्वाद्भृशतरमहो दुर्बलैः पुत्रदारैः
कष्टावस्थामहमुपगतोऽनास्थया रक्ष्यमाणः।
शून्यागारेऽप्यपगतसुहृद्भूमिमावेष्टमानो
दुःखायिष्ये यदि बत जरन्माधव त्वं प्रसीद ॥ ३१ ॥

दुष्कर्माणि प्रबलतमसा [जन्म] नोपार्जितानि
स्मारं स्मारं निरयपतनं शश्वदुत्प्रेक्षमाणः।
मृत्योर्बिभ्यन्नपि जरठतां निःसहो मर्तुमिच्छुः
त्वन्नामोच्चारणमगणयन्नेव मा[नाथ]भूवम् ॥ ३२ ॥

शय्याप्रान्ते सततमविदन्नेव मोमूत्र्यमाणो
मुक्त्वा भुक्त्वा बहुमलमनिर्वृत्तशौचः शयानः।
श्वासायासव्यसनपरिपूर्णार्तिरासन्नमृत्युः
त्रातव्योऽहं तव विपदवस्थां गतः शार्ङ्गपाणे ॥ ३३ ॥

अत्यासन्ना बहुमृतिरमुष्येति शृण्वन् जनानां
वाचं घोरैर्घुरुघुरुरवैः क्लिष्टकण्ठः कफेन ।
क्षुभ्यत्प्राणः श्वसितरभसोद्धूतमर्मास्थिबन्धः
सोऽहं विष्णो जय जय मुकुन्देति वाणीं ब्रवाणि ॥ ३४ ॥

जं[ञ्झा] वाते चलति तिमिरे वर्धमाने कठोरे
मेघेऽप्युच्चैः स्तनति सहसा कान्दिशीके जनौघे ।
द्यावाभूम्योर्विततवपुषः प्रेतराजस्य दूतान्
पश्यन्तं मां परमकृपया रक्ष पङ्केरुहाक्ष ॥ ३५ ॥

वृत्ताकारप्रचलनयनो ध्वान्तरौद्रानलानि
व्यादीर्णानि भ्रुकुटिविकटान्युग्रदंष्ट्रोद्भटानि ।
दृष्ट्वा दृष्ट्वा यमभटमुखान्याशु सन्त्रस्यतो मे
नाथ त्राता भव मृतिदशासङ्कटे पङ्कजाक्ष ॥ ३६ ॥

चक्रश्वासभ्रमितवपुषं सूत्रमप्युत्सृजन्तं
नेत्रोन्मेषं विदधतमकाण्डे च फेनायमानम् ।
आलोक्यालोक्य च यमभटानन्तरा वेपमानं
प्राणापायव्यसनसमये रक्ष मां चक्रपाणे ॥ ३७ ॥

क्षुद्रे सद्यस्तमकसहिते ब्रह्मवृत्तावसाने
श्वासोच्छिन्ने महति च चलत्यूर्ध्वमूर्धाभिधाने ।
देहाद्देही मम विघटते यावदासाद्य तावत्
साक्षाद्भूयास्त्वमिति भगवन् प्रार्थये तीर्थपाद ॥ ३८ ॥

मर्मस्थानां प्रकृतिकठिने लोठतामस्थिकूटे
स्वस्थानेभ्यः कृतदृढतराघातमुद्घाटितानाम् ।
मत्प्राणानां विदधति यदा यातनादेहयोगं
मृत्योर्दूताः शिव शिव तदा पाहि मां पद्मनाभ ॥ ३९ ॥

हुङ्कुर्वद्भिः श्रवणपरुषं मुद्गरैस्ताड्यमानः
पाशैः पश्चात्कृतभुजयुगं गाढमाबद्धगात्रः ।
तुष्टैः कृष्टः पितृपतिभटैः कण्टकैर्नीयमानः
त्रातव्योऽस्मि प्रचुरकरुणावास ते वासुदेव ॥ ४० ॥

छायाहीने विषमितपथे वीततोयप्रसङ्गे
सन्तप्ताभिर्भृशमत इतो वालुकाभिश्च पूर्णे ।
यावन्नीये विगतकरुणैः श्राद्धदेवस्य दूतैः
तावद्भक्ताभयद भगवन्नुत्तमश्लोक पाहि ॥ ४१ ॥

दुर्मार्गाया मरुमयभुवो योजनानां सहस्रं
वेगान्नीतः प्रहरणवरैः किङ्करैरङ्कुशेन।
आज्ञां श्रोतुं तदनु पुरतो दर्शितो दण्डपाणेः
सन्त्रस्तोऽहं मनसि दयनीयोऽस्मि लक्ष्मीपते ते ॥ ४२॥

आहूयाग्रे स्वयमथ यमो लेखकं चित्रगुप्तं
पापान्याकर्ण्य च मम तदा हन्त तेनोदितानि।
यावत्पापी चिरतरमयं दण्ड्यतामित्यकाण्डे
रोषादाज्ञापयति च जगन्नाथ रक्ष्योऽस्मि तावत् ॥ ४३॥

तामिस्राख्ये महति नरके रौरवेऽप्यन्धकूपे
पूयस्रोतस्यसकृदसिपत्राटवीनामधेये।
लालाभक्ष्येऽप्यथ बहुविधे कष्टमन्यत्र यावत्
पात्ये तावत् परमपुरुष त्वं प्रसीद प्रसीद ॥ ४४॥

इष्टापूर्तिप्रभृतिसुकृतापादनात् स्वर्गसौख्यं
कञ्चित्कालं पुनरनुभविष्यामि यद्यप्युदारम्।
न श्रद्धेयं न च खलु तथाप्येतदस्यावसाने
यज्जन्म स्यात् पुनरिति विभो मुक्तिकामो भवानि ॥ ४५॥

गन्धर्वा ये तुरगवदना ये च विद्याधरा ये
सिद्धाः साध्या अपि बहुविधा ये च ये वा[चा]रणाश्च।
ये केऽप्यन्ये दिशि दिशि नभोवर्त्मना सञ्चरन्ते
तेषां स्थाने न हि मम रतिर्नाथ नित्येतरत्वात् ॥ ४६॥

इन्द्रो वह्निः पितृपतिरथो यातुधानः प्रधान-
स्तोयानां च प्रभुरथ मरुत् किन्नरेशो महेशः।
इत्यष्टौ ये दिवमधिवसन्त्येकशो लोकपाला-
स्तेभ्यो मे न स्पृहयति हृषीकेश मोक्षेच्छुरात्मा ॥ ४७॥

पूर्णैः पुण्यैरथ च दुरितैः भूरिभिः सौख्यदुःखा-
न्येकैकस्मादनुभवति यज्जीवनामायमात्मा।
तस्मादिच्छाम्युपशमविधानेन नैष्कर्म्यसिद्धिः
यस्मात् सिध्येत् परममृतं देव कैवल्यनाथ ॥ ४८॥

अष्टाङ्गस्य स्वयमिह समारभ्य योगस्य योग्या-
सत्य[न्यभ्य]स्याथ प्रकटितफलान्याशु कर्माण्यमूनि।
मोक्षप्राप्त्यै स्पृहयति मनो[विस्मृ]ताशेषसङ्ग-
स्त्वत्पादब्जस्मृतिमनुभवाम्येव लक्ष्मीनिवास ॥ ४९॥

त्वत्कं ध्यायन् मनसि सकलं निष्कलं च स्वरूपं
सर्वात्मत्वं त्वयि च कलयन् पूर्णभक्तिप्रपञ्चः ।
नामान्युच्चार्य च बहुविधान्यस्य चिन्ताविहीनः
कैवल्यार्थी तव परमहं देव दासो भवामि ॥ ५० ॥

॥ इति भक्तिसंवर्धनशतके पूर्वभागः सम्पूर्णः ॥

---

॥ उत्तरभागः ॥

जातः सत्यव्रततनुनृ[नर]पतेरञ्जलौ वर्धमानः
कल्पाम्भोधौ विततसलिले क्लृप्तकेलीप्रचारः ।
तस्मै राज्ञे हितमुपदिशन् वेदमप्याददानो
मायामत्स्यस्त्वमिह मनसि स्मर्यसे विश्वनाथ ॥ ५१ ॥

पीयूषार्थं दिविषदसुरैरम्बुधौ मथ्यमाने
मन्थाद्रौ च क्षुभितसलिलं याति पातालमूलम् ।
आदायैनं विपुलिमभृता कर्परेणोद्धरन्तं
चित्तेन त्वामजितकुहनाकच्छपं चिन्तयामि ॥ ५२ ॥

पारावारे प्रलयवितते चञ्चदूर्मिप्रपञ्चे
मग्नां पृथ्वीमनिभृतभृतौद्धत्यमुद्धर्तुकामः ।
मंक्षुर्मग्नः कुटिलशिखया दंष्ट्रया तां दधानः
क्रीडाक्रोडः कमलनयन त्वं मया चिन्त्यसेऽन्तः ॥ ५३ ॥

प्रह्लादस्य स्वपदयुगलीदत्तचित्तस्य हत्यै
सन्नद्धस्य त्रिभुवनरिपोर्दैत्यभर्तुर्निहन्ता ।
घोराकारः प्रखरनखरो भीषणभ्रूकुटीक-
स्त्रैलोक्याधीश्वर मनसि मे वर्तसे त्वं नृसिंह ॥ ५४ ॥

विश्वाधीशे प्रभवति बलौ माणवीभूय भूयः
पृथ्वीमग्नीन्धनविधिकृतये याचमानो जिघृक्षुः ।
आशु क्रामन् भुवनमखिलं धातृनिर्णिक्तपादः
त्वं देवेन्द्रावरज मनसा वामनो भावितोऽसि ॥ ५५ ॥

जातो मध्येधरणि जमदग्नेः सुतो रेणुकाया-
मन्तेवासी त्रिपुरमथितुः कार्तवीर्यस्य जेता ।
पाणौ बिभ्रत्परशुमधिसङ्ग्राममासन्नविंशान्
वारान् क्षेप्ता दुरवनिभुजो देव राम स्मृतोऽसि ॥ ५६ ॥

जातो वंशे सवितुर् ऋषिणा सङ्गतो जानकीशः
स्वैरं गच्छन् वनमथ वियुक्तप्रियो ध्वस्तवाली ।
उत्तीर्णाब्धिः कपिकुलबलो रावणस्यापि हन्ता
सीतायुक्तः पुरमधिवसन् देव राम स्मृतोऽसि ॥ ५७ ॥

श्वेताकारो हलमुसलवान् नीलवस्त्रं दधानः
कर्षन् मत्तस्तपनतनयामात्तपीताङ्गरागः ।
नानादैत्यप्रमथनपटुर्नागराजावतारो
भूमेर्भारं गुरुमपहरन् देव राम स्मृतोऽसि ॥ ५८ ॥

जातो वंशे तुहिनमहसो गोकुले क्लृप्तवासः
कंसध्वंसी परिणयमथ स्त्रीगणानां वितन्वन् ।
चैद्यारातिः समरसमये सारथिः पाण्डुसूनोः
धात्रीभारक्षपणनिपुणो देव कृष्ण स्मृतोऽसि ॥ ५९ ॥

अन्तं सङ्गच्छति कलियुगे वर्णसङ्कीर्णभावे
भाविन्यत्युत्कटतरमधर्मे च वर्तिष्यमाणे ।
अश्वारूढः करतलचलन्मण्डलाग्रः खलौघान्
भर्त्सयन् कल्किस्त्रिभुवनपते घोररूपः स्मृतोऽसि ॥ ६० ॥

शैले कूटत्रयवति पयःसिन्धुना वेष्ट्यमाने
पुष्पोद्यानोदरकमलिनीं गाहमाने गजेन्द्रे ।
ग्राहग्रस्ते स्तुवति तदनुग्राहकस्त्वं दयालु-
स्ताक्ष्यारूढः कमलनयन स्मर्यसे चक्रधारी ॥ ६१ ॥

देवैर्दैत्यैरपि विमथितादुत्थितः क्षीरसिन्धोः
श्वेतोष्णीषी वलभिदुपलश्यामलः क्षेमकारः ।
बिभ्रच्चक्रं दरमथ सुधापूर्णकुम्भं जलूकां
दोर्भिर्धन्वन्तरिरिह भिषग्भाव्यसे त्वं मुरारे ॥ ६२ ॥

श्रीकण्ठाय प्रकटिततरौत्कण्ठ्यमाक्रीडमध्ये
प्रक्रीडन्ती धुततनुलतासौष्ठवातिष्ठमाना ।
सभ्रूभङ्गस्मितसहचरापाङ्गलीलाभिरामा
दैत्यारे त्वं कपटतरुणी भाव्यसे दिव्यवेषा ॥ ६३ ॥

नैष्कर्म्याविष्करणनिपुणः कर्दमापत्यभूतः
स्वच्छन्दात्मा कपिलरुचिभिः शोभमानो जटाभिः ।
तत्त्वज्ञानं परमुपदिशन् देवहूत्यै स्वमात्रे
गोविन्द त्वं मनसि कपिलो वासुदेवः स्मृतोऽसि ॥ ६४ ॥

दुष्टाद्वेनान्मुनिजनमहाशापतः प्राप्तनाशात्
जातश्चापाटनिविदलितक्ष्माधरायां धरायाम् ।
मेरौ दोग्धर्यमितधनधान्यादि विस्तारयन्तं
ध्यायामि त्वां पृथुमतिपृथुप्राभवं विश्वनाथ ॥ ६५ ॥

भर्गे भक्तत्रितयमपथे वर्तमानं पुराणां
वाचोयुक्त्या परिणतमहद्द्वेषमापादयन्तम् ।
धर्मस्थित्यै प्रथितचरितं बुद्धसंज्ञं मुनीन्द्रं
मायादेवीसुतमयि हरे मायिनं भावये त्वाम् ॥ ६६ ॥

दाक्षायण्यां प्रथितयशसौ धर्मदेवस्य पुत्रौ
सञ्जातौ द्वौ महितनरनारायणाख्यं दधानौ ।
प्रालेयाद्रेस्तटभुवि बदर्याश्रमे संवसन्तौ
रक्षाहेतुं जगति भगवन् भावयामि त्वदंशम् ॥ ६७ ॥

सौन्दर्यश्रीललितवपुषं क्लृप्तसंन्यासवेषं
दिव्यं दिग्वाससमत इतः स्त्रीसहायं चरन्तम् ।
अध्यात्मज्ञैर्मुनिभिरभितः स्तूयमानं मुनीन्द्रं
दत्तात्रेयं मनसि भगवन् भावयामि त्वदंशम् ॥ ६८ ॥

रेवास्रोतोविहरणपरं प्रस्फुरद्दोःसहस्रं
धात्रीरक्षापरमपरिमेयात्मवीर्यानुभावम् ।
दत्तात्रेयादुपगतवरं कार्तवीर्यार्जुनं त्वां
कीर्तिस्तोमाज्जनितभुवनं भावये श्रीनिवासम् ॥ ६९ ॥

पाराशर्या परिणततनुर्बीजशक्त्या श्रुतीनां
व्यासं कुर्वन् बहुविधपुराणेतिहासप्रणेता ।
वेदान्तार्थप्रकाशस्तुतिमुपनयन् पूर्णशिष्यप्रशिष्यः
कृष्णद्वैपायनमुनिवरः स्मर्यसे त्वं मुकुन्द (?) ॥ ७० ॥

वेलाघातप्रचलितमहावीचिजालप्रसर्प-
त्फेनावर्तं धवलसलिलोद्भ्रान्तयादःकदम्बम् ।
नानारत्नद्युतितरलितागाधगर्भप्रदेशं
दुग्धाम्भोधिं मनसि भगवन् भावये त्वन्निवासम् ॥ ७१ ॥

पुष्यत्कल्पद्रुमसुरलताजृम्भितामोदभारं
नानापक्षिप्रवरललिताबन्धनादप्रपञ्चम् ।
भृङ्गश्रेणीरवमुखरितं मन्दवाताभिरामं
श्वेतद्वीपं तव पदमिमं देव सम्भावयामि ॥ ७२ ॥

उद्यानोद्यत्कुसुमनिकरं गोपुराबद्धसालं
रथ्याशृङ्गाटकविलसितं केतनोद्यत्पताकम् ।
प्रासादाग्रस्फुरितवलभीभागमुत्तुङ्गसौधं
वासस्थानं मनसि कलये पद्मनाभ त्वदीयम् ॥ ७३ ॥

आशापालान् सहितदयितान् सप्रियान् देवयोनीन्
देवब्रह्मक्षितिपतिमुनीन् भक्तिभारैर्विनम्रान् ।
त्वत्पादाब्जप्रणमनपरान् भक्तिभारावनम्रान्
पर्यन्तस्थान् परमपुरुष त्वन्मयान्भावयामि ॥ ७४ ॥

तत्त्वज्ञानप्रवणहृदयान् भूयशोऽभ्यस्तयोगान्
ज्योतिर्जालप्रसरतरलान्नित्यकौमारयुक्तान् ।
ब्रह्माण्डान्तभ्रमणनिपुणानुज्ज्वलत्त्वत्पदाब्ज-
[प्राप्तान् ]पद्मारमण सनकाद्यान् मुनीन् भावयामि ॥ ७५ ॥

भूषावेषाद्यधिकसुभगान् दोश्चतुष्काभिरामान्
मेघश्यामान् कपिशवसनान् फालबद्धार्धपुण्ड्रान् ।
दीर्घापाङ्गान् प्रहसितमुखान् भक्तलोकैकबन्धो
नाथ त्वत्पार्षदवृषवरान्नन्दमुख्यान् स्मरामि ॥ ७६ ॥

भक्तिप्रह्वं मुकुलितदृशं प्राञ्जलिं प्रान्तसंस्थं
नामान्युच्चैःस्वरमुखरिताभ्याशमुच्चारयन्तम् ।
आह्लादार्द्रे मनसि विकसत्त्वत्स्वरूपप्रकाशं
प्रह्लादाख्यं नलिननयन त्वत्प्रियं चिन्तयामि ॥ ७७ ॥

सङ्गायन्तौ गमकगतिमन्मूर्छनाग्रामभिन्न-
श्रुत्यारूढस्वरपरिणमद्रागहृद्यं विपञ्च्या ।
नानावन्दिप्रवरसहितौ गायकौ तावकीनौ
साक्षाद्वीक्षे मनसि भगवन्नारदं तुम्बुरुं च ॥ ७८ ॥

किञ्चिद्विस्रंसितकचभराः पूर्णसर्वाङ्गभङ्गी-
नैपथ्यश्रीमधुरिमजुषो मञ्जुशिञ्जानभूषाः ।
पार्श्वे स्थित्वा ललितललितं चामरं चारयन्तीः
पश्याम्यन्तर्दितिसुतरिपो चामरग्राहिणीस्ते ॥ ७९ ॥

अभ्याशस्थं भुजगपटलीभूषितोद्दीप्तगात्रं
पक्षक्षेपक्षुभितभुवनं चण्डतुण्डप्रकाण्डम् ।
आपिङ्गाक्षं कनककपिशज्योतिषं वाहनं ते
तार्क्ष्यं वीक्षे मनसि करबद्धाञ्जलिं कञ्जनाभ ॥ ८० ॥

शूत्कुर्वन्तं फणदशशतीविस्फुरद्रत्नजालं
दंष्ट्राकोटिद्वितयविलसच्चण्डतुण्डान्तरालम् ।
श्वेताकारं तरलपवनाहारतो वर्धमानं
पर्यङ्कस्थं मनसि कमलाकान्त पश्याम्यनन्तम् ॥ ८१ ॥

ज्योतिर्ज्वालज्वलितवपुषः प्राञ्जलीन् प्राज्यविद्यान्
उच्चैरभ्युच्चरितजयशब्दस्वनाध्मापिताशान् ।
मूर्तान् दैत्यप्रमथनपरानायुधौघान् प्रभाते
चित्ताभोगः प्रकटयति मे शङ्खचक्रप्रधानान् ॥ ८२ ॥

पीतश्यामप्रभतनुलते रक्तपीताङ्गराग-
क्षौमाभोगे मकुटकटकाद्युज्ज्वलन् भूषिताढ्ये ।
सौन्दर्योद्यत्तरुणिमविलासाञ्चिते पार्श्वसंस्थे
सङ्गच्छेते हृदि मम हरे त्वत्प्रिये श्रीधरण्यौ ॥ ८३ ॥

रत्नभ्राजत्कनकमकुटं कुञ्चितानीलकेशं
वेल्लत्सान्द्रालकमलिकसंभासमानोर्ध्वपुण्ड्रम् ।
भ्रूविक्षेपाञ्चितमभिनवाम्भोजपत्रायताक्षं
साक्षादीक्षे मनसि मधुविध्वंसन त्वत्स्वरूपम् ॥ ८४ ॥

कर्णाभ्युद्यन्मकरविलसत्कुण्डलं तुङ्गनासं
दन्तज्योत्स्नामधुरमधरज्योतिषा शोभमानम् ।
गण्डाभोगोड्डमरसुषमं कौस्तुभोल्लासिकण्ठं
साक्षादीक्षे मनसि मधुविध्वंसन त्वत्स्वरूपम् ॥ ८५ ॥

हाराभ्यन्तस्स्फुरिततुलसीदामवन्यस्रगाढ्यं
श्रीवत्साङ्कप्रथिनघुसृणामोदिवक्षोविभागम् ।
दीप्तस्वर्णाङ्गदवलयकेयूरवद्दोश्चतुष्कं
साक्षादीक्षे मनसि मधुविध्वंसन त्वत्स्वरूपम् ॥ ८६ ॥

उद्यद्रोमावलिवलियुतं प्रस्फुरद्दुन्दबन्धं
लोकेशाढ्यासितविकचपद्मोल्लसन्नाभिरन्ध्रम् ।
काञ्चीदामाञ्चितकटितटं पीतकौशेयवस्त्रं
साक्षादीक्षे मनसि मधुविध्वंसन त्वत्स्वरूपम् ॥ ८७ ॥

आपीनोरुद्वितयमतुलाकारजानुप्रदेशं
भ्राजज्जङ्घायुगलसुषमाभोगमागूढगुल्फम् ।
कूर्माकारप्रपदमधिकाताम्रपादारविन्दं
साक्षादीक्षे मनसि मधुविध्वंसन त्वत्स्वरूपम् ॥ ८८ ॥

कालाम्भोदाञ्जननवकलायप्रसूनाभिरामं
श्यामज्योतिष्पटलपरिवेषाञ्चितं चारुवेषम् ।
सर्वाङ्गीणप्रकटनफलावन्य]न्ध्य]पूर्णप्रकाशं
साक्षादीक्षे मनसि मधुविध्वंसन त्वत्स्वरूपम् ॥ ८९ ॥

उद्यन्मन्दस्मितमधुरिमोद्भासिवक्त्रारविन्दं
कारुण्याम्भःप्रसरलहरीपूर्णनेत्रारविन्दम् ।
योगीन्द्रान्तःकरणमधुलिट्सेव्यपादारविन्दं
साक्षादीक्षे मनसि मधुविध्वंसन त्वत्स्वरूपम् ॥ ९० ॥

पातालाङ्घ्रिं धरणिवलयं श्रोणिभागं विहाय
मध्योद्देशं सुरपुरमुखं ब्रह्मलोकोत्तमाङ्गम् ।
भास्वच्चन्द्रेक्षणमनिलनिश्वासमम्भोधिवीर्यं
ध्यायाम्यन्तस्त्रिभुवनपते पूरुषं त्वां विराजम् ॥ ९१ ॥

भूतात्मानं भुवनविततं भूतिसर्वस्वभाजं
भुक्तेर्मुक्तेरपि च विषयं भूरिकारुण्यपूर्णम् ।
भूतग्रामप्रभवविभवं भूर्भुवःस्वर्निधानं
भूयो भूयो मनसि भगवन् भावयेयं भवन्तम् ॥ ९२ ॥

मायातीतं मननविषयं मौनभाजां मुनीनां
कालात्मानं कलिमलमुषं कारणं कारणानाम् ।
दुर्विज्ञेयं निगमवचसा मुख्यावाक्यार्थसारं
तेजोरूपं त्रिभुवनपते चेतसा त्वां स्मरामि ॥ ९३ ॥

आत्मारामं विपुलममलं वाक्प्रपञ्चातिवृत्तं
द्वन्द्वातीतैर्विषयविमुखैर्योगिभिश्चिन्त्यमानम् ।
आविर्भूतस्वरसपरमानन्दनिष्यन्दसान्द्रं
विश्वोत्पत्तिस्थितिलयकरं त्वां मुरारे स्मरामि ॥ ९४ ॥

मुक्तिस्थानं मुनिजनमनोमन्दिरं मूर्तिहीनं
नानाकारं निरुपममसङ्ख्यातवीर्यानुभावम् ।
निर्व्यापारं विविधविभवं निर्मलं निर्विकल्पं
विश्वाकारं परमपुरुष त्वामहं भावयामि ॥ ९५ ॥

स्थूलं सूक्ष्मं गुरुलघुसमुत्तुङ्गमुच्चैर्गभीरं
दीप्रं शान्तं तरलमचलव्यक्तमव्यक्तरूपम् ।
सर्वाध्यक्षं सकलकरुणागोचरं लूतमायं
मायाहीनं मनसि कलये देव रूपं त्वदीयम् ॥ ९६ ॥

सत्तामात्रं विकृतिरहितं व्याप्तमाद्यन्तशून्यं
संविद्रूपं गुणगणनिकाविक्रमाह्लादपूर्णम् ।
शुद्धं बुद्धं विघटिततमोबन्धमात्मप्रकाशं
प्रत्यग्भूतं तव मुररिपो रूपमन्तः स्मरामि ॥ ९७ ॥

सर्वस्मादप्युपरि विलसत्सर्वभूतात्मभूतं
सर्वाकारप्रकटनपरं सर्वतेजोनिधानम् ।
सर्वापायक्षपणनिपुणं सर्वलोकप्रधानं
त्वद्रूपं मे लसतु हृदयाम्भोरुहे देवदेव ॥ ९८ ॥

निर्वाणाख्यं निखिलजगतामाश्रयं दुर्विभाव्यं
भव्यं दिव्यं भवजलनिधेः पारमुच्चैरयन्तम् ।
सच्चित्सौख्यात्मकमुपनिषन्मुख्यवाक्यप्रपञ्च-
व्याख्यायोग्यं परमपुरुष त्वत्स्वरूपं स्मरामि ॥ ९९ ॥

सत्यं ज्ञानं मुहुरपि महायोगिभिश्चिन्त्यमानं
पूर्णानन्दामृतलहरिकाजालमान्यं तुरीयम् ।
ओङ्कारार्थं परमममृतं त्वन्निषेधावशेषं
ब्रह्माद्वैतं परमपुरुष स्वात्मबोधं स्मरामि ॥ १०० ॥

स्तोत्रं विष्णोरिति मृदुपदैः सुप्रबन्धैः शतेन
श्लोकैरेभिर्विरचितमिदं भक्तिसंवर्धनाख्यम् ।
भक्त्या युक्तः पठति खलु यः प्रातरुत्थाय नित्यं
प्राणापाये व्रजति हि हरेर्धाम निर्वाणनाम ॥ १०१ ॥

इदं स्तोत्रं पठेन्नित्यं यो नरः प्रातरुत्थितः ।
भक्तिसंवर्धनं नाम स याति परमं पदम् ॥ १०२ ॥

भक्तिसंवर्धनं नाम श्लोकानां शतकं मया ।
ब्रह्मदत्ताभिधानेन स्तोत्रं विष्णोर्विनिर्मितम् ॥ १०३ ॥

॥ इति श्रीभक्तिसंवर्धनशतके उत्तरभागः सम्पूर्णः ॥
॥ भक्तिसंवर्धनशतकं संपूर्णम् ॥

---

## ३८. ॥ अथ श्रीसुन्दरराजस्तोत्रम् ॥

लक्ष्मीदिव्यकरारविन्दमृदुलं संफुल्लपद्मारुणं
ब्रह्मेशानसुरासुरेन्द्रकनकश्रीमौलिनीराजितम् ।
वज्राब्जध्वजशङ्खचक्रविलसत्कल्पाङ्कुशैर्लाञ्छितं
वन्दे सुन्दरराजपादयुगलं श्रीभूषणैर्भूषितम् ॥ १ ॥

श्रीमन्तः शठकोपसंयमिमुखा वैकुण्ठभक्तास्तु ये
तेषां श्रेष्ठतमो द्विजोत्तमवरः श्रीविष्णुचित्तो महान् ।
यस्मिन् श्रीमधुरापुरे त्वभिजगौ श्रीमङ्गलाशासनं
तं वन्दे मधुराधिराजममलं व्यूहात्मकं सुन्दरम् ॥ २ ॥

श्रीमान् श्रीपरतत्त्वनिर्णयमनाः श्रीवल्लभाख्यः प्रभुः
सम्पत्पूर्णगुरूत्तमा दिवि बुधानाहूय शुल्कं धनम् ।
सङ्कल्प्यारभते तदा तु समये श्रीविष्णुचित्तो गुरु-
स्तद्गोष्ठ्यां मधुरामगाद्बुधवरान् जेतुं महावैभवः ॥ ३ ॥

श्रीमन्तं वटपत्रशायिकृपया वेदान्तपारङ्गतं
लक्ष्मीनाथनिवासभूतहृदयं श्रीविष्णुचित्तं गुरुम् ।
दृष्ट्वोत्थाय महानुभावमनघं नम्रोऽभवत्तद्गुरु-
स्तत्काले महिमानभिज्ञविबुधाः कुर्वन्ति कोपं परम् ॥ ४ ॥

सम्पत्पूर्णगुरूत्तमस्तु विबुधक्ष्मापालचूडामणि-
स्तत्काले वदति स्म शास्त्रनिपुणं श्रीविष्णुचित्तं गुरुम् ।
कर्तव्यः परतत्त्वनिर्णय इह श्रीविष्णुचित्त त्वया
तेनोक्तः सदसि स्थितान् स च बुधान् संरम्भते सादरम् ॥ ५ ॥

वेदान्तस्मृतिशास्त्रवेद्यमहिमं श्रीपाञ्चरात्रस्तुतं
श्रीरामायणभारतादिविदितं निर्बाधमाद्यं महत् ।
श्रीनारायणनामकं च सगुणं तत्त्वं परं शाश्वतं
श्रोतव्यं विबुधा भवद्भिरमलं ज्योतिः फणामो वयम् ॥ ६ ॥

सत्यं ज्ञानमनन्तमव्ययमजं ज्योतिः सदा निर्मलं
तत्त्वं निर्मलदिव्यमङ्गलगुणं नारायणाद्याख्यकम् ।
वेदान्तस्मृतिपाञ्चरात्रविदितं त्रैलोक्यभूपालकं
ब्रह्मेशानमहेन्द्रदेवजनकं शान्तं महावैभवम् ॥ ७ ॥

वेदानामपहारदुःखितमना लोकप्रसिद्धो विधि-
स्तत्काले ह्यसुरं निहत्य भगवान् नारायणो वत्सलः ।
कारुण्येन ददाति वेदमखिलं तस्माज्जगन्नायकः
को वा शंसत पक्षपातरहिता यूयं बुधाः केवलम् ॥ ८ ॥

ईशानः कमलासनस्य शिरसः छेदादभूत् पातकी
प्रायश्चित्तमयं दधार शिरसा वैकुण्ठपादोदकम् ।
तस्मादेव हि पावनत्वमगमद्गङ्गाधराख्यां ततः
को वा शंसत पक्षपातरहिता यूयं बुधा ईश्वरः ॥ ९ ॥

ब्रह्माणं सृजति स्म वै स भगवान् श्रीनाभिपङ्केरुहात्
रुद्रं सोऽपि पितामहश्च स हरः पञ्चाननः षण्मुखम् ।
तस्माद्वेदपुराणरत्नविदितान्नारायणात् कः प्रभुः
यूयं शंसत पक्षपातरहिता विद्वद्वरा ईश्वरः ॥ १० ॥

इत्थं वेदपुराणशास्त्रवचनैः श्रीपाञ्चरात्रादिकैः
श्रीरामायणभारतादिवचनैः श्रीविष्णुचित्तो गुरुः ।
तद्गोष्ठ्यां परतत्त्वनिर्णयमहो कृत्वा बुधान् पण्डितान्
जित्वा तत्र जवेन सर्वविदितं चिच्छेद शुल्कं मुदा ॥ ११ ॥

इत्याश्चर्यचरित्रमस्य विबुधाः सर्वे महापण्डिताः
सम्पत्पूर्णगुरूत्तमश्च जगतां राजाधिराजः प्रभुः ।
दृष्ट्वा तत्र महावबोधविभवं श्रीविष्णुचित्तं मुदा
कुर्वन्ति स्तुतिमङ्गलं पुलकिताः कल्याणशङ्खध्वनिम् ॥ १२ ॥

श्रीमान् भूवलयाधिराजविदितः श्रीवल्लभाख्यः प्रभुः
गोष्ठ्यां तत्कृततत्त्वनिर्णयमहासन्तोषपूर्णाशयः ।
सम्पत्पूर्णगुरूत्तमादिविबुधैः साकं महापण्डितैः
सम्मानं कुरुते महोत्सवमिव श्रीविष्णुचित्तप्रभोः ॥ १३ ॥

स्कन्धारूढमिमं गजस्य च महावीथिं वलन्तं स्तुतं
भेरीकाहलशङ्खगीतविलसत्कोलाहलप्रोज्ज्वलम् ।
श्रीश्रीवल्लभदेवमुख्यविबुधैर्लोकैः समस्तैर्वृतं
वैकुण्ठः स च वीक्षते स्म रसया श्रीविष्णुचित्तं मुदा ॥ १४ ॥

आकाशे गरुडे लसन्तममलं लक्ष्मीपतिं सादरं
दृष्ट्वा तत्सुकुमारविग्रहमहासौन्दर्यमालोकयन् ।
अस्थाने भयशङ्कया भगवतः श्रीविष्णुचित्तो गुरु-
र्दीप्यद्दन्तिगलस्थ एव स जगौ श्रीमङ्गलाशासनम् ॥ १५ ॥

विद्वद्बृन्दसमानताङ्घ्रियुगलं सम्मानसाम्राज्यगं
विद्याशुल्कधनाढ्यकं गुणनिधिं देवादिभिर्वन्दितम् ।
श्रीश्रीवल्लभदेवराजमहितं श्रीविष्णुचित्ताह्वयं
लक्ष्मीनाथसमीक्षितं गुरुवरं वन्दे महावैभवम् ॥ १६ ॥

तद्गोष्ठ्याः स च निर्गतः श्रुतिशिरस्सारार्थपारङ्गतः
श्रीश्रीवल्लभदेवराजसहितः श्रीविष्णुचित्तो गुरुः ।
दिव्याष्टाङ्गविमानरत्ननिलयं व्यूहात्मकं सुन्दरं
तेजोराशिमयं महागुणगणं संसेवितुं सत्वरम् ॥ १७ ॥

साधं राजगुरूत्तमादिविबुधैः श्रीगोपुरं सुन्दरं
नत्वा श्रीबलिपीठकं च गरुडं सेनापतिं सादरम् ।
अष्टाङ्गाख्यविमानमद्भुतगुणं संसेव्य साष्टाङ्गतः
तस्यान्तः प्रविशन्तमम्बुजमुखं श्रीविष्णुचित्तं भजे ॥ १८ ॥

वन्दे सुन्दरराजमिन्दुवदनं वात्सल्यदिव्याद्भुत-
क्षान्त्यौदार्यदयादिसद्गुणनिधिं नारायणं श्रीपतिम् ।
मुक्तारत्नकिरीटदिव्यतुलसीमालामणीन्द्रादिक-
श्रीभूषासमलङ्कृतं रशनया भास्वत्कटीसुन्दरम् ॥ १९ ॥

अष्टाङ्गाख्यविमानराजनिलयं ब्रह्मादिभिर्वन्दितं
मन्दस्मेरशुभारविन्दवदनं कारुण्यवारांनिधिम् ।
सन्तानं नमतां स्वकीयचरणौ सौलभ्यभूमावधिं
वन्दे सन्ततमम्बुजाक्षममलं व्यूहात्मकं सुन्दरम् ॥ २० ॥

श्रीवत्साब्धिसुतामणीन्द्रतुलसीमालालसद्वक्षसं
श्रीमद्दिव्यसुवर्णरत्नमकुटं भूषालसद्विग्रहम् ।
श्रीमद्दिव्यविमानगोपुरमणिप्राकाररत्नोज्ज्वल-
स्थूणासंवृतदिव्यसन्निधिशुभं व्यूहं भजे सुन्दरम् ॥ २१ ॥

दिव्याष्टाङ्गविमानदिव्यकनकस्थूणासहस्रोज्ज्वल-
श्रीमन्मण्टपगर्भगेहविलसद्दिव्यस्थलीभूषणम् ।
दिव्यश्रीमणिवत्समौक्तिकमणिश्रीहारभूषामणिं
श्रीमन्तं मधुराधिराजममलं व्यूहं भजे सुन्दरम् ॥ २२ ॥

दिव्याष्टाक्षरमन्त्ररत्नचरमश्लोकार्थनिष्ठावतां
शिष्टानां महतां त्वदीयचरणद्वन्द्वाश्रितानां सताम् ।
पादांभोजविशेषभक्तिसहितं मां वीक्ष्य नित्यं स्मर
श्रीमन् सुन्दर वारिजाक्ष कमलानाथ प्रभो देहिनाम् ॥ २३ ॥

अस्मिन् श्रीमधुरापुरे तव कृपासन्धुक्षितज्ञानिना
गीतं येन मया तु मङ्गलकरं यन्मङ्गलाशासनम् ।
तस्मात्तेन मया समर्पितमिदं दिव्यप्रबन्धात्मकं
लक्ष्मीनाथ महाप्रभो गुणनिधे त्वत्सन्निधौ पाहि माम् ॥ २४ ॥

इत्थं श्रीभगवन्तमम्बुजमुखं व्यूहात्मकं सुन्दरं
स्तुत्वा तेन समीक्षितस्तु भगवान् श्रीविष्णुचित्तो गुरुः ।
श्रीश्रीवल्लभदेवमुख्यविबुधैः सर्वैरनुज्ञापित-
स्तस्माद्वै वटपत्रशायिनमगादाह्लादपूर्णाशयः ॥ २५ ॥

तत्रासौ वटपत्रशायिनि महादिव्यस्थले भक्तिमान्
श्रीमन्मण्टपमर्धमण्टमपि श्रीगोपुरं सुन्दरम् ।
तत्कारुण्यविशेषलब्धकनकैरित्यादिकं नित्यशः
कैङ्कर्यं कृतवन्तमद्भुतगुणं श्रीविष्णुचित्तं भजे ॥ २६ ॥

इत्थं श्रीभगवान् महाद्भुतगुणः श्रीविष्णुचित्तो गुरुः
भक्त्या नित्यमहाप्रभावममलं स्तौति स्म यं सुन्दरम् ।
तं वन्दे द्विजनाथवन्दितपदं व्यूहात्मकं सुन्दरं
श्रीमन्तं मधुरेश्वरस्तुतपदं सर्वात्मना सुन्दरम् ॥ २७ ॥

श्रियः कान्ताय जाज्वल्यश्रीवत्साङ्कितवक्षसे ।
कल्याणनिधये व्यूहसुन्दरेशाय मङ्गलम् ॥ २८ ॥

विमाने विश्वकर्मीये वेगवत्यास्तु दक्षिणे ।
वसते श्रीमते व्यूहसुन्दरेशाय मङ्गलम् ॥ २९ ॥

॥ इति श्रीसुन्दरराजस्तोत्रं सम्पूर्णम् ॥

---

## ३९. ॥ अथ श्रीमोहनक्षेत्रनाथसुप्रभातम् ॥

भास्वानुदेति घनसन्तमसप्ररोहाः
नष्टा भवन्ति विकचानि सरोरुहाणि ।
घोषैर्दिशो मुखरयन्त्यखिला विहङ्गाः
पद्मेश मोहनपते तव सुप्रभातम् ॥ १ ॥

अम्भोरुहप्रभवशङ्करवासवाद्या-
स्त्रैविक्रमादिचरितं विबुधाः समस्ताः ।
त्वत्पादसेवनसमुत्सुकिताः स्तुवन्त-
स्तिष्ठन्ति मोहनपते तव सुप्रभातम् ॥ २ ॥

आदाय सप्त मुनयः समुपास्य सन्ध्या-
मत्र्यादयः सरसिजानि मनोहराणि ।
पादारविन्दयुगमर्चयितुं प्रपन्ना-
स्तिष्ठन्ति मोहनपते तव सुप्रभातम् ॥ ३ ॥

ईषत्प्रफुल्लकमलोदरनिर्गतानां
झङ्कारगीतलसतां सुमनोहराणाम् ।
वर्गाश्च दिव्यमकरन्दवतामलीनां
निर्यान्ति मोहनपते तव सुप्रभातम् ॥ ४ ॥

उत्फुल्लपङ्कजसुचम्पकनालिकेर-
माकन्दपूगसुमनोहरमल्लिकानाम् ।
मन्दानिलः सुखकरः सह दिव्यगन्धै-
रायाति मोहनपते तव सुप्रभातम् ॥ ५ ॥

गोपालमुक्तमहिषाः पशुजातयश्च
गावश्चरन्ति परितः खलु पक्षिणश्च ।
गायन्ति कर्णमधुरं भ्रमराः शुकाश्च
पद्मेश मोहनपते तव सुप्रभातम् ॥ ६ ॥

वैकुण्ठवासिविबुधाश्च महीसुराश्च
स्वर्गस्थदेवनिवहाश्च महर्षयस्ते ।
सम्मर्दिताः खलु भृशं तव सेवनार्थं
तिष्ठन्ति मोहनपते तव सुप्रभातम् ॥ ७ ॥

गन्धर्वयक्षगरुडामरकिन्नराद्याः
श्रीनारदादिमुनयः सविशेषवाद्याः ।
गायन्ति कर्णमधुरं तव सेवनार्थं
पद्मेश मोहनपते तव सुप्रभातम् ॥ ८ ॥

त्वद्दासदासशरणागतदासदास-
तद्दासदासचरमावधिदासदासाः ।
त्वत्पादपङ्कजयुगं शरणङ्गताश्च
तिष्ठन्ति मोहनपते तव सुप्रभातम् ॥ ९ ॥

मोहनक्षेत्रनाथस्य सुप्रभातं तु यः पठेत् ।
प्रातर्दिने स वै विद्वान् प्राप्नुयात् परमं शुभम् ॥ १० ॥

मङ्गलं कालमेघाय कल्याणगुणसिन्धवे ।
मोहनक्षेत्रनाथाय नित्यश्रीर्नित्यमङ्गलम् ॥ ११ ॥

॥ इति श्रीमोहनक्षेत्रनाथसुप्रभातं सम्पूर्णम् ॥

---

## ४०. ॥ अथ श्रीवानाद्रिनाथस्तोत्रम् ॥

वन्देऽहं वनशैलनाथमहिषीं वात्सल्यपूर्णां श्रियं
भक्ताभीष्टफलप्रदां भगवतीं कारुण्यरूपां हरेः ।
भूषाभूषितविग्रहां मम पुनःसौख्यप्रदां सुन्दरीं
मन्दस्मेरशुभारविन्दवदनां लक्ष्मीं जगन्मातरम् ॥ १ ॥

मातः श्रीवनशैलनाथदयिते पद्मालये सुन्दर-
श्रीभूषे तव पादपद्मयुगलं मूर्ध्ना नतोऽस्म्यादरात् ।
देवि त्वां शरणं गते मयि कृपा शीघ्रं त्वया केवलं
कर्तव्येति सरोजकान्तवदने त्वत्सन्निधौ प्रार्थये ॥ २ ॥

वन्दे सुन्दरराजं तमिन्दिराभूमिनायकम् ।
प्रणतार्तिहरं सम्यक् परमस्वामिनं विभुम् ॥ ३ ॥

कल्याणं वृषभाद्रीन्दुः पुण्डरीकदलेक्षणः ।
सर्वेषां मोहकः श्रीमान् सुन्दरो दिशतान्मम ॥ ४ ॥

विष्णवङ्घ्रिमणिमञ्जीरप्रभवा या सरिद्वरा ।
वक्ष्यामि वैभवं तस्या गङ्गायाश्च यथामति ॥ ५ ॥

प्रह्लादो भगवत्कटाक्षजनितज्ञानप्रभावप्रभः
सारासारविवेकहारतरलो वैराग्यनिष्ठामणिः ।
श्रीमान् भूतदयालुरात्मगुणकः श्रीवैष्णवश्रीनिधिः
श्रीनारायणदिव्यपादकमलध्यानोज्ज्वलः सर्वदा ॥ ६ ॥

तत्पुत्रस्तु विरोचनः प्रभुवरो भूमण्डले विश्रुतः
पुत्रस्तस्य बलिस्तु सत्यवचनः श्रीमानभूद्भूपतिः ।
कृत्वा सोऽपि तपश्चिराय विबुधैरन्यैर्जनैरायुधै-
स्तिर्यग्भिश्च मृगैरवाप फणिभिः सर्वैरवध्यं वरम् ॥ ७ ॥

तस्मात् सोऽपि बलिः समस्तभुवनं जित्वा महावीर्यवां-
स्त्रैलोक्यं बुभुजे स्वयं कुलिशभृन्मुख्याः समस्ताः सुराः ।
नानादिक्षु पलायिताश्च गलितस्वस्वाधिकारास्ततो
भीताः शैलगुहां प्रविश्य न्यवसंस्तुल्या दिवाभीतकैः (?) ॥ ८ ॥

मेरौ तत्र युगान् बहून् सुरगणाः स्थित्वाथ रक्षार्थिनो
ब्रह्माणं प्रणिपत्य चाहुरपरैर्दूरीकृतास्ते वयम् ।
ब्रह्मन् पालयिता समस्तजगतां कर्ता त्वमेव प्रभो
युष्मद्दत्तवरो बलिस्तु बुभुजे त्रैलोक्यलक्ष्मीं स्वयम् ॥ ९ ॥

तस्मात्तेन महाबलेन चकिताः सर्वे वयं नाश्रया
ब्रह्मन् किञ्चिदविद्महे तव षदात् स्थानानि नः सन्ददाः ।
विज्ञप्तः स पितामहस्तु विबुधैः प्रोवाच तान्निर्जरान्
मा भीर्वो मघवत्प्रमुख्यविबुधाः क्षेमं द्रुतं प्राप्स्यथ ॥ १० ॥

इत्युक्त्वा स पितामहश्च विबुधानाश्वास्य दध्यौ हरिं
सर्वाभीष्टफलप्रदं प्रणमतां नारायणं वत्सलम् ।
भूमाभ्यां सहितं समस्तजगतां सर्गोपसर्गस्थितीः
कुर्वन्तं भगवन्तमद्भुतगुणं वेदान्तवेद्यप्रभम् ॥ ११ ॥

श्रीमानिष्टवरप्रदः प्रणमतां नारायणः श्रीपति-
स्तस्य प्रादुरभूत् सरोजभवनो भक्तिप्रकर्षावधिः ।
तं देवं विमलं महागुणगणं नत्वा नतक्लेशहं
लोकानां पतिरब्रवीन्मतिमतां ब्रह्मा महात्मा वरः ॥ १२ ॥

इन्द्राद्याः सकला हरे सुरगणाः स्थानादिरिक्ता इव
वर्तन्ते किल साम्प्रतं प्रणमतां तेषामभीष्टं द्रुतम् ।
लक्ष्मीनायक दातुमर्हसि विभो कारुण्यवारांनिधे
श्रुत्वा तस्य पितामहस्य वचनं ब्रह्माणमूचे हरिः ॥ १३ ॥

ज्ञातं मे मनसि स्थितः पुनरिदं ब्रह्मन् पुरा तद्वध-
स्त्विन्द्रस्यावरजो भवामि जठरे श्रीकाश्यपस्यादितेः ।
भूत्वाहं च वटुर्मनोहरगुणस्तस्य श्रियं याच्ञया
हृत्वेन्द्राय तदुत्तमं पुनरिदं दास्यामि दिव्यं पदम् ॥ १४ ॥

इत्याश्वास्य विधिं प्रभुस्त्रिजगतामाविर्बभूवाविशं-
श्चित्तं तस्य तु काश्यपस्य तरसा गर्भं गतश्चादितेः ।
विख्यातोऽयमुपेन्द्र इत्यथ पुनः श्रीवामनाकारको
विष्णुः सोऽपि तपश्चकार भगवान् ध्यायन् स्वकार्यं हृदा ॥ १५ ॥

किञ्चित्कालमसौ वसन् भुवि विभुः सिद्धाश्रमे केशवो
गत्वा त्रीणि पदान्ययाचत हरिः श्रीयज्ञशालां बलेः ।
धर्मज्ञस्तु स दत्तमित्यकथयद्धारा च देया प्रभो
वाचा नालमुवाच किं तपसि मे विष्णुः सदा तिष्ठतः ॥ १६ ॥

वाचा तं भगवान् बलिं बलवतां व्यामोहयि[ह्य द]त्वा वरं
सम्फुल्लाम्बुजपाणिना स तु पुनर्जग्राह दानोदकम् ।
तत्रासौ ववृधे महान् द्विपदतस्त्रैलोक्यमाक्रम्य वै
कृत्वाह स्ववशे पुनर्बलिमपि त्वेकं पदं देहि मे ॥ १७ ॥

इत्युक्तस्तमुवाच सत्यवचनो व्रीलाविशिष्टो बलि-
श्चाधत्स्वैकपदं शिरस्यपि मम प्रोक्तः प्रहस्य प्रभुः ।
पाताले बलिनं तु दिव्यकृपया नारायणः प्राक्षिपत्
प्रीतस्तस्य पदं तदा तु समये संक्षालितं ब्रह्मणा ॥ १८ ॥

भाति व्योम्नि जयोद्धृता स्म सलिलं तज्जं पताकेव तु
तद्गङ्गा ह्यवहत् सुरैर्दिवि पुनः सिद्धादिभिः सेविता ।
गङ्गाद्यापि विराजते बलिरिव व्योमस्थले सा पुनः
स्रोतोभिस्तिसृभिः किल प्रवहती भूम्यन्तरिक्षादिषु ॥ १९ ॥

त्रिविक्रमपदाश्लिष्टमणिनूपुरपूरितम् ।
जलं तद्धूननादत्र गिरिमूर्ध्नि समापतत् ॥ २० ॥

निर्झरीभूय शैलेऽस्मिन्निर्जरैरपि सेविता ।
रमणीयजला सा हि माधुर्यगुणशालिनी ॥ २१ ॥

यन्मूर्ध्नि स्रवती क्वचिन्मरतकस्निग्धेन्द्रनीलोपमा
वैदूर्योपलसन्निभा क्वचन वै मुक्ताफलाभा क्वचित् ।
मुक्तानां प्रभवा नदी सुविमला वज्रोपलाभा क्वचित्
लोकेऽस्मिन् विरजेव तं वनगिरिं शेषावतारं भजे ॥ २२ ॥

गन्धर्वैरपि सिद्धचारणसुरैर्विद्याधरैः सेविता
दिव्योद्यानलतातरून् वनगिरौ संवर्धयन्ती सदा ।
स्निग्धेऽस्मिंस्त्रिदशापगेव जननी दिव्यैः पयोभिः स्वकै-
र्यस्मिन्नूपुरसम्भवा किल सती श्रीमद्वनाद्रिं भजे ॥ २३ ॥

कान्तेवाब्धिसुता वनाद्रिवसतः श्रीसुन्दरस्य प्रभो-
र्भव्या भर्तृपदाश्रयेव चरणौ क्रान्तत्रिलोकौ हरेः ।
संवाहिस्वकराम्बुजा मणिसरैर्मुक्तासरैर्भूषिता
गङ्गा नूपुरसम्भवा वनगिरौ सन्दृश्यते योगिभिः ॥ २४ ॥

सायुज्यं तु मरीचिमुख्यमुनयो धर्मोऽपि सालोक्यतां
सामीप्यं चतुराननस्तु सुतपाः सारूप्यमाप्लुत्य वै ।
यस्यां निर्मलकायका वनगिरौ विष्णोः प्रयन्तिक्रमात्
गङ्गा नूपुरसम्भवा सुविमला सा नः पुनातु क्षणात् ॥ २५ ॥

भारद्वाजकुलोद्भवस्तु सुतपाः कश्चिद्वृषाख्ये गिरौ
सिद्धाभीष्टकसिद्धिकारिणि तपस्तेपे कदाचिन्मुनिः ।
मोक्षार्थी त्वघमर्षणोत्सुकमना मञ्जीरगङ्गोदके
श्रीसूक्तानि जपन् शुचिश्चिरतरं गाढं वगाह्य स्थितः ॥ २६ ॥

दुर्वासःप्रमुखास्तदा च समये त्वायान्ति योगीश्वराः
दृष्ट्वा दीर्घमसौ निमज्जति मुनिस्त्वस्माननादृत्य वै ।
मोक्षार्थी भवतीति ते तु मुनयो मत्वाशपन् कोपतः
मण्डूको भव दुर्मते तटगातान्नावेक्ष्य मग्नो जले ॥ २७ ॥

नावज्ञा न [तु]कृता मयेति सुतपास्तीर्थावगाहाच्चिरं
ज्ञात्वा तीर्थकरान् महात्मन इमान् पूज्यांस्तटे तिष्ठतः ।
इत्यूचे कृपया क्षमध्वमिति तान् योगी प्रणम्याब्रवीत्
सूक्तानामवसानमीक्ष्य मुनयः किञ्चिद्विलम्ब्य स्थितः ॥ २८ ॥

इत्युक्त्वाथ स यातन तु मलिनं ते चाब्रुवन् भेकतां
तत्र त्वं तु जिहास्यसीति कृपया श्रीसुन्दरस्य प्रभोः ।
इत्युक्त्वा मुनयस्तु नूपुरसरित्तीर्थे सदा निर्मले
स्नात्वा द्वादश वत्सरान् वनगिरौ तत्रावसन्निर्मलाः ॥ २९ ॥

भक्त्यानर्चुरिमे वृषाचलपतिं श्रीशैशवं सुन्दरं
लोकेशं विधिवद्द्विषट्कशरदः स्थित्वा जगन्मोहनं ।
दुर्वासःप्रमुखाः प्रणम्य मुनयस्तस्य प्रसादेन ते
तस्मात् सत्वरमाययुः सुमनसः क्षेत्रं वराहाख्यकम् ॥ ३० ॥

तत्काले सुतपास्ततो मुनिवरान् मण्डूकवेषोज्ज्वलः
सान्त्वेनाह पुनः प्रणम्य तु कदा मण्डूकतापास्यति ।
एवं तं तु वदन्तमार्तमनघाः सर्वे मुनीन्द्रास्ततो
ह्यस्माभिः सह यास्यसीति सुतपस्तूचुः शुचं मा कृथाः ॥ ३१ ॥

तत्र द्वादशवत्सरानपि निवत्स्यामो वयं तत्र वै
ह्यस्माभिश्च भविष्यसि प्रवसतो नाम्ना तव क्ष्माधरः ।
तीर्थं चापि भविष्यति स्वयमपि त्वायातु मञ्जीरजा
गङ्गा सुन्दरदोः करोति भगवान् सान्निध्यमेव स्वयम् ॥ ३२ ॥

तत्र त्वं भव सुन्दराह्वयहरिं त्वाराध्य मुक्तो भवे-
रित्येवं वदतां मुनिस्तु सुतपाः श्रुत्वा तु तेषां वचः ।
सार्धं तैः सहसागमत् स तु महत्तत्रैव चक्रे तप-
स्सान्निध्यं स च सुन्दरः समकरोत्तस्यैव योगीशितुः ॥ ३३ ॥

तत्रैवाविरभूत्तदा च तटिनी मञ्जीरजाता ततः
स्नात्वा स प्रयतस्ततस्तु सुतपा निर्मुक्तमण्डूकतः ।
तत्रासौ परमासने तु विधिवत्तस्मिन्निविष्टो मुनिः
सारूप्यं स च सुन्दरस्य तमगादाराध्य सम्यक्ततः ॥ ३४ ॥

अन्ये वापि तु ये वृषाचलतटेष्वाकीटमाखण्डलं
तद्देशेषु वसन्ति तेऽपि सकला मुक्ता हि नो संशयः ।
श्रीमत्सुन्दरपादपङ्कजलसन्मञ्जीरजास्नानतः
सर्वे सुन्दरदोःपदाब्जयुगयोः कैङ्कर्यसाम्राज्यगाः ॥ ३५ ॥

शुक्लायामतुले फलेप्सुफलदे श्रीमत्तुलामासि वा
द्वादश्यां कनकाचले घनगिरौ मञ्जीरगङ्गोदके ।
यः स्नाति प्रयतो नरस्तु सकलैः पापैस्तदा मुच्यते
दीर्घायुश्च धनं च तस्य भवति क्षेमं स याति ध्रुवम् ॥ ३६ ॥

श्रीमत्सोमकुलेऽतुले तु भवतां राज्ञां वरः श्रीमता-
मिन्द्रद्युम्नसुतः पुरूरवविभोः पौत्रो महावैभवः ।
गम्भीरो मलयाचलध्वजवरश्चूडामणिर्ज्ञानिनां
राजा राजशिरोमणिः क्षमवतामस्ति प्रशस्तो विभुः ॥ ३७ ॥

मेरोर्दक्षिणपार्श्वगान् स तु पुनर्जित्वा समस्तान्नृपान्
श्रीमान् स्वस्य तु नामचिह्नमतुलं मेरौ लिखित्वा पुनः ।
आगम्याथ पुरोधसा सह शरत्साहस्रकं नीतिमान्
भूपालो न्यवसत्त्वगस्त्यमुनिना तेनैव सन्मन्त्रिणा ॥ ३८ ॥

कदाचित्तमुवाचेदमगस्त्यम्मुनिसत्तमम् ।
विमानं कामगं मेऽद्य दातव्यं मुनिपुङ्गव ॥ ३९ ॥

तद्विमानं समारुह्य गङ्गासागरसङ्गमे ।
स्नात्वा गयायामभ्यर्च्य माधवं च गदाधरम् ॥ ४० ॥

दिने दिने महाभागैर्मुनिभिर्वेदपारगैः ।
ब्राह्मणैर्भगवद्भक्तैः पूजयित्वा तु माधवम् ॥ ४१ ॥

पुनः पुनः समागम्य मधुरायां महामतिः ।
न्यवसद्भूमिपालोऽसौ मलयाचलकेतुमान् ॥ ४२ ॥

भूपालो मलयध्वजो गुणनिधिः श्रीमान् कदाचित् पुनः
विष्णोरर्चनतो ययौ स तु गयामाखण्डलःश्रीमताम् ।
दिव्ये श्रीवृषभाचले समपतच्छाया विमानस्य वै
तत्काले किल तां तदैव जगृहुर्विष्णोर्महापार्षदाः ॥ ४३ ॥

तत्काले वृषभाद्रिगः करुणया तेनातिखिन्नं नृपं
त्वव्यक्तोज्ज्वलमूर्तिमान् स मधुरं वाक्यं महानब्रवीत् ।
भो भो राजशिरोमणे गुणनिधे मा भूद्भवान् व्याकुलो
मेघानां स्तनितोज्ज्वलत्स्वनयुतः श्रीमन्महासुन्दरः ॥ ४४ ॥

मत्पादमणिमञ्जीरप्रभवा सरितां वरा ।
पर्वतेऽस्मिन् प्रवहति गङ्गातोयाधिका शुभा ॥ ४५ ॥

मत्तुलाकोटिसम्भूता ह्यतुला शुभवारिणी ।
तस्यां स्नानं कुरु क्षिप्रं कोटिजन्मकृतं त्वघम् ॥ ४६ ॥

हरत्यशेषं नृपते मत्पादप्रभवा नदी ।
शुद्धभक्तोपभोग्या सा ममात्यर्थं प्रियङ्करी ॥ ४७ ॥

त्रैविक्रमे मम पदं प्रगृह्य विपुलं नृप ।
संक्षालितं पद्मभुवा धर्मेण द्रवरूपिणा ॥ ४८ ॥

तदा गङ्गाभवद्व्योम्नि त्रिपथेति च विश्रुता ।
त्रयाणां जगतां पापं विनाशयति नित्यशः ॥ ४९ ॥

तां गङ्गां शिरसा शूली दधार स्वात्मशुद्धये ।
मत्पदस्थतुलाकोटिप्रभवेयं नदी शुभा ॥ ५० ॥

मुक्तिं ददाति सर्वेषां पशूनां पक्षिणामपि ।
भवानत्रैव संस्नातो मदाराधनमाचर ॥ ५१ ॥

मत्पदद्वन्द्वमाराध्य मद्भक्तैश्च पुरस्कृतः ।
मदाराधनकर्माणि कुरुष्व प्रयतात्मवान् ॥ ५२ ॥

धर्मेण निर्मितं पूर्वं विमानं सोमसन्निभम् ।
तस्मिन्निह तु वत्स्यामि ब्रह्मणो यावदायुषम् ॥ ५३ ॥

अर्चयिष्यन्ति राजानः काले काले महामते ।
भूत्वा मद्भक्तभक्तस्त्वं विभवैः स्वार्जितैरिह ॥ ५४ ॥

स्थित्वैव सद्गतिं भूप गमिष्यसि न संशयः ।
इति तस्य वचः श्रुत्वा न्यवसत् स महीपतिः ।
विभवैस्तं समाराध्य वृषाद्रितटवासिनम् ॥ ५५ ॥

माणिक्यैः स्फटिकैः शुभैर्मरतकैः प्रत्युप्तदिव्योल्लस-
त्सोमच्छन्दविमानमध्यविलसद्दिव्योज्ज्वलद्वेदिगम् ।
सर्वाभीष्टदकल्पकं प्रणमतामुद्योगचक्रोज्ज्वल-
श्रीमद्दक्षिणपाणिपङ्कजशुभं दोर्दण्डषण्डोज्ज्वलम् ॥ ५६ ॥

ईषत्फुल्लजपाप्रसूनविकसत्संविद्रुमश्रीलस-
द्बिम्बाभाधरपल्लवं कमलया प्रारूढवक्षःस्थलम् ।
चन्द्राम्भोजसुधारसैर्विलसितैः प्रस्पर्धि दिव्याननं
श्रीमत्कौस्तुभरत्नभूषणमहाहारोल्लसत्कन्धरम् ॥ ५७ ॥

आकर्णायतपद्मपत्रशफरद्वन्द्वोल्लसल्लोचनं
मध्ये लोचनवारिधेः प्रविलसत्सेतूज्ज्वलन्नासिकम् ।
बालार्कोज्ज्वलदिव्यरत्नमकुटं पद्मोपरिस्फीतक-
श्रीमद्दिव्यमधुव्रतायितलसत्फालस्थपुण्ड्रोज्ज्वलम् ॥ ५८ ॥

कौशेयोज्ज्वलविग्रहं सुललितं चापादचूडं सदा
श्रीमन्तं वनशैलदिव्यतिलकं त्रैलोक्यसम्मोहनम् ।
एवं सुन्दरबाहुमम्बुजपदं दृष्ट्वानुभूय प्रभुं
संस्तुत्य प्रणतः सदा पुलकितः सन्तोषपूर्णाशयः ॥ ५९ ॥

श्रीमत्सुन्दरदोःपदाम्बुजतुलाकोटिप्रभूतोदक-
स्नानोद्भूतमहावबोधविभवः कैङ्कर्यसाम्राज्यगः ।
कुर्वंस्तस्य च सुन्दरस्य विविधान् ब्रह्मोत्सवाद्यान् महान्
भूपालो मलयध्वजो विजयते वैराग्यनिष्ठाग्रणीः ॥ ६० ॥

राजा सोऽपि ततस्तदा भगवतः कर्तुं वसन्तोत्सवं
श्रीमत्सुन्दरदोष्णि दिव्यविभवं विज्ञापयामास सः ।
तस्य श्रीभगवान् महाद्भुततमं सन्तुष्य चैत्रोत्सवः
कर्तव्यो भवतेत्यसौ नियमनं चक्रे महासुन्दरः ॥ ६१ ॥

चैत्रे मासि ततः परं नरपतिः श्रीपौर्णमास्यां दिने
तत्कालानुगुणैर्विलक्षणरसैः कर्पूरगन्धादिभिः ।
श्रीवैखानसशास्त्रतो द्विजवरैर्विद्वद्वरैरर्चकैः
श्रीमन्तं समपूजयद्वृषगिरेर्नाथं महासुन्दरम् ॥ ६२ ॥

ततो विहारयात्रार्थमुत्सवान्ते हरिं नृपः ।
पीताम्बरमुदाराङ्गं सर्वभूषणभूषितम् ॥ ६३ ॥

दिव्यं विमानमारोप्य कामगं रत्नभूषितम् ।
निर्जगाम बहिर्विष्णोः सन्तोषार्थं स भूपतिः ॥ ६४ ॥

भेरीशङ्खमृदङ्गवाद्यमधुरश्रीवेणुवीणास्वनै-
र्लोकानां स्वनितैः स्तवैश्च यमिनां घोषैर्मुनीनां शुभैः ।
श्रीमान् सुन्दरबाहुरिन्दुवदनः शब्दायमानो दिशः
छत्राद्यैश्च परिच्छदैर्गजमुखैः संवारितो निर्गतः ॥ ६५ ॥

तस्मिन् श्रीमति निर्गते सुरमुखाः शक्रादयः सुन्दरे
सेवार्थं स्वविमानकैश्च पुरतस्त्वभ्यागताः प्रेमतः ।
हर्षादप्सरसः स्त्रियश्च ननृतुः श्रीनारदाद्यास्तथा
गन्धर्वास्तु जगुश्च कर्णमधुरं घुष्यन्ति वेदान् द्विजाः ॥ ६६ ॥

एवं वृषाद्रेर्नैर्ऋत्यां गत्वा योजनमुत्तरे ।
नागाद्रेः कृतमालायास्तीरे मधुपुराह्वये ॥ ६७ ॥

विरच्य मण्टपं राजा दिव्यलक्षणसंयुतम् ।
सर्वालङ्कारसंयुक्तं तत्र सिंहासने शुभे ॥ ६८ ॥

लावण्यनामकं विष्णुं संस्थाप्य स महीपतिः ।
आनर्च विविधर्भोगैरर्घ्यपाद्यादिभिर्हरिम् ॥ ६९ ॥

दिव्यगन्धयुतैस्तीर्थैर्मन्त्रपूतैर्मनोहरैः ।
अभिषिच्याप्यलङ्कृत्य महार्हैश्चन्दनादिभिः ॥ ७० ॥

उपचारैः समभ्यर्च्य दर्शयित्वा च दीपिकाः ।
असङ्ख्येया घृतैः सिक्ताः सन्तोषाय हरेर्नृपः ॥ ७१ ॥

महार्हाणि विचित्राणि हवींषि बहुलानि च ।
अपूपादींश्च रुचिरान् महार्हाणि फलानि च ॥ ७२ ॥

ताम्बूलिकाः सकर्पूरा मधुपर्कादिकास्तथा ।
निवेद्य विष्णुभक्तेभ्यो ददौ तानि यथेष्टतः ॥ ७३ ॥

एवं सुन्दरराजस्य वर्तमाने महोत्सवे ।
तत्रत्यास्ते नदीतीरे तपस्यन्तो मुनीश्वराः ॥ ७४ ॥

रोमशाद्यास्तथान्ये च हरिं द्रष्टुं समागताः ।
निषेव्य तु महं दिव्यं भगवद्वीक्षणाप्लुताः ॥ ७५ ॥

कृतार्थाः सर्व एवैते प्रार्थयन् मधुसूदनम् ।
अहो महोत्सवो देव नेत्रानन्दः शरीरिणाम् ॥ ७६ ॥

अहो भाग्यमहो भाग्यं राज्ञस्तु मधुसूदन ।
लक्ष्मीपते वयं धन्याः श्रीमन् पङ्कजलोचन ॥ ७७ ॥

एवमेवात्र भवतादुत्सवः प्रतिवत्सरम् ।
उज्जीवनाय जगतां कृपया भवतो हरे ॥ ७८ ॥

मञ्जीरतटिनीतीर्थे नित्यं स्नातुं न शक्नुमः ।
अतः साप्यत्र नागाह्वगिरावाविर्भवत्विति ॥ ७९ ॥

इत्थं विज्ञापितो विष्णुर्विप्रेन्द्रैः करुणानिधिः ।
भक्तेष्टदो वरं प्रादात् परमं कमलापतिः ॥ ८० ॥

तदैव नागाद्रितटे मञ्जीरतटिनी हरेः ।
आज्ञया प्रवहत्येषा जगतां पावनाय च ॥ ८१ ॥

नागाद्रावुदयात्सैव नागतीर्थमितीर्यते ।
तस्यां स्नात्वा तु ऋषयः परमां सिद्धिमागताः ॥ ८२ ॥

राजासौ मलयध्वजो वृषगिरेर्नाथस्य लक्ष्मीपतेः
श्रीनागाह्वगिरौ महाद्भुतरसैरित्थं वसन्तोत्सवम् ।
चैत्रे मासि महोत्सवं भगवतः श्रीपौर्णमास्यां दिने
कृत्वा तं सकुतूहलं वनगिरिं संप्रापयत् सुन्दरम् ॥ ८३ ॥

पद्मचन्द्रामृतरसप्रस्पर्धिमुखमण्डलम् ।
वृषाद्रितटगं वन्दे सदा सर्वाङ्गसुन्दरम् ॥ ८४ ॥

राज्ञा श्रीमलयध्वजेन महता देवैरगस्त्यादिभिः
श्रीमच्चैत्रमहोत्सवो मुनिवरैः प्रत्यब्दमत्यद्भुतम् ।
श्रीनागाह्वगिरावकारि तु पुरा श्रीसुन्दरस्य प्रभोः
लावण्याम्बुनिधेर्वृषाचलपतेः क्षीराब्धिकन्यापतेः ॥ ८५ ॥

इदानीन्तनतद्रीतिं कश्चिद्राजा करोत्यसौ ।
इत्येषा किंवदन्ती तु केनचिद्धेतुना क्वचित् ॥ ८६ ॥

इदानीन्तनचैत्रोत्सववैभवं फणामः—

कल्याणं दिशतादशेषजगतां राजाधिराजः श्रिया
सार्धं दिव्यवृषाचले मणिमये सिंहासने सुस्थितः ।
मुक्तारत्नकिरीटकौस्तुभमुखैः श्रीभूषणैर्भूषितः
सर्वाभीष्टफलप्रदः प्रणमतां मोहङ्करः सुन्दरः ॥ ८७ ॥

वन्दे दिव्यसुवर्णनिर्मितमहाप्राकाररत्नोज्ज्वल-
त्सोमच्छन्दविमानगोपुरमणिस्तम्भोल्लसन्मण्टपैः ।
अन्यैश्चापि विलक्षणैर्मरतकस्थूणावृतैर्मण्टपै-
र्भान्तं श्रीवृषभाचलं मणिमयं त्रैलोक्यसम्भूषणम् ॥ ८८ ॥

सेनान्यप्रमुखैर्विलक्षणगुणैर्नित्यैः सदा संश्रितं
ब्रह्मेशानमहेन्द्रमुख्यविबुधैरन्यैर्मनुष्यैर्जनैः ।
स्वस्वाभीष्टमहाफलात् परिन[ण]तं योगीश्वरैः संस्तुतं
तिर्यग्जातिभिरावृतं वनगिरिं गाङ्गेयरूपं भजे ॥ ८९ ॥

चैत्रे पुष्पितवृक्षजातिनिवहे क्षेमंकरे देहिनां
मासे सर्वमनोज्ञषोडशकलापूर्णेन्दुसंलक्षिते ।
दिव्ये शुक्लचतुर्दशीशुभदिने संप्राप्तचोराकृतिः
श्रीमान् सुन्दरबाहुरिन्दुवदनस्तस्मात् प्रतस्थे गिरेः ॥ ९० ॥

चोराकारधरं सुवर्णकवचं शार्ङ्गादिदिव्यायुधं
श्रीभूषासमलङ्कृतं मणिलसन्मुक्ताकिरीटोज्ज्वलम् ।
नानावर्णविचित्ररत्नकनकश्रीवाहने सुस्थितं
चैत्रे मासि चतुर्दशीशुभदिने यान्तं भजे सुन्दरम् ॥ ९१ ॥

मध्येमार्गमहो समस्तजगतां मोहङ्करं सुन्दरं
पश्यल्लोकरजःकणैर्दिवि भुवि प्रच्छादयन्तं जनान् ।
भेरीमुख्यविशेषवाद्यनिवहैः शब्दायमानं दिशो
वन्दे सुन्दरबाहुमम्बुजमुखं सन्तोषपूर्णाशयम् ॥ ९२ ॥

श्रीमद्वेगवतीमहोत्तरतटे लक्ष्मीपुरे मण्टपे
मुक्तादामविराजिते विलसिते सौवर्णसिंहासने ।
तिष्ठन्तं कनकप्रभं भुवि जनानाह्लादयन्तं मुदा
श्रीभूषासमलङ्कृतं वृषगिरेर्नाथं भजे सुन्दरम् ॥ ९३ ॥

तत्र श्रीमणिमण्टपे विलसिते विद्वज्जनैः संवृते
कृत्वा मज्जनमुत्सवं पुनरपि श्रीभूषणैर्भूषितम् ।
वन्दे दिव्यमहोत्सवार्थमखिलश्रीवैष्णवानां सतां
सन्तोषं कृतवन्तमद्भुतमहादिव्यप्रसादैः शुभैः ॥ ९४ ॥

श्रीमद्दिव्यमहातुरङ्गकनकश्रीवाहने भूषिते
तिष्ठन्तं समलङ्कृतं विलसितैर्दिव्यायुधैर्भूषणैः ।
गोदोच्छिष्टमहास्रजं शुभपटं धृत्वा महाकौतुकं
पश्यन्मोहनविग्रहं वृषगिरेर्नाथं भजे सुन्दरम् ॥ ९५ ॥

प्रातर्दिव्यमहारथं शुभदिने श्रीपौर्णमास्यां हरिः
संन्तोषात्तु समारुरोह भगवांस्तस्याकृतेः सेवया ।
ब्रह्मेशानमहेन्द्रदेवविबुधक्ष्मापालयोगेश्वर-
श्रीवैकुण्ठनिवासिभूसुरमुखाः सर्वे च मोहं गताः ॥ ९६ ॥

यत्रास्मिन् भुवने विलक्षणमहादिव्यस्थलप्रोल्लस-
द्दिव्यार्चामयविग्रहाश्च निखिलास्तिष्ठन्ति चित्राङ्गताः ।
नानारत्नसुवर्णमौक्तिकमयैः श्रीभूषणैर्भूषिते
श्रीमद्दिव्यमहारथे विलसितं वन्दामहे सुन्दरम् ॥ ९७ ॥

अत्यर्कानलदीप्तपुष्पकरथे मालामहाभूषिते
तारामण्डलसङ्गते सुरभिते दिव्यामरैरर्चिते ।
ब्रह्मेन्द्रार्चितपारिजातकुसुमैः सम्पूर्णदिव्यस्थले
भक्ताभीष्टफलप्रदे विलसितं वन्दामहे सुन्दरम् ॥ ९८ ॥

दिव्यैः श्रीसनकादिभिर्मुनिवरैर्ब्रह्मादिभिर्दैवतै-
भूपालैश्च महासुरैश्च विबुधैः स्त्रीबालवृद्धैर्गणैः ।
पुष्पैश्चापि समर्चिते सुरभितैर्दिव्यैः समस्तैर्जनैः
श्रीमद्दिव्यमहारथे विलसितं वन्दामहे सुन्दरम् ॥ ९९ ॥

प्रातः सूर्यमहोदये शुभदिने श्रीपौर्णमास्यां ततः
श्रीमद्वेगवतीविलक्षणमहानद्यां गतः सुन्दरः ।
गन्धर्वामरकिन्नरादिगरुडश्रीनारदाद्यैर्बुधै-
र्गी तैश्चापि कृतैर्दिशो मुखरयन् घोषैर्जनानां शुभैः ॥ १०० ॥

श्रीमान् वेगवतीगतस्तत इमं त्यक्त्वा रथं सुन्दरो
नानालङ्कृतमण्टपेषु तुरगश्रीवाहनस्थः प्रभुः ।
स्थित्वा वीक्ष्य कुतूहलाद्बुधजनान्मध्येमहामण्टपं
विश्रम्याथ पुनः प्रयाति तमिमं वन्दामहे सुन्दरम् ॥ १०१ ॥

गत्वा षट्पदपट्टणं सह जलक्रीडाविशेषोत्सवं
सायाह्ने महितं विलक्षणगणैः कृत्वा महाकौतुकात् ।
सार्धं चोरकुलप्रसूतविमलैर्भक्तैः समस्तैस्तत-
स्तस्यान्तः प्रविशन्तमम्बुजमुखं वन्दामहे सुन्दरम् ॥ १०२ ॥

तत्र श्रीमणिमण्टपे विलसिते सौवर्णसिंहासने
स्थित्वा श्रीतुरगं परिष्कृततनुं त्यक्त्वा महामज्जनम् ।
कृत्वा दिव्यमहानुलेपनमहामालादिभिर्भूषणैः
श्रीमद्भिः परिमण्डितं वनगिरेर्नाथं भजे सुन्दरम् ॥ १०३ ॥

गाङ्गेयामलशेषवाहनमहो सौवर्णमलादिभि-
र्मुक्तादाममणीन्द्रहारविविधश्रीभूषणैर्भूषितम् ।
आरोहन्तमनन्तसूरिविमलश्रीवैष्णवैः संवृतं
तत्र श्रीयतिसार्वभौमसहितं वन्दे महासुन्दरम् ॥ १०४ ॥

मध्येरात्रमहो ततस्तु भगवान् श्रीपौर्णमास्यां यदा
मध्येवेगवतीं घृतोज्ज्वलमहादीपैः सहस्रैर्ज्वलन् ।
नृत्यन्तः प्रणमन्ति केचन तदा गायन्ति सम्मोहिताः
घुष्यन्तः स्तुतिमङ्गलं पुलकिताः केचित्तु मोहं गताः ॥ १०५ ॥

मध्येमार्गमहो विचित्रविविधश्रीमण्टपेषु प्रभु-
श्चित्रालङ्कृतिचित्रमाल्यसफलश्रीमत्सु कौतूहलात् ।
स्थित्वा तेषु विहृत्य सज्जनजनान् संवीक्ष्य गच्छन् स मे
भूयात् सुन्दरबाहुरम्बुजमुखः कल्याणसौख्यप्रदः ॥ १०६ ॥

लब्ध्वा तं मकरन्दमण्टपमहो सस्याग्रसम्भूषितं
तत्सौन्दर्यसुवीक्षणात् त्रिजगतां राजाधिराट् सुन्दरः ।
शेषारूढमहाप्रभुः परिणुतः सर्वैर्महापण्डितै-
रत्याश्चर्यमभून्महागुणगणः सन्तोषपूर्णाशयः ॥ १०७ ॥

आरुह्याथ महासुवर्णगरुडं सन्तोषकोलाहलै-
र्लोकानां प्रतिपद्दिने प्रणमतां शब्दायमानं दिशः ।
मध्येमार्गमलङ्कृते सकदलैरिक्ष्वादिभिर्मण्टपे
त्यक्त्वा तं कनकासने विलसितं वन्दामहे सुन्दरम् ॥ १०८ ॥

तत्रासौ दशरूपधृक् प्रणमतां हर्षार्थमुत्साहतः
पश्यन् मोहनमोहिनीविलसितं धृत्वा जगन्मोहकः ।
वीणागानरसं विशेषरसिकैर्भक्तैरनन्तैः कृतं
श्रुत्वा हृष्टमनाः समस्तजगतां दद्यात् सुखं सुन्दरः ॥ १०९ ॥

आरुह्यामललक्षणैः शुभकरं श्रीवाहनं सुन्दर-
स्तस्माद्वेगवतीमहोत्तरतटे संप्राप्य लक्ष्मीपुरम् ।
चोराकारधरः सुवर्णमकुटः पूर्वागतं वाहनं
चारुह्यामललोचनः स भवतु क्षेमङ्करो मे सदा ॥ ११० ॥

तस्मात् पूर्वमहापथेन सहसा गच्छन् महासुन्दर-
श्चोराख्यामलसर्वलक्षणमहासम्पन्नभक्तैर्वृतः ।
पापिष्ठानसुरान्निहत्य विबुधान् सन्तोष्य कोलाहलै-
रस्माकं भगवान् समस्तजगतां भूयात् प्रभुः क्षेमदः ॥ १११ ॥

लब्ध्वा श्रीवनशैलमम्बुजमुखः श्रीमन्महासुन्दर-
स्तत्र श्रीकमलालयाकरधृतश्रीहस्तपद्मस्तया ।
सार्धं दिव्यसुवर्णनिर्मितमहासिंहासने सुस्थितः
सन्तुष्टः शुभमङ्गलं वितरतादस्माकमाद्यः प्रभुः ॥ ११२ ॥

दिव्यश्रीवृषभाचले मणिमये श्रीमन्महामण्टपे
नानारत्नविचित्रवर्णकनकश्रीदिव्यसिंहासने ।
भूमाभ्यां करपङ्कजैर्मृदुतरैः संवाहिताङ्घ्रिद्वयः
सन्तुष्टः शुभमङ्गलं वितरतादस्माकमाद्यः प्रभुः ॥ ११३ ॥

जपाकुसुमबिम्बाभविद्रुमाधरभासते ।
वनशैलनिवासाय सुन्दरेशाय मङ्गलम् ॥ ११४ ॥

बालार्कशतसाहस्रमकुटेन विराजते ।
नितान्तदीर्घललितनायनाय च मङ्गलम् ॥ ११५ ॥

आपादमौलिपर्यन्तमभिजाताङ्गसम्पदे ।
मणिमञ्जुलमञ्जूषाभूषणाय च मङ्गलम् ॥ ११६ ॥

उद्योगचक्रविलसद्वामेतरकराय च ।
अर्धेन्दुललितोदारललाटाय च मङ्गलम् ॥ ११७ ॥

भूषिते रत्नसङ्घातैर्वृषभाख्यमहागिरौ ।
सोमच्छन्दविमानस्थसुन्दरेशाय मङ्गलम् ॥ ११८ ॥

॥ इति श्रीवानाद्रिनाथस्तोत्रं सम्पूर्णम् ॥

---

## ४१. ॥ अथ श्रीकृष्णमङ्गलस्तोत्रम् ॥

सर्वे वेदाः साङ्गकलापाः परमेण
प्राहुस्तात्पर्येण यदद्वैतमखण्डम् ।
ब्रह्मासङ्गं प्रत्यगभिन्नं पुरुषाख्यं
तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १ ॥

मायाधिष्ठानं परिशुद्धं यदविद्या
सूते विश्वं देवमनुष्यादिविभेदम् ।
यस्मिन् ज्ञाते सा शशशृङ्गेण समा स्यात्
तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ २ ॥

श्रीवैकुण्ठे श्रीधरणीलालितपादः
सर्वैर्देवैर्मूर्तिधरैः संस्तुतकीर्तिः ।
आस्ते नित्यं शेषशयो यः परमात्मा
तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ ३ ॥

धर्मत्राणायैव कृतानेकविभूतिः
श्वेतद्वीपे क्षीरपयोधौ कृतवासः ।
यो भृत्यानामार्तिहरः सत्त्वसमूह-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ ४ ॥

क्षीराम्भोधेस्तीरमुपाव्रज्य सुरेशै-
र्ब्रह्मेशानेन्द्रादिभिराम्नायशिरोभिः ।
भूमेः सौख्यं कामयमानैः प्रणतो य-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ ५ ॥

सर्वात्मापि स्वाश्रितरक्षापरतन्त्र-
श्रीदेवक्यां यो वसुदेवादवतीर्णः ।
चक्रे लीलाः श्रोतृमनोनन्दविधात्री-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ ६ ॥

पुत्रं मत्वा यं परमेशानमजातं
पूर्णं मायोपात्तशरीरं सुखरूपम् ।
नन्दो मुक्तिं प्राप यशोदा व्रजपुर्यां
तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ ७ ॥

गोप्यो गोपा गोपकुमारा(श्च यदीयं) [अपि गावः]
दृष्ट्वा रूपं सुन्दरमिन्दीवरनीलम् ।
मन्दस्मेरं कुन्दरदं प्रीतिमवापु-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ ८ ॥

बालो भूत्वा मासवया योऽपिबदग्रे
प्राणैः साकं स्तन्यमसुर्याः कुलटायाः ।
स्वस्त्याकाङ्क्षन्नात्मजनानां जगदीश-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ ९ ॥

पद्भ्यां जघ्नेऽनोऽसुरमुद्यम्य तृतीये
मासे देवो योऽखिलमायाविनिहन्ता ।
सन्तापघ्नः साधुजनानाममरेश-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १० ॥

कण्ठे बद्ध्वा मूर्ध्नि विनिर्भिद्य निरस्तः
दुष्टो गोष्ठे येन तृणावर्तसुरारिः ।
सर्वज्ञेनानन्तबलेनातिविमूढ-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ ११ ॥

गोपालार्भैश्चारणलीलां विदधानो
गोवत्सानां यो बकदैत्यं विददार ।
आस्यादारभ्यो[दर]मत्युन्नतसत्त्वं
तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १२ ॥

मात्रे दैत्याच्छङ्कितवत्यै दयया यो
गोप्यै लोकान् स्वात्मसमेतान् मुखपद्मे ।
स्वीये सूक्ष्मेऽदर्शयदव्याहतशक्ति-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १३ ॥

नव्यं गव्यं क्षीरमनीरं नवनीतं
भुङ्क्ते प्रीत्या दत्तमदत्तं च यथेच्छम् ।
स्वात्मारामाभ्यर्चितपादोऽपि च गोष्ठे
तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १४ ॥

कालीयोऽहिः कल्पितशिक्षाभयदान-
स्त्यक्त्वा तीर्थं यामुनमात्मीयमवाप ।
द्वीपं येनानन्तबलेनाथ ससैन्य-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १५ ॥

गोपान् योऽपादापद उद्धृत्य दवाग्ने-
र्मुग्धान् स्निग्धान् पवित्रामललक्ष्मीः [स्वस्य जनावनमूर्तिः]।
अष्टैश्वर्योऽव्याहतलक्ष्मीपतिराद्य-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १६ ॥

पापाचारोऽघासुरनामाहिशरीरः
शैलाकारो येन हतो मूर्ध्नि विभिन्नः ।
प्रापात्मैक्यं ब्रह्मविदामेव तु गम्यं
तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १७ ॥

गोगोपानां श्रोत्रमनोनेत्रसुखानि
प्रादुष्कुर्वन् गोपवधूनां व्रजमध्ये ।
लीलानाट्यान्यद्भुतरूपाणि य आस्ते
तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १८ ॥

व्यत्यस्ताम्भोजातपदो वेणुनिनादैः
सर्वाँल्लोकान् सातिशयान् कर्मसु मूढान् ।
चक्रेऽत्यन्तानन्दविधानेन वने य-
स्तस्मै श्रीकृष्णाय नमो मङ्गलधाम्ने ॥ १९ ॥

॥ इति श्रीकृष्णमङ्गलस्तोत्रं सम्पूर्णम् ॥

---

## ४२. ॥ अथ श्रीसूर्यशतकम् ॥

श्रिया समेतं श्रितपारिजातं
वियत्प्रदीपं विततप्रतापम् ।
नयप्रचारं नगराजधीरं
दयासमुद्रं तपनं नमामि ॥ १ ॥

तेजोमये मण्डलमध्यभागे
सिंहासने रत्नमयेऽब्जरूपे ।
असीनमुग्रायुधदीप्तहस्तं
छायापतिं चण्डकरं नमामि ॥ २ ॥

हिरण्यगर्भाप्तवरान् बलाढ्यान्
मन्देहदैत्याननलोग्रबाणैः ।
सर्वासु सन्ध्यासु निवारयन्तं
संज्ञापतिं देवमहं नमामि ॥ ३ ॥

हिरण्यगर्भाच्युतपार्वतीशैः
स्वपार्श्वसंस्थैः परिगीयमानम् ।
मुक्तिस्थलीयायिमुनीश्वराणां
घण्टापथं भास्करमाश्रयामि ॥ ४ ॥

किरीटकाञ्चीवलयाङ्गुलाद्यै-
र्विभूषणैर्भूषितमग्निवर्णम् ।
सौवर्णवस्त्रं श्रितवालखिल्यैः
संसेव्यमानं हरिमाश्रयेऽहम् ॥ ५ ॥

अष्टापदश्मश्रुकचैश्च सर्वै-
र्हिरण्मयाङ्गैर्युतमप्रतर्क्यम् ।
देदीप्यमानं किरणैः सहस्रै-
रम्भोजमित्रं रविमाश्रयामि ॥ ६ ॥

अनूरुवैदग्ध्यनिजाध्वधाव-
त्सप्ताश्वयुक्ते फणिपाशबद्धे ।
छन्दोमये दिव्यरथे स्थितं श्री-
सरोजिनीनाथमहं नमामि ॥ ७ ॥

दिने दिने मेरुगिरेः समन्तात्
प्रदक्षिणप्रक्रमणं वहन्तम् ।
सुरासुरैर्वन्दितपादपद्मं
प्रभाकरं त्वां शरणं प्रपद्ये ॥ ८ ॥

मित्रं पवित्रं नलिनीकलत्रं
हिरण्यगात्रं हिमवीतिहोत्रम् ।
तमोलतादात्रममर्त्यचैत्रं
विशालनेत्रं रविमाश्रयेऽहम् ॥ ९ ॥

अजाण्डगेहान्तररत्नदीपं
सन्ध्यासु सन्ध्यासु समस्तविप्रैः ।
होमार्चनध्यानतपोजपाद्यै-
राराध्यमानं दिननाथमीडे ॥ १० ॥

चतुःशतैरंशुभिरम्बुवृष्टिं
तावन्मितैरातपमुग्ररूपम् ।
तदर्धमानैः किरणैर्हिमानीं
प्रकाशयन्तं प्रभुमाश्रयामि ॥ ११ ॥

मासाष्टकं भूमिगताम्बु पीत्वा
क्षितौ पुनर्मासचतुष्टयेन ।
वृष्ट्या तटाकादिजलप्रदेशान्
प्रपूरयन्तं पुरुषं भजेऽहम् ॥ १२ ॥

यन्मण्डले वारिधरप्रकोपात्
अदृश्यमाने दिवसो नराणाम् ।
स्याद्दुर्दिनं तस्य दिवाकरस्य
श्रीपादयुग्मं शरणं भजेऽहम् ॥ १३ ॥

प्रत्यक्षदैवं परिपूर्णबिम्बं
समुज्ज्वलं दीधितिभिः सहस्रैः ।
निशातमश्चित्तगतं तमश्च
प्रध्वंसयन्तं परमेशमीडे ॥ १४ ॥

कलिङ्गदेशेष्वभिमानपूर्णं
प्रागाननं सारसपीठसंस्थम् ।
प्रवालसंकाशलसच्छरीरं
प्रभाकरं त्वां प्रणमामि भक्त्या ॥ १५ ॥

प्रभाकराय प्रमदप्रदाय
प्राचीनवाक्प्रत्ययकारणाय ।
प्रपञ्चकेषु प्रकटीकृतात्म-
प्रसिद्धये चास्तु नमः प्रभाते ॥ १६ ॥

ऋग्वेदरूपेण च मण्डलेन
सामस्वरूपैः किरणैः सहस्रैः ।
यजुर्मयाङ्गद्वपुषा समेतं
त्रयीमयं सप्तहयं नमामि ॥ १७ ॥

यो याज्ञवल्क्याख्यमुनीश्वराय
साङ्गं ददौ शुक्लयजुर्विशेषम् ।
सप्ताष्टशाखासहितं पवित्रं
तस्मै नमो देशिकदेशिकाय ॥ १८ ॥

तपः प्रपूर्णाय मयासुराय
ग्रहागमं यं प्रददौ समग्रम् ।
वेदाङ्गभूतं परमं रहस्यं
नमोऽस्तु तस्मै नलिनीप्रियाय ॥ १९ ॥

दिने दिने कोटिसुवर्णनिष्का-
नुत्पादयन्तं जगदेकपूज्यम् ।
ददौ स्यमन्ताख्यमणीवरं यः
सत्राजिते तं सवितारमीडे ॥ २० ॥

तमोऽभिभूतं भवतीति विश्वं
संचिन्त्य सायं समये कृशानौ ।
निधाय तेजोलवमात्मनो यो
ययौ तमीशं करुणार्द्रमीडे ॥ २१ ॥

यद्रश्मयो वारिधिगर्भसंस्था
वायुप्रकोपेषु तटिल्लताः स्युः ।
दृश्यार्धभागे प्रसृता हिमांशु-
कलास्तमीडेऽमितकान्तिपुञ्जम् ॥ २२ ॥

यस्यामृतान्नौ भिषजौ सुराणां
हविर्भुजौ मर्दितदैत्यवर्यौ ।
हयाधिरूढौ तनयावभूतां
दस्रौ तमर्कं शरणं व्रजामि ॥ २३ ॥

यस्यात्मजो धर्मभृतां वरिष्ठो
वर्णाश्रमाचारविधानकर्ता ।
नृपालवंशादिमबीजभूतो
मनुस्तमम्भोजहितं नमामि ॥ २४ ॥

विद्युन्मणीजाठरबाडबाग्नि-
ग्रहर्क्षजाम्बूनदचन्द्रकान्तिः ।
यदंशलेशद्युतिसम्भवा तं
प्रभामयं देवमहं नमामि ॥ २५ ॥

यन्नन्दनः प्राणिकृताघपुण्य-
फलप्रदो याम्यदिशाधिनाथः ।
धर्मिष्ठवर्यः समवर्तनोऽभू-
द्यमस्तमम्भोजहितं नमामि ॥ २६ ॥

मासर्तुवर्षादिविभक्तकालः
खण्डाह्वयो येन समुत्थितोऽभूत् ।
तं विश्वसर्गावननाशहेतुं
नमाम्यहं काश्यपगोत्रमीशम् ॥ २७ ॥

वियोगदुःखार्दितचक्रवाक-
द्विजानवश्यायनिपीडिताङ्गान् ।
पद्मांश्च शीतार्तियुतान् दरिद्रान्
सन्तोषयन्तं सवितारमीडे ॥ २८ ॥

उद्बोधका यस्य मरीचयः स्युः
विश्वस्य निद्राभरविस्मृतस्य ।
चोरव्रजस्यायसशृङ्खलाः स्युः
तस्मै नमः सारसबान्धवाय ॥ २९ ॥

सन्ध्याद्वये यस्य मरीचयः स्युः
बन्धूकपुष्पप्रतिमानवर्णाः ।
मध्यंदिने वज्रविभोपमानाः
तस्मै नमस्तीव्रकराय तुभ्यम् ॥ ३० ॥

त्रिनाभियुक्तामररूपकैक-
चक्रेण संविन्मयकूबरेण ।
समन्विते दिव्यरथे वसन्तं
नितान्तकान्तं भगवन्तमीडे ॥ ३१ ॥

यः कश्यपः स्यादिति गर्भगोलात्
जातः सुरेन्द्राय जयं प्रदातुम् ।
द्विषट्करूपैरमितप्रभाढ्यैः
तं हेमवर्णं पुरुषं नमामि ॥ ३२ ॥

नमः प्रभाते विधिरूपकाय
मध्यंदिने माधवरूपकाय ।
दिनावसाने हररूपकाय
निशासु सर्वासु चिदात्मकाय ॥ ३३ ॥

पूर्वाचलाग्रेऽस्तनगस्य शृङ्गे
सुराध्वमध्ये विचरन्तमह्नि ।
निशासु पातालगताम्बरे च
प्रभाकरं त्वां प्रणमामि भक्त्या ॥ ३४ ॥

लोकस्य बन्धुं गगनस्य रत्नं
चक्षुष्मतां नेत्रमजाण्डरूपम् ।
वेदस्य मूलं पतिमम्बुजानां
प्रभाततेजस्करमीशमीडे ॥ ३५ ॥

रक्तप्रसूनाक्षतगन्धपर्णैः
यन्त्रे च मूर्तौ मनुजोऽतिभक्त्या ।
यमर्चयित्वा लभते स्वकामां-
स्तं वासुदेवं हृदि भावयामि ॥ ३६ ॥

शुद्धाशयाङ्गा मनुजाः प्रभाते
सौरारुणिभ्यां विधिवद्यमीशम् ।
संपूज्य कामानपवर्गसौख्य-
मवाप्नुयुस्तं पुरुषं भजेऽहम् ॥ ३७ ॥

छायास्ति भाति प्रियनामरूपे-
ष्वन्त्या चतुर्थी कथिता च संज्ञा ।
आद्यत्रयं त्वं परमात्मतत्त्वं
ततो रवे त्वां शरणं व्रजामि ॥ ३८ ॥

नमः पतङ्गाय सुरार्चिताय
नमस्तमोघ्नाय हिमान्तकाय ।
नमः सवित्रे जगदेकभर्त्रे
नमो ग्रहेशाय नमोऽव्ययाय ॥ ३९ ॥

यमन्तरादित्यसमग्रविद्या-
हृत्पद्मकोशान्तररन्ध्रसंस्थम् ।
नीवारशूकादपि सूक्ष्ममीशं
प्रोवाच तं चिन्मयमाश्रयामि ॥ ४० ॥

यद्रश्मयः स्युः परिवेषरूपाः
सितासिताभोज्ज्वलकेतवश्च ।
भीमाशनीपातशतह्रदाश्च
तस्मै नमो दीधितिमालिने ते ॥ ४१ ॥

तुषारवृष्ट्यन्वितपुष्करे य-
न्मरीचयो रत्नचयाञ्चितस्य ।
सुरेन्द्रचापस्य समानरूपाः
भवन्ति तं द्वादशरूपमीडे ॥ ४२ ॥

मित्राणि यस्येन्दुसुरेज्यभौमाः
शत्रू सितार्की शशिजस्तटस्थः ।
त्रिषड्दशा येषु गतश्च राशेः
शुभप्रदस्तं श्रुतिबोध्यमीडे ॥ ४३ ॥

प्रभातकालेऽस्तमयाख्यकाले
यन्मण्डलं व्योम्नि वितस्तिमानम् ।
अष्टाङ्गुलं स्यात् कुतपे च दृष्टं
तस्मै नमः श्रीनलिनीप्रियाय ॥ ४४ ॥

तुलादिषट्सङ्क्रमणेषु यस्य
बिम्बं भवेद्दक्षिणभागसंस्थम् ।
मेषादिषट्के च निरक्षदेशात्
उदक्स्थितं तं प्रणमामि भानुम् ॥ ४५ ॥

अहःक्षयं कर्कटकादिषट्के
निशाक्षयं नक्रगृहादिषट्के ।
निरक्षदेशोत्तरसंस्थितानां
करोति यस्तं दिननाथमीडे ॥ ४६ ॥

यन्मण्डले राशियुगे च संस्थे
संक्रान्तिनामाधिकपुण्यकालः ।
चन्द्रान्विते दर्शसमाह्वयः स्यात्
तस्मै नमो देवपितृस्तुताय ॥ ४७ ॥

अहर्निशाह्रासविवृद्धिदान-
मनेकधा भिन्नमहीगतानाम् ।
कुर्वन्तमर्कं घृणिमण्डलस्थ-
महोमयं वेदमयं नमामि ॥ ४८ ॥

धीरं महोदारममेयसारं
सूरं नुतारं धृतचारुहारम् ।
वीराधिवीरं कृतवारिपूरं
शुभप्रचारं सुविचारमीडे ॥ ४९ ॥

यस्यांशजः कीशगणाधिनाथो
विकर्णनासं युधि कुम्भकर्णम् ।
पादाहतं पङ्क्तिगलं च चक्रे
रुमापतिस्तं शरणं व्रजामि ॥ ५० ॥

यद्वंशजातो भगवान् मुकुन्दो
विश्वस्य सर्वस्य च रक्षणाय ।
क्रूरासुराणां च वधाय रामः
परात्परं तं दिवसेशमीडे ॥ ५१ ॥

ध्यानस्य कालेऽखिलयोगिवर्या
यद्बिम्बमादौ हृदये विचिन्त्य ।
ध्यायन्ति तन्मण्डलमध्यदेशे
देवं तमीशं तदभिन्नमीडे ॥ ५२ ॥

यस्यात्मजा रूपवती कलिन्द-
कन्या मुकुन्दस्य सती बभूव ।
प्रवाहरूपेण पयःपयोधिं
गता तमर्कं मनसा स्मरामि ॥ ५३ ॥

घटीद्वयध्यानतपोऽधिकाय
युधिष्ठिरायाधिकधार्मिकाय ।
अक्षय्यमन्नं प्रददौ रसाढ्यं
यः पुण्यवांस्तं ग्रहराजमीडे ॥ ५४ ॥

सन्ध्याविधौ होमविधौ द्विजेन्द्रैः
दिने दिने यः परिपूज्यमानः ।
यस्यार्चनं वर्गचतुष्कदान-
क्षमं तमीशं शरणं व्रजामि ॥ ५५ ॥

उद्यन्तमर्कं भजते पुमान् यः
स वै नरो ब्राह्मणशब्दवाच्यः ।
उपैति भद्रं परमार्थरूप-
मित्याह वेदः खलु विश्वनाथ ॥ ५६ ॥

ब्रह्मेति नाम त्वयि योगरूढि-
प्राप्तं श्रुतिः प्राह वियुक्तबाधम् ।
सन्ध्यासु सन्ध्यासु च विप्रवर्यैः
तदेव सूक्तं खलु पद्मबन्धो ॥ ५७ ॥

चराचराणामिह सूर्य आत्मे-
त्यन्तस्तमुक्त्वा यमयन्तमीशम् ।
तेषां च संविन्मयरूपमर्कं
पुनः श्रुतिः प्राह दिनाधिपं त्वाम् ॥ ५८ ॥

ज्ञानस्वरूपस्य तवाज्ञता न
ज्ञानं च सत्त्वप्रकृतेश्च योगात् ।
अनन्तकल्याणगुणाश्च भान्ति
मेध्यात्मकाले जलजातबन्धो ॥ ५९ ॥

त्वां कर्मणां साक्षिणमागमानां
स्वरूपभूतं जगतां च बन्धुम् ।
कालस्य कर्तारमुशन्ति वेदाः
परात्परस्त्वामपहाय कोऽन्यः ॥ ६० ॥

श्रीशङ्कराचार्यगुरुर्महात्मा
पञ्चामराणां प्रथमं यमाह ।
आलोक्य सर्वोपनिषन्निगूढ-
वाक्यानि वन्दे पुरुषं तमर्कम् ॥ ६१ ॥

प्राग्भूमिभृन्मौलिधृतं प्रभाते
माणिक्यकोटीरमिव प्रदीप्तम् ।
सरोजिनीपुण्यफलस्वरूप-
मुद्यन्तमर्कं प्रणमामि भक्त्या ॥ ६२ ॥

प्राचीवधूरम्यमुखे हिमाम्बु-
प्रक्षालिते कुङ्कुमपङ्कचित्रम् ।
काल्येन निक्षिप्तमिव प्रदीप्त-
मुद्यन्तमर्कं मृदुरश्मिमीडे ॥ ६३ ॥

सन्ध्यास्त्रिया कालकुमारकस्य
प्राक्शैलमञ्चोर्ध्वतले निबद्धम् ।
गुञ्जामयं गुच्छमिव प्रदीप्तं
बालं रविं कोमलदेहमीडे ॥ ६४ ॥

कालप्रबोधाय सुराधिपेन
प्राक्शैलहर्म्योर्ध्वतले निबद्धा ।
रत्नव्रजस्थापितझल्लरीव
यः संस्थितस्तं पृथुकार्कमीडे ॥ ६५ ॥

प्रभातकालाह्वयकेशवस्य
प्राचीदिशाख्येन्दिरया युतस्य ।
समर्पितं कौस्तुभनामरत्न-
मिव ज्वलन्तं पृथुकार्कमीडे ॥ ६६ ॥

सुरेन्द्रदिक्पर्वतवेदिकायां
कालाख्ययज्वप्रवरेण दीप्तम् ।
अङ्गारसङ्घातमिव ज्वलन्तं
बालं रविं शोणतनुं नमामि ॥ ६७ ॥

निशाख्यगौरीकृतपूजनेन
गाढान्धकाराङ्गजताडितेन ।
उन्मीलितं प्राग्गिरिशंकरेण
जालामयाक्षीव लसन्तमीडे ॥ ६८ ॥

पूर्वाद्रिशृङ्गस्थितकिंकिरात-
द्रुमे प्रभाताख्यवसन्तकाले ।
जातं महागुच्छमिवारुणांशुं
नमाम्यहं कश्यपमौनिपुत्रम् ॥ ६९ ॥

दृष्ट्वा शचीसंयुतमात्मनाथं
प्रागङ्गनायाः पतिकोपवत्याः ।
रक्तांशुयुक्तास्यमिव स्फुरन्तं
नमामि बालं नलिनीकलत्रम् ॥ ७० ॥

काल्यप्रभाशोणनदीप्रवाहे
मरीचिकिञ्जल्कविराजमानम् ।
रक्तोत्पलं जातमतीव भान्तम्
उद्यन्तमर्कं हरिदश्वमीडे ॥ ७१ ॥

मन्दाकिनीकोकसुरासुरौघैः
काल्यप्रभामन्दरपर्वतेन ।
चान्द्रीपयोब्धौ मथिते प्रभूत-
चिन्तामणीव स्थितमर्कमीडे ॥ ७२ ॥

प्रभातसूनोरभिषेचनाय
प्राचीरमण्यातपवारिदीप्तम् ।
आनीतमष्टापदरत्नकुम्भ-
मिव स्थितं पद्महितं नमामि ॥ ७३ ॥

प्रभातनारायणहस्तसंस्थं
गाढान्धकारासुररक्तसिक्तम् ।
मरीचिधारापरिपूर्णचक्र-
मिव स्थितं बालरविं नमामि ॥ ७४ ॥

प्रागब्धिवेलावलयोद्भवाया
हिमाम्बुसन्दोहदवर्धितायाः ।
काल्यप्रभाविद्रुमवल्लिकायाः
फलेन तुल्यं तरुणार्कमीडे ॥ ७५ ॥

हिमोदकोद्रेकमवेक्ष्य रात्रौ
पानाय तस्याब्धिजलं विहाय ।
नभोगतौर्वाग्निमिव प्रदीप्तं
शोणद्युतिं बालरविं नमामि ॥ ७६ ॥

चक्रद्विजानामतनुक्रियाणा-
मुद्बोधकं रात्रिमुखेऽतिमोहात् ।
अम्भोजिनीकुड्मलमध्यगस्य
भृङ्गस्य मोक्षप्रदमर्कमीडे ॥ ७७ ॥

इन्दीवराणां पललाशनानां
घूकादिकानां च विभावरीणाम् ।
जारस्य चोरस्य च दुःखहेतुं
सतां च वृद्धिप्रदमर्कमीडे ॥ ७८ ॥

भास्वान् रविर्भानुरनन्तरत्नं
दिवाकरश्चण्डगभस्तिरर्कः ।
मार्ताण्ड आदित्य इनो विवस्वान्
मित्रोऽर्यमा रक्षतु मां दयाब्धिः ॥ ७९ ॥

रक्तातपत्रध्वजचामराढ्यं
रक्ताम्बरं रक्तमरीचिबिम्बम् ।
रक्तैर्विभूषासुमगन्धमाला-
व्रजैर्युतं पद्महितं नमामि ॥ ८० ॥

आनन्दकन्दं हतशत्रुबृन्दं
दयासमुद्रं दमशालिभद्रम् ।
संज्ञासमेतं सवनप्रपूतं
दीप्तप्रबोधं दिननाथमीडे ॥ ८१ ॥

यस्योदये दीधितयः स्वकीया
मन्देहदेहक्षतजोपमानाः ।
प्राचीसतीभूषणरत्नरोचि-
र्निभास्तमादित्यमहं नमामि ॥ ८२ ॥

यन्मण्डलं पञ्चशताधिकाञ्च-
त्सहस्रषट्कोज्ज्वलयोजनेन ।
व्यासेन युक्तं घनगोलरूपं
तस्मै नमः पङ्कजबान्धवाय ॥ ८३ ॥

सव्यं सुराणामपसव्यवृत्त्या
रक्षोवराणां गगने चरन्तम् ।
तेषां दिनं मानववत्सरेण
प्रपूरयन्तं रविमाश्रयामि ॥ ८४ ॥

नमामि देवं महितप्रभावं
विपक्षदावं परिशुद्धभावम् ।
रणाङ्गणप्रोत्थितशङ्कराविं
छायासतीकल्पितनूत्नसेवम् ॥ ८५ ॥

समञ्चिताह्लादमुरुप्रसादं
सरोजपादं श्रितसर्ववेदम् ।
मृगेन्द्रनाथं कृतदैत्यखेदं
समग्रवादं सवितारमीडे ॥ ८६ ॥

नमामि सूर्यं नगराजधैर्यं
कृपार्द्रचर्यं कृतपुण्यकार्यम् ।
सुपर्ववर्यं सुगुणौघधुर्यं
पञ्चास्यवीर्यं परिपालितार्यम् ॥ ८७ ॥

वन्दे दिनेशं वरहेमकेशं
सत्कीर्तिकाशं सततप्रकाशम् ।
श्रीमत्प्रदेशं श्रितपापनाशं
प्रभावृताशं प्रथितप्रजेशम् ॥ ८८ ॥

सत्याय नित्याय चिदात्मकाय
गूढाय रूढाय परात्पराय ।
दिव्याय भव्याय दिवाकराय
मान्याय धन्याय नमो नमस्ते ॥ ८९ ॥

अचिन्त्यमव्यक्तमनादिमध्यं
चिद्रूपमानन्दघनं प्रशान्तम् ।
ज्योतिर्मयं यं प्रवदन्ति वेदाः
तस्मै नमस्तेऽस्तु विकर्तनाय ॥ ९० ॥

दुर्गागणाधीश्वरशम्भुविष्णु-
सूर्याह्वयैः पञ्चविधस्वरूपैः ।
समन्वितं भक्तजनाय कामान्
दिशन्तमीशं प्रणमामि नित्यम् ॥ ९१ ॥

ग्रहर्क्षभूगोलसहस्रकोटि-
प्रस्फीतवेधोऽण्डशतायुतस्य ।
अन्तर्बहिःपूर्णमनन्तशक्ति-
महोमयं देवमहं प्रपद्ये ॥ ९२ ॥

कल्याणरूपं कविराजसेव्यं
समग्रसत्त्वं विततात्मबिम्बम् ।
कल्याणरूपं कविराजसेव्यं
समग्रसत्वं विततं नमामि ॥ ९३ ॥

यं योगिनः साङ्ख्यविदश्च पाञ्च-
रात्रव्रताः पाशुपतागमज्ञाः ।
वेदान्तविद्यानिरता भजन्तः
प्रयान्ति मुक्तिं तमजं भजेऽहम् ॥ ९४ ॥

सर्वेषु कालेषु च बालरूपं
सर्वेषु कालेषु च यौवनस्थम् ।
सर्वेषु कालेषु च वृद्धभावं
विकारशून्यं रविमाश्रयामि ॥ ९५ ॥

निरञ्जनं निर्गुणमप्रमेयं
कूटस्थमव्यक्तमनन्तमाद्यम् ।
निर्द्वन्द्वमानन्दमखण्डमेकं
चैतन्यरूपं रविमाश्रयामि ॥ ९६ ॥

कोदण्डरामाह्वयविप्रवर्य-
प्रपूजितं श्लोकशताब्जपुष्पैः ।
छायाख्यबिब्बोकवतीसमेतं
संज्ञापतिं त्वां शरणं प्रपद्ये ॥ ९७ ॥

योगीश्वरो वेङ्कटकृष्णयज्वा
तत्पुत्रकं कोट्टकेलपूडिवंश्यम् ।
कोदण्डरामाह्वयविप्रवर्यं
मां पाहि मां पाहि सरोजबन्धो ॥ ९८ ॥

हे सूर्य हे भास्कर हे दिनेश
हे देव हे काश्यप हे तमोघ्न ।
पापैः समेतं समवर्तिभीतं
मां रक्ष मां रक्ष कृपार्द्रदृष्टे ॥ ९९ ॥

भवत्कुमारं शमनं गुणाढ्यं
केनाप्युपायेन तु शान्तचित्तम् ।
मद्रक्षणायाशु कुरुष्व नो चेत्
सायुज्यमुक्तिं दिश मे दिनेश ॥ १०० ॥

संसारकूपे पतितं महाघैः
जुष्टं यमाद्भीतमपुण्यलेशम् ।
मां रक्षितुं त्वामपहाय कोऽन्यः
शक्तोऽस्ति भानो परिपालयाशु ॥ १०१ ॥

पुण्यात्मनां रक्षणतो न ते स्यात्
घनत्वमब्जप्रिय मादृशानाम् ।
पापात्मनां रक्षणतो यशस्ते
भवत्यपारं परमेश पाहि ॥ १०२ ॥

श्रुतिस्मृतिभ्यां निगमान्तहोरा-
गमैः पुराणैर्भवदीयतत्त्वम् ।
जानामि किञ्चिद्दिननाथ तस्मा-
त्संरक्षणीयोऽस्मि तवाहमद्य ॥ १०३ ॥

त्यागेन दोषो भवतीश्वराणां
भक्तस्य पुंसः शरणागतस्य ।
अज्ञातमर्थं तव नास्ति तस्मात्
रक्षस्व भानो शरणागतं माम् ॥ १०४ ॥

संज्ञान्विताय श्रितरक्षकाय
छायासमेताय परात्पराय ।
चक्रस्तुतायाम्बुजिनीप्रियाय
महात्मने मङ्गलमस्तु नित्यम् ॥ १०५ ॥

त्वत्सुन्दरीभ्यां भवदात्मजेभ्यः
त्वत्पुत्रिकाभ्यस्तव सेवकेभ्यः ।
तुभ्यं हरे सौम्यमते दयालो
जगद्गते मङ्गलमस्तु नित्यम् ॥ १०६ ॥

कोदण्डरामार्यकृतस्तुतिं ये
पठन्ति शृण्वन्ति च भक्तियुक्ताः ।
तेषां श्रियं पुत्रकलत्रसौख्यं
स्वर्गं च मोक्षं दिननाथ देहि ॥ १०७ ॥

॥ इति श्रीसूर्यशतकं सम्पूर्णम् ॥

———

## ४३. ॥ अथ श्रीवरदराजशतकम् ॥

काञ्च्यां काञ्चनरत्नशैलशिखरे शुण्डालशैलाग्रिमे
देशे लोकविधातृधातृविहिते देवोऽश्वमेधे हरिः ।
प्रादुर्भावमुपागतो वरद इत्याख्यां गतश्च क्रिया-
द्वाचं वारिधिभङ्गडम्बरमुषं मोचासमानां मम ॥ १ ॥

यस्याः सद्म सरोरुहं सह जनिश्चन्द्रेण यस्याः पयो-
रशौ यत्करुणावशाद्विधिरपि त्रैलोक्यराज्यं गतः ।
हृत्पद्मे महसा करोतु कमला वासं घनान्तर्गता
विद्युद्वेति मतिं नृणां विदधती वक्षःस्थलस्था विभोः ॥ २ ॥

वन्दे श्रियःपतिमुदारगुणैरुपेतं
वन्दारुलोकतरणाय वसुन्धरायाम् ।
वासीकृतेभगिरिमध्यतलं विशुद्ध-
वैधात्रवाजिमखवैभवभागधेयम् ॥ ३ ॥

ज्योत्स्नायमानमृदुहासमुखेन्दुबिम्बः
कस्तूरिकातिलककान्तललाटमध्यः ।
मुक्ताविभूषणविराजदुराः सदास्मान्
संवीक्षतां वरदनामहरिः कटाक्षैः ॥ ४ ॥

वाग्वीचिमाला मम कैटभारे
वर्ष्माम्बुधेस्ते तनुतां प्रकाशम् ।
गाम्भीर्यकान्त्यादिगुणैरुपेता
सद्वृत्तरत्नश्रियमाददाना ॥ ५ ॥

लक्ष्मीसहायललिताङ्घ्रिसरोजयुग्मे
वृत्तिं करोतु मम मानसमत्तभृङ्गः ।
नित्यं विशुद्धभुवनस्थितसेव्यगन्धे
सन्मार्दवे श्रुतिशिरःपरिचेयरूपे ॥ ६ ॥

दत्तां मे दनुजारिपादकमलं सर्वाः सदा सम्पदः
पुण्यं पुण्यजलां मरन्दलहरीसम्मानसम्पादिनीम् ।
गङ्गां शर्वशिरोविभूषणकरीमुत्पादयद्योगिभि-
र्ध्येयं ध्यानपरायणैः श्रुतिशिरःसंवेदनीयं सदा ॥ ७ ॥

पद्माकान्तपदारविन्दयुगलं संश्रित्य मन्मानसं
ब्रह्मेन्द्रादिसुरोत्तमाङ्गमकुटप्रोद्भासिरत्नश्रिया ।
चित्रं तत्र निरन्तरं निवसतिं कुर्यात्तथा ह्यम्बुजे
लब्धे लुब्धमधुव्रतः किमपरं पुष्पं श्रयेन्नीरसम् ॥ ८ ॥

नानार्थावगमाय कैटभरिपुर्मह्यं सुधीदीपिकां
कृत्स्नेनान्धतमिस्रनाशनचणां देयाद्[यावारिधिः] ।
सूर्यश्चेन्न ददाति पङ्कजचयोल्लासं श्रियं कोऽपरो
देयान्मीलनहेतुकिल्बिषचयप्रध्वंसिनीं प्राणभृत् ॥ ९ ॥

वा[कार्मुकं]वरद मन्मथमल्लिकादि-
पुष्पायुधोद्वहनकार्मुकवन्मदीयम् ।
त्वत्पादपद्मयुगलं मुनिवृन्दवन्द्यं
शुद्धैरलं परिकरोतु सुवृत्तरत्नैः ॥ १० ॥

पद्माकान्तपदारविन्दनखरैर्निर्धूतदोषोदयै-
रक्षीणद्युतिभिः कलङ्करहितैस्ताराधिपो निर्जितः ।
भीत्या तिग्मकरे कदाचिदुदधौ शैले च मह्यन्तरे
स भ्रान्तो विचरन् ह्रिया परिवृतः शङ्कामहे लीयते ॥ ११ ॥

एतत्किं कमलं न तज्जलभृतं किं वा प्रवालं न तत्
काठिन्यं वहते परं तु सततं शाखाग्रसंशोभितम् ।
मन्ये पल्लवमित्यलं मुनिगणाः पद्माप्रियाङ्घ्रिद्वयं
निर्ज्ञातुं न हि शक्नुवन्ति तरसा साक्षात्कृतं संभ्रमात् ॥ १२ ॥

पद्मानायकपादभावमुररीकृत्याम्बुजं चन्द्रमः-
पादौघेन पराहतं नखमिषान्मन्ये निरुन्धे विधुम् ।
चन्द्रत्वे तु खवर्जनान्नखपदं युक्तं नखानां तथा
पादाम्भोजयुगे पुनर्भवपदं युक्तं पुनस्सम्भवात् ॥ १३ ॥

शाखाग्रेषु कृतं स्थितिं सुमनसां वृन्देन नित्योच्छ्रितं
सद्रागं पदपल्लवं मधुरिपुस्वर्भूरुहस्यादरात् ।
चेतोभृङ्ग ममामृतात्मकफलं भक्ताय सात्कुर्वतो
नित्यं संश्रयतां भवान् कुतुकवान् प्राप्नोति तस्मात्सुखम् ॥ १४ ॥

निर्वाणं नितरां न किं वितनुते स्वीयेन गन्धेन ते
पद्माकान्तपदद्वयं न तनुते मोदं श्रितालेः किमु ।
नादत्ते किमु हंसकश्रियमहो केनारविन्दाभिधं
न स्यात्तद्विधिसंश्रितं भवति चेदेतच्च का वा भिदा ॥ १५ ॥

पद्माकान्तपदारविन्दनखरः किं वा न वीक्ष्यः पदे
वासं याति न किं कलापरिवृतश्चन्द्रः कुतो नो भवेत् ।
पद्मश्रीपरिभाविपादनिलयः चन्द्रो यदि श्रीपतेः
पादद्वन्द्वनखोऽपि भेदकमतः किं वानयोर्वर्तते ॥ १६ ॥

त्वत्पादाब्जनखैर्मधुप्रमथन श्रीसम्पदा निर्जितः
चन्द्रो जेतुमशक्नुवन् पुनरमूनेतच्चिताङ्घ्रिप्रभम् ।
पद्मं रश्मिवितानकेन तनुते तेजःप्रहीणं जनाः
कुर्वन्ति द्विषता हताः प्रतिकृतिं तत्सङ्गते दुर्बले ॥ १७ ॥

कुप्यत्कालियभोगिभोगफलके रत्नाभिरामे हरे-
र्नाट्यं भूषणनिस्वनैः सुरुचिरं यत्पादपद्मं दधौ ।
तन्मे मङ्गलमातनोतु सततं हृत्पद्मनिष्ठं सदा
यद्ध्यात्वा विबुधाः प्रयान्ति सकलश्रेयःपदं शाश्वतम् ॥ १८ ॥

यत्पादपद्मरजसा महिलात्वमाप
पाषाणतामुपगतापि मुनीन्द्रपत्नी ।
यत्सम्भवा स्रगिव मूर्ध्नि हरस्य रेजे
गङ्गा मदीयहृदये कुरुतां स्थितिं तत् ॥ १९ ॥

नागान्तकस्य करपल्लवघट्टनेन
सञ्जातरागमिव भासुरमन्तरङ्गे ।
वृत्तिं करोतु मम सन्ततमङ्घ्रिपद्मं
लोकैकरक्षणपरस्य रमाप्रियस्य ॥ २० ॥

पुरन्दरपराजयप्रभवसर्वसंपच्चयं
बलेरपि मनःक्लमं मघवतः श्रियश्चेशितुः ।
परत्वविचिकित्सया पशुपतिप्रभुत्वभ्रमं
पराकुरुत यत्क्रमे पदयुगं हरेस्तद्भजे ॥ २१ ॥

प्रचण्डकरमण्डलप्रसृतरत्नजालाचित-
स्फुरद्रुचिरनूपुरच्छविभिरम्बरं छादयत् ।
विजृम्भिततमोनुदद्विजबृन्दवन्द्यं सदा
विभातु हृदये पदद्वयमधीशितुः श्रीह्रियोः ॥ २२ ॥

कमण्डलुजलैर्विभोः कलुषदारिभिः क्षालितं
कुरङ्गमदकुङ्कुमप्रचुरचन्दनावासितैः ।
विचित्रवरभूषणैर्विविधकान्तिरत्नोज्ज्वलैः
विभूषितमुपास्महे विबुधवन्द्यविष्णोः पदम् ॥ २३ ॥

कपर्दिशिरसस्तटं कपिलहुंकृतिध्वंसितान्
शतक्रतुहतक्रतोरपि रिरक्षिषाप्रोत्सुकान् ।
हयस्य पदवीं गतान् हतमहत्तमान् सागरान्
पवित्रयति यज्जलं हृदि विभासतां तत्पदम् ॥ २४ ॥

भवत्पदभवन्नखैर्निभृतकान्तिपूरैर्हरे
समीभवितुमुद्यते शशिनि रोषितैस्ते नखैः ।
भवत्पदभवद्धुनीचलजले स्वयं बिम्बितैः
सृजद्भिरपरान् विधून् विधुरकारि पङ्काङ्कितः ॥ २५ ॥

श्रुतिप्रचयघोषिते गगनतो महत्त्वे हरे-
रसंभवमतर्कयन् जगति जन्तवः केचन ।
त्रिविक्रमपदाक्रमाद्गगनदभ्रभावे स्फुटे
जयध्वजपटीकृता हरिपदच्युता जाह्नवी ॥ २६ ॥

क्षितिं च बलिमस्तकं खमपि विक्षिपंस्त्रिक्रमैः
क्रमेण पदयोर्हरिर्जयति पूर्वमध्योत्तरैः ।
न देशसमयैः कृतोऽवधिरपि व्यवस्थां श्रुते-
रसम्भवविशङ्किनां जगति कर्मणा स्पष्टयन् ॥ २७ ॥

मणिप्रवरचित्रितैर्वरविभूषणैर्भूषितं
त्रिविक्रमपदद्वयं ध्वजरथाङ्गवज्राङ्कुशैः ।
सरोजमुखलाञ्छनैरपि परत्वविद्योतनै-
रलंकृतमुपेयुषो मम विराजतां मस्तके ॥ २८ ॥

श्रुतिप्रचयदूरगं श्रमविदारणं भूतले
प्रसार्य सरमः पुमांश्चरणमम्बरे चापरम् ।
प्रसन्ननखचन्द्रिकाततिभिरन्धकारं नुदन्
प्रपन्नजनताहृदां जयति वर्धयन् स्वं वपुः ॥ २९ ॥

त्रिविक्रमनखक्षपाकरकरालिविध्वंसिते
जगत्त्रितयसद्मनां मलिनचक्षुषां पातके ।
अनादिमिलदंहसां जगति मादृशां पातक-
प्रमार्जनपटीयते हरिपदच्युता जाह्नवी ॥ ३० ॥

त्रिविक्रमपदोन्नतेरपघनो नृणां मानसे-
ष्वतुल्यकलुषाद्रिषु प्रतिविजृम्भितेष्वम्बरे ।
हरेः कुलिशमादिशत् कलुषशैलभेदार्थमि-
त्यवैमि विचलज्जलां हरिपदच्युतां जाह्नवीम् ॥ ३१ ॥

त्रिविक्रमपराक्रमात् तिमिरबृन्दविध्वंसनात्
नखच्छविभिरद्रिराड् रजतरूपतामभ्यगात् ।
सुमेरुरपि हंसकच्छविभिराप सौवर्णतां
पयोधिरपि नीलतां पदयुगस्य भासाध्यगात् ॥ ३२ ॥

त्रिविक्रमपदेऽम्बरे विलसति स्वभासा सुरा
जगत्त्रयतमोऽपहे हरिमथार्थयन् सन्नताः ।
सदा तिमिरनुत्तये स च रमापतिर्हंसक-
प्रभाभिरकरोद्रविं नखररश्मिलेशैर्विधुम् ॥ ३३ ॥

वटच्छदपुटे शिशोः शयितुरङ्घ्रिपङ्केरुहं
मुखाब्जविनिवेशितं मधुरसौघनिष्यन्दनम् ।
युगान्ततरणिप्रभाप्रसरदग्धदेहात्मनां
रसेन सुखदं भजे शुभशरीरसंवर्तिनाम् ॥ ३४ ॥

भजज्जनमनःस्थितः सुहरितत्त्वसंस्फोरणा-
दजस्रपरिपीडितो हरिपदं हि रागः श्रयन् ।
विजृम्भणमुपेयिवान् विजयते विरोधं स्मरन्
वटच्छदपुटस्थितं सुहरितत्त्वमेव श्रिया ॥ ३५ ॥

हिरण्यकशिपुप्रभृत्यसुरमुख्यसंपीडिताः
विमोहपरिधूमितप्रचुरशोकवह्न्यर्दिताः ।
सुरा अपि यदाश्रयान्नखसुधांशुसन्धुक्षिताः
स्वधामनि सुनिर्वृता हरिपदं तदाशास्महे ॥ ३६ ॥

आक्रान्तं भुवनं मयेति विबुधा गन्धेन वै निर्वृताः
सेव्ये पुण्यकृतां शिरोभिरतुलं रूपं ममास्तीति च ।
मा कार्षीररविन्द गर्वमधिकं राजत्सतां मौलिभिः
पद्मानायकपादपद्ममनघं त्वत्तोऽधिकं वर्तते ॥ ३७ ॥

नित्यं विष्णुपदाश्रिताः कुवलयं संरोचयन्तः कला-
सन्दोहेन निरस्तपङ्कजगणाः सद्भिः सदा संश्रिताः ।
आह्लादं सततं नृणां विदधतः के वा न कुर्युस्तमो-
भेदं शीतलरश्मिवत् सुमनसः सत्त्वाभिवृद्धिप्रदाः ॥ ३८ ॥

चतुर्मुखपदोद्धतैश्चलितवज्रिहृत्पङ्कजैः
सुमालिमुखराक्षसैः सुमथितं सुराणां बलम् ।
चतुर्मुखशिवादिषु प्रबलभीतिषु प्रेक्षितुं
सुवर्णकरपङ्कजस्थितपदत्वरा रक्षति ॥ ३९ ॥

सुवर्णकमलाकरे सुबहुदिव्यरत्नाकरे
सुनीलघनडम्बरे हरिवपुःसुधाम्भोनिधौ ।
समुत्थितपदाम्बुजं सकललोकसंमोहनं
सदावतु धराश्रियोर्ललितहस्तसंवाहितम् ॥ ४० ॥

फणीन्द्रशयने फणामणिविचित्रकान्त्युज्ज्वले
कुशेशयमृदुत्वचि क्लमपरीमुषः संगमात् ।
पदाम्बुजयुगस्य ते कटकधारिहस्ताब्जया
सुलोहितमभूत् किला किमु मुकुन्द संवाहनात् ॥ ४१ ॥

सुवर्णकनकाद्रिराडुपरिनीलमेघायित-
स्तदीयकरपङ्कजद्वयविषक्तपादाम्बुजः ।
सरोवरजवोच्छलन्मकरदष्टदन्तावलं
ररक्ष यदुपक्रमान्नरकहावतात्तत्पदम् ॥ ४२ ॥

प्रपन्नजनगोप्तृताव्रतमथ प्रभोर्मू[ल]तां
प्रसिद्धकरुणं च तं द्विरदपुङ्गवं यत्त्वरा ।
जुगोप जगदन्तरा विततचन्द्रसच्चन्द्रिका-
विशुद्धयशसः श्रियं हरिपदं तदाभातु नः ॥ ४३ ॥

गुणाधिककृपासखी भगवतस्त्वरा रक्षितुं
समस्तजगदालयान् भगवदङ्घ्रिपङ्केरुहम् ।
प्रयापयति तत्कृपावशसमीरितान्मानसान्
पुरः स्वयमुपार्जितुं भुवनरक्षणोद्यद्यशः ॥ ४४ ॥

महायवनसेनया मरुदधीशसेनाद्रुहो
निरुद्धतलगोपुरे यदुकुलोद्वहानां पुरे ।
महाभयमपाकरोद्यवनमुख्यजातं त्वरा
मुकुन्दपदगोचरा सुमुचुकुन्दमुक्तिप्रदा ॥ ४५ ॥

स्फुरत्फणिवराकुलं प्रबलशक्रनक्राकुलं
सुरेन्द्रबलसागरं क्षुभितमुत्कटं कुर्वतः ।
हिरण्यकशिपोरुरःस्थलविदारणप्रोच्चल-
त्प्रभूतरुधिरोक्षिताः करनखा हरेर्भान्तु नः ॥ ४६ ॥
सन्मार्गस्खलनप्रधानकरणैः स्वीयैर्जलैः पङ्किलं
कुर्वन्तो भुवनं विचेरुरनिशं यत्रैव रक्षोघनाः ।
तत्रैवोदयमाससाद समये रामाङ्घ्रिपङ्केरुहं
चित्रं प्राप पुरः श्रियं च भुवनं निष्पङ्कमत्यातनोत् ॥ ४७ ॥
दम्भोलिः कलुषाद्रिषु श्रितवतां हृत्पङ्कजेष्वर्यमा
रक्षोबृन्दतमोविदारणविधौ साक्षाज्ज्वलन् पावकः ।
कौसल्यादिदृगुत्पलोत्सवविधौ चन्द्रश्चयः स्यात् स्वयं
रामस्याङ्घ्रिसरोरुहस्थनखरो मन्मानसे सर्वदा ॥ ४८ ॥
कौसल्योदरसर्वसम्भवरमानेत्रोत्पलश्रीकल-
श्रीमत्सुन्दररामचन्द्रचरणश्चञ्चूर्यतां मानसे ।
यन्नेत्रैस्तृषितैः पिबन्ति मुनयः सन्तप्तदेहाः पुरा
दुर्वारत्यनवादिदुःसहमहातापैश्चकोरा इव ॥ ४९ ॥
चित्रं रामकराभिमृष्टमनिशं भाति श्रिया स्वोदया-
दुष्णांशोः कुलमुत्पुनाति भुवने रामाङ्घ्रिपङ्केरुहम् ।
नित्यं पुण्यजनोत्तमाङ्गमहितं निष्पादयत्यद्भुतं
लोकं पुण्यजनप्रहीणममलैर्जन्मध्रुगप्यर्च्यते ॥ ५० ॥
रक्षोभिः खरदूषणप्रभृतिभिर्नेतुं जगद्दूषितं
रक्षंल्लक्ष्मणपूजिताङ्घ्रिकमलो यात्रां हि यत्राकरोत् ।
रामस्तत्र तदीयपादकमलस्पर्शात् सुरेन्द्रादिभिः
दुष्प्रापं पदमाप वृक्षलतिकागुल्मादि सर्वं जगत् ॥ ५१ ॥
तमःप्रकृतिषु स्फुरत्सुरवधूमुखाम्भोरुह-
स्थिताधरसुधाशिषु द्विजवराशिषु स्वर्द्रुहः ।
[यदा]ननविधुन्तुदेष्वसहनं गतश्चन्द्रमा
रघूद्वहपदोल्लसन्नखशरत्वमेत्याक्षिपत् ॥ ५२ ॥
पादः पुनातु रघुवंशसमुद्रजात
श्रीरामचन्द्र भवतो मम मस्तकाग्रम् ।
क्षिप्तानि येन भुवनस्थितपङ्कजानि
येनैव तत्कुवलयं भजति प्रकाशम् ॥ ५३ ॥

क्षिप्तो वेदपथः क्षमाक्षयबलैः क्षेमक्षया त्क्षोभिता
   क्षीणाः क्षोणिभृतः क्षरत्क्षतजयुक्क्षेत्राः क्षितोत्क्षेपिताः ।
इत्थं क्षोणितलं क्षपाचरगणैः क्षिप्तं क्षणात् प्रापितं
   क्षेमं लक्ष्मणपूज्यलक्षणभृता लक्ष्मीप्रियाङ्घ्रिश्रिया ॥ ५४ ॥

किरीटनिक्षिप्तमणिप्रकाश-
   नीराजितं पादसरोजयुग्मम् ।
रामस्य सेवे रघुपुङ्गवस्य
   ब्रह्मेन्द्ररुद्रादिसुरेश्वराणाम् ॥ ५५ ॥

पायात् पोषितराजहंसनिचये भूभृत्प्रभोर्मानसे
   नित्यं जातबलापवारणकरे सञ्जीवनत्यागिनि ।
स्वोत्पत्त्या विदधत्प्रसादमतुलं रामाङ्घ्रिपङ्केरुहं
   पङ्कच्छेदि शिरोभिरुत्तमजनैः संसेव्यमानं सदा ॥ ५६ ॥

   सरयूपवने वरयूपमये चरतः परितः समया रमया ।
   कलये वलयाभरणौ चरणौ सुनखावनघौ मनसा शिरसा ॥ ५७ ॥

हृदये सदये निदधे विदध-
   च्चरणे शरणे निरतं विरतम् ।
करुणावरुणावसथः सपथः
   प्रभुवं प्रभवो जगतः स्वगतम् (?) ॥ ५८ ॥

जम्भारिमर्दनविमर्दितदिव्यदेहा
   बर्हिर्मुखा युधि दिशो दश विद्रवन्तः ।
भानोः कुले भगवतः पदपद्मयुग्मं
   ध्यात्वाभवन् सुमनसः सुमहारिनाशात् ॥ ५९ ॥

मारीचादिसुरारिवृन्दनिधनव्याजेन भूमण्डलं
   सञ्चारेण पदारविन्दयुगलं यद्राघवस्यापुनात् ।
विश्वामित्रमुनीन्द्रयज्ञतपसां सिद्धिश्च यद्दर्शनात्
   तन्निःश्रेयसमातनोतु मुनिभिः संपूज्यमानं सदा ॥ ६० ॥

चरणौ शरणागतप्रियः
   करुणावारिधिरब्जलोचनः ।
वरुणालयपाणिमर्दिता-
   वरुणाम्भोजनिभौ ददातु मे ॥ ६१ ॥

जङ्घे जगत्त्रितयविक्रमजाङ्घिकत्वे
हेतू मधुप्रमथनस्य मनोज्ञरूपे ।
नीलाश्मनिर्मितमनोज्ञगदासरूपे
मालिन्यखण्डनपरे भवतां मनःस्थे ॥ ६२ ॥

लक्ष्मीनायकजानुनी भुजयुगायामावधी मामके
भासेतां हृदये कराम्बुजयुगस्पर्शेन रोमाञ्चिते ।
उत्सङ्गोपरि सुन्दरे विनिहिते संवाहनार्थं श्रिया
रत्नादर्शसमानरूपसहिते सत्कान्तिपूरावृते ॥ ६३ ॥

कुम्भीन्द्रहस्तकदलीकरभेन्द्रनील-
स्तम्भाभिभूतिचतुरौ गुणवैभवेन ।
ऊरू रमाप्रणयिनः कमनीयशोभौ
नित्यं मदीयहृदये कुरुतां निवासम् ॥ ६४ ॥

मेघः किमेष चपलानिचयेन युक्तः
सिन्धुः किमेष बडबामुखवह्नियुक्तः ।
इत्थं सदामरगणा हि विचिन्तयन्ति
पीताम्बरेण सहितं हरिमीक्षमाणाः ॥ ६५ ॥

लक्ष्मीकान्तकटीतटीनवमणिश्रेणीसमुल्लासित-
स्वच्छस्वर्णमयप्रभाकरकरश्रीचोरसन्मेखला ।
वर्णोत्कृष्टसुतप्तहाटकपटीसंछादिता मानसे
नित्यं भातु तदन्तरालनिवसद्ध्वान्तच्छटापाटिका ॥ ६६ ॥

यस्मात्तोयरुहाद्विधिस्त्रिजगतामीशः प्रभूतः पुरा
यस्मिन्नीलसरोजपत्रसदृशं व्योम द्विरेफाकृतिम् ।
गत्वाराजत तच्च यत्र सरसि प्रादुर्बभूवाम्बुजं
नाभौ तद्गुणसंहतेर्विवरणे देवो न शक्तो विधिः ॥ ६७ ॥

श्रीवत्सं दनुजार्दनस्य रुचिरे वक्षःस्थले संश्रितं
श्रीर्वत्सं किमु जानती करुणया तत्सन्निधौ वर्तते ।
यद्वा क्षीरपयोनिधावुदयनात् सौन्दर्यबुद्ध्या शुभं
हृद्यं कौस्तुभनामकं मणिवरं द्रष्टुं किमत्रागता ॥ ६८ ॥

लक्ष्मीकटाक्षा मधुमर्दनोरःस्थले विराजन्ति सदा भ्रमन्तः ।
षडङ्घ्रयः श्रीतुलसीसुगन्धमत्रागता लेढुमिव प्रवृद्धम् ॥ ६९ ॥

मधुद्विषदुरःस्थले मृदुलरत्नसिंहासने
मनोभवतनोरपि श्रियमुपेयुषि श्रेयसि ।
चराचरविचारणक्रममुपेयुषा श्रेयसा
कटाक्षविसरेण नोऽवति रमेक्षमाणा स्थिता ॥ ७० ॥

[सर्वाभीष्टफल]प्रदानचतुरे भूभर्तृभावोज्ज्वले
नित्यं भावविवर्धने घनरसाश्लेषे प्रिये मारुतैः ।
नित्यं वृद्धिमुपागते निवसतिं लब्धावताद्रूपिणी
विद्युद्विष्णुपदाश्रयाद्विलसती जन्म श्रितावारिधौ ॥ ७१ ॥

सर्वाभीष्टफलप्रदानचतुरे शाखाभिरुद्भासिते
स्निग्धश्रीकरपल्लवारुणशुभस्कन्धोज्ज्वले श्यामले ।
मध्यस्था हरिचन्दने विलसती श्रीकल्पवल्ली श्रिता-
नस्मॉल्लोचनषट्पदैः करुणया संवीक्षमाणा सदा ॥ ७२ ॥

कार्यद्रव्यनिदानकारणतया जोघुष्यमाणे गुणै-
राश्लिष्टे निजरूपसम्पदुचितात् सत्त्वान्महत्त्वात् सताम् ।
प्रत्यक्षे निरपायसङ्गमुचितं प्राप्ता परा जातिवत्
द्रव्येऽस्माकमुपेयुषां नयनभूर्भूयात् सदा सेन्दिरा ॥ ७३ ॥

विद्वद्भिः पुरुषार्थसाधनतया संप्रार्थ्यमाने गुणै-
रङ्गैः कर्मभिरुज्ज्वले घनरुचा रूपश्रिया राजिते ।
क[श]स्ते स्तोत्रमुखैः प्रकाशमतुलं संप्रापिते दक्षिणां
विष्णावध्वरदक्षिणेव कमला संराजतेऽस्माद्दशाम् ॥ ७४ ॥

धातुव्याप्तचिरन्तनप्रकृतिसंस्थानश्रिते साधुता-
शालिन्यन्तकृदादिशिक्षणयुते विद्वद्भिरत्यादृते ।
शाब्दब्रह्मणि दुर्विवेचनतया नित्यानुबन्धं गता
श्रीरास्तां करुणामयी प्रकृतिवज्जिह्वाग्रभागेषु नः ॥ ७५ ॥

पङ्कच्छेदिनि पालितत्रिभुवने पङ्केरुहश्रीकरे
पादस्पर्शपराकृताखिलतमस्तोमे परे ब्रह्मणि ।
पायादंशुमति प्रभेव परमव्योमाश्रये संस्थिता
पद्मापाङ्गनिरीक्षणैः प्रतिकलं पश्यन्त्यनन्याश्रितान् ॥ ७६ ॥

पद्माया मुखमम्बुजं सुविमले नेत्रे च नीलोत्पले
तस्याश्चित्तमशोकमब्जवसतेर्वेण्यां स्थिता मल्लिका ।
चूतं पाणितलं ततः स्मरशराः पञ्चापि तत्रासते
तैर्नित्यं परिमोहितः किमु हरिर्निद्राति गेहे चिरम् ॥ ७७ ॥

पद्मायाः मुखमम्बुजं सुविमले तत्रापि नीलोत्पले
नेत्रे तत्र कनीनिका मधुकराः सञ्चारकाः सर्वदा ।
नीलाम्भोदरुचिर्हरेः [कलियुगेष्वा]तन्वि तेनान्यथा
शुद्धस्फाटिककान्तियुक्ततनुता प्रौढिं गतस्य ध्रुवम् ॥ ७८ ॥

मुक्ताहारविराजिते मणिवरश्रीसम्पदोद्भासिते
लक्ष्मीलोचनषट्पदैरनुकलं पेपीयमाने मुदा ।
श्रीवत्साङ्कितवक्षसि श्रीतवतामानन्दसन्दोहने
श्रीशस्यानिशमन्तरङ्गमधिकं सक्तं भवेन्मामकम् ॥ ७९ ॥

लक्ष्मीपादसरोजयावकरसस्पर्शेन मुद्राङ्किते
गोपीतुङ्गपयोधरादरवतो गोपालकस्याद्भुते ।
मुक्ताहारमयी विराजति रमाकान्तस्य वक्षःस्थले
लक्ष्मीमन्दिररक्षिबाह्यपरिघा क्षीराम्बुधेः कुल्यका ॥ ८० ॥

सूर्याटोपद[लत्]सदाघनरुचिव्याप्तं स्फुरत्तारकं
कान्तं नित्यमनन्तमाश्रितवती विश्वप्रियाधायिनी ।
लक्ष्मीरिन्दुकलेव राजति तमस्तोमच्छिदां कुर्वती
ह्यस्मन्नेत्रचकोरपारणकरी सत्सञ्चयश्रीकरी ॥ ८१ ॥

राज्याभिषेकसमये रघुपुङ्गवस्य
शक्रेण सादरसमर्पितपद्ममाला ।
वक्षःस्थले वहति वारिदमध्यगामि-
विद्युत्प्रभां कनकरत्नमयी विचित्रा ॥ ८२ ॥

लक्ष्मीमन्दिरमिन्दिराप्रणयिनो वक्षःस्थलं राजतां
कस्तूरीघनसारकुङ्कुमरजःपङ्कैः सदा वासितम् ।
मुक्तादामभिरुज्ज्वलं मणिमयैः संभूषितं भूषणैः
अस्मन्मानसपङ्कजे हरिधनुश्चित्रं स्फुरत्कौस्तुभम् ॥ ८३ ॥

लक्ष्मीरिन्दुकलेव राजति शुभानन्तस्य वक्षःस्थले
नित्यं पङ्कजबाधिनी कुवलयानन्दप्रदा वारिधौ ।
जाता विष्णुपदाश्रिता हरशिरःसंसेविता शारदो-
ल्लासैः सर्वजगत्प्रमोदनकरी हृत्पुण्डरीकस्थिता ॥ ८४ ॥

लक्ष्मीस्तुङ्गपयोधरावृततले मुख्यामृतास्वादना-
यानर्घैर्मणिभिर्विराजिततले मीनादिभावोज्ज्वले ।
रामालब्धनिजान्तरे विलसती श्यामेन्द्रनीलांबुधौ
सङ्गं प्राप्तवती निरन्तरमियं मन्मानसावासिनी ॥ ८५ ॥

पा[पु]ण्या कराङ्घ्रिकमलेक्षणतारकादि-
नीलोत्पलभ्रमरशोभितगात्रवल्ली ।
लक्ष्मीर्विभाति तटिनीव महीभृतोऽन्त-
र्नगेन्द्रवासरसिकस्य रमाप्रियस्य ॥ ८६ ॥

लक्ष्मीतुङ्गपयोधरावृततले सत्यश्रियोद्भासिते
नानाधातुविमिश्रिते शुभगुहावासे हरिक्ष्माभृति ।
पद्मा निर्झरिणीव भाति मकरीचित्रा मनोहारिणी
सन्मीनाद्यवतारनित्यरसिका ह्यस्मादृशां पावनी ॥ ८७ ॥

रेखाभिस्तिसृभिस्त्रयीमवधृतश्चोल्लासयन् सीमभिः
वर्णोत्कर्षविराजितो रिपुगणान् संभीषयन् स्वोद्भवैः ।
गम्भीरध्वनिभिर्विराजति हरेः कण्ठः सदा कम्बुवत्
मुक्ताहारमयूखशुक्तिमयुतो मन्मानसाम्भोरुहे ॥ ८८ ॥

ग्रीष्मर्तुस्फुरदंशुमत्करसमश्रीमन्मणिश्रेणिका-
रोचीराजिविराजिताङ्गदलसद्बाहूदारलङ्कृतः ।
तद्भोगायितहेमरत्नकटकश्रीमत्कराम्भोरुहः
पायान्नः परमः पुमान् करुणया संवीक्षमाणः सदा ॥ ८९ ॥

चत्वारो भुजगा इवासुररिपोर्विष्णोरराजन् भुजाः
तद्भोगा इव सुन्दरा मुररिपोस्तेषामराजन् कराः ।
तद्भोगस्थितरत्नवत्कररुहा राजन्ति रत्नश्रिया
तद्भासेव करा विरेजुरनिशं रक्तोत्पलश्रीमुषः ॥ ९० ॥

भास्वत्कोटिनिरासकारिकिरणस्तोमेन सर्वं जगत्
कुर्वाणं[भय]हीनमुज्ज्वलशिखाजालैः सुरद्वेषिणाम् ।
भास्वद्रत्नकिरीटकुण्डललसच्छीर्षच्छिदाकारणं
चक्रज्योतिरुपास्महे मधुरिपोर्वामान्यहस्ताश्रयम् ॥ ९१ ॥

वैरिश्चप्रलयानलप्रतिभटं भास्वत्पराधप्रभं
कृत्याभेदविनाशि खण्डपरशोः काशीपुरप्लोषणम् ।
सर्विक्सङ्गसुदक्षिणप्रशमनं चैद्यादिनिर्वापणं
चक्रं ज्योतिरुपास्महे निरुपमं विष्णोः करश्रीकरम् ॥ ९२ ॥

सूर्येन्द्राग्नियमानिलादिभयदज्वालासहस्रावृतं
कृत्याप्रेषणदुर्नयेन क्षुपितं दुर्वाससः पार्थिवम् ।
कल्पान्तानलभीषणं मुनिवरप्राणापहारोत्सुकं
कान्तं स्तोत्रगणैर्महीभृदुदितैश्चक्रं महः पातु नः ॥ ९३ ॥

एतत्किं मह एव नाधिकरणं षट्कोणसंस्थाकृते-
र्यद्येतन्महसो निदानमपरं ज्वालाः कुतः सर्वगाः ।
धारास्ता इति चेन्न भेदधिषणाभावान्महश्चक्रयोः
भेदो वा किमभेद एव न वयं जानीमहे तत्त्वतः ॥ ९४ ॥

ज्वालाकेसरभासिमध्यनिवसत्षट्कोटिसिंहासन-
श्रीमत्कोशविराजितं हरिकरस्पर्शाद्विकासं गतम् ।
नित्यं मामकमानसे विलसताच्चक्राब्जमन्तस्तम-
स्तोमच्छेदिसहस्ररश्मिविलसद्भास्वत्परार्धप्रभम् ॥ ९५ ॥

रूपं यस्य शशिप्रभं श्रुतिमयो यस्मिन् रसः सर्वदा
यत्पानादवनीभृदुत्तमपदं दुष्प्रापमापद्ध्रुवः ।
शब्दो यस्य सुरारिमुख्यहृदये शोकप्रदः सर्वदा
सोऽस्तु श्रीधरवामहस्तनिलयः शङ्खः स्फुरन्मानसे ॥ ९६ ॥

यन्निर्ह्रादविदारिताः सुररिपुप्राकारदुर्गादयो
यन्निर्ह्रादविभीषिता दश दिशो विद्राविताः शत्रवः ।
यन्निध्यानविनिर्मलीकृतधियः सन्तः समुत्तारिताः
सोऽस्मन्मानसपङ्कजे विलसतु श्रीशङ्खराजः सदा ॥ ९७ ॥

कौमोदक्यनिशं विभातु हृदये वैकुण्ठपाणिग्रहा
रत्नोद्भासिसुवर्णविग्रहवती सन्मेरुसारास्पदम् ।
संपिष्ट[।सुरवृन्दमांसरुधिरश्लक्ष्णाङ्गरागान्विता]
नित्यं वीररसोत्सुकाश्रितजनश्रेयोऽभिवृद्धिप्रदा ॥ ९८ ॥

देवारातिकठोरकण्ठनिकषग्रावच्छिदोल्लेखनात्
तैक्ष्ण्यं प्राप्तमतीव केशवकटिश्रीकारणं नन्दकम् ।
नीलं वर्णमिवाश्रयादुपगतं वह्निं विहायस्थितं
धूमस्तोममिवाश्रयेऽहमनिशं पापाद्रिभेदक्षमम् ॥ ९९ ॥

ज्यानिस्वानविदीर्णवैरिहृदयप्राणोरगोत्सारण-
प्रादुर्भूतपराक्रमार्जितयशोव्याप्ताखिलाशान्तिमम् ।
भास्वद्रश्मिसमानबाणनिकरोच्छुष्मीकृतारिप्रभा-
नीरं कार्मुकमाश्रयेऽहमनिशं विष्णोः करश्रीकरम् ॥ १०० ॥

चक्रं दक्षिणपाणिपङ्कजदले सूर्यायमाणं वहन्
शङ्खं वामकराम्बुजे कृतरुचिं हंसायमानं वहन् ।
भृङ्गावल्युपमं कराम्बुजतले खड्गं परे संवहन्
विष्णू राजति वारिताखिलरिपुर्हस्तान्तरे सद्गदाम् ॥ १०१ ॥

सौरभ्यरक्तिममृदुत्वसमञ्चितस्य
विष्णो तवाधरदलस्य मनोज्ञरूपाः ।
एकद्वियोगसहिता मधुकैटभारे
बिम्बप्रवालविटपा न समा भवन्ति ॥ १०२ ॥

मुक्ता मुखाम्भोजनिवासमेत्य
दन्तच्छलात्ते दनुजेन्द्रशत्रो ।
मुक्ता बभूवुर्जलजन्मवत्त्वेऽ
प्यहो महीयान् गुणसन्निकर्षः ॥ १०३ ॥

मन्दस्मितं मधुरिपोर्मुखचन्द्रबिम्बे
ज्योत्स्नायते जितनिशाचरबालकस्य ।
कस्तूरिकातिलकमेति कलङ्कशोभां
लीलावशेन विधृतं रुचिरे ललाटे ॥ १०४ ॥

कन्दर्पः कमलापतेर्मुखरथं दन्ताधराम्भोजस-
न्मुक्ताविद्रुमभूषितं त्रिजगतां संमोहना यद्ध्रुवम् ।
नासाभ्रू युगवीक्षणादिशरधीष्वासेषुमुख्यायुधैः
सज्जंह्यातनुते ततो हि मुनयस्तद् ध्यानिनो मोहिताः ॥ १०५ ॥

आकर्णान्तविशाललोचनयुगं पद्मादरात् संश्रिता
भृङ्गाणामि मियमालिरित्यकुरुतां बुद्धिं जनानां भ्रुवौ ।
वेतण्डाचलवासिनो मधुरिपोर्यत्रासने तत्सदा
पश्येयं वरदप्रभोर्मुखमहं रत्नस्फुरत्कुण्डलम् ॥ १०६ ॥

सौन्दर्यामृतदीर्घिका मुररिपोः कर्णद्वयी कुण्डल-
प्रत्युप्तानघरत्नकान्तिनिचयप्रद्योतिगण्डस्थला ।
नेत्रद्वन्द्वविशालतावधिरघश्रेणीसमुत्सारिणी
शष्कुल्या सदृशी विभातु हृदये रेखाभिरुद्भासिता ॥ १०७ ॥

विष्णोर्दक्षिणलोचनं दिनकरो वामं तु ताराधिपो
लोकानन्दक इत्यलं मुनिगणा वक्तुं प्रवृत्ता मृषा ।
दृग्रूपेण तयोः स्थितौ मुररिपोर्नास्ति प्रसक्तिः परं
तत्तुल्यं प्रतिबिम्बितं नयनयोस्तच्छङ्खचक्रद्वयम् ॥ १०८ ॥

[कस्तूरी]तिलकाङ्कमन्दहसितज्योत्स्नाननेन्दुं हरे-
रस्मन्नेत्रचकोरयुग्ममनिशं पेयान्मुदा यस्तमः ।
कौटिल्यालयकुन्तलाकृतियुतं सद्रत्ननिर्यत्प्रभा-
जालोल्लासिकिरीटसूर्यसहितश्चक्रेऽन्तरापीडितम् ॥ १०९ ॥

पद्मानायकपादपद्मयुगलीमास्वाद्य तज्जङ्घयोः
स्थित्वोरुद्वयमाप्य तत्कटितटीमाश्रित्य तन्नाभिजम् ।
पद्मं प्राप्य रमापरिग्रहमुरः प्राप्यायुधालंकृतान्
हस्तानाप्य मुखाब्जतन्मकुटयोर्मन्मानसं स्याद् ध्रुवम् ॥ ११० ॥

श्रीमत्कौशिकवंशवारिनिलयादाचार्यरत्नाकरात्
कृष्णार्यः समभूत् कलापरिवृतः शीतांशुना निर्मितः ।
सूनुर्वेङ्कटकृष्णनामसहितस्तस्याकरोद्वैष्णवं
श्रीपादादिशिखावधिस्तवमिमं मुख्यं समृद्धार्थकम् ॥ १११ ॥

॥ इति श्रीवरदराजशतकं सम्पूर्णम् ॥

## ४४. ॥ अथ श्रीलिङ्गभङ्गमुक्तिशतकम् ॥

यः पूज्यः सकलामरैर्मुनिगणा ध्यायन्ति यं येन वै
श्रेयोमार्गनियोजिताः सुयतयः कुर्वन्ति यस्मै नमः ।
यस्मात् सर्वमभूत् प्रमातृपटलं यस्यांशकत्रैपदे
यस्मिन्नाशमुपैति मायिकपदं तं रामचन्द्रं भजे ॥ १ ॥

श्रीमत्त्रैपदरामचन्द्रपरमानन्दाम्बुधिं चिद्घनं
नत्वा श्रीगुरुवासुदेवयतिराट्पादाम्बुजे चासकृत् ।
मच्चित्तासुविरूपनाशविभवां मुक्तिं प्रवाञ्छन्हरे-
स्तुष्ट्यै लिङ्गविभङ्गमुक्तिशतकं कुर्वे हृदि स्याद्धरिः ॥ २ ॥

सत्कर्माणि विशुद्धये स्वमनसः कृत्वाथ शुद्धेऽन्तरे
छित्वा कर्मजबन्धनं दृढतरं वैराग्यतीक्ष्णासिना ।
सन्न्यस्य श्रवणादिना स्वमनसो नाशाद्यमापुर्हरिं
दद्यात् कारककर्मभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ ३ ॥

वाक्छ्रोत्रादिदशेन्द्रियासुमनसो वागादिरूपं भजं-
स्तत्तद्व्याप्तिशक्ततां प्रजनयन्निःसङ्गरूपेण यः ।
आस्तेऽद्यापि समस्तभूतहृदये वेद्यादवेद्यात् परो
दद्यात् सर्वविभासकत्वविभवां मुक्तिं स रामोऽद्य मे ॥ ४ ॥

देशाद्भूमिरुपैति भूमपदवीं भूमेर्जलं तज्जला-
द्वह्निर्वह्नितनोः सदागतिरसौ तस्माद्बृहद्व्योम खात् ।
बीजं बीजतनोर्निरङ्कुशविभुर्निर्बीजभूमैव यो
दद्यात् केवलभूमरूपविभवां मुक्तिं स रामोऽद्य मे ॥ ५ ॥

अर्थादर्थमुपैति सूक्ष्मपदवीमर्थात्मनो मानसात्
बुद्धिर्बुद्धितनोर्महत्तत इहाव्यक्तं ततः पूरुषः ।
सूक्ष्मात् सूक्ष्मतरः पुमान्परमको यस्मान्न सूक्ष्मान्तरं
दद्यात् पूरुषशिष्टतत्त्वविभवां मुक्तिं स रामोऽद्य मे ॥ ६ ॥

सूर्यो यत्र न भाति शीतकिरणो वह्निर्न भानां गणः
सत्त्वादित्रिगुणं दशेन्द्रियमनःप्राणाः सुराणां गणः ।
यं भान्तं ह्यनुभान्ति न स्वत इमे सूर्याग्निचन्द्रादयो
दद्यात् सूर्यशशाङ्कभासकपदां मुक्तिं स रामोऽद्य मे ॥ ७ ॥

पूरन्नादिसमस्तकोशकलितास्त्येकादशद्वारपै-
र्वागाद्यैश[्च सु]रक्षितातिभयतः स्वस्वामिभागेच्छया ।
तत्रासङ्गतया वसन्ननुदिनं यः प्रत्यगात्मा भवे-
द्दद्यात् केवलबोधरूपविभवां मुक्तिं स रामोऽद्य मे ॥ ८ ॥

यज्ज्ञानक्षुरधारया हृदयचिद्ग्रन्थिर्दृढा भिद्यते
यत्साक्षात्करणेन संशयगणः क्वेति न ज्ञायते ।
यज्ज्ञानाग्निरनन्तजन्मफलदं कर्मेन्धनं निर्दहे-
द्दद्यात् कर्तृचिदैक्यमोहविकलां मुक्तिं स रामोऽद्य मे ॥ ९ ॥

एकीकृत्य विराट्तनाविह पुनर्विश्वं स्वसूत्रेण तं
सूत्रे स्वप्न[श्च]पतिं च बीजतनुना प्राज्ञं पुनर्बीजकम् ।
निर्बीजात्मतया विचिन्त्य यतयो यं तुर्यरूपं विदु-
र्दद्यात्तुर्यशिवाद्वयात्मविभवां मुक्तिं स रामोऽद्य मे ॥ १० ॥

अन्नं प्राणतयावशिष्य मुनयः प्राणं मनोमात्रतो
विज्ञानात्मतयावशिष्य च मनो ज्ञानं च मोदात्मना ।
तं चाप्यात्मतयावशिष्य सहसा यं ब्रह्म पुच्छं विदु-
र्दद्यात् कोशविरूपनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ११ ॥

सत्यं वैकृतिशून्यमेकममलं ज्ञानं जगद्भासकं
कालाकाशविदेशतोऽप्यतिविभु ब्रह्म ह्यनन्तं विदुः ।
सत्यं ज्ञानमनन्तमस्म्ययमिति ध्यात्वा यमीशं विदुः
दद्यात् सत्यसुबोधसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ १२ ॥

सूर्यो भाति सदागतिश्च पवते वह्निर्ज्वलत्यञ्जसा
मृत्युर्वज्रधरोऽपि शीतकिरणो राज्ञो भिया भृत्यवत् ।
उद्यद्दण्डधरस्य यस्य भयतः सूर्यादयो वेपिता
दद्यात् सर्वनियामकाद्वयपदां मुक्तिं स रामोऽद्य मे ॥ १३ ॥

निःसामान्यविशेषबोधनयने स्वस्मिन्नखण्डाद्वये
दुःसामान्यविशेषदृष्टियुगलं दुर्बुद्धिभीकल्पितम् ।
प्रत्याख्याय विमूढकल्पितदृशं सन्न्यासिनो यं विदु-
र्दद्यादद्वयदृष्टिसाध्यविभवां मुक्तिं स रामोऽद्य मे ॥ १४ ॥

रूपं पश्यति येन वक्ति वचनं जिघ्रेत् सुगन्धादिकं
गृह्णात्याशु ददाति वस्तुनिचयं जानात्यशेषं सदा ।
यं प्रज्ञानमुदाहरन्ति मुनयो ब्रह्मादिकीटान्तगं
दद्याज्ज्ञानघनस्वरूपविभवां मुक्तिं स रामोऽद्य मे ॥ १५ ॥

विश्वं येन समुत्थितं चिरतरं यत्सत्तया भाति सत्
सम्यग्बोधदृशा विकारविलये यन्मात्रतः शिष्यते ।
तस्माद्वस्तुविकारजातमनघा ब्रह्मेति जानन्ति यं
दद्यात् सर्वविकारभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ १६ ॥

विश्वं ब्रह्मणि जातु जन्म न भजे संभूत्यभावश्रुते-
र्नोत्पादस्य विनाशनं न घटते नाशप्रहाणश्रुतेः ।
कार्याकार्यजनिप्रहाणरहितं यं निर्विकारं विदु-
र्दद्यात् कारणकार्यकर्त्रविकलां मुक्तिं स रामोऽद्य मे ॥ १७ ॥

प्रागाग्नेयविदिक्षु दिक्षु निखिलस्यान्तर्बहिः सर्वतः
तिष्ठन्नूर्ध्वं उदेति नैत्युदयतां नास्तंगतः कुत्रचित् ।
यः कोट्यर्कसमूहभासकरुचिश्चित्सूर्यरूपो हरि-
र्दद्यान्नित्यचिदर्करूपविभवां मुक्तिं स रामोऽद्य मे ॥ १८ ॥

सर्वज्ञादिगुणान्वितः परशिवः किञ्चिज्ज्ञ एवापरो
ज्ञाज्ञत्वे प्रविहाय जीवपरयोर्लक्ष्यैकतां वेदतः ।
ज्ञात्वा तत्त्वमसीति याति यतिराड्ब्रह्माहमस्मीति यं
दद्याज्जीवपरैक्यसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ १९ ॥

नान्यत् पश्यति यत्र जातु यतिराण्णान्यच्छृणोत्यञ्जसा
नो जानाति विशेषवस्तुपटलं भूमाद्वयत्वश्रुतेः ।
ज्ञात्वा नामहृदालयोपरिलसद्भूमात्मकं यं विदु-
र्दद्याद्भूमघनाद्वितीयविभवां मुक्तिं स रामोऽद्य मे ॥ २० ॥

दह्रे ब्रह्मपुराभिधानगगने लब्धासनो लोचनं
काणं प्राप्य च हृच्च जीवकलनां जाग्रन्मुखां भासयन् ।
मूर्धानं प्रतिपद्य यो विजयते तुर्यस्वरूपो हरि-
र्दद्यात्तुर्यपरात्मसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ २१ ॥

प्रत्यक्तत्त्वमहंपदेन गदितं ब्रह्मेति शब्दात् परं
भेदो मायिक एव जीवपरयोर्मायामृषात्वश्रुतेः ।
प्रत्यग्ब्रह्म भवाम्यहं परशिवोऽस्मीतीह यं प्राप्नुयु-
र्दद्यात् प्रत्यगभिन्नभूरिविभवां मुक्तिं स रामोऽद्य मे ॥ २२ ॥

मूर्तामूर्तविभातदृश्यपटले मायामनःकल्पिते
नेतीति श्रुतियुक्तितः प्रविलयं यातेऽथ यः शिष्यते ।
मूर्तामूर्तविभागमोहरहितः सत्यस्य सत्योऽद्वयो
दद्यान्निर्भयसत्यबोधविभवां मुक्तिं स रामोऽद्य मे ॥ २३ ॥

वैराग्यात् प्रतिपद्य बालपदवीं सर्वत्र निःसङ्गतो
मौनामौनविवेचनार्हधिषणापाण्डित्यपारंगताः ।
जीवन्मुक्तिमवाप्य तां पुनरमी विस्मृत्य यं प्राप्नुयु-
र्दद्यान्मौनविमुक्त[शुद्ध]पदवीं मुक्तिं स रामोऽद्य मे ॥ २४ ॥

क्षेत्रापत्यकलत्रवित्तविभवं त्यक्त्वा दवीयो भृशं
श्रोतव्यादिगुणान्वितोऽयमजडानन्दावबोधाम्बुधिः ।
ध्यातव्योऽनिशमप्रमादधिषणैर्यो निष्कलात्मा हरि-
र्दद्यान्निष्कलविष्णुरूपविभवां मुक्तिं स रामोऽद्य मे ॥ २५ ॥

यस्यानन्दलवैकदेशविभवा व्याविद्धपापालयाः
निष्कामाञ्चितबुद्धयः श्रुतिशिरोऽभिज्ञा महाश्रोत्रियाः ।
सम्म्राजो यतयो भवन्ति मुनयो ब्रह्मादयो नन्दिनो
दद्याद्भूरिसुखस्वरूपविभवां मुक्तिं स रामोऽद्य मे ॥ २६ ॥

ओतप्रोततया चरस्थिरजगद्बृन्देऽनिशं व्याप्य तत्
सत्तासूक्तिसुखैकरूपतनुता मिथ्याभिधां वारयन् ।
ज्ञानां ब्रह्मतया विभाति य इहाज्ञानां जगद्भावतो
दद्याद्विश्वविमोहभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ २७ ॥

यः साक्षादपरोक्षतः श्रुतिगि[शि]रोवाक्यार्थसंलग्नधी-
विद्वद्बृन्दहृदब्जसुन्दरगृहालंकारदीपायते ।
यश्चैत्यालिगचित्तवृत्तितमसो मध्याह्नसूर्यायते
दद्यात् केवलबोधदीपविभवां मुक्तिं स रामोऽद्य मे ॥ २८ ॥

सिद्धाभ्यासनयुङ्निरुद्धपवनात् प्राणद्वयाग्न्यैक्यत-
स्तप्त्वा कुण्डलिनीं तया विधिधिराग्रन्थित्रयं भेदयन् ।
षट्चक्राणि च चन्द्रसूर्यमिथुनाद्यं ब्रह्मरन्ध्रे विशे-
द्द्याद्योगजमुख्यसिद्धिविभवां मुक्तिं स रामोऽद्य मे ॥ २९ ॥

भ्रूमध्यादिषु दृष्टियुग्मविलयात् प्राणानिले निश्चले
संकल्पाद्यतिवृत्तिजुष्टमनसि स्थैर्यं गतेऽस्यासतः ।
संशान्तानिलचित्तदृष्टिविभवं पश्यन्ति यं तारका
दद्यात्तारकपूर्णसिद्धिविभवां मुक्तिं स रामोऽद्य मे ॥ ३० ॥

मेर्वभ्रादिवदप्रकम्प्यधिषणः सन्ताडितो दुर्जनै-
स्त्रासं नैति नमस्कृतोऽपि विबुधैर्हर्षं परालोकनात् ।
यस्मिन् भूम्नि निरस्तमोहपटले विद्वान् समाप्तो भवे-
द्द्याद्ब्रह्मविमग्नचित्तपदवीं मुक्तिं स रामोऽद्य मे ॥ ३१ ॥

देहादावभिमाल[न]तूलपटले बोधाग्निभस्मीकृते
चित्ते चैत्यगतिं विहाय चपलां चित्तत्त्वभावं गते ।
वक्तुं ध्यानमशक्यनिष्कलपदं यं योगिनः प्राप्नुयु-
र्दद्याद्वक्तुमशक्यसौख्यपदवीं मुक्तिं स रामोऽद्य मे ॥ ३२ ॥

सन्न्यस्य स्वगुरुं प्रणम्य विधिवत्तारं महावाक्यकं
लब्ध्वा शान्तिमुपेत्य दिक्षु सुलभां भिक्षामटन्तोऽमलाः ।
अन्तर्बाह्यविभागशून्यमतयः सन्न्यासिनो यं विदु-
र्दद्यान्मस्करिवर्यलब्धपदवीं मुक्तिं स रामोऽद्य मे ॥ ३३ ॥

जाग्रत्स्वप्नसुषुप्तिभेदकलनां त्यक्त्वा बुधैः सेवितां
तद्भावादि विभासयन्ननुदिनं प्रत्यक्स्वरूपेण यः ।
आस्ते तद्गतदोषसङ्गरहितस्तुर्योऽविकारास्पदो
दद्यात्तुर्यमहाप्रकाशविभवां मुक्तिं स रामोऽद्य मे ॥ ३४ ॥

श्रुत्याचार्यकटाक्षतः स्वहृदये बोधं तरां प्रापिते
प्रत्यग्वस्तुनि निश्चिते स्फुटमहं ब्रह्मास्मि सर्वातिगम् ।
ब्रह्मैवाहमिति स्थिरानुभवतो यद्रूपतां प्राप्नुयु-
र्दद्याच्छुद्धपरानुभूतिविभवां मुक्तिं स रामोऽद्य मे ॥ ३५ ॥

नानावासनया जडीकृतमतेः सत्त्वेन दुर्वासनां
दग्ध्वा सत्त्वसुवासनामपि पुनर्ब्रह्मप्रबोधाग्निना ।
संशान्ताखिलवासने स्वहृदये निर्वासनं यं विदु-
र्दद्याद्बोधमहाग्निदीप्तिविभवां मुक्तिं स रामोऽद्य मे ॥ ३६ ॥

मौनेनैव विजित्य वाग्भवरिपुं स्वल्पाशनात् कायजं
चित्तोत्थामितवृत्तिदुर्जयरिपुं ब्रह्मानुसन्धानतः ।
वैराग्येण विजित्य बोधदुरितं बोधेन यं प्राप्नुयु-
र्दद्याद्दुर्जयभङ्ग[रूप]विभवां मुक्तिं स रामोऽद्य मे ॥ ३७ ॥

देहादौ दृढभावनामहमिति त्यक्त्वा पराग्गामिनीं
प्रत्यग्भावनया प्रशान्तदुरितब्रह्मात्मगां भावनाम् ।
आलम्ब्याचलवीचिसौख्यजलधौ यस्मिन्निमग्ना बुधा
दद्यात् सौख्यपयोधिमुग्धविभवां मुक्तिं स रामोऽद्य मे ॥ ३८ ॥

सम्यक्ताडितकांस्यनादतुलिते तारे समुच्चारिते
वीणावेणुमृदङ्गमद्दलमहाभेरीध्वनिः श्रूयते ।
तन्मध्ये प्रणवध्वनौ स्वमनसो नाशाद्यमीशं विदु-
र्दद्यान्नादमनोविनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ३९ ॥

पूर्वं रूपमपास्य रूपमपरं चित्ते गते स्वेच्छया
तद्रूपद्वयमध्यमेऽस्य मनसो वृत्तेरभावात्तदा ।
सूक्ष्मात् सूक्ष्मधियो विदुर्यमजडानन्दं न तन्निष्कलं
दद्यान्मानसवृत्तिशून्यविभवां मुक्तिं स रामोऽद्य मे ॥ ४० ॥

रागद्वेषजपापपुण्यपटले निर्मूलभावं गते
स्वाज्ञाने प्रलयं गते दृढतरब्रह्मात्मबोधात्तराम् ।
सत्यज्ञानसुखस्वरूपविभवो यः शिष्यते श्रीहरि-
र्दद्याच्छ्रीहरिबोधसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ ४१ ॥

ज्ञानं प्राप्य गुरोर्मुखादनुदिनं संकल्पमुन्मीलयन्
लाभालाभविषादहर्षरहितप्रारब्धवेगात्तनुः ।
तिष्ठेद्गच्छतु वेति दिक्षु विचरन् यस्मिन् समाप्तौ भवे-
द्दद्याच्छाश्वतबोधलब्धविभवां मुक्तिं स रामोऽद्य मे ॥ ४२ ॥

धीसंकल्पितवस्त्वसन्मतियुतैरक्षैर्गृहीतं तु सत्
सत्त्वासत्त्वविभेदवेदनदृशं ज्ञात्वा बहिश्चान्तरे ।
तां दृष्टिं प्रविलाप्य भूम्नि मुनयो यं प्राप्नुयुः सद्घनं
दद्यात् सद्घनदृष्टियोगविभवां मुक्तिं स रामोऽद्य मे ॥ ४३ ॥

स्वाद्यस्वादकमध्यदर्शनवशात् स्वाद्यादिभावातिगं
बुद्ध्वैव स्वदनं विकाररहितं वाग्बुद्ध्यगम्यं शिवम् ।
स्वाद्यस्वादकभेददृष्टिविकला यं प्राप्नुयुश्चिद्घनं
दद्याच्चिद्घनशुद्धसत्त्वविभवां मुक्तिं स रामोऽद्य मे ॥ ४४ ॥

तालोरूर्ध्वबिले निवेश्य रसनां धीवायुनोर्ध्वं नयन्
भ्रूमध्ये च सहस्रपत्रकमले सूर्येन्दुसंयोगतः ।
पीत्वैवामृतमेत्य तृप्तिमवशाद्यस्मिन्नचित्तो भवे-
द्दद्याल्लम्बिकयात्तबोधविभवां मुक्तिं स रामोऽद्य मे ॥ ४५ ॥

वेदान्तश्रवणादिपक्वधिषणाः स्वान्तर्बहिर्भावनां
निश्शेषं प्रविहाय जन्ममृतिदां निस्नेहदीपार्चिवत् ।
चित्तारूपलयं प्रपद्य यतयो यस्मिन् समाप्तिं गता
दद्यात् केवलचित्तभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ ४६ ॥

विज्ञानात्मतया हृदब्जकुहरे तिष्ठन् सदा देहिनां
भूयस्त्वन्नचयादिसत्करणतो दुष्कृत्यतो नीचताम् ।
सर्वेशत्वमवाप्य मायिकपदे यो वर्ततेऽद्याप्यजो
दद्यादीश्वरसाम्यबोधविभवां मुक्तिं स रामोऽद्य मे ॥ ४७ ॥

स्थूलेशस्तमसान्वितः पृथुतनुः सूत्रे रजस्संयुतो
बीजेशस्तु विशुद्धसत्त्वगुणयुक् सर्वोपसंहारतः ।
पूर्वोक्तत्रिगुणान्वितोऽप्यरिपुमान् यो निर्गुणः स्याद्धरि-
र्दद्यान्निर्गुणतुर्यविष्णुविभवां मुक्तिं स रामोऽद्य मे ॥ ४८ ॥

निर्मायोऽपि विशुद्धसात्त्विकतनुं स्वीकृत्य लीलामयीं
सच्छिष्यान् प्रतिबोधयन् श्रुतिशिरोविज्ञानमव्याजतः ।
श्रीमद्देशिकरूपमेत्य विचरेद्यो निष्कलात्मा हरि-
र्दद्याद्देशिकलब्धबोधविभवां मुक्तिं स रामोऽद्य मे ॥ ४९ ॥

यद्वद्व्योमघटादिवस्तुपटले तत्तत्परिच्छेदतां
प्राप्तं भात्यविवेकिनां स्थिरचरे तद्वत् पुमानेकलः ।
जीवोऽयं जगदीश्वरो जगदिदं ब्रह्मेति यो ज्ञानिनां
दद्यात् सर्वविकल्पभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ ५० ॥

साङ्गोपाङ्गतया विभातनिगमा न्यायादिशास्त्राणि षड्
वेदार्थानुचराः पुराणनिचया येनार्थवन्तोऽभवन् ।
ते किं ब्रह्म निदर्शयेयुरिति सद्बोधाय्यमीशं विदु-
र्दद्याद्वाक्यपदार्थदूरविभवां मुक्तिं स रामोऽद्य मे ॥ ५१ ॥

जायासूनुधनेषणाविरहिता वेदान्तपारंगता
स्वान्तर्बाह्यजचित्तचैत्यकलनाशून्या महाश्रोत्रियाः ।
यद्विष्णोः परमं पदं प्रविततं पश्यन्त्यमी सूरयो
दद्याद्विष्णुपदाभिधानविभवां मुक्तिं स रामोऽद्य मे ॥ ५२ ॥

सर्वज्ञं परमेश्वरं प्रणवगं प्रत्यक्परात्माभिधं
भेदाभेदविभागशून्यविभवं ज्ञात्वा गुरोर्वेदतः ।
भेदाभेदगतिं विहाय यतयो यं प्राप्नुयुः श्रीहरिं
दद्यात् सर्वभिदाभिदादिरहितां मुक्तिं स रामोऽद्य मे ॥ ५३ ॥

आकाशादिकपञ्चभूतकलनासञ्जातनानाविधा-
नेकप्राणिहृदब्जमध्यविलसत्सर्वेन्द्रियोद्दीपकः ।
चित्सामान्यकलेबरोऽखिलगुरुर्नारायणो यो भवे-
द्द्यात् सर्वहृदब्जसूर्यविभवां मुक्तिं स रामोऽद्य मे ॥ ५४ ॥

चित्तास्वादिविरूपनाशसमये सम्यक्प्रबुद्धात्मनो
देशे व्योम्नि च कालकूटपटले दग्धे प्रबोधाग्निना ।
देशाद्यादिगमानशून्यविभवो यः शिष्यते श्रीहरि-
र्दद्यात् प्राणविरूपनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ५५ ॥

बीजं ब्रह्मणि कल्पितं भुजगवद्रज्जौ तदज्ञानतो
बीजाद्विश्वमनन्यबोधत इदं विश्वं भजेद्बीजताम् ।
बीजं प्रत्यगभिन्नतां यममलं निर्बीजसौख्यं विदु-
र्दद्यादावृतिबीजभर्जनभवां मुक्तिं स रामोऽद्य मे ॥ ५६ ॥

पूर्णब्रह्मविकल्पितत्वनिगमान्मायापदस्याधुना
मिथ्यात्वं स्फुटमेव रज्जुफणिवत् सत्यं तदाधारकम् ।
नष्टेऽबोधचये प्रबोधरविणा यत्पूर्णता शिष्यते
दद्यात् पूर्णचिदम्बुराशिविभवां मुक्तिं स रामोऽद्य मे ॥ ५७ ॥

नानारूपविशेषमोहरहितं निर्मायतत्त्वं ततं
सत्यं ज्ञानमपारसौख्यविभवं संशान्तनानाभिधम् ।
ब्रह्मास्मीति यदानुभूय समतां यं साम्यभावं विदु-
र्दद्यात् साम्यसुखानुभूतिविभवां मुक्तिं स रामोऽद्य मे ॥ ५८ ॥

सौराः श्रेष्ठमुदाहरन्ति तरणिं शाक्ता भवानीं भृशं
विष्णुं केचन वैष्णवा गणपतिं शैवाः शिवं भैरवम् ।
इत्थंभूतधियो यमद्वयतनुं जानन्ति नैवैकधा
दद्यात् सर्वमदान्धकारतरणिं मुक्तिं स रामोऽद्य मे ॥ ५९ ॥

पाणिं पाणितलेन पीड्य तरसा दन्तैः स्वदन्तान् रुषा
चूर्णीकृत्य निहत्य मानसरिपुं भ्रूमध्यलक्ष्यासिना ।
स्वाराज्यं प्रतिपद्य निर्भयतया यद्रूपमात्रो भवे-
द्दद्यात्तीव्रविरागबोधविभवां मुक्तिं स रामोऽद्य मे ॥ ६० ॥

हृन्मध्ये रविपत्रमस्ति कमलं तन्मध्यखेऽस्त्येकलो
धूमज्योतिसमानकान्तिकलितः पूर्जो [र्णो]बहिश्चान्तरा ।
चित्ते चैत्यततौ निरञ्जनतया यो भासयन् वर्तते
दद्यादेकलभूरिसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ ६१ ॥

आधारेऽस्त्यपुनर्भवाभिधसिरा तस्या मनोधारणात्
सा वक्त्रं विकसीकरोत्यथ सिरावक्त्रान्तरे मानसम् ।
दृक्प्राणाग्निभिरेत्य गच्छति लयं यस्मिन् हरौ योगिनो
दद्यान्मानसदृष्टिचित्तलयजां मुक्तिं स रामोऽद्य मे ॥ ६२ ॥

भित्त्वा कल्पसमाधिभाक् स्वमनसा भूमिं जलं चानलं
वायुं व्योम सुसूक्ष्मभूतपटलं चेतो महच्चाक्षरम् ।
अव्यक्तं च विभिद्य मृत्युमधुना यस्मिन् समाप्तो भवे-
द्द्यात् सर्वलयामृताद्वयपदां मुक्तिं स रामोऽद्य मे ॥ ६३ ॥

श्रोत्रादौ प्रविलाप्य चैत्यपटलं श्रोत्रादि दिक्पूर्वके
दिग्वातादि सिरासु ताश्च तं... ज्ञानमध्ये च तत् ? ।
मोदे तं च तुरीयके तदमृतं निर्बीजकं यं विदु-
र्दद्यादक्षविरूपनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ६४ ॥

ब्रह्मादिस्थिरजङ्गमान्तकलनातृष्णां मनोजृम्भिताम्
आत्मानात्मविवेकजातसहजज्ञानाग्निना निर्दहन् ।
यस्मिन् प्रत्यगभिन्नपूर्वविभवे योगी भजेदेकतां
दद्याज्ज्ञानकृशानुदग्धकलनां मुक्तिं स रामोऽद्य मे ॥ ६५ ॥

शब्दादौ विलयं गते दृढतरज्ञानादहोरात्रयुक्-
काले कालपदं गते स्वमनसि ध्यानात् स्थिरत्वं गते ।
उन्मन्या विलसत्परावरगुरुं नारायणं यं विदु-
र्दद्यादुन्मनिभातचिद्घनपदां मुक्तिं स रामोऽद्य मे ॥ ६६ ॥

ध्यानादित्रिपुटिप्रहाणत इदं निर्वातदीपार्चिवत्
संशान्ताखिलवीचिवार्धिजलवत् संकल्पशून्यं मनः ।
भूयात्तत्र विराजते परशिवानन्दात्मको यो हरि-
र्दद्याच्छैवपरात्मरूपविभवां मुक्तिं स रामोऽद्य मे ॥ ६७ ॥

दृग्युग्माखिलचित्तवृत्त्यचलगा सन्तृप्तिरल्पाशनं
देहस्याचलनं परानुभवतोऽवस्थात्रयातीतता ।
यस्मिन्नस्तमनो मुनेरनुभवस्त्वेवं भवेत् सर्वदा
दद्यात् सिद्धिविभातकीर्तिविभवां मुक्तिं स रामोऽद्य मे ॥ ६८ ॥

विस्मृत्याखिलबाह्यमान्तरमपि स्वोद्भूतविज्ञानतो
ब्रह्माब्धौ जलबिन्दुवत् प्रविलयं नीत्वा मनोवैभवम् ।
वेदव्यासतनूद्भवः शुकमुनिर्यस्मिन् समाप्तो भवे-
द्दद्याच्छ्रीशुकलब्धसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ ६९ ॥

आत्मानात्मविवेचने श्रुतिगुरोर्वाक्यात्कृते सादरं
सत्यं ब्रह्मभिदा मृषेति विदिते ग्राह्याद्यभावान्मुनेः ।
यस्मिन्नग्रहरूपभूम्न्यविलयं गत्वा समाप्तं मनो
दद्यादग्रहभूरिलब्धविभवां मुक्तिं स रामोऽद्य मे ॥ ७० ॥

जाग्रत्स्वप्नसुषुप्तिमोहतमसि स्वान्तं मुनेर्लीयते
तुर्याकल्पसमाधिनिष्ठमनसः सत्त्वाल्लयं नैति तत् ।
तुर्यातीतपदे विरूपविलयाद्यस्मिन् समाप्तं भवे-
द्द्यात्तुर्यविलक्षणाद्वयपदां मुक्तिं स रामोऽद्य मे ॥ ७१ ॥

चेतश्चैत्यविकारपूगरहिता चिद्ब्रह्मलीना यदा
किञ्चिन्नैत्यनुभूतिसिद्धविभवो मुक्तावगम्यस्तदा ।
सत्तासाम्यमुपेत्य यो विजयते नारायणः केवलो
दद्यात् केवलभूमतत्त्वविभवां मुक्तिं स रामोऽद्य मे ॥ ७२ ॥

संकल्पादिविमुक्तयोगिमनसि प्राणाग्निदग्धचेतसा
मग्नेऽत्यन्तमजातिगोत्रकलने स्वे धाम्नि बोधार्णवे ।
सत्यानन्दविशुद्धबोधविभवो यः शिष्यते श्रीहरि-
र्दद्याज्जातिकुलाभिमानविभवां मुक्तिं स रामोऽद्य मे ॥ ७३ ॥

कर्तव्यार्थनिबन्धनं स्वमनसः कर्माख्ययोगामृत-
श्रेयःसाधनसाध्यबन्धनमिह ज्ञानाख्ययोगो वरः ।
संशान्ताखिलयोगसाध्यविभवं यं ज्ञानिनः प्राप्नुयु-
र्दद्यात् साधनसाध्यभावरहितां मुक्तिं स रामोऽद्य मे ॥ ७४ ॥

देहास्वोः क्षणभङ्गुरत्वनिगमाद्दारादिबाह्येऽन्तरे
चित्ते चैत्यततावसङ्गमनसा संत्यज्य दुर्वासनाम् ।
ब्रह्मास्मीति सुवासनापरवशो यं प्रैति नारायणं
दद्यादैक्यसुवासनाफलभवां मुक्तिं स रामोऽद्य मे ॥ ७५ ॥

भावाभावगतिं विहाय सदसद्भावं च धीकल्पितं
सर्वाभासविवर्जितं स्थिरचराधारं परस्ताद्धि यः ।
आलम्ब्याचलनिर्विकल्पमनसा यस्मिन् समाप्तो भवे-
द्दद्याद् बुद्धिविकल्पशून्यविभवां मुक्तिं स रामोऽद्य मे ॥ ७६ ॥

संशान्ताखिलहेयरन्ध्रविषयध्वान्तं सकृद्भानतः
संकल्पोज्झितचित्तभावितपदं सूर्यादिसूर्यात्मकम् ।
ब्रह्माहं प्रकृतेः परोऽहमिति यं स्वात्मानमेवं विदु-
र्दद्यात् प्राकृतवैकृतप्रलयजां मुक्तिं स रामोऽद्य मे ॥ ७७ ॥

कर्मज्ञानदशेन्द्रियाल्यविदितः प्राणादिपञ्चानिल-
ध्वान्तस्फारसहस्रचण्डकिरणोऽहंङ्कारशत्रुंजयः ।
नानावृत्तिमनोधियः परतरानन्दात्मको यो हरि-
र्दद्याल्लिङ्गशरीरभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ ७८ ॥

सूक्ष्मात् सूक्ष्मतरोऽस्मि योगिविदितो ज्यायानहं ज्यायसां
संशान्ताखिलवेदनोऽस्मि जगतः सत्तास्वरूपोऽस्म्यहम् ।
एवं भावनया प्रशान्तदुरिता यं प्राप्नुयुः शाश्वतं
दद्याच्छाश्वतसौख्यसिद्धिविभवां मुक्तिं स रामोऽद्य मे ॥ ७९ ॥

मत्पुत्रो मम वित्तदारसुहृदो मत्क्षेत्रमित्यादिकं
द्वैतं देहदशेन्द्रियासुधिषणातादात्म्यमेवाद्वयम् ।
द्वैताद्वैतमनोगतेः प्रविलयाद्यः शिष्यते निर्भयो
दद्यान्निर्भयनिर्विकारपदवीं मुक्तिं स रामोऽद्य मे ॥ ८० ॥

त्यक्ताहङ्कृतिचित्तचैत्यकलनासंवित्स्वरूपोऽस्म्यहं
जीवेशादिभिदा विहीनपरमानन्दावबोधोऽस्म्यहम् ।
मत्तो नान्यदिहास्ति किंचिदिति यं नारायणं प्राप्नुयु-
र्दद्यादद्वयभावनात्तपदवीं मुक्तिं स रामोऽद्य मे ॥ ८१ ॥

सर्वासर्वमहाभ्रमप्रविलयात् सर्वादिशून्योऽस्म्यहं
साक्षित्वं न हि मेऽस्ति साक्ष्यविलयादद्वैतबोधोऽस्म्यहम् ।
स्वीये धामनि संस्थितोऽहमजरोऽस्म्येवं विदुर्यं हरिं
दद्यात् साक्ष्यविरूपनाशविभवां मुक्तिं स रामोऽद्य मे॥ ८२ ॥

नाहं देहमुखेन्द्रियालयमनो नाहं विकल्पान्वितो
नाहं मायिकविश्वभेदनिचयो नाहं तदाधारकः ।
ब्रह्मैवाहमितीह यं मुनिगणा ज्ञात्वा चिरात्प्राप्नुयु-
र्दद्यान्मायिकभावनालयभवां मुक्तिं स रामोऽद्य मे ॥ ८३ ॥

द्वैताद्वैतविभागभेदरहितो वाग्बुद्ध्यगम्योऽस्म्यहं
सत्यासत्यशुभाशुभालिरहितश्चिन्मात्ररूपोऽस्म्यहम् ।
सत्यापारसुखात्मकोऽस्म्यहमिति प्राप्ता यमीशं हरिं
दद्यान्मानसवागगम्यपदवीं मुक्तिं स रामोऽद्य मे ॥ ८४ ॥

मायाकल्पितभौतिकालिहृदयारूढामहंभावनां
पूर्णाहंकृतिरेकदा कबलयन् सर्वेश्वरः सर्वगः ।
आस्ते तद्गतभेदपूगरहितो यो नित्यशुद्धोऽद्वयो
दद्यादीश्वरपूर्णबोधविभवां मुक्तिं स रामोऽद्य मे ॥ ८५ ॥

अन्तर्बाह्यज चित्रचैत्यकलनासङ्गानुसन्धानतो
जीवन्मुक्तिमवाप्य वीतकलनान्नष्टेऽथ कर्मत्रये ।
देहाक्षासुविरूपनाशविभवो यः शिष्यतेऽस्मद्गुरु-
र्दद्यात् स्थूलकलेबरादिरहितां मुक्तिं स रामोऽद्य मे ॥ ८६ ॥

मायाकल्पितदेशकालकलनासंजातनानाविधा-
नेकोपाधिदृढानुभूतिममताहन्तातमोभास्करः ।
यो निष्काममुनीन्द्रहृन्मणिगृहालंकारपादाम्बुजो
दद्यात् कामगणक्षयात्तविभवां मुक्तिं स रामोऽद्य मे ॥ ८७ ॥

सर्वोपाधिविहीनपुष्करतनुः संशान्तरूपाभिधो
नानाकामनया विमुक्तमुनिहृत्पद्मावलीषट्पदः ।
यो वाङ्मानसवृत्त्यगोचरमहानन्दावबोधाम्बुधि-
र्दद्यात् सर्वहृदभ्रचिन्मणिभवां मुक्तिं स रामोऽद्य मे ॥ ८८ ॥

दासोऽहं तव मृत्युपाशकलितं मां रक्ष भक्तार्तिहन्
एवं प्रार्थ्य विशुद्धिमेत्य मनसोऽहं त्वं त्वमेवास्म्यहम् ।
भेदो नौ न हि मायिकोऽयमिति यं नारायणं प्राप्नुयु-
र्दद्याद्भागवतालिगम्यपदवीं मुक्तिं स रामोऽद्य मे ॥ ८९ ॥

मायाधीभवभेदकूल[बोध]पटले निर्मायबोधाग्निना
दग्धे काममकामखड्गदलिते कामे स्वभृत्यैः समम् ।
संशान्ताखिलभेदकामकलनं यं स्वात्मरूपं विदुः
दद्यात् कामभिदाविनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ९० ॥

मायापादजपुष्करादिकमहाभूतालियोगोद्भवा-
नेकब्रह्मकटाहकोटिपटलं त्रैगुण्यसंकल्पितः ।
निस्त्रैगुण्यमहात्रिपादविभवो यः कल्पितः केनचि-
द्दद्यान्मायिकपादमोहविकलां मुक्तिं स रामोऽद्य मे ॥ ९१ ॥

यास्याम्यद्य विदेहमुक्तिपदवीं मुञ्चेह मां चित्त भो
यद्वा चिद्गगने विरूपविलयं गच्छ त्वदीयैः समम् ।
एवं चित्तशिशुं प्रबोध्य यतिराड्यस्मिन् समाप्तो भवे-
द्दद्यात् केवलवीतचित्तपदवीं मुक्तिं स रामोऽद्य मे ॥ ९२ ॥

राग त्वं भज वीतरागपदवीं द्वेष त्वमद्वेषतां
भीते त्वं भज निर्भयत्वमधुना द्वैत त्वमद्वैतताम् ।
रागादिं विनियम्य निष्कलपदे यस्मिन् समाप्तो भवे-
द्दद्यान्निष्कलनिर्भयाद्वयपदां मुक्तिं स रामोऽद्य मे ॥ ९३ ॥

काम त्वं भज वीतकामपदवीं तृष्णे वितृष्णासुखं
भो भो मानस निर्विकल्पमधुनाहंकारशान्तिं तराम् ।
सान्त्वोक्त्यैव सुहृज्जनं परिहरन् यस्मिन् भजन्त्येकतां
दद्यात्काममुखारिभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ ९४ ॥

विश्वाकारमतिं विहाय सहजानन्दावबोधां मतिं
स्वीकृत्येव महानुभावचरणाः श्रीवीतहव्यादयः ।
सत्यज्ञानसुखार्णवेऽतिविपुले यस्मिन् भजन्त्येकतां
दद्यान्मौनिगणात्तसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ ९५ ॥

ब्रह्मास्मीत्यनुभूतियोगदहने निर्वृत्तितैलैधिते
हुत्वा मायिकचित्तचैत्यकलनां होमानलोत्थां सतीम् ।
मुक्त्याख्यां परिरभ्य मस्करिवरो यत्सौख्यतल्पं गतो
दद्याद्दृश्यविरूपनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ९६ ॥

संशान्ताखिलपञ्चभूतकलनासञ्जातनानाजनि-
श्चातुर्विध्यनिरोधशून्यविभवो जन्माद्यभावश्रुतेः ।
दीर्घह्रस्वबृहत्कृशादिरहितो यः सर्वदा भासते
दद्याज्जन्मनिरोधशून्यविभवां मुक्तिं स रामोऽद्य मे ॥ ९७ ॥

सत्यज्ञानसुखाज्ञतासमुदितासत्यादिमायात्रय-
प्रत्याख्यानमहावचोऽर्थविभवः प्राप्तः पुनः प्राप्यते ।
मुक्तो मुच्यत एव नेतर इति ज्ञानाद्यदैक्यं व्रजे-
द्द्याज्ज्ञानसुनिश्चितार्थविभवां मुक्तिं स रामोऽद्य ॥ ९८ ॥

स्वाज्ञाने सकलङ्कचित्तविभवे स्वज्ञानवैश्वानरा-
दग्धे सम्यगनावृतः परशिवः स्वाराज्यसिंहासने ।
एको यः परिशिष्यते परपुमान्नारायणोऽयं स्वयं
दद्याद्द्वैतविरूपनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ९९ ॥

भूमब्रह्मणि मूढबुद्ध्यनुभवारूढं समस्तं जग-
न्नेतीति श्रुतिसिद्धयुक्तिपटलैर्नास्तीति निश्चित्य तत् ।
त्यक्त्वा विश्वविनोदनं मुनिगणा यस्मिन् समाप्तिं गता
दद्याद्विश्वविनोदभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ १०० ॥

व्याविद्धाखिलवाक्यपादविभवो वाग्बुद्ध्यगम्योऽद्वयो
निःसाध्योऽयमसाधनो न हि भवो नान्तं गतः कुत्रचित् ।
लक्ष्यालक्ष्यविभागमोहरहितो यः शिष्यते श्रीहरि-
र्दद्याल्लक्ष्यविलक्षणाद्वयपदां मुक्तिं स रामोऽद्य मे ॥ १०१ ॥

आविद्यार्थपदे विरूपविलयं याते स्वकार्यैः समं
संशान्ताखिलनामरूपविभवः प्रत्यक्परात्मैक्यकः ।
चातुर्विध्यपदाभिधानरहितो यस्तैपदः शिष्यते
दद्यात् पादचतुष्टयैक्यविभवां मुक्तिं स रामोऽद्य मे ॥ १०२ ॥

श्रद्धाभक्तिपुरःसरं रहसि यो विष्णवालये वा पठे-
न्नानालिङ्गविभङ्गमुक्तिशतकं तात्पर्यतः सादरम् ।
तस्य त्रैपदरामचन्द्रतरणिः स्वाज्ञानमुन्मूलयन्
दास्यत्येव विदेहमुक्तिपदवीं शिष्टत्रिपाद्रूपिणीम् ॥ १०३ ॥

श्रीमत्पारमहंस्यधर्मनिरतश्रीवासुदेवेन्द्रचि-
त्पादांभोजनिवासिषट्पदनिभश्रीरामचन्द्रेन्द्रतः ।
वक्तुं ध्यातुमशक्यमायिकपदालंकारसंघाततो
लिङ्गाकारविभङ्गमुक्तिशतकं ज्ञातं कटाक्षाद्धरेः ॥ १०४ ॥

॥ इति श्रीलिङ्गभङ्गमुक्तिशतकं सम्पूर्णम् ॥

---

# ॥ श्रीसुब्रह्मण्यस्तोत्राणि ॥

## १. ॥ अथ श्रीसुब्रह्मण्यषट्कम् ॥

शरणागतमातुरमाधिजितं
करुणाकर कामद कामहतम् ।
शरकाननसम्भव चारुरुचे
परिपालय तारकमारक माम् ॥ १ ॥

हरसारसमुद्भव हैमवती-
करपल्लवलालित कम्रतनो ।
मुरवैरिविरिञ्चिमुदम्बुनिधे
परिपालय तारकमारक माम् ॥ २ ॥

शरदिन्दुसमानषडाननया
सरसीरुहचारुविलोचनया ।
निरुपाधिकया निजबालतया
परिपालय तारकमारक माम् ॥ ३ ॥

गिरिजासुत सायकभिन्नगिरे
सुरसिन्धुतनूज सुवर्णरुचे ।
शिखितोकशिखावलवाहन हे
परिपालय तारकमारक माम् ॥ ४ ॥

जय विप्रजनप्रिय वीर नमो
जय भक्तजनप्रिय भद्र नमो ।
जय शाख विशाख कुमार नमः
परिपालय तारकमारक माम् ॥ ५ ॥

परितो भव मे पुरतो भव मे
पथि मे भगवन् भव रक्ष गतिम् ।
वितराशु जयं विजयं परितः
परिपालय तारकमारक माम् ॥ ६ ॥

इति कुक्कुटकेतुमनुस्मरतां
पठतामपि षण्मुखषट्कमिदम् ।
भजतामपि नन्दनमिन्दुभृतो
न भयं क्वचिदस्ति शरीरभृताम् ॥ ७ ॥

गाङ्गेयं वह्निगर्भं शरवणजनितं ज्ञानशक्तिं कुमारं
ब्रह्मण्यं स्कन्ददेवं गुहमचलभिदं रुद्रतेजःस्वरूपम् ।
सेनान्यं तारकघ्नं गजमुखसहितं कार्तिकेयं षडास्यं
सुब्रह्मण्यं मयूरध्वजरथसहितं देवदेवं नमामि ॥ ८ ॥

॥ इति श्रीसुब्रह्मण्यषट्कं सम्पूर्णम् ॥

---

२. ॥ अथ श्रीसुब्रह्मण्यस्तोत्रम् ॥

षड्वक्त्रं शिखिवाहनं त्रिनयनं चित्राम्बरालङ्कृतं
शक्तिं वज्रकृपाणशूलमभयं खेटं धनुश्चक्रकम् ।
पाशं कुक्कुटमङ्कुशं च वरदं दोर्भिर्दधानं सदा
ध्यायेदीप्सितसिद्धिदं शिवसुतं स्कन्दं सुरेन्द्रं सदा ॥ १ ॥

सिन्दूरारुणकान्तिमिन्दुवदनं केयूर[हारा]दिभिः
र्दिव्यैराभरणैर्विभूषिततनुं स्वर्गस्थसौख्यप्रदम् ।
अम्भोजाभयशक्तिकुक्कुटधरं रक्ताङ्गरागोज्ज्वलं
सुब्रह्मण्यमुपास्महे प्रणमतामिष्टार्थसिद्धिप्रदम् ॥ २ ॥

षडाननं चन्दनलेपिताङ्गं
महाद्युतिं दिव्यमयूरवाह[न]म् ।
महेशसूनुं सुरलोकनाथं
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ ३ ॥

रुद्रप्रियं दिव्यमनोहराङ्गं
कुष्ठादिरोगान् स्मरणाद्धरन्तम् ।
उच्छिष्टलेपात्तनुशुद्धिदं त्वां
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ ४ ॥

इष्टार्थदं भक्तजनस्य कामं
मृष्टान्नदातारमुमेशसूनुम् ।
अघौघ(नाशं च) [विध्वंसि]निजोत्तमाङ्गं[ङ्घ्रिं]
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ ५ ॥

आर्यात्मजं देवगणाधिसेव्यं
स्तोत्रेण देहेन कुलं करोति (?)
त्वं देवदेवं त्वमुपाश्रयन्तं (?)
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ ६ ॥

[त्वां देवदेवं समुपाश्रितानां
स्तोत्रेण चैतेन कुलं करोषि ।
आर्यात्मजं देवगणाधिसेव्यं
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ ६ ॥]

द्विषड्भुजं षण्मुखमम्बिकासुतं
कुमारमादित्यसमानतेजसम् ।
वन्दे मयूरासनमग्निसन्निभं
सेनापतिं स्कन्दमभीष्टसिद्धये ॥ ७ ॥

॥ इति श्रीसुब्रह्मण्यस्तोत्रं सम्पूर्णम् ॥

---

३. ॥ अथ श्रीषडाननस्तुतिः ॥

श्रीगौरीसहितेशफालनयनादुद्भूतमग्न्याशुग-
व्यूढं विष्णुपदीपयश्शरवणे सम्भूतमन्यादृशम् ।
षोढाविग्रहसुन्दरास्यममलं श्रीकृत्तिकाप्रीतये
शर्वाण्यङ्कविभूषणं स्फुरतु मच्चित्ते गुहाख्यं महः ॥ १ ॥

त्रिषडकृशदृगब्जष्षण्मुखाम्भोरुहश्रीः
द्विषडतुलभुजाढ्यः कोटिकन्दर्पशोभः ।
शिखिवरमधिरूढः शिक्षयन् सर्वलोकान्
कलयतु मम भव्यं कार्तिकेयो महात्मा ॥ २ ॥

यद्रूपं निर्गुणं ते तदिह गुणमहायोगिभिर्ध्यानगम्यं
यच्चान्यद्विश्वरूपं तदनवधितया योगिभिश्चाप्यचिन्त्यम् ।
षड्वक्त्राष्टादशाक्षाद्युपहितकरुणामूर्तिरेषैव भाति
स्वाराध्याशेषदुःखप्रशमनबहुलीलास्पदा चाप्यतुल्या ॥ ३ ॥

यच्छ्रीमत्पादपङ्केरुहयुगलमहापादुके स्वस्वमूर्ध्ना
धर्तुं विष्णुप्रमुख्या अपि च सुमनसः प्रागकुर्वंस्तपांसि ।
तत्तादृक्स्थूलभूतं पदकमलयुगं योगिहृद्ध्यानगम्यं
श्रीसुब्रह्मण्य साक्षात् स्फुरतु मम हृदि त्वत्कटाक्षेण नित्यम् ॥ ४ ॥

यस्य श्रीशमुखामराश्च जगति क्रीडां [च] बाल्योद्भवां
चित्रारोपितमानुषा इव समालोक्याभवंस्तम्भिताः ।
लोकोपद्रवकृत्स नारदपशुर्यस्याभवद्वाहनं
सोऽस्मान् पातु निरन्तरं करुणया श्रीबालषाण्मातुरः ॥ ५ ॥

येन साक्षाच्चतुर्वक्त्रः प्रणवार्थविनिर्णये ।
कारागृहं प्रापितोऽभूत् सुब्रह्मण्यः स पातु माम् ॥ ६ ॥

कारुण्यद्रुतपञ्चकृत्यनिरतस्यानन्दमूर्तेर्मुखैः
श्रीशम्भोः सह पञ्चभिश्च गिरिजावक्त्रं मिलित्वामलम् ।
यस्य श्रीशिवशक्त्यभिन्नवपुषो वक्त्राब्जषट्काकृतिं
धत्ते सोऽसुरवंशभूधरपविः सेनापतिः पातु नः ॥ ७ ॥

यः शक्त्या तारकोरःस्थलमतिकठिनं क्रौञ्चगोत्रं च भित्त्वा
हत्वा तत्सैन्यशेषं निखिलमपि च तान् वीरबाहुप्रमुख्यान् ।
उद्धृत्वा युद्धरङ्गे सपदि च कुसुमैर्वर्षितो नाकिबृन्दैः
पायादायासतोऽस्मान् स झटिति करुणाराशिरीशानसूनुः ॥ ८ ॥

यद्दूतो वीरबाहुः सपदि जलनिधिं व्योममार्गेण तीर्त्वा
जित्वा लङ्कां समेत्य द्रुतमथ नगरीं वीरमाहेन्द्रनाम्नीम् ।
देवानाश्वास्य शूरप्रहितमपि बलं तत्सभां गोपुरादीन्
भित्त्वा यत्पादपद्मं पुनरपि च समेत्यानमत्तं भजेहम् ॥ ९ ॥

यो वैकुण्ठादिदेवैः स्तुतपदकमलो वीरभूतादिसैन्यैः
संवीत नस्तो[संवीतो यो नभस्तो] झटिति जलनिधिं द्योपथेनैव तीर्त्वा ।
शूरद्वीपोत्तरस्यां दिशि मणिविलसद्धेमकूटाख्यपुर्यां
त्वष्टुर्निर्माणजायां कृतवसतिरभूत् पातु नः षण्मुखः सः ॥ १० ॥

नानाभूतौघविध्वंसितनिजपृतनो निर्जितश्च द्विरावृ-
त्त्यालब्धरवावमाने निजपितरि ततः सङ्गरे भानुकोपः ।
मायी यत्पादभृत्यप्रवरतरमहावीरबाहुप्रणष्ट-
प्राणोऽभूत् सोऽस्तु[नित्यं]विमलतरमहाश्रेयसे तारकारिः ॥ ११ ॥

येन कृच्छ्रेण निहतः सिंहवक्त्रो महाबलः ।
द्विसहस्रभुजो भीमः ससैन्यस्तं गुहं भजे ॥ १२ ॥

भूरिभीषणमहायुधारवक्षोभिताब्धिगणयुद्धम[ण्डलः] ।
सिंहवक्त्रशिवपुत्रयो रणः सिंहवक्त्रशिवपुत्रयोरिव ॥ १३ ॥

शूरापत्यगणेषु यस्य गणपैर्नष्टेषु सिंहाननो
दैत्यः क्रूरबलोऽसुरेन्द्रसहजः सेनासहस्रैर्युतः ।
युद्धे च्छिन्नभुजोत्तमाङ्गनिकरो यद्बाहुवज्राहतो
मृत्युं प्राप स मृत्युजन्यभयतो मां पातु वल्लीश्वरः ॥ १४ ॥

अष्टोत्तरसहस्राण्डप्राप्तशूरबलं महत् ।
क्षणेन यः संहृतवान् स गुहः पातु मां सदा ॥ १५ ॥

अण्डभित्तिपरिकम्पिभीषणक्रूरसैन्यपरिवारपूर्णयोः ।
शूरपद्मगुहयोर्महारणः शूरपद्मगुहयोरिवोल्बणः ॥ १६ ॥

नानारूपधरश्च निस्तुलबलो नानाविधैरायुधै-
र्युद्धं दिक्षु विदिक्षु दर्शितमहाकायोऽण्डषण्डेष्वपि ।
यः शक्त्याशु विभिन्नतामुपगतः शूरोऽभवद्वाहनं
केतुश्चापि नमामि यस्य शिरसा तस्याङ्घ्रिपङ्केरुहे ॥ १७ ॥

केकिकुक्कुटरूपाभ्यां यस्य वाहनकेतुताम् ।
अद्यापि वहते शूरस्तं ध्यायाम्यन्वहं हृदि ॥ १८ ॥

देवैः सम्पूजितो यो बहुविधसुमनोवर्षिभिर्भूरिहर्षै-
र्वृत्रारिं स्वर्गलोके विपुलतरमहावैभवैरभ्यषिञ्चत् ।
तद्दत्तां तस्य कन्यां स्वयमपि कृपया देवयानामुदूह्य
श्रीमत्कैलासमाप द्रुतमथ लवलीं चोद्वहंस्तं भजेऽहम् ॥ १९ ॥

तत्रानन्तगुणाभिराममतुलं चाग्रे नमन्तं सुतं
यं दृष्ट्वा निखिलप्रपञ्चपितरावाघ्राय मूर्ध्न्यादरात् ।
स्वात्मानन्दसुखातिशायि परमानन्दं समाजग्मतुः
मच्चित्तभ्रमरो वसत्वनुदिनं तत्पादपद्मान्तरे ॥ २० ॥

दुष्पुत्रैर्जननी सती पतिमती कोपोद्धतैः स्वैरिणी
रण्डासीत्यतिनिन्दितापि न तथा भूयाद्यथा तत्त्वतः ।
दुष्पाषण्डिजनैर्दुराग्रहपरैस्स्कान्दं पुराणं महत्
मिथ्येत्युक्तमपि क्वचिच्च न तथा भूयात्तथा सत्यतः ॥ २१ ॥

किं तु तद्दूषणात्तेषामेव कुत्सितजन्मनाम् ।
ऐहिकामुष्मिकमहापुरुषार्थक्षयो भवेत् ॥ २२ ॥

यत्संहिताषट्कमध्ये द्वितीया सूतसंहिता ।
भाति वेदशिरोभूषा स्कान्दं तत्केन वर्ण्यते ॥ २३ ॥

यस्य शम्भौ परा भक्तिर्यस्मिन्नीशकृपामला ।
अपांसुला यस्य माता तस्य स्कान्दे भवेद्रतिः ॥ २४ ॥

षडाननस्तुतिमिमां यो जपेदनुवासरम् ।
धर्ममर्थं च कामं च मोक्षं चापि स विन्दति ॥ २५ ॥

॥ इति श्रीषडाननस्तुतिः सम्पूर्णा ॥

---

## ४. ॥ अथ श्रीसुब्रह्मण्यभुजङ्गस्तोत्रम् ॥

भजेऽहं कुमारं भवानीकुमारं
गलोल्लासिहारं नमद्दृग्विहारम् ।
रिपुस्तोमहारं नृसिंहावतारं
सदा निर्विकारं गुहं निर्विचारम् ॥ १ ॥

नमामीशपुत्रं जपाशोणगात्रं
सुरारातिशत्रुं रवीन्द्वग्निनेत्रम् ।
महाबर्हिपत्रं निवा[जा]स्याब्जमित्रं
प्रभास्वत्कलत्रं पुराणं पवित्रम् ॥ २ ॥

अनेकार्ककोटिप्रकाशं ज्वलन्तं
मनोहारिमाणिक्यभूषोज्ज्वलं तम् ।
श्रितानामभीष्टं दिशन्तं नितान्तं
भजे षण्मुखं तं शरच्चन्द्रकान्तम् ॥ ३ ॥

कृपावारिकल्लोलभास्वत्कटाक्षं
विराजन्मनोहारिशोणाम्बुजाक्षम् ।
प्रयोगप्रवाहप्रदानैकदक्षं
भजे कान्तिकान्तं परस्तोमर[रू]क्षम् ॥ ४ ॥

सुकस्तूरिकासिन्धु[बिन्दु]भास्वल्ललाटं
दयापूर्णचित्तं महादेवपुत्रम् ।
रवीन्दूल्लसद्रत्नराजत्किरीटं
भजे क्रीडिताकाशगङ्गामकूटम् ॥ ५ ॥

सुकुन्दप्रसूनावलीशोभितान्तं
शरत्पूर्णचन्द्रास्यषट्कान्तिकान्तम् ।
शिरीषप्रसूनाभिरामं भवन्तं
भजे देवसेनावलीवल्लभं तम् ॥ ६ ॥

सुलावण्यतः सूर्यकोटीरनीशं [निकाशं]
प्रभुं तारकारिं द्विषड्बाहुमीशम् ।
निजार्कप्रभादीप्यमानापदानं
भजे पार्वतीप्राणपुत्रं सुरेशम् ॥ ७ ॥

अजं सर्वलोकप्रियं लोकनाथं
गुहं शूरपद्मादिदम्भोलिदारम् ।
सुचारुं सुनासापुटं सच्चरित्रं
भजे कार्तिकेयं सदा बाहुलेयम् ॥ ८ ॥

शरारण्यसम्भूतमिन्द्रादिवन्द्यं
द्विषड्बाहुसंख्यायुधश्रेणिरम्यम् ।
मरुत्सारथिं कुक्कुटेशं सु[शाङ्क]केतुं
भजे योगिहृत्पद्ममध्याधिवासम् ॥ ९ ॥

विरिञ्चीन्द्रवल्ली[लक्ष्मी]शदेवेशमुख्य-
प्रशस्तामरस्तोमसंस्तूयमानम् ।
दिश त्वं दयालो श्रियं निश्चलां मे
विना त्वां गतिः का प्रभो मे प्रसीद ॥ १० ॥

पदाम्भोजसेवासमायातवृन्दा-
रकश्रेणिकोटीरभास्वत्पदाब्जम् ।
कलत्रोल्लसत्पार्श्वयुग्मं वरेण्यं
भजे देवमाद्यन्तहीनप्रभावम् ॥ ११ ॥

भवाम्भोधिमध्ये तरङ्गोपतन्तं
प्रभो मां दयापूर्णदृष्ट्या समीक्ष्य ।
भवद्भक्तिनावोद्धर त्वं दयालो
सुगत्यन्तरं नास्ति देव प्रसीद ॥ १२ ॥

गले रत्नभूषं तनौ मञ्जुवेषं
करे ज्ञानशक्तिं दरस्मेरमास्ये ।
कटिन्यस्तपाणिं शिखिस्थं कुमारं
भजेऽहं गुहादन्यदैवं न मन्ये ॥ ॥ १३ ॥

दयाहीनचित्तं परद्रोहवृत्तिं
सदा पापशीलं गुरौ भक्तिहीनम् ।
अनन्यावलम्बाद्भवन्नेत्रकारु-
ण्यसारेण मां भो पवित्रीकुरु त्वम् ॥ १४ ॥

महासेन गाङ्गेय वल्लीसहाय
प्रभो तारकारे षडास्यामरेश ।
सदा पायसान्नप्रदातर्गुहेति
स्मरिष्यामि भक्त्या सदाहं विभो त्वाम् ॥ १५ ॥

प्रतापस्य[पाढ्य]बाहो नमद्वीरबाहो
 प्रभो कार्तिकेयेष्टकामप्रदेति ।
यदा ये पठन्तो भवन्तं तदा त्वं
 प्रसन्नस्तु तेषां बहुश्रीं ददासि ॥ १६ ॥

अपारेऽतिदारिद्र्यवाराशिमध्ये
 भ्रमन्तं जनुर्मोहपूर्णे नितान्तम् ।
महासेन मामुद्धर त्वं दयालो
 कटाक्षावलोकेन किञ्चित्प्रसीद ॥ १७ ॥

स्थिरां देहि भक्तिं भवत्पादपद्मे
 श्रियं निश्चलां देहि मह्यं कुमार ।
गुहाचन्द्रतारं सवंशाभिवृद्धिं
 कुरु त्वं प्रभो मां मनःकल्पसाल ॥ १८ ॥

नमस्ते नमस्ते महाशक्तिपाणे
 नमस्ते नमस्ते लसद्वज्रपाणे ।
नमस्ते नमस्ते कटिन्यस्तपाणे
 नमस्ते नमस्ते वराभीष्टपाणे ॥ १९ ॥

नमस्ते नमस्ते महाशक्तिपाणे
 नमस्ते सुराणां महासौख्यदायिन् ।
नमस्ते सदा कुक्कुटेशध्वज त्वं
 समस्तापराधं विभो मे क्षमस्व ॥ २० ॥

कुमारात्परं कर्मयोगं न जाने
 कुमारात्परं कर्मशीलं न जाने ।
यथैको मुनीनां हृदब्जाधिवासः
 शिवाङ्कं समारुह्य सत्पीठकल्पम् ॥ २१ ॥

विरिञ्चाय मन्त्रोपदेशं चकार
 प्रमोदेन सोऽयं तनोतु श्रियं मे ।
यमाहुः परं वेद[देव]शूरेषु मुख्यं
 सदा यस्य शक्त्या जगद्भीतभीतम् ॥ २२ ॥

यमाराध्य देवाः स्थितिं स्वर्ग आपु-
 स्सदोंकाररूपं चिदानन्दमीडे ।
गुह[तव]स्तोत्रमेतत् कृतं तारकारे
 भुजङ्गप्रयातेन पद्येन कान्तम् ॥ २३ ॥

जना ये पठन्तीह भक्तिप्रयुक्ताः
प्रमोदेन सायं प्रभाते विशेषात् ।
स्वजन्मर्क्षयोगे यदा तेऽप्युदन्ता[ते वदन्तो]
मनोवाञ्छितं सर्वकामांल्लभन्ते ॥ २४ ॥

॥ इति श्रीसुब्रह्मण्यभुजङ्गस्तोत्रं सम्पूर्णम् ॥

---

## ५. ॥ अथ श्रीकुमारमङ्गलस्तोत्रम ॥

यज्ञोपवीतीकृतभोगिराजो
गणाधिराजो गजराजवक्त्रः ।
सुराधिराजार्चितपादपद्मः
सदा कुमाराय शुभं करोतु ॥ १ ॥

विधातृपद्माक्षमहोक्षवाहाः
सरस्वतीश्रीगिरिजासमेताः ।
आयुः श्रियं भूमिमनन्तरूपं
भद्रं कुमाराय शुभं दिशन्तु ॥ २ ॥

मासाश्च पक्षाश्च [दिनानि ताराः]
राशिश्च योगाः करणानि सम्यक् ।
ग्रहाश्च सर्वेऽदितिजास्समस्थाः
श्रियं कुमाराय शुभं दिशन्तु ॥ ३ ॥

ऋतुर्वसन्तः सुरभिः सुधा च
वायुस्तथा दक्षिणनामधेयः ।
पुष्पाणि शश्वत्सुरभीणि कामः
श्रियं कुमाराय शुभं करोतु ॥ ४ ॥

भानुस्त्रिलोकीतिलकोऽमलात्मा
कस्तूरिकालङ्कृतवामभागः ।
पम्पासरश्चैव स सागरश्च
श्रियं कुमाराय शुभं करोतु ॥ ५ ॥

भास्वत्सुधारोचिकिरीटभूषा
कीर्त्या समं शुभ्रसुगात्रशोभा ।
सरस्वती सर्वजनाभिवन्द्या
श्रियं कुमाराय शुभं करोतु ॥ ६ ॥

आनन्दयन्निन्दुकलावतंसो
मुखोत्पलं पर्वतराजपुत्र्याः ।
स्पृशन् सलीलं कुचकुम्भयुग्मं
श्रियं कुमाराय शुभं करोतु ॥ ७ ॥

वृषस्थितः शूलधरः पिनाकी
गिरीन्द्रजालङ्कृतवामभागः ।
समस्तकल्याणकरः श्रितानां
श्रियं कुमाराय शुभं करोतु ॥ ८ ॥

लोकानशेषानवगाहमाना
प्राज्यैः पयोभिः परिवर्धमाना ।
भागीरथी भासुरवीचिमाला
श्रियं कुमाराय शुभं करोतु ॥ ९ ॥

श्रद्धां च मेधां च यशश्च विद्यां
प्रज्ञां च बुद्धिं बलसम्पदौ च ।
आयुष्यमारोग्यमतीव तेजः
सदा कुमाराय शुभं करोतु ॥ १० ॥

॥ इति श्रीकुमारमङ्गलस्तोत्रं सम्पूर्णम् ॥

---

## ६. ॥ अथ श्रीदण्डायुधपाण्यष्टकम् ॥

यः पूर्वं शिवशक्तिनामकगिरिद्वन्द्वे हिडिम्बासुरे-
णानीते [1]फलिनीस्थलान्तरगते कौमारवेषोज्ज्वलः ।
आविर्भूय घटोद्भवाय मुनये भूयो वरान् प्रादिशत्
श्रीदण्डायुधपाणिरात्तकरुणः पायादपायात्स माम् ॥ १ ॥

---

1. अत्रत्यफलिनीशब्दस्य द्राविडभाषया "பழனி" इत्यर्थोऽवगन्तव्यः । तत्र दण्डायुधपाण्यधिष्ठितस्य गिरेः शिवगिरिरिति नाम व्यवहारप्रसिद्धिः तत्प्राची-दिग्भागस्थितस्य तु शक्तिगिरिरिति नाम व्यवहारप्रसिद्धिश्च सत्पुरुषसाङ्केतिकवचनैरवगम्यते । स्पष्टमन्यत् सर्वमपि ॥

श्रीमत्पुष्यरथोत्सवेऽन्नमधुदुग्धाद्यैः पदार्थोत्तमैः
नानादेशसमागतैरगणितैर्यः [1]कावडीसंभृतैः ।
भक्तौघैरभिषेचितो बहुवरांस्तेभ्यो ददात्यादरात्
श्रीदण्डायुधपाणिरात्तकरुणः पायादपायात्स माम् ॥ २ ॥

नानादिग्भ्य उपागता निजमहावेशान्विताः सुन्दरीः
तासामेत्य निशासु यः सुमशरानन्दानुभूतिच्छलात् ।
गोपीनां यदुनाथवन्निजपरानन्दं तनोति स्फुटं
श्रीदण्डायुधपाणिरात्तकरुणः पायादपायात्स माम् ॥ ३ ॥

दुष्टानामिह भूतभाविभवतां दुर्मार्गसञ्चारिणां
कष्टाहङ्कृतिजन्यकिल्बिषवशाच्छिष्टप्रविध्वंसिनाम् ।
शिक्षार्थं निजपाणिनोद्वहति यो दण्डाभिधानायुधं
श्रीदण्डायुधपाणिरात्तकरुणः पायादपायात्स माम् ॥ ४ ॥

पूर्वं तारकसंज्ञकं दितिसुतं यः शूरपद्मासुरं
सिंहास्यं च निहत्य वासवमुखान् देवान् जुगोपाखिलान् ।
श्रीवल्ल्या सहितश्च निस्तुलयशाः श्रीदेवसेन्या युतः
श्रीदण्डायुधपाणिरात्तकरुणः पायादपायात्स माम् ॥ ५ ॥

यस्याङ्गस्थितरोमकूपनिकरे ब्रह्माण्डकोटिच्छटाः
सौधाग्रस्थगवाक्षरन्ध्रविचरत्पील्पमा एव ताः ।
लक्ष्यन्ते यमिदृग्भिरात्मनि तथाभूतस्वविश्वाकृतिः
श्रीदण्डायुधपाणिरात्तकरुणः पायादपायात्स माम् ॥ ६ ॥

---

1. [साङ्केति]कैः कावडीशब्दार्थादिकमुच्यते—

अंसाधिरोप्यो यो दण्डः[कुम्भयोरुभ]योरपि ।
सभारदण्डं वहति कावडीत्युच्यते हि सः ॥ १ ॥

सर्वलोकप्रसिद्धा[सा कावडी द्विवि]धा मता ।
तयोरिहैका गाङ्गी स्यादन्या स्कान्दी प्रकीर्तिता ॥ २ ॥

[केवलं]कुंभयुगलमंसदण्डस्य बिभ्रतः ।
देवतानामसान्निध्यात् कावडीत्वं न सिध्यति ॥ ३ ॥

कामादिदोषहन्तृत्वाद्वस्तुतत्त्वप्रकाशनात् ।
डीयमानगतेर्हेतोः कावडीत्य[भिधीय]ते ॥ ४ ॥

गन्धपुष्पाक्षतैर्धूपदीपाद्यैरुपचारकैः ।
कावड्यौ ते[जनैः स]म्यक् पूजनीये विशेषतः ॥ ५ ॥

गाङ्गी सा कावडी रामनाथलिङ्गाभिषेचिनी ।
स्कान्दी तु [कावडी] दण्डायुधपाण्यभिषेचिनी ॥ ६ ॥

सद्योजातमुखैश्च पञ्चवदनैः शम्भोः सहैकं मुखं
पार्वत्या मिलितं विभाति सततं यद्वक्त्रषट्कात्मना ।
तत्तादृक्छिवशक्त्य[भेदवि]षयव्यक्त्युज्ज्वलाङ्गं वहन्
श्रीदण्डायुधपाणिरात्तकरुणः पायादपायात्स माम् ॥ ७ ॥

सत्यं ज्ञानमनन्तमद्वयमिति श्रुत्यन्तवाक्योदितं
यद् ब्रह्मास्ति तदेव यस्य[च विभोर्मू]र्तेः स्वरूपं विदुः ।
योगीन्द्रा विमलाशया हृदि निजानन्दानुभूत्युन्नताः
श्रीदण्डायुधपाणिरात्तकरुणः पायादपायात्स माम् ॥ ८ ॥

इदं श्रीफलिनीदण्डायुधपाण्यष्टकस्तवम् ।
पठतामाशु सिध्यन्ति निखिलाश्च मनोरथाः ॥ ९ ॥

॥ इति श्रीदण्डायुधपाण्यष्टकं सम्पूर्णम् ॥

---

ढिल्लीमक्कापुनाचीना कोच्च्युडुप्यादिशब्दवत् ।
लोकेऽस्मिन् कावडीशब्दोऽप्यनिन्द्यो लोकरूढितः ॥ ७ ॥

सर्वभाषासु यः शब्दः [प्रसिद्धिमवलं]बते ।
व्यवहारप्रसिद्धत्वात् संस्कृतप्राय एव सः ॥ ८ ॥

[इदंतु]कावडीशब्दतात्पर्यार्थनिरूपकम् ।
अष्टकं विदुषामस्तु [सन्तु]ष्ट्यै रसिकात्मनाम् ॥ ९ ॥

## ॥ अथ श्रीदेवीस्तोत्राणि ॥

### १. ॥ अथ अखिलाण्डेश्वरीस्तोत्रम् ॥

ओङ्कारार्णवमध्यगे त्रिपथगे ओङ्कारबीजात्मिके
ओङ्कारेण सुखप्रदे शुभकरे ओङ्कारबिन्दुप्रिये ।
ओङ्कारे जगदम्बिके शशिकले ओङ्कारपीठस्थिते
दासोऽहं तव पादपद्मयुगलं वन्देऽखिलाण्डेश्वरि ॥ १ ॥

ह्रीङ्कारार्णववर्णमध्यनिलये ह्रीङ्कारवर्णात्मिके
ह्रीङ्काराब्धिसुचारुचान्द्रकधरे ह्रीङ्कारनादप्रिये ।
ह्रीङ्कारे त्रिपुरेश्वरी सुचरिते ह्रीङ्कारपीठस्थिते
दासोऽहं तव पादपद्मयुगलं वन्देऽखिलाण्डेश्वरि ॥ २ ॥

श्रीचक्राङ्कितभूषणोज्ज्वलमुखे श्रीराजराजेश्वरि
श्रीकण्ठार्धशरीरभागनिलये श्रीजम्बुनाथप्रिये ।
श्रीकान्तस्य सहोदरे सुमनसे श्रीबिन्दुपीठप्रिये
दासोऽहं तव पादपद्मयुगलं वन्देऽखिलाण्डेश्वरि ॥ ३ ॥

कस्तूरीतिलकोज्ज्वले कलिहरे क्लीङ्कारबीजात्मिके
कल्याणी जगदीश्वरी भगवती कादम्बवासप्रिये ।
कामाक्षी सकलेश्वरी शुभकरे क्लीङ्कारपीठस्थिते
दासोऽहं तव पादपद्मयुगलं वन्देऽखिलाण्डेश्वरि ॥ ४ ॥

नादे नारदतुम्बुरादिविनुते नारायणी मङ्गले
नानालङ्कृतहारनूपुरधरे नासामणीभासुरे ।
नानाभक्तसुपूज्यपादकमले नागारिमध्यस्थले
दासोऽहं तव पादपद्मयुगलं वन्देऽखिलाण्डेश्वरि ॥ ५ ॥

श्यामाङ्गी शरदिन्दुकोटिवदने सिद्धान्तमार्गप्रिये
शान्ते शारदविग्रहे शुभकरे शास्त्रादिषड्दर्शने ।
शर्वाणी परमात्मिके परशिवे प्रत्यक्षसिद्धिप्रदे
दासोऽहं तव पादपद्मयुगलं वन्देऽखिलाण्डेश्वरि ॥ ६ ॥

माङ्गल्ये मधुरप्रिये मधुमती माङ्गल्यसूत्रोज्ज्वले
माहात्म्यश्रवणे सुते सुतमयी माहेश्वरी चिन्मयि ।
मान्धा(ता)[तृ]प्रमुखादिपूजितपदे मन्त्रा(र्थे)[र्थ]सिद्धिप्रदे
दासोऽहं तव पादपद्मयुगलं वन्देऽखिलाण्डेश्वरि ॥ ७ ॥

तत्त्वे तत्त्वमयी परात्परमयि ज्योतिर्मयी चिन्मयि
नादे नादमयी सदाशिवमयी तत्त्वार्थसारामयि[त्मिके]।
शब्दब्रह्ममयी चराचरमयी वेदान्तरूपात्मिके
दासोऽहं तव पादपद्मयुगलं वन्देऽखिलाण्डेश्वरि ॥ ८ ॥

कदम्बवृक्षमूले त्वं वासिनि शुभधारिणि ।
धराधरसुते देवि मङ्गलं कुरु शङ्करि ॥ ९ ॥

ध्यात्वा त्वां देवि दशकं ये पठन्ति भृगोर्दिने ।
तेषां च धनमायुष्यमारोग्यं पुत्रसंपदः ॥ १० ॥

॥ इति श्री अखिलाण्डेश्वरीस्तोत्रं सम्पूर्णम् ॥

---

## २. ॥ अथ श्रीमातृस्तवः ॥

चाञ्चल्यारुणलोचनाञ्चितकृपाचन्द्रार्कचूडामणि
चारुस्मेरमुखीं चराचरजगत्संरक्षणीं तत्पदाम् ।
चञ्चच्चम्पकनासिकाग्रविलसन्मुक्तामणीरञ्जितां
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ १ ॥

कस्तूरीतिलकाञ्चितेन्दुविलसत्प्रोद्भासिफालस्थलीं
कर्पूरद्रवमिश्रचूर्णखदिरां मेदोलसद्द्वीपिकाम् ।
लोलापाङ्गतरङ्गितैरधिकृपासारैर्नतानन्दिनीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ २ ॥

राजन्मत्तमरालमन्दगमनां राजीवपत्रेक्षणां
राजीवप्रभवादिदेवमकुटीराजत्पदाम्भोरुहाम् ।
राजीवायतमन्दमण्डितरुचां राजाधिराजेश्वरीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ३ ॥

षट्ताराङ्गणदीपिकां शिवसतीं षड्वैरिवर्गापहां
षट्चक्रान्तरसंस्थितां वरसुधां षड्योगिनीवेष्टिताम् ।
षट्चक्राञ्चितपादुकाञ्चितपदां षड्भावगां षोडशीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ४ ॥

श्रीनाथात् कृतपालितत्रिभुवनां श्रीचक्रसंचारिणीं
ज्ञानासक्तमनोजयौवनलसद्गन्धर्वकन्याकृता[ति]म् ।
दीनानामतिवेगभाग्यजननीं दिव्याम्बरालङ्कृतां
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ५ ॥

लावण्याधिकभूषिताङ्गलतिकां लाक्षारसद्राविणीं
सेवायातसमस्तदेववनितां सीमन्तभूषान्विताम् ।
भावोल्लासवशीकृतप्रियतमां भण्डासुरच्छेदिनीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ६ ॥
धन्य(स्सो)[स्तो]मविभावनीयचरितां धाराधरश्यामलां
मुन्याराधनमेधिनीं शमवतां मुक्तिप्रदानव्रताम् ।
कन्यापूजनसुप्रसन्नहृदयां काञ्चीलसन्मध्यमां
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ७ ॥
कर्पूरागरुकुङ्कुमाङ्कितकुचां कर्पूरवर्णस्थिता-
मष्टोत्कृष्टसुकृष्टकर्मदहनां कामेश्वरीं कामिनीम् ।
कामाक्षीं करुणारसार्द्रहृदयां कल्पान्तरस्थायिनीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ८ ॥
गायत्रीं गरुडध्वजां गगनगां गान्धर्वगानप्रियां
गम्भीरां गजगामिनीं गिरिसुतां गन्धाक्षतालङ्कृताम् ।
गङ्गागौतमगर्गसन्नुतपदां गां गौतमीं गोमतीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ९ ॥
॥ इति श्रीमातृस्तवः सम्पूर्णः ॥

---

## २. ॥ अथ श्रीमीनाक्षीस्तोत्रम् ॥

गौरीं काञ्चनपद्मिनीतटगृहां श्रीसुन्दरेशप्रियां
नीपारण्यसुवर्णकन्दुकपरिक्रीडाविलोलामिमाम् ।
श्रीमत्पाण्ड्यकुलाचलाग्रविलसद्रत्नप्रदीपायितां
मीनाक्षीं मधुरेश्वरीं शुकधरां श्रीपाण्ड्यबालां भजे ॥ १ ॥
गौरीं वेदकदम्बकाननशुकीं शास्त्राटवीकेकिनीं
वेदान्ताखिलधर्महेमनलिनीहंसीं शिवां शाम्भवीम् ।
ओङ्काराम्बुजनीलमत्तमधुपां मन्त्राम्रशाखाम्बिकां
मीनाक्षीं मधुरेश्वरीं शुकधरां श्रीपाण्ड्यबालां भजे ॥ २ ॥
गौरीं नूपुरशोभिताङ्घ्रिकमलां तूणोल्लसज्जङ्घिकां
रत्नादर्शसमानजानुयुगलां रम्भानिभोरुद्वयाम् ।
काञ्चीबद्धमनोज्ञपीनजघनामवर्तनाभीह्रदां
मीनाक्षीं मधुरेश्वरीं शुकधरां श्रीपाण्ड्यबालां भजे ॥ ३ ॥
गौरीं व्योमसमानमध्यमयुतामुत्तुङ्गवक्षोरुहां
वीणामञ्जुलशारिकान्वितकरां शङ्खाभकण्ठोज्ज्वलम् ।
राकाचन्द्रसमानचारुवदनां रोलम्बनीलालकां
मीनाक्षीं मधुरेश्वरीं शुकधरां श्रीपाण्ड्यबालां भजे ॥ ४ ॥

गौरीं मञ्जुलमीननेत्रयुगलां कोदण्डसुभ्रूलतां
बिम्बोष्ठीं स्मितकुन्ददन्तरुचिरां चाम्पेयनासोज्ज्वलाम् ।
अर्धेन्दुप्रतिबिम्बफालरुचिरामादर्शगण्डस्थलां
मीनाक्षीं मधुरेश्वरीं शुकधरां श्रीपाण्ड्यबालां भजे ॥ ५ ॥

गौरीं कुङ्कुमपङ्कलेपितलसद्वक्षोजकुम्भोज्ज्वलां
कस्तूरीतिलकालकां मलयजां गन्धोल्लसत्कन्धराम् ।
लाक्षाकर्दमशोभिपादयुगलां सिन्दूरसीमन्तिनीं
मीनाक्षीं मधुरेश्वरीं शुकधरां श्रीपाण्ड्यबालां भजे ॥ ६ ॥

गौरीं चम्पकमल्लिकासुकुसुमैः पुन्नागसौगन्धिका-
द्रोणेन्दीवरकुन्दजातिवकुलैराबद्धचूलीयुताम् ।
मन्दारारुणपद्मकेतकदलश्रेणीलसद्वेणिकां
मीनाक्षीं मधुरेश्वरीं शुकधरां श्रीपाण्ड्यबालां भजे ॥ ७ ॥

॥ इति श्रीमीनाक्षीस्तोत्रं सम्पूर्णम् ॥

---

## ४. ॥ अथ श्री आर्याष्टकम् ॥

करस्थकदलीचूतपनसेष्टकमोदकम् ।
बालसूर्यप्रतीकाशं वन्दे बालगणाधिपम् ॥ १ ॥

आर्यां कात्यायनीं देवीमभीष्टफलदायिनीम् ।
देहि विद्यां महादेवि नमामि त्वां महेश्वरीम् ॥ २ ॥

महादेवप्रियां कालीं महायोगेश्वरेश्वरीम् ।
महालक्ष्मीं शिवां गौरीं देहि विद्यां महेश्वरि ॥ ३ ॥

उमां हैमवतीं शुभ्रां कोमलाङ्गीं शुभप्रियाम् ।
नमामि शुभ्रवक्त्रां त्वां देहि विद्यां शिवप्रिये ॥ ४ ॥

पद्महस्तां सहस्राक्षीं सहस्रानललोचनाम् ।
नौमि दुर्गां भगवतीं देहि विद्यां सुरेश्वरि ॥ ५ ॥

पद्ममन्दिरमध्यस्थां योगिबृन्दैर्निषेविताम् ।
नौमि विश्वमयीं वाणीं देहि विद्यां सुलोचने ॥ ६ ॥

लक्ष्मीं क्षमां शिवां धात्रीं कल्याणगुणवर्धनीम् ।
वन्दे त्वां प्रणतार्तिघ्नीं देहि विद्यां सुरेश्वरि ॥ ७ ॥

विधिरूपां हंसवाहां ब्रह्मध्यानपरायणाम् ।
वरदाभयकरां विद्यां देहि [त्वं] परमेश्वरि ॥ ८ ॥

चारुप्रसन्नमदनां चन्द्रशेखरवल्लभाम् ।
विद्यां देहि महामाये वन्दे त्वां वृषवाहिनीम् ॥ ९ ॥

आर्याष्टकमिदं पुण्यं यः पठेत् सततं नरः ।
महादेवीप्रसादेन षण्मासात् स कविर्भवेत् ॥ १० ॥

॥ इति श्री आर्याष्टकं सम्पूर्णम् ॥

---

## ५. ॥ अथ श्रीत्रिपुरसुन्दरीस्तोत्रम् ॥

श्वेतपद्मासनारूढां शुद्धस्फटिकसन्निभाम् ।
वन्दे वाग्देवतां ध्यात्वा देवीं त्रिपुरसुन्दरीम् ॥ १ ॥

शैलाधिराजतनयां शङ्करप्रियवल्लभाम् ।
तरुणेन्दुनिभां वन्दे देवीं त्रिपुरसुन्दरीम् ॥ २ ॥

सर्वभूतमनोरम्यां सर्वभूतेषु संस्थिताम् ।
सर्वसंपत्करीं वन्दे देवीं त्रिपुरसुन्दरीम् ॥ ३ ॥

पद्मालयां पद्महस्तां पद्मसम्भवसेविताम् ।
पद्मरागनिभां वन्दे देवीं त्रिपुरसुन्दरीम् ॥ ४ ॥

पञ्चबाणधनुर्बाणपाशाङ्कुशधरां शुभाम् ।
पञ्चब्रह्ममयीं वन्दे देवीं त्रिपुरसुन्दरीम् ॥ ५ ॥

षट्पुण्डरीकनिलयां षडाननसुतामिमाम् ।
षट्कोणान्तःस्थितां वन्दे देवीं त्रिपुरसुन्दरीम् ॥ ६ ॥

हरार्धभागनिलयामम्बामद्रिसुतां मृडाम् ।
हरिप्रियानुजां वन्दे देवीं त्रिपुरसुन्दरीम् ॥ ७ ॥

अष्टैश्वर्यप्रदामम्बामष्टदिक्पालसेविताम् ।
अष्टमूर्तिमयीं वन्दे देवीं त्रिपुरसुन्दरीम् ॥ ८ ॥

नवमाणिक्यमकुटां नवनाथसुपूजिताम् ।
नवयौवनशोभाढ्यां वन्दे त्रिपुरसुन्दरीम् ॥ ९ ॥

काञ्चीवासमनोरम्यां काञ्चीदामविभूषिताम् ।
काञ्चीपुरीश्वरीं वन्दे देवीं त्रिपुरसुन्दरीम् ॥ १० ॥

॥ इति श्रीत्रिपुरसुन्दरीस्तोत्रं सम्पूर्णम् ॥

---

## ६. ॥ अथ श्रीमीनाक्षीद्वादशस्तोत्रम् ॥

या देवी जगतां कर्त्री शङ्करस्यापि शङ्करी ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ १ ॥

सकृदाराध्य यां सर्वमभीष्टं लभते नरः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ २ ॥

यस्याः प्रसादलेशेन भोगमोक्षौ न दुर्लभौ ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ ३ ॥

यया शिवोऽपि युक्तः सन् पञ्चकृत्यं करोति हि ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ ४ ॥

यस्याः प्रीत्यर्थमनिशं लास्यं कुर्वन् शिवो बभौ ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ ५ ॥

लक्ष्मीसरस्वतीमुख्या यस्यास्तेजःकणोद्भवाः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ ६ ॥

या देवी मुक्तिकामानां ब्रह्मविद्याप्रदायिनी ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ ७ ॥

यस्याः प्रणाममात्रेण वर्धन्ते सर्वसम्पदः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ ८ ॥

या स्तुता सर्वपापघ्नी सर्वोपद्रवनाशिनी ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ ९ ॥

या ध्याता परमा शक्तिः सर्वसिद्धिकरी शिवा ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ १० ॥

यया देव्यापि विरहितः शिवोऽपि हि निरर्थकः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ ११ ॥

चराचरं जगत् सर्वं यस्याः पादसमुद्भवम् ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ १२ ॥

॥ इति श्रीमीनाक्षीद्वादशस्तोत्रं सम्पूर्णम् ॥

---

## ७. ॥ अथ श्री अम्बिकास्तवः ॥

श्रीगिरीशप्रियां चिन्तितार्थप्रदां
रत्नताटङ्किनीं राजबिम्बाननाम् ।
सैरिभेन्द्रादिमत्तेभपञ्चानना-
मापदुत्तारिणीमम्बिकामाश्रये ॥ १ ॥

वारुणीसेवितां कीरवाणीस्तुतां
शत्रुसंहारिणीं श्रेयसः कारिणीम् ।
वारुणीपारणां चारुसञ्चारिणी-
मापदुत्तारिणीमम्बिकामाश्रये ॥ २ ॥

सत्रयीकोणमध्यस्थबिन्दूपरि-
प्रस्फुरद्रत्नसिंहासनाधिष्ठिताम् ।
सर्वसौभाग्यसन्धायिनीं मायिनी-
मापदुत्तारिणीमम्बिकामाश्रये ॥ ३ ॥

मातृकाभिः परीवारितां किञ्चिदु-
न्मीलतां धीवरप्रेक्षणानन्दिनीम् ।
मत्तमातङ्गकुम्भोरुवक्षोरुहा-
मापदुत्तारिणीमम्बिकामाश्रये ॥ ४ ॥

यक्षगन्धर्वसिद्धाङ्गनामौलिग-
भस्थसूनातिसंवासिताङ्घ्रिद्वयम् ।
मातृकारूपिणीं मातृयन्त्रात्मिका-
मापदुत्तारिणीमम्बिकामाश्रये ॥ ५ ॥

वीरमाहेश्वरीं चारुधर्मक्रियां
पारगात्रान्तरागारसंवासिनीम् ।
किङ्कराशेषसंपत्करीं शाङ्करी-
मापदुत्तारिणीमम्बिकामाश्रये ॥ ६ ॥

ऐन्द्रवज्रादिकान्तिच्छटारञ्जिनीं
शेखरीभूतशुक्लेन्दुरेखाभराम् ।
मञ्जुमञ्जीरशिञ्जत्पदाम्भोरुहा-
मापदुत्तारिणीमम्बिकामाश्रये ॥ ७ ॥

वामहस्तेन जिह्वाञ्चलं वैरिणः
पाणिना दक्षिणेनायुधं मुद्गरम् ।
बिभ्रतीं पीतवर्णा[म्बरा]लङ्कृता-
मापदुत्तारिणीमम्बिकामाश्रये ॥ ८ ॥

पुस्तकं पाशमक्षस्रजं चाङ्कुशं
दोर्लताभिर्दधानां त्रिनेत्रान्विताम् ।
बालिकां त्रैपुरीपुण्डरीकप्रभा-
मापदुत्तारिणीमम्बिकामाश्रये ॥ ९ ॥

ब्रह्मशौरीन्द्रमुख्यामरप्राप्तना-
नायुधाच्छाननां स्रग्विभूषान्विताम् ।
भर्गपत्नीं सुदुर्गामभीष्टप्रदा-
मापदुत्तारिणीमम्बिकामाश्रये ॥ १० ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यविरचितमम्बिकास्तोत्रं सम्पूर्णम् ॥

---

## ८. ॥ अथ श्रीत्रिपुरसुन्दरीपञ्चरत्नस्तवः ॥

नीलालकां शशिमुखीं नवपल्लवोष्ठीं
चाम्पेयपुष्पसुषमोज्ज्वलदिव्यनासाम् ।
पद्मेक्षणां मुकुरसुन्दरगण्डभागां
त्वां साम्प्रतं त्रिपुरसुन्दरि देवि वन्दे ॥ १ ॥

श्रीकुन्दकुड्मलशिखोज्ज्वलदन्तबृन्द-
मन्दस्मितद्युतितिरोहितचारुवाणीम् ।
नानामणिस्थगितहारसुचारुकण्ठीं
त्वां साम्प्रतं त्रिपुरसुन्दरि देवि वन्दे ॥ २ ॥

पीनस्तनीं घनभुजां विपुलाब्जहस्तां
भृङ्गावलीजितसुशोभितरोमराजिम् ।
मत्तेभकुम्भकुचभारसुनम्रमध्यां
त्वां साम्प्रतं त्रिपुरसुन्दरि देवि वन्दे ॥ ३ ॥

रम्भोज्ज्वलोरुयुगलां मृगराजपत्रा-
मिन्द्रादिदेवमकुटोज्ज्वलपादपद्माम् ।
हेमाम्बरां घनधृताञ्चितखड्गवल्लीं
त्वां साम्प्रतं त्रिपुसुन्दरि देवि वन्दे ॥ ४॥

मत्तेभवक्त्रजननीं मृडदेहयुक्तां
शैलाग्रमध्यनिलयां वरसुन्दराङ्गीम् ।
कोटीश्वराख्यहृदि संस्थितपादपद्मां
त्वां साम्प्रतं त्रिपुरसुन्दरि देवि वन्दे ॥ ५ ॥

बाले त्वत्पादयुगलं ध्यात्वा सम्प्रति निर्मितम् ।
नवीनं पञ्चरत्नं च धार्यतां चरणद्वये ॥ ६ ॥
॥ इति श्रीत्रिपुरसुन्दरीपञ्चरत्नस्तवः सम्पूर्णः ॥

---

## ९. ॥ अथ श्रीकामाक्षीस्तोत्रम् ॥

काञ्चीनूपुररत्नकङ्कणलसत्केयूरहारोज्ज्वलां
काश्मीरारुणकञ्चुकाञ्चितकुचां कस्तूरिकाचर्चिताम् ।
कल्हाराञ्चितकल्पकोज्ज्वलमुखीं कारुण्यकल्लोलिनीं
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ १ ॥

कामारातिमनःप्रियां कमलभूसेव्यां रमाराधितां
कन्दर्पाधिकदर्पदानविलसत्सौन्दर्यदीपाङ्कुराम् ।
कीरालापविनोदिनीं भगवतीं काम्यप्रदानव्रतां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ २ ॥

गन्धर्वामरसिद्धचारणवधूद्गेयापदानाञ्चितां
गौरीं कुङ्कुमपङ्कपङ्कितकुचद्वन्द्वाभिरामां शुभाम् ।
गम्भीरस्मितविभ्रमाङ्कितमुखीं गङ्गाधरालिङ्गितां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ३ ॥

विष्णुब्रह्ममुखामरेन्द्रपरिषत्कोटीरपीठस्थलां
लाक्षारञ्जितपादपद्मयुगलां राकेन्दुबिम्बाननाम् ।
वेदान्तागमवेद्यचिन्त्यचरितां विद्वज्जनैरादृतां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ४ ॥

माकन्दद्रुममूलदेशमहिते माणिक्यसिंहासने
दिव्यां दीपितहेमकान्तिनिवहा[विलसद्]वस्त्रावृतां तां शुभाम् ।
दिव्याकल्पितदिव्यदेहभरितां दृष्टिप्रमोदावहां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ५ ॥

आधारादिसमस्तचक्रनिलयामाद्यन्तशून्यामुमा-
माकाशादिसमस्तभूतनिवहाकारामशेषात्मिकाम् ।
योगीन्द्रैरति योगिनीशतगणैराराधितामम्बिकां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ६ ॥

ह्रींकारप्रणवात्मिकां प्रणमतां श्रीविद्य[पूर्व]विद्यामयीं
ऐं श्रीं सौं रुचिमन्त्रमूर्ति निवहाकारामशेषात्मिकाम् ।
ब्रह्मानन्दरसानुभूत[ति]महितां ब्रह्मप्रियंवादिनीं
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ७ ॥

सिद्धानन्दजनस्य चिन्मयसुखाकारां महायोगिभिः
मायाविश्वविमोहिनीं मधुमतीं ध्यायेच्छुभां[ध्येयां शुभां]ब्राह्मणीम् ।
ध्येयां किन्नरसिद्धचारणवधूद्गेयां सदा योगिभिः
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ८ ॥

कामारिकामां कमलासनस्थां
काम्यप्रदां कङ्कणचूडहस्ताम् ।
काञ्चीनिवासां कनकप्रभासां
कामाक्षिदेवीं कलयामि चित्ते ॥ ९ ॥

॥ इति श्रीकामाक्षीस्तोत्रं सम्पूर्णम् ॥

---

## १०. ॥ अथ श्रीकामाक्षीस्तुतिः ॥

वन्दे कामाक्ष्यहं त्वां वरतनुलतिकां विश्वरक्षैकदीक्षां
विष्वग्विश्वम्भरायामुपगतवसतिं विश्रुतामिष्टदात्रीम् ।
वामोरूमाश्रितार्तिप्रशमननिपुणां वीर्यशौर्याद्युपेतां
वन्दारुस्वर्द्रुमिन्द्राद्युपगतविटपां विश्वलोकालवालाम् ॥ १ ॥

चापल्यादियमभ्रगा तटिदहो किञ्चेत्सदा सर्वगा
ह्यज्ञानाख्यमुदग्रमन्धतमसं निर्णुद्य निस्तन्द्रिता ।
सर्वार्थावलिदर्शिका च जलदज्योतिर्न चैषा तथा
यामेवं विवदन्ति वीक्ष्य विबुधाः कामाक्षि नः पाहि सा ॥ २ ॥

दोषोत्सृष्टवपुः कलां च सकलां बिभ्रत्यलं संततं
दूरत्यक्तकलङ्किका जलजनुर्गन्धस्य दूरस्थिता ।
ज्योत्स्नातो ह्युपरागबन्धरहिता नित्यं तमोघ्ना स्थिरा
कामाक्षीति सुचन्द्रिकातिशयता सा पातु नः सर्वदा ॥ ३ ॥

दिश्याद्देवि सदा त्वदङ्घ्रिकमलद्वन्द्वं श्रितालिष्वलं
वृत्तिं तत्स्वयमादधच्च विमुखं दोषाकराडम्बरे ।
सूर्यादर्शहसन्मुखं श्रुतिपथस्यात्यन्तभूषायितं
नेत्रानन्दविधायि पङ्कमधरीकृत्योज्ज्वलं सद्धृतम् ॥ ४ ॥

कामाक्षीपदपद्मयुग्ममनघं कुर्यान्मदीये मनः-
कासारे वसतिं सदापि सुमनस्संदोहसंराजिते ।
सुज्ञानामृतपूरिते कलुषताहीने च पद्मालये
नित्यं सत्कुमुदाश्रिते निजवसत्यात्तप्रभावे सदा ॥ ५ ॥

कामाक्षीपदपद्मयुग्मनखराः सम्यक्कलासंयुताः
नित्यं सद्गुणसंश्रिताः कुवलयामोदोद्भवाधायकाः ।
उत्कोचं दधतश्च पङ्कजनुषां संरोचकाः स्थानतः
श्रेष्ठादिन्दुनिरासकारिविभवा रक्षन्तु नः सर्वदा ॥ ६ ॥

कामाक्षीचरणारविन्दयुगलीगुल्फद्वयं रक्षता-
दस्मान् संततमाश्रितार्तिशमनं दोषौघविध्वंसनम् ।
तेजःपूरनिधानमङ्घ्रिवलयाद्याकल्पसङ्घट्टन-
प्रोद्यद्ध्वानमिषेण च प्रतिशृणन्नम्रालिरक्षामिव ॥ ७ ॥

जङ्घे द्वे भवतां जगत्त्रयनुते नित्यं त्वदीये मन-
स्सन्तोषाय ममामितोर्जितयशःसंपत्तये च स्वयम् ।
साम्योल्लङ्घनजाङ्घिके सुवपुषा वृत्ते प्रभासंयुते
हे कामाक्षि समुन्नते त्रिभुवनीसङ्क्रान्तियोग्ये वरे ॥ ८ ॥

कामाक्ष्यन्वहमेधमानमवताज्जानुद्वयं मां तव
प्रख्यातारिपराभवैकनिरति प्रद्योतनाभं द्युतेः ।
सम्यग्वृत्तमतीव सुन्दरमिदं संपन्निदानं सतां
लोकप्राभवशंसि सर्वशुभदं जङ्घाद्वयोत्तम्भनम् ॥ ९ ॥

ऊरू ते भवतां मुदे मम सदा कामाक्षि भो देवते
रम्भाटोपविमर्दनैकनिपुणे नीलोत्पलाभे शुभे ।
शुण्डादण्डनिभे त्रिलोकविजयस्तम्भौ शुचित्वार्जव-
श्रीयुक्ते च नितम्बभारभरणैकाग्रप्रयत्ने सदा ॥ १० ॥

कामाक्ष्यन्वहमिन्धतां निगनिगप्रद्योतमानं परं
श्रीमद्दर्पणदर्पहारि जघनद्वन्द्वं महत्तावकम् ।
यत्रेयं प्रतिबिम्बिता त्रिजगती सृष्टेव भूयस्त्वया
लीलार्थं प्रतिभाति सागरवनग्रावादिकाधोवृता ॥ ११ ॥

बोभूतां यशसे ममाम्ब रुचिरौ भूलोकसञ्चारतः
श्रान्तौ स्थूलतरौ तवातिमृदुलौ स्निग्धौ नितम्बौ शुभौ ।
गाङ्गेयोन्नतसैकतस्थलकचग्राहिस्वरूपौ गुण-
श्लाघ्यौ गौरवशोभिनौ सुविपुलौ कामाक्षि भो देवते ॥ १२ ॥

कामाक्ष्यद्य सुरक्षतात् कटितटी तावक्यतीवोज्ज्वल-
द्रत्नालङ्कृतहाटकाढ्यरशनासम्बद्धघण्टारवा ।
तत्रत्येन्दुमणीन्द्रनीलगरुडप्रख्योपलज्योतिषा
व्याप्ता वासवकार्मुकद्युतिखनीवाभाति या सर्वदा ॥ १३ ॥

वस्तिः स्वस्तिगता तवातिरुचिरा कामाक्षि भो देवते
सन्तोषं विदधातु सन्ततमसौ पीताम्बरावेष्टिता ।
तत्रापि स्वकया श्रिया तत इतः प्रद्योतयन्ती दिशः
कान्तेन्द्रोपलकान्तिपुञ्जकणिकेवाभाति या सौष्ठवात् ॥ १४ ॥

यन्नाभीसरसी भवाभिधमरुक्षोणीनिविष्टोद्भव-
त्तृष्णार्ताखिलदेहिनामनुकलं सुज्ञानतोयं वरम् ।
दत्वा देवि सुगन्धि सद्गुणसदासेव्यं प्रणुद्य श्रमं
सन्तोषाय च बोभवीतु महिते कामाक्षि भो देवते ॥ १५ ॥

यन्मध्यं तव देवि सूक्ष्ममतुलं लावण्यमूलं नभः-
प्रख्यं दुष्टनिरीक्षणप्रसरणश्रान्त्यापनुत्त्या इव ।
जातं लोचनदूरगं तदवतात् कामाक्षि सिंहान्तर-
स्वैराटोपनिरासकारि विमलज्योतिर्मयं प्रत्यहम् ॥ १६ ॥

धृत्यै ते कुचयोर्वलित्रयमिषात् सौवर्णदामत्रयी-
बद्धं मध्यमनुत्तमं सुदृढयोर्गुर्वोर्ययोर्देवते ।
सौवर्णौ कलशाविवाद्य च पयःपूरीकृतौ सत्कृतौ
तौ कामाक्षि मुदं सदा वितनुतां भारं पराकृत्य नः ॥ १७ ॥

पाणी ते शरणागताभिलषितश्रेयःप्रदानोद्यतौ
सौभाग्याधिकशंसिशास्त्रविहरद्रेखाङ्कितौ शोभनौ ।
स्वर्लोकद्रुमपञ्चकं वितरणे तत्तत्तृषां तस्य त-
त्पात्रालाभविशङ्कयाङ्गुलिमिषान्मन्ये विभात्यत्र हि ॥ १८ ॥

दत्तां देवि करौ तवातिमृदुलौ कामाक्षि संपत्करौ
सद्रत्नाञ्चितकङ्कणादिभिरलं सौवर्णकैर्भूषितौ ।
नित्यं संपदमत्र मे भवभयप्रध्वंसनैकोत्सुकौ
संरक्तौ च रसालपल्लवतिरस्कारं गतौ सुन्दरौ ॥ १९ ॥

भूयास्तां भुजगाधिपाविव मुदे बाहू सदा मांसलौ
कामाक्ष्युज्ज्वलनूत्नरत्नखचितस्वर्णाङ्गदालङ्कृतौ ।
भात्कौ मम देवि सुन्दरतरौ दूरीकृतद्वेषण-
प्रोद्यद्वाहुबलौ जगत्त्रयनुतौ नम्रालिरक्षापरौ ॥ २० ॥

स्कन्धौ देवि तवापरौ सुरतरुस्कन्धाविवोज्जृम्भिता-
वस्मान्नित्यमतन्द्रितौ समवतां कामाक्षि दत्वा धनम् ।
कण्ठासक्तसमस्तभूषणरुचिव्याप्तौ स्वयं भास्वरौ
लोकाघौघसमस्तनाशनचणावुत्तम्भितावुद्द्युती ॥ २१ ॥

ग्रीवा कम्बुसमानसंस्थितिरसौ कान्त्येन्द्रनीलोपमा
पायान्मामनिशं पुराणविनुते कामाक्षि भो तावकी ।
नानारत्नविभूषणैः सुरुचिरा सौवर्णकैर्मौक्तिक-
श्रेष्ठोद्गुम्भितमालया च विमला लावण्यपाथोनिधिः ॥ २२ ॥

देवि त्वद्वदनाम्बुजं वितनुताच्छ्रेयः परं शाश्वतं
कामाक्ष्यद्य ममाम्ब पङ्कजमिदं यत्कान्तिलाभे[च्छया] ।
तोये नूनमहर्निशं च विमले मङ्क्त्वा तपस्यत्यलं
तत्सौन्दर्यनिधानमग्र्यसुषमं कान्तालकालङ्कृतम् ॥ २३ ॥

नेत्रे ते करुणाकटाक्षविशिखैः कामादिनित्यद्विषो
बाह्यामप्यरिसंहतिं मम पराकृत्यावतां नित्यशः ।
हे कामाक्षि विशालतामुपगते ह्याकर्णमिष्टावहे
सातत्येन फलार्थिनां निजगतेः संफुल्लकं जायते ॥ २४ ॥

भ्रूयुग्मं तव देवि चापलतिकाहङ्कारनिर्वापणं
कान्तं मुग्धविकासचेष्टितमहाभाग्यादिसंसूचकम् ।
कामाक्ष्यन्वहमेधतां कृतपरिस्पन्दं रिपूद्वासने
दीनानिङ्गितचेष्टितैरवदिदं सुव्यक्तरूपं परम् ॥ २५ ॥

नानासूनवितानसौरभपरिग्राहैकलोलालयः
किं मां प्रत्यभियन्ति नेति कुपितं तप्त्वा तपो दुष्करम् ।
नासीभूय तवातिसौरभवहं भूत्वाभितः प्रेक्षण-
व्याजेन प्रियकप्रसूनमलिभिः कामाक्षि भात्याश्रितम् ॥ २६ ॥

वक्त्रं पातु तवातिसुन्दरमिदं कामाक्षि नः सर्वदा
श्रीमत्कुन्दसुकुड्मलाग्रदशनश्रेणीप्रभाशोभितम् ।
पुष्यद्बिम्बफलारुणाधरपुटं सद्वीटिकारञ्जितं
सौभाग्यातिशयाभिधायिहसितश्रीशोभिताशागणम् ॥ २७ ॥

सन्तोषं श्रुतिशष्कुलीयुगमिदं सद्रत्नशोभास्फुर-
त्ताटङ्काढ्ययुगेन भास्वररुचा संभूषितं तावकम् ।
कामाक्ष्यद्य चरीकरीतु विमलज्योतिर्ममानारतं
स्वाभ्याशस्थितगण्डभागफलकं संराजयज्ज्योतिषा ॥ २८ ॥

शीर्षं ते शिरसा नमामि सततं कामाक्ष्यहं सुन्दरं
सूक्ष्मं तन्मधुपालिनीलकुटिलश्रीकुन्तलालङ्कृतम् ।
सीमन्तं सुविभज्य तत्र विपुलश्रीमन्मणीन्द्राञ्चित-
स्वर्णालङ्करणप्रभासुरुचिरं शीर्षण्यभूषायितम् ॥ २९ ॥

कामाक्षीश्वरि कोटिसूर्यनिभसद्वज्रादिरत्नाञ्चित-
श्रीमन्मुग्धकिरीटभृद्वितरताद्धन्यं शिरस्तावकम् ।
संपर्त्ति नितरां ममाम्ब मनुजाप्राप्यामिहानारतं
लोकेऽमुत्र भवाभिधं च तिमिरं लूत्वा सदालिश्रितम् ॥ ३० ॥

कामाक्षीस्तुतिमन्वहं भुवि नराः शुद्धाश्च ये भक्तितः
शृण्वन्त्यत्र पठन्ति वा स्थिरधियः पुण्यामिमामर्थिनः ।
दीर्घायुर्धनधान्यसंपदममी विन्दन्ति वाणीं यशः
सौभाग्यं सुतपौत्रजातमधिकख्यातिं मुदं सर्वदा ॥ ३१ ॥

कौण्डिन्यान्वयसंभूतरामचन्द्रार्यसूरिणा ।
निर्मिता भाति कामाक्षीस्तुतिरेषा सतां मता ॥ ३२ ॥
॥ इति श्रीकामाक्षीस्तुतिः सम्पूर्णा ॥

---

## ११. ॥ अथ श्रीदाक्षायणीस्तोत्रम् ॥

गम्भीरावर्तनाभिर्मृगमदतिलका वामबिम्बाधरोष्ठी
श्रीकान्ता काञ्चिदाम्ना परिवृतजघना कोकिलालापवाणी ।
कौमारी कम्बुकण्ठी प्रहसितवदना धूर्जटिप्राणकान्ता
रम्भोरूः सिंहमध्या हिमगिरितनया शाम्भवी नः पुनातु ॥ १ ॥

दद्यात् कल्मषहारिणी शिवतनुः पाशाङ्कुशालङ्कृता
शर्वाणी शशिसूर्यवह्निनयना कुन्दाग्रदन्तोज्ज्वला ।
कारुण्यामृतपूर्णवाग्विलसिता मत्तेभकुम्भस्तनी
लोलाक्षी भवबन्धमोक्षणकरी निश्रेयसं सन्ततम् ॥ २ ॥

मध्येसुधाब्धि मणिमण्टपरत्नवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराभरणमाल्यविचित्रगात्रीं
देवीं भजामि दृढबुद्धतलेडजिह्वाम् (?) ॥ ३ ॥

सन्नद्धां विविधायुधैः परिवृतामालीकुमारीगणैः
ध्यायेदीप्सितदायिनीं त्रिनयनां सिंहाधिरूढां सिताम् ।
शङ्खं चक्रधनूंषि चारु[चक्रमथो धनुश्च]दधतीं बिभ्रा[दिव्या]युधां तर्जनीं
वामे शक्तिमसिं महेषुमितरे श्रीशक्तिशूलं भजे ॥ ४ ॥

किंशुकच्छदविशाललोचनीं किञ्च नागरसवल्लिसंयुताम् ।
अङ्गचम्पकसमानवर्णिनीं शङ्करप्रियसतीं नमाम्यहम् ॥ ५ ॥

आरुह्य सिंहमसिचर्मरथाङ्गशङ्ख-
शक्तित्रिशूलशरचापधरा पुरस्तात् ।
गच्छ त्वमम्ब दुरिते पथि दुष्टसत्त्वात्
संरक्षणाय सततं मम देवि दुर्गे ॥ ६ ॥

दिनकरशशिनेत्रे दिव्यते [देव्युमे] रुद्रगात्रे
घनसमुचितगात्रे कल्पवल्लीसवित्रि ।
अनवरतपवित्रे ह्यम्बिके कालरात्रे
मुनिविनुतचरित्रे मोहने शैलपुत्रि ॥ ७ ॥

जलरुहसमपाणे सत्कलाबाणतूणे
सुललितमुखवीणे सर्वविद्याप्रवीणे ।
अलघुनुतपुराणे ह्यर्थभाषाधुरीणे-
प्यलिसमुदयवेणि ग्रावजे शम्भुराज्ञि ॥ ८ ॥

विविधगुणकराली विश्वतत्त्वावराली
शिवहृदयसमेली स्वयभवामथाली (?) ।
नवमणिमयमौली नागरक्षोविभाली
धवलभसितधूलीधारिणी भद्रकाली (?) ॥ ९ ॥

जननमरणहारी सर्वलोकोपकारी
जननजतविहारी चारुवक्षोरुहारी (?) ।
कनकगिरिविहारी कालगर्वोपहारी
घनफणधरहारी कालि कौमारि गौरि (?) ॥ १० ॥

मलहरुनिमतङ्गी मन्त्रयन्त्रप्रसङ्गी
वलयितसुभुजङ्गी वाङ्मयी मौनसङ्गी (?) ।
विलयभयविहङ्गी विश्वतो रक्षपाङ्गी
कलितजयतुरङ्गी खण्डचन्द्रोत्तमाङ्गी (?) ॥ ११ ॥

अम्ब त्वदाराधनतत्पराणां
मुखारविन्दे सरसं कवित्वम् ।
करारविन्दे वरकल्पवल्ली
पदारविन्दे नृपमौलिराजिः ॥ १२ ॥

पुरवैरिधात्रि मुरवैरिपूजिते
जलदालिवेणि फलदायिके शिवे ।
सदयं ससंपदुदयं कुरुष्व मे
जगदम्ब शाम्भवि कदम्बवासिनि ॥ १३ ॥

विजयविभवदात्री विश्वकल्याणगात्री
मधुकरशुभवेणी मङ्गलावासवाणी ।
शतमखविधिगीता शाम्भवी लोकमाता
कलिरिपुजयघोटी कामकोटिः सहाया ॥ १४ ॥

मधुपमहितमौर्वी मल्लिकामञ्जुलोर्वी-
धरपतिवरकन्या धर्मभूतेषु धन्या ।
मणिमयघनवीणा मञ्जरीदिव्यबाणा
कलिरिपुजयघोटी कामकोटिः सहाया ॥ १५ ॥

अम्ब त्वदंशोरणुरंशुमाली
तवैव मन्दस्मितबिन्दुरिन्दुः ।
यादृच्छिकं संलपितं त्रयी ते
पुम्भावलीला पुरुषत्र यान्ति (?) ॥ १६ ॥

दुर्वेदनानुभवनैः परिदूयमाना
निर्वेदमेति नितरां कलना मदीया ।
पर्वेन्दुसुन्दरमुखि प्रणतानुकम्पे
सर्वेश्वरि त्रिपुरसुन्दरि मे प्रसीद ॥ १७ ॥

यत्प्रभापटलपाटलं जगत् पद्मरागमणिमण्डपायते ।
पाशपाणि सृणिपाणि भावये चापपाणि शरपाणि दैवतम् ॥ १८ ॥

ऐश्वर्यमष्टविधमष्टदिगीश्वरत्व-
मष्टात्मता च फलमाश्रयिणामितीव ।
मुद्रां वहन् घनधियो वटमूलवासी
मोदं तनोतु मम मुग्धशशाङ्कचूडः ॥ १९ ॥

गेहं नाकति गर्वितः प्रणमति स्त्रीसङ्गमो मोक्षति
द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति ।
मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवनात्
त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रिये ॥ २० ॥

पातय वा पाताले स्थापय वा सकललोकसाम्राज्ये ।
मातस्तव पदयुगलं नाहं मुञ्चामि नैव मुञ्चामि ॥ २१ ॥

आपदि किं करणीयं स्मरणीयं चरणयुगलमम्बायाः ।
तत्स्मरणं किं कुरुते ब्रह्मादीनपि च किङ्करीकुरुते ॥ २२ ॥

मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि ।
निश्शेषीकृतरक्तबीजदनुजे नित्ये निशुम्भापहे
शुम्भध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥ २३ ॥

रक्ताभामरुणांशुकाम्बरधरामानन्दपूर्णाननां
मुक्ताहारविभूषितां कुचभरक्रान्तां सकाञ्चीगुणाम् ।
देवीं दिव्यरसान्नपात्रकरकामम्भोजदर्वीकरां
ध्याये शङ्करवल्लभां त्रिणयनामम्बां सदान्नप्रदाम् २४ ॥

उद्यद्भानुनिभां दुकूलवसनां क्षीरोदमध्ये शुभे
मूले कल्पतरोः स्फुरन्मणिमये सिंहासने संस्थिताम् ।
बिभ्राणां करयोः सुवर्णचषकं बीजं च शाल्युद्भवं
भक्ताभीष्टवराभयाञ्जलिपुटां ध्यायेऽन्नपूर्णेश्वरीम् ॥ २५ ॥

वामे पायसपूर्णहेमकलशं पाणौ वहन्ती मुदा
चान्ये पाणितले सुवर्णरचितां दर्वीं च भूषोज्ज्वलाम् ।
अम्बा शुद्धदुकूलचित्रवसना कारुण्यपूर्णेक्षणा
श्यामा काचन शङ्करप्रियतमा शातोदरी दृश्यते ॥ २६ ॥

करेण चञ्चन्मणिकङ्कणेन
दर्वीं दधानां धवलान्नपूर्णाम् ।
कदावलोके करुणालवालां
काशीपुरीकल्पलतां भवानीम् ॥ २७ ॥

या माणिक्यमनोज्ञहारविभुना[सहिता]सिन्दूरभासान्विता
तारानायकशेखरा त्रिनयना पीनस्तनोद्भासिता ।
बन्धूकप्रसवारुणाम्बरधरा मार्ताण्डकोट्युज्ज्वला
सा दद्याद्भुवनेश्वरी भगवती श्रेयांसि भूयांसि नः ॥ २८ ॥

माणिक्यनूपुरविभूषितपादपद्मां
हस्तारविन्दकरुणारसपूर्णदर्वीम् ।
सन्ध्यारुणांशुकधरां नवचन्द्रचूडां
मन्दस्मितां गिरिसुते भवतीं भजामि ॥ २९ ॥

॥ इति श्रीदाक्षायणीस्तोत्रं सम्पूर्णम् ॥

---

## १२. ॥ अथ श्रीगौरीदशकम् ॥

लीलाल[र]ब्धस्थापितलुप्ताखिललोकां
लोकातीतैर्मौनि[र्योगि]भिरन्तःस्थिरमृग्याम् ।
बालादित्यश्रेणिसमानद्युतिपुञ्जां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ १ ॥

आशापाशक्लेशविनाशं विदधानां
पादाम्भोजध्यानपराणां पुरुषाणाम् ।
ईशामीशार्धाङ्गशरीरामभिरामां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ २ ॥

नानाकारैः शक्तिकदम्बैर्भुवनानि
व्याप्य स्वैरं क्रीडति येयं स्वयमेका ।
कल्याणीं तां कल्पलतामानतिभाजां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ३ ॥

चन्द्रापीडानन्दितमन्दस्मितवक्त्रां
चन्द्रापीडालङ्कृतलीलालकभाराम् ।
इन्द्रोपेन्द्राद्यर्चितपादाम्बुजयुग्मां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ४ ॥

मूलाधारादुत्थितवक्त्रां विधिरन्ध्रं
सौरं चान्द्रं व्याप्य विहाय ज्वलिताङ्गीम् ।
येयं सूक्ष्मां[मा]सूक्ष्मतनुं[नुः]तां तनुमध्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ५ ॥

यस्याः कुक्षौ लीनमखण्डं जगदण्डं
भूयो भूयः प्रादुरभूदक्षतमेव ।
तस्याः [पत्या]सार्धं राजतशैले विहरन्तीं
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ६ ॥

यस्यामेतत् प्रोतमशेषं मणिमाला-
सूत्रे यद्वत् क्वापि च रत्नं निखिलं च ।
तामध्यात्मज्ञानपदव्या गमनीयां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ७ ॥

आदिक्षान्तामक्षरमूर्त्या विलसन्तीं
भूते भूते भूतकदम्बप्रसवित्रीम् ।
शश्वद्ब्रह्मानन्दमयीं तां तनुमध्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ८ ॥

नित्यः शुद्धो निष्कल एको जगदीशः
साक्षी यस्याः सर्गविधौ संसरणे च ।
विश्वत्राणक्रीडनलीलां न[भ]वपत्नीं
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ९ ॥

प्रातःकाले भावविशुद्ध्यै प्रणिधाना-
द्भक्त्या नित्यं जप्यति गौरीरीशकं यः ।
वाचां सिद्धिं सद्धनमुक्ती शिवभक्तिं
तस्यावश्यं पर्वतपुत्री विदधाति ॥ १० ॥

प्रत्याहारध्यानसमाधिस्थितिभाजां
नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम् ।
सत्यज्ञानानन्दमयीं तां तनुमध्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ११ ॥

॥ इति श्रीगौरीदशकं सम्पूर्णम् ॥

---

## १३. ॥ अथ श्री अखिलाण्डनायिकादण्डकः ॥

भास्करकविकृतः

कदम्बतरुमञ्जरीकलितकर्णपूरोज्ज्वलं
कलक्कणविपञ्चिकाकलनदत्तकर्णोत्सवम् ।
करस्फुरितशारिकं कठिनपीनतुङ्गस्तनं
जगत्त्रितयमङ्गलं जयति मन्मनोमन्दिरे ॥ १ ॥

जय जय जगदेकमातः शिवे देवि जम्बूपतीशानहृन्मोदकृन्मारसञ्जीवनोदामशोभाभिरामाखिलाङ्गोज्ज्वले चम्पकाशोकपुन्नागसालासनश्रीफलोदुम्बराश्वत्थजम्बूलसच्चन्दनाद्युर्वराजातराजीनिरस्तारुणाभापदस्वीयवेलासमुद्भासिसह्यात्मजापूरयोर्मध्यगे वारिजातावलीगर्भनिर्यन्निर्यन्मधुस्वादहृष्यद्द्विरेफाङ्गनाचारुसङ्गीतवन्मञ्जुशाखासुडोलाविहारप्रियस्वप्रियायुक्प्रियस्वानवन्याप्रियस्वादुकेकालसत्केकिषण्डाकुले, चण्डभानुद्विषच्चण्डरामाब्जभूचन्द्रकुम्भोद्भवश्रीमदिन्द्राग्निजम्बूमहातीर्थराजावलीतीरभूमल्लिकायूथिकामालतीपूर्ववीरुत्समुद्भूतपुष्पोत्क[र]स्मेरगन्धाभिरामातिबालानिलस्वैरसञ्चारसञ्जातसम्मोददिव्याङ्गनालीलसद्गोपुरालङ्कृते,

सिद्धवेषस्फुरद्भूतिदायीश्वरस्वान्तसन्तोषकृत्सालवर्यावृते, सन्ततं दन्तिकान्तारदेशे कृताशे दयाशेवधौ शेवधीशेडिते, वेधसा वैदिकैरागमैर्बोधितैरर्चनासत्पथैरद्भुतैः पूजिते, चारुजम्बूतरोर्मूलदेशोल्लसद्रत्नगेहान्तरालङ्क्रियाकारणे, दन्तिनालूतया चारुसंसेविते, नीरलिङ्गाकृतौ देवदेवे हरे लोकरक्षाकृते, तत्सपर्या विधातुं भवानि स्वयंव्यक्तरूपोज्ज्वले, पद्मया हस्तपङ्केरुहात्तामलस्फारमुक्ताफलालङ्कृतच्छत्रया पद्मभूकान्तया कच्छपीनिर्गलद्दिव्यगान्धारनादानुकूलीभवद्गेयया निर्जराधीशवामभ्रुवा चित्तभूपङ्कजाक्ष्या च हस्ते धृतस्वर्णदण्डस्फुरच्चामराभ्यां सदा पार्श्वयोरुर्वशीमुख्यदिव्याङ्गनाभिश्चलत्कुन्तलोरोजभारालसाभिर्मुदा लास्यभेदैः पुरस्ताच्च संसेविते ॥ २ ॥

निखिलभुवनरक्षणे, सक्षणोत्क्षिप्तकौक्षेयसत्पक्षिराजध्वजाध्यक्षिते स्वर्धुरीणाद्रिसर्वामराधीशकोटीरकोटीमणीकान्तिनीराजिताङ्घ्रिद्वयीपद्मकोशोदरोद्गीर्णमुक्ताफलस्तोमभास्वन्नखश्रेणिकाभासुरे शम्भुहृद्धीरतासन्मृगीयन्त्रणाकृन्मनोभूनिषङ्गस्फुरज्जङ्घिके, बालरम्भातिशायीशविज्ञातसौभाग्यकोरुद्वये, देहशोभासरोघूर्णदम्भोभ्रमभ्रान्तिकृन्नाभिगम्भीरताभासुरे,नीलरोमावलीवल्लरीसत्फलोरोजभारानमन्मध्यदेशे, दयानद्धदेहे, शुभे, कुम्भिकुम्भद्वयीधिक्क्रियादक्षवक्षोरुहद्वंद्वसंवर्धितेशानहृन्मोदभारे, नतेष्वेकदा धर्मकामार्थमोक्षप्रदानैकदक्षैर्लसत्कल्पवल्लीसमैः बाहुभिः पङ्कजे भीतिनोदक्षमामिष्टदां मुद्रिकां चादधाने, हरामोदधानाकृते, सिन्धुराधीश्वरारण्यवासीश्वरेणादरात् बद्धमाङ्गल्यसूत्रस्फुरत्कम्बुजित्कन्धराराजिते, पार्विकस्वच्छचन्द्राभिरामानने नूतनसद्विद्रुमारक्तदन्तच्छदालङ्कृते कुन्दबृन्दोल्लसद्दन्तपङ्क्त्या युते,देहशोभातमालावलीसञ्चरच्चन्द्रिकामन्दहासाभिरामे मनोहारिहीराङ्कुरैर्निस्तुलैर्मौक्तिकैःबद्धताटङ्कभाराजितश्रोत्रयुग्मान्तरे, चारुचाम्पेयगर्वौघसर्वङ्कषोदारमुक्ताफलोद्भासिनासायुते, मन्दवातागतिप्रेङ्खदिन्दीवरद्वन्द्वजिल्लोचने, मारकोदण्डरुग्भङ्गकृच्चिल्लिके, शर्वरीनाथखण्डाभिरामालिके, कामजित्स्वान्तवातायुषो मोहकृत्केशपाशप्रभाभासुरे, मञ्जुले, देहसौन्दर्यविश्रान्तिकृद्रेखिकाबुद्धिदस्वच्छशीतांशुरेखायुते पद्मरागादिभी रत्नवर्यैः कनद्दिव्यकोटीरहारावलीकङ्कणैर्मञ्जुमाणिक्यसन्नद्धशिञ्जन्मणीकाञ्चिदामारुणस्वच्छचीनांशुकेनापि शिञ्जानमञ्जीरयुग्मेन चालङ्कृते शोभमानाकृते ॥ ३ ॥

अकृतकवचनानि सर्वाणि योगीन्द्रसन्मानसैः साकमप्राप्य यस्मान्निवृत्तानि तं ते परानन्दमम्ब, त्वदीहाबलाद्ये लभन्ते न ते कुत्रचित् बिभ्यति स्वच्छबुद्धीनमून्न स्पृशत्युग्रसंसारजं कर्मजातं, पुरा यो विधिं सृष्टवानद्भुतान् वेदराशीनमुष्मै पुनर्दत्तवानात्मबुद्धिप्रकाशं मुमुक्षुः जनो यं सदा सेवते यश्च सूर्ये विभात्यानखाग्रात् पुमान् स्वर्णवर्णोज्ज्वलो यश्च पुंसां हृदाकाशगः सच्चिदानन्दरूपः शिवस्तस्य शक्तिस्त्वमस्युत्तमा तन्मयी तत्त्वमस्यम्बिके त्वद्भिया मारुतो वाति

सूर्यानलौ तारकानायकोऽप्यन्धकारं निरस्यानिशं जङ्गमं स्थावरं चाभितः पालयन्ते जगत्पन्नगाधीश्वरोऽप्युन्नमत्कन्धरं भूतलं सावलम्बं करोत्यम्बरे मेघपङ्क्तिर्जलैः सिञ्चति क्ष्मातलं देवि मे सत्पथेऽत्यन्तसक्तिं कुरु त्वं हि बुद्धिप्रदा सर्वहृत्पङ्कजे सन्निविष्टा न चेद्दुष्कृतं यत्करोम्यद्य तन्निष्कृतावेष भारस्त्वयि ॥ ४ ॥

सुललितपदपङ्कजे ते सदा यः सदा सेवते तं नराधीश्वराः प्रार्थयन्तेतराम्बुवाहोपमैर्बद्धघण्टाझणत्कारसंपूरिताशातटैर्हस्तिभिः वातवेगैर्हयैरुत्तमैर्हारकेयूररुक्माङ्गदैः कुण्डलैर्मण्डयन्त्यस्य गेहे सदा पद्महस्ता वसत्येतदीयानने गद्यपद्यात्मिका भारती नृत्यति स्वैरमेणीदृशां पुष्पधन्वायते सोऽवनौ पुत्रपौत्रादिभिर्बन्धुवर्गैः सह क्रीडति स्वच्छकीर्त्या जगच्छादयत्यम्बिके त्वत्कृपावत्कटाक्षावलीगोचरस्येह वामुत्र वा दुर्लभं किं भवेत् सर्वलोकेश्वरि त्वत्पदं स्वल्पवागल्पताचोदितः स्तोतुमारब्धवानस्म्यथाप्यादरात् बाललीलावचो मातुरत्यन्तमोदं विधत्ते शिवे तन्मया बालिशेनानिशं गुम्भितं चापराधं क्षमस्वाखिलाण्डेश्वरि त्वं सदा पाहि मां दीनमीशप्रिये देवि तुभ्यं नमो देवि तुभ्यं नमः॥५॥

शिवसूर्यदीक्षितगुरोर्भास्करनाम्ना तनूभुवा रचितः ।
अखिलाण्डनायिकायाः कुर्याच्चिरमेष दण्डकः प्रमदम् ॥ ६ ॥

---

## १४. ॥ अथ श्रीशिवकामसुन्दर्यम्बादण्डकः ॥

जय जय शिवकामसुन्दर्युमे, देवि, रम्याकृते, भक्तराजीहृदन्तःस्थिताज्ञानगाढान्धकारप्रभेदस्फुरद्बालसूर्यायमाणैर्नखैः भूषिते पादकान्त्या निरस्तारुणाभाम्बुजे, जङ्घयाधःकृतानङ्गतूणीयुगे, कन्तुजिन्मोहदोरूद्वयीशोभिते, दिव्यकौसुम्भपट्टाम्बरालङ्कृते, नैकरत्नच्छटाभासुरोद्दामकाञ्चीलतामण्डिते, नीलरोमावलीमेयमध्यानते, कोकयुग्मोल्लसद्वक्षजातोन्नते, तारहारावलीराजिताभ्यन्तरे, पार्विकस्वच्छशीतांशुबिम्बस्फुरद्वक्त्रशोभासरोमज्जदीशानहृज्जातसद्बुद्बुदौपम्यवन्नासिकामौक्तिकोद्भासिते, नीलकञ्जातसौन्दर्यजिल्लोचनोद्यत्कटाक्षावलीरक्षिताशेषलोके, महारत्नराजीलसच्चारुकोटीरभाराजिते,मञ्जुले, कामजित्स्वान्तसम्मोहकान्यङ्गकान्यम्ब को वा भृशं वर्णितुं शक्नुयाद्वेदवाचां सुदूराणि दिव्यानि ते सच्चरित्राणि को वेद भूम्यामुमे ॥ १ ॥

भगवति, निजपादसेवासमायातसप्तार्णवीसन्निभोदारगम्भीरतावन्महाशैवगङ्गाख्यतीर्थोत्तमप्रान्तसंरूढचाम्पेयगन्धाभिरामातिबालानिलाधूतचीनांशुकोन्नद्धकेतुस्फुरद्गोपुरालङ्कृते, तारमङ्गापुरे तारकानायके दक्षकोपाभिभूते पुरा कृत्तिकारोहिणीपूर्वतत्प्रेयसीभिः स्वमाङ्गल्यसिद्ध्यै सदा सेविते, ब्रह्मणा वह्निना धर्मराजेन रक्षोजलाधीशवातैस्तथा राजराजादिसर्वामराधीश्वरैर्नित्यमाराधिते, वेदवाग्बोधिते, चारुकैलासनाथे हरे बद्धभावे शिवे ॥ २ ॥

अमृतजलधिमध्यभागोल्लसद्रत्नवर्योज्ज्वलद्द्वीपदेशे मिलत्कल्पवाटीवृते चारुचिन्तामणीगेहमध्ये महाचक्रराजस्फुरत्पीठिकायां सुरश्रेष्ठमुख्यामराधीशपादे, सदा शम्भुमङ्के महेशानकामेश्वरस्याङ्कमध्यस्थिते, देवि, कामेश्वरीपूर्वसर्वामरीयूथनाथाभिराराद्धुदाराभिरामाभिधानाभिराराधिते, अत्यन्तहृद्यं तमुद्यन्तमानन्दरूपं सदा शम्भुमम्ब त्वया साकमेवं हृदा ये भजन्ते मुदा ते हि लोकेश्वराः ॥ ३ ॥

गिरिवरतनये सदा सम्पदं पुत्रपौत्राभिवृद्धिं च देहीति याच्ञाक्रमः स्वर्गमोक्षप्रदायां त्वयि स्वल्पकस्तन्मया यत्स्तुतौ यच्च पूजाविधौ ध्यानयोगे नमस्यासु यच्चापराद्धं शिवे क्षम्यतां सर्वमेतत्त्वया सर्वलोकेश्वरि त्वं सदा पाहि मां तुभ्यमस्तु प्रणामाञ्जलीनां शतम् ॥ ४ ॥

॥ इति श्रीशिवकामसुन्दर्यम्बादण्डकः समाप्तः ॥

---

## १५. ॥ अथ श्रीपार्वतीस्तोत्रम् ॥

बालार्कायुतसत्प्रभां करतले लोलम्बमालाकुलां
मालां संदधतीं मनोहरतनुं मन्दस्मितोद्यन्मुखीम् ।
मन्दं मन्दमुपेयुषीं वरयितुं शम्भुं जगन्मोहिनीं
वन्दे देवमुनीन्द्रवन्दितपदामिष्टार्थदां पार्वतीम् ॥ १ ॥

हेमाभां मतिवागतीतगुणशीलानल्पशिल्पाकृतिं
प्रेमारोहमनोहरां करलसत्कल्याणदामाञ्चिताम् ।
श्यामामीश्वरमुद्यतां वरयितुं त्रैलोक्यसम्मोहिनीं
कामापादनकल्पवल्लिमनिशं वन्दे परां देवताम् ॥ २ ॥

करधृतवरमाल्या सर्वरक्ताङ्गभूषा
निखिलनयनचेतोहारिरूपाग्र्यवेषा ।
भवतु भवदभीष्टप्राप्तये शैलकन्या
पुरुषयुवतिवश्याकृष्टिनित्यप्रगल्भा ॥ ३ ॥

हेमाद्रौ हेमपीठे ननिखिलसुरैरीड्यमानां विराज-
त्पुष्पेष्विष्वासपाशाङ्कुशकरकमलां रक्तवेषाभिरक्ताम् ।
दिक्षूद्यद्भिश्चतुर्भिर्मणिमयकलशैः पञ्चशक्त्यञ्चितैः स्व-
र्वृक्षैः क्लृप्ताभिषेकां भजत भगवतीं भूतिदामन्त्ययामे ॥ ४ ॥

चक्रं शङ्खमसिं च चर्म सशरं चापं गदां शूलकं
बिभ्राणां वरदाभयामृतघटान् रत्नौघपात्रं तथा ।
भूषाभिर्मकुटादिभिस्त्रिनयनां पीताम्बरामम्बिकां
ध्यायेच्चन्द्रकलासितां सुरगणैरीड्यां जगन्मङ्गलाम् ॥ ५ ॥

श्रीकैलासे शुकाद्यैः शिवकरवटमूले निषण्णो निषेव्यः
कृत्वोरौ वामपादं किसलयमृदुलं दक्षिणे दक्षवैरी ।
बिभ्राणो दोर्भिरक्षस्रजममृतघटं पुस्तकं ज्ञानमुद्रां
भूयाद्भुक्त्यै च मुक्त्यै मम रजतनिभो दक्षिणामूर्तिशम्भुः ॥ ६ ॥

॥ इति श्रीपार्वतीस्तोत्रं सम्पूर्णम् ॥

॥ अथ श्रीत्रिपुराप्रातर्भजनम् ॥

प्रातःस्मरामि भजतामभयङ्करं तं
पादारविन्दमतिसुन्दरमम्बिकायाः ।
दुस्स्वप्नदोषहरणं करणं सुखानां
सुस्वप्नबोधमखिलौघनिबर्हणञ्च ॥ १ ॥

प्रातःस्मरामि सकलार्थवरप्रदानं
पादारविन्दमतिकोमलमम्बिकायाः ।
इन्द्रादिदिक्पतिविरिञ्चमुकुन्दमौलि-
रत्नांशुसूर्यकिरणानुविकासितं तत् ॥ २ ॥

प्रातःस्मरामि सुरधेनुपयोधराय-
मानं चतुष्टयकराम्बुजमम्बिकायाः ।
पुण्ड्रेक्षुचापमदनास्त्रभुजंगपाश-
रत्नाङ्कुशौकनक[शोज्ज्वलित]कङ्कणभूषणाढ्यम् ॥ ३ ॥

प्रातः स्मरामि पृथिवीजलवह्निवायु-
व्योमादिरूपमखिलं च पदारविन्दम् ।
यद्रेणुमाप्य कमलासनमाधवेशाः
कुर्वन्ति विश्वहरणस्थितिसर्गकेलिम् ॥ ४ ॥

प्रातः स्मरामि मुखपङ्कजमन्दहासं
मन्दस्मिताधरतिरस्कृतचन्द्रबिम्बम् ।
याद्दश्यकेन फणिताखिलवेदशास्त्र-
त ... कचक्ररथमंङ्गजयोधनस्य (?) ॥ ५ ॥

यः श्लोकपञ्चकमिदं पठति प्रभाते
धर्मादिदं परहितं कथितं हरेण ।
तस्मै ददाति पदवीमणिमादिरूपां
जप्ता[तृप्ता]तपोभिरचलां त्रिपुरा भवानी ॥ ६ ॥

॥ इति श्रीत्रिपुराप्रातर्भजनं सम्पूर्णम् ॥

## १७. ॥ अथ श्रीतुरीयाषोडशीश्रीराजराजेश्वरीकवचम् ॥

कैलासशिखरे रम्ये देवदेवं जगद्गुरुम् ।
शङ्करं परिपप्रच्छ कुमारः शिखिवाहनः ॥ १ ॥

श्रीस्कन्द उवाच—

जनक श्रीगुरो देव पुत्रवात्सल्यवर्धन ।
कवचं षोडशाक्षर्या वद मे परमेश्वर ॥ २ ॥

श्रीईश्वर उवाच—

शृणु पुत्र महाभाग कवचं मन्त्रविग्रहम् ।
गोप्याद्गोप्यतरं गोप्यं गुह्याद्गुह्यतरं महत् ॥ ३ ॥

तव स्नेहात् प्रवक्ष्यामि नाख्यातं यस्य कस्यचित् ।
ब्रह्मेशविष्णुशक्रेभ्यो मया यत् कथितं पुरा ॥ ४ ॥

देवाग्रे नैव दैत्याग्रे न शौनकगुणाग्रके ।
तव भक्त्या तु कवचं गोप्यं कर्तुं न शक्यते ॥ ५ ॥

एकादशमहाविद्या सवर्णा सद्गुणान्विता ।
सर्वशक्तिप्रधाना हि कवचं मन्मुखोदितम् ॥ ६ ॥

गणेशश्च रविर्विष्णुः शिवशक्तिश्च भैरवः ।
पञ्चतत्त्वादिसर्वेषां वामावर्तेन तुष्यताम् ॥ ७ ॥

ऊर्ध्वाम्नायं महामन्त्रं कवचं निर्मितं मया ।
त्रैलोक्यविजयं दिव्यं तुरीयं कवचं शुभम् ॥ ८ ॥

श्रीस्कन्द उवाच—

कवचं परमं देव्याः श्रोतुमिच्छाम्यहं प्रभो ।
यत्सूचितं त्वया पूर्वं धर्मकामार्थमोक्षदम् ॥ ९ ॥

तद्विनाराधनं नास्ति जपं ध्यानादिकर्मणि ।
तस्याश्च कवचं यस्मात् तस्मात्तद्वद मे प्रभो ॥ १० ॥

श्री ईश्वर उवाच—

शृणु पुत्र महाप्राज्ञ रहस्यातिरहस्यकम् ।
तुरीयं कवचं दिव्यं सर्वमन्त्रमयं शुभम् ॥ ११ ॥

न पुत्राय न शिष्याय न भक्ताय कदाचन ।
सपुत्रशिष्यभक्ताय कवचं यत् प्रकाशयेत् ? ॥ १२ ॥

पूजान्ते तु जपात् पूर्वं कवचं समुदीरयेत् ।
अस्य श्रीकवचस्यास्य ऋषिरानन्दभैरवः ॥ १३ ॥

श्रीविद्या देवता च्छन्दो गायत्री रुचिवृत्तिकम् ।
रामा बीजं पराशक्तिर्वाग्भवं कीलकं स्मृतम् ॥ १४ ॥

मम सर्वार्थसिद्ध्यर्थे जपे तु विनियोगतः ।
अङ्गुष्ठाग्रे वाग्भवं च हृल्लेखा तर्जनी न्यसेत् ॥ १५ ॥

लक्ष्मीबीजं मध्यमायामङ्गिराऽनामिका तथा ।
परा बीजं कनिष्ठायां लक्ष्मीं करतले न्यसेत् ॥ १६ ॥

हृदये वाग्भवं न्यस्यात् परां शिरसि च न्यसेत् ।
लक्ष्मीबीजं शिखायां च सर्वाङ्गे वाग्भवं न्यसेत् ॥ १७ ॥

हृल्लेखं नेत्रयोर्न्यस्यात् अस्त्रं तु कमलां न्यसेत् ।
भूर्भुवःस्वेति मनुना दिग्बन्धनमथाचरेत् ॥ १८ ॥

ध्यानं तस्य प्रवक्ष्यामि धर्मकामार्थमोक्षदम् ।
न्यासध्यानादिकं सर्वं कृत्वा तु कवचं पठेत् ॥ १९ ॥

क्षीरसागरमन्मध्ये[मध्यस्थे]रत्नद्वीपे मनोहरे ।
रत्नसिंहासने दिव्ये तत्र देवीं विचिन्तयेत् ॥ २० ॥

कोटिसूर्यप्रतीकाशां चन्द्रकोटिनिभाननाम् ।
दाडिमीपुष्पसंकाशां कुंकुमोदरसन्निभाम् ॥ २१ ॥

जपाकुसुमसंकाशां त्रिणेत्रां च चतुर्भुजाम् ।
पाशाङ्कुशधरां रम्यामिक्षुचापशरान्विताम् ॥ २२ ॥

कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम् ।
सर्वशृङ्गारवेषाढ्यां सर्वावयवशोभिनीम् ॥ २३ ॥

सर्वायुधसमायुक्तां प्रसन्नवदनेक्षणाम् ।
सपरीवारसावर्णां सर्वोपचारपूजिताम् ॥ २४ ॥

एवं ध्यायेत्ततो वीर कवचं सर्वकामदम् ।
आवर्तयेत् स्वदेहे तु सर्वरक्षाकरं शुभम् ॥ २५ ॥

शिखायां मे ह्लौः [ह्लौ] पातु स्हौ [सहौ] मे चक्ररन्ध्रके ।
वामदक्षिणभागे च ह्लौ पातु मां सर्वदा ॥
[सर्वदा ह्लौ च मां पातु वामदक्षिणभागयोः]॥ २६ ॥

ऐं ह्रीं श्रीं सर्वदा पातु षोडशी सुन्दरी परा ।
श्रीं ह्रीं क्लीं सर्वदा पातु ऐं सौं ओं पातु मे सदा ॥ २७ ॥

ह्रीं श्रीं ऐं पातु सर्वत्र क्लौं रं लं ह्रीं सदा मम ।
क्लीं हसकहल ह्रीं पातु सदा सौः क्लीं मम? ॥ २८ ॥

सौ ऐं क्लीं ह्री श्रिया पातु सबीजा षोडशाक्षरी ।
आपादमस्तकं पातु महात्रिपुरसुन्दरी ॥ २९ ॥

श्रीजयन्ती मस्तके मां पातु नित्यं विभूतये ।
ह्रीं मङ्गला सदा नेत्रे पातु सर्वार्थसिद्धये ॥ ३० ॥

क्लीं कालिका कर्णयुग्मं पातु सर्वशुभावहा ।
ऐं भारती घ्राणयुग्मं पातु सर्वजयाप्तये ॥ ३१ ॥

सौः कराली मुखं पातु सर्वलोकवशाप्तये ।
ऐं शारदा सदा वाचं पातु साहित्यसिद्धये ॥ ३२ ॥

ओं कपालिनि मे कर्णौ पातु सद्गानसिद्धये ।
ह्रीं दुर्गासहिता पातु स्कन्धदेशौ सदा मम ॥ ३३ ॥

श्रीं क्षमासहिता पातु हृदयं मम सर्वदा ।
ककारसहिता धात्री पार्श्वयुग्मं सदावतु ॥ ३४ ॥

एकारसहिता स्वाहा पातु मे जठरं सदा ।
ईकारसहिता नाभिं स्वधा मां सर्वदावतु ॥ ३५ ॥

लकारसहिता ब्राह्मी पृष्ठदेशं सदावतु ।
ह्रींकारसहमाहेशी कटिं पातु सदा मम ॥ ३६ ॥

हकारसहिता गुह्यं कौमारी पातु सर्वदा ।
सकारसहिता पातु वैष्णवी गुददेशकम् ॥ ३७ ॥

ककारयुक्ता वाराही ह्यूरुयुग्मं सदावतु ।
हकारसहिता जानुयुग्मं माहेन्द्रि मेऽवतु ॥ ३८ ॥

लकारयुक्ता चामुण्डा जङ्घायुग्मं सदावतु ।
ह्रींकारसहिता गुल्फयुग्मं लक्ष्मीः सदावतु ॥ ३९ ॥

सकारयुक्ता मे पादयुग्मेऽव्यात् शिवदूतिका ।
ककारसहिता प्राच्यां चण्डा रक्षतु सर्वदा ॥ ४० ॥

लकारसहिताग्नेय्यां प्रचण्डा सर्वदावतु ।
ह्रींकारसहिता पातु दक्षिणे चण्डनायिका ॥ ४१ ॥

सौःकारसहिता चण्डवेगिनी नैर्ऋतेऽवतु ।
ऐंकारसंयुता चण्डप्रकाशा पातु पश्चिमे ॥ ४२ ॥

क्लींकारसहिता पातु चण्डिका वायुगोचरे ।
ह्लींकारसहिता पातु चामुण्डा चोत्तरे मम ॥ ४३ ॥

श्रींकारसहिता रौद्री पायादैशान्यके मम ।
ऊर्ध्वं ब्रह्माणि मे रक्षेत् षोडशी सह सर्वदा ॥ ४४ ॥

अधस्थाद्वैष्णवी रक्षेत् पुनः षोडशिसंयुता ।
सर्वाङ्गं सर्वदा पातु सहिता भुवनेश्वरी ॥ ४५ ॥
जले दावानलेऽरण्ये महोत्पाते च सागरे ।
दिवारात्रौ च मे रक्षेत् देवी तारत्रयी मम ॥ ४६ ॥

इदं तुरीयासहितं षोडशाक्षरिकात्मकम् ।
अभेद्यं कवचं त्वेदं मन्त्रबीजसमन्वितम् ॥ ४७ ॥

योगिनीचक्रसहितं तव प्रीत्या प्रकाशितम् ।
धारयस्व मया दत्तं गोपनीयं सुपुत्रक ॥ ४८ ॥

न पुत्राय न शिष्याय बन्धुभ्यो न प्रकाशयेत् ।
इदं त्रिपुरसुन्दर्यास्तुरीयं कवचं शुभम् ॥ ४९ ॥

गोपनीयं प्रयत्नेन मन्त्रवर्णक्रमोदितम् ।
प्रातरारभ्य सायान्तं कर्म वेदान्तमौक्तिकम् ॥ ५० ॥
तत् फलं समवाप्नोति तुरीयकवचव्रतम् ।
दशधा मातृकान्यासं लघुषोढा ततः परम् ॥ ५१ ॥

शक्तिन्यासं महाषोढां कृत्वा बाह्यान्तरं न्यसेत् ।
श्रीविद्यायां महान्यासं क्रमात् सावर्णतां गतम् ॥ ५२ ॥

पूजान्ते यत् फलं प्राप्तं तत् फलं कवचव्रते ।
सवत्सां दुग्धसहितां साधकः कामधेनुवत् ॥ ५३ ॥
त्रैलोक्यविजयायेदं कवचं परमाद्भुतम् ।
यथा चिन्तामणौ पुत्र मनसा परिकल्पिते ॥ ५४ ॥
तत् सर्वं लभते शीघ्रं मम वाक्यान्न संशयः ।
सायुरारोग्यमैश्वर्यं सदा सम्पत्प्रवर्धनम् ॥ ५५ ॥

कवचस्य प्रभावेण त्रैलोक्ये विजयी भवेत् ।
अदीक्षिताय नो देयं श्रद्धाविरहितात्मने ॥ ५६ ॥

नाख्येयं यस्य कस्यापि कृतघ्नायाततायिने ।
शान्ताय गुरुभक्ताय देयं शुद्धाय साधवे ॥ ५७ ॥
अज्ञात्वा कवचं चेदं यो जपेत् परदेवताम् ।
यद्यत् पुराद्यादिशतं यथेन्दुश्च तयो रविः (?) ॥ ५८ ॥

स एव च गुरुः साक्षात् कवचं यस्तु पुत्रक।
त्रिसन्ध्यं च पठेन्नित्यमिदं कवचमुत्तमम् ॥ ५९ ॥

निशार्धे जपकाले वा प्रत्यहं यन्त्रमग्रतः।
सदा भवति तस्याग्रे पश्चाद्धावति धेनुवत् ॥ ६० ॥

जगद्वश्यं भवेच्छीघ्रं नात्र कार्या विचारणा।
वेदी पुत्रो भवेच्छान्ते त्वं सदा मम सुव्रत (?) ॥ ६१ ॥

सप्तकोटिमहामन्त्राः सवर्णाः सगुणान्विताः।
सर्वे प्रसन्नतां यान्ति सत्यं सत्यं न संशयः ॥ ६२ ॥

इति ते कथितं दिव्यं सगुणे भजनक्रमम्।
निर्गुणं परमं वक्ष्ये तुरीयं कवचं शृणु ॥ ६३ ॥

येन विज्ञातमात्रेण पारम्पर्यं च लभ्यते।
यथा च विमलं तोयं तपन्तीं तारयत्यपि ॥ ६४ ॥

कवचस्यास्य माहात्म्यं वर्णितुं नैव शक्यते।
मूलादिब्रह्मरन्ध्रान्तं श्रीचक्रं समुदीरयेत् ॥ ६५ ॥

परिचाराश्च नः सर्वं सर्वावरणसंयुतम्।
आदिमध्यान्तकं सर्वं पश्चमं पञ्चमं भवेत् (?) ॥ ६६ ॥

देहमध्ये च सर्वस्वं श्रीचक्रं चिन्तयेत् सुत।
पञ्चविंशतितत्त्वं च सुतलं तलमेव च ॥ ६७ ॥

गभस्तिमानपातालं सप्तमं च रसातलम्।
भूर्भुवःस्वर्लोकमतो महल्लोकजनस्तथा ॥ ६८ ॥

तपश्च सत्यलोकश्च भुवनानि चतुर्दश।
सर्वं श्रीभुवनं चैव निराकारं विचिन्तयेत् ॥ ६९ ॥

मानसे पूजयेत् ध्यायेद्‌ज्योतीरूपं सुचिन्मयम्।
कवचं प्रजपेद्वत्स राजराजेश्वरो भवेत् ॥ ७० ॥

इति परमरहस्यं सर्वमन्त्रार्थसारं
भजति परमभक्त्या निश्चलं निर्मलत्वम्।
विलसति भुवि मध्ये पुत्रपौत्राभिवृद्धिं
धनसकलसमृद्धिं भोगमोक्षप्रदं च ॥ ७१ ॥

॥ इति श्रीचूडामणौ श्रीशिवस्कन्दसर्गपादे त्रैलोक्यविजयाभेद्यं नाम श्रीतुरीयाषोडशीश्रीराजराजेश्वरीमहात्रिपुरसुन्दरीकवचं सम्पूर्णम् ॥

## १८. ॥ अथ श्रीमीनाक्षीमणिमालाष्टकम् ॥

मधुरापुरनायिके नमस्ते मधुरालापशुकाभिरामहस्ते ।
मलयध्वजपाण्ड्यराजकन्ये मयि मीनाक्षि कृपां विधेहि धन्ये ॥ १ ॥

कचनिर्जितकालमेघकान्ते कमलासेवितपादपङ्कजान्ते ।
मधुरापुरवल्लभेष्टकान्ते मयि मीनाक्षि कृपां विधेहि दान्ते ॥ २ ॥

कुचयुग्मविभिन्नचक्रवाके कृपया पालितसर्वजीवलोके ।
मलयध्वजसन्ततेः पताके मयि मीनाक्षि कृपां विधेहि पाके ॥ ३ ॥

तपनीयसरोजिनीतटस्थे तुहिनप्रायमहीधरोदरस्थे ।
मदनारिपरिग्रहे कृतार्थे मयि मीनाक्षि कृपां विधेहि सार्थे ॥ ४ ॥

मधुवैरिविरिञ्चिमुख्यसेव्ये मनसा भावितचन्द्रमौलिसव्ये ।
मनसापनिहीतयज्ञहव्ये मयि मीनाक्षि कृपां विधेहि भव्ये ॥ ५ ॥

कलकीरकलोक्तिनाददक्षे कलितानेकजगन्निवासकुक्षे ।
मदनाशुगहल्लकान्तपाणे मयि मीनाक्षि कृपां विधेहि शोणे ॥ ६ ॥

विधिवाहनचैत्रकेलियाने विमतामोटनपूजितापदाने ।
मधुरेक्षणभावपूतमीने मयि मीनाक्षि कृपां विधेहि दीने ॥ ७ ॥

जगदम्ब कदम्बमूलवासे मधुरामोदमुखेन्दुमन्दहासे ।
मदमन्दिरचारुदृग्विलासे मयि मीनाक्षि कृपां विधेहि दासे ॥ ८ ॥

पठतामनिशं प्रभातकाले मणिमालाष्टकमष्टभूतिदायि ।
घटिकाशतचातुरी समिन्धे करुणापूर्णकटाक्षसन्निवेशात् ॥ ९ ॥

॥ इति श्रीमीनाक्षीमणिमालाष्टकं सम्पूर्णम् ॥

---

## १९. ॥ अथ श्री कल्याणस्तवराजः ॥

कल्याणवृष्टिभिरिवामृतपूरिताभि-
लक्ष्मीस्वयंवरणमङ्गलदीपिकाभिः ।
सेवाभिरम्ब तव पादसरोजमूले
नाकारि किं मनसि भक्तिमतां जनानाम् ॥ १ ॥

एतावदेव जननि स्पृहणीयमास्ते
त्वद्वन्दनेन सलिलस्थगिते च नेत्रे ।
सान्निध्यमुद्यदरुणायतलोचनस्य
त्वद्विग्रहस्य सुधया परयाप्लुतस्य ॥ २ ॥

ईशित्वभावकलुषाः कति नाम सन्ति
ब्रह्मादयः प्रतियुगं प्रलयाभिभूताः ।
एकः स एव जननि स्थिरसिद्धिरास्ते
यः पादयोस्तव सकृत्प्रणतिं करोति ॥ ३ ॥

लब्ध्वा सकृत् त्रिपुरसुन्दरि तावकीनं
कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।
कन्दर्पभावसुभगास्त्वयि भक्तिभाजः
त्वं [सं]मोहयन्ति तरुणीर्भुवनत्रयस्य ॥ ४ ॥

ह्रींकारमेव तव नाम गृणन्ति वेदा
मातस्त्रिकोणनिलये त्रिपुरे त्रिणेत्रे ।
यत्सुरपृशो यमभटाभिभवं विहाय
दीव्यन्ति नन्दनवने सह लोकपालैः ॥ ५ ॥

हन्तुः पुरामधिगलं परिघूर्णमानः
क्रूरः कथं नु भविता गरलस्य वेगः ।
नाश्वासनाय यदि मातरिदं त्वदर्धं
देहस्य शश्वदमृताप्लवशीतलस्य ॥ ६ ॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि त्वदङ्घ्रिसरसीरुहयोः प्रणामः ।
किञ्च स्फुरन्मकुटमुज्ज्वलमातपत्रं
द्वे चामरे च महतीं वसुधां ददाति ॥ ७ ॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि दत्तदृष्टिम् ॥ ८ ॥

हन्तेतरेष्वपि मनांसि निधाय चान्ये
भक्तिं वहन्ति किल पामरदैवतेषु ।
त्वामेव देवि मनसाहमनुस्मरामि
त्वामेव नौमि शरणं जननि त्वमेव ॥ ९ ॥

लक्ष्येषु सत्स्वपि तवाक्षिविलोकनानाम्
आलोकय त्रिपुरसुन्दरि मां कथञ्चित् ।
नूनं मया तु सदृशः करुणैकपात्रं
जातो जनिष्यति जनो न तु जायमानः ॥ १० ॥

ह्रीं ह्रीमिति प्रतिपदं जपतां तवाख्यां
किं नाम दुर्लभमिह त्रिपुराधिवासे ।
मालाकिरीटमदवारणमाननीय
तं सेवते वसुमती स्वयमेव लक्ष्मीः ॥ ११ ॥

सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानकुशलानि सरोरुहाक्षि ।
त्वल्लोचनानि दुरितौघनिवारणानि
मामेव मातरनिशं कलयन्तु मान्यम् ॥ १२ ॥

कल्पोपसंहरणकल्पितताण्डवस्य
देवस्य खण्डपरशोः परभैरवस्य ।
पाशाङ्कुशैक्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥ १३ ॥

लग्नं सदा भवतु मातरिदं त्वदीयं
तेजः परं बहुलकुङ्कुमपङ्कशोणम् ।
भास्वत्किरीटममृतांशुकलावतंसं
मध्येत्रिकोणनिलयं परमामृतार्द्रम् ॥ १४ ॥

ह्रींकारमेव तव नाम तदेकरूपं
किं नाम सुन्दरि सरोजनिवासशीले ।
त्वत्तेजसा परिणतं विदधाति भूत-
सर्गं तनोति सरसीरुहसंभवोऽयम् ॥ १५ ॥

ह्रींकारत्रयसंपुटेन महता मन्त्रेण सन्दीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो ह्येतज्जपेन्मानवः ।
तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीः स्थिरस्थायिनी
वाणी निर्मलसूक्तिभारभरिता जागर्ति दीर्घं वयः ॥ १६ ॥

कुवलयदलनीलं बर्बरस्निग्धकेशं
पृथुतरकुचभारं क्रान्तकान्तावलग्नम् ।
किमिह बहुभिरुक्तैः त्वत्स्वरूपं परं तत्
सकलभुवनमातः सन्ततं सन्निधत्ताम् ॥ १७ ॥

माणिक्यमांगलिकसूत्रितपालिकेन
मन्दस्मितेन म[व]दनारुणपङ्कजेन ।
कालान्तदीर्घमणिमङ्गलसूत्रकण्ठी-
मम्बां विशालनयनां मनसा स्मरामि ॥ १८ ॥

॥ इति मन्मथेन विरचितः श्रीकल्याणस्तवराजः सम्पूर्णः ॥

---

## २०. ॥ अथ श्रीरङ्गनायिकास्तोत्रम् ॥

ईशानां वरदां समस्तजगतां पद्मासनस्थां श्रियं
पद्मालङ्कृतपाणिपल्लवयुगां श्रीरङ्गिणः प्रेयसीम् ।
वात्सल्यादिगुणोज्ज्वलां मणिमयैर्भूषागणैर्भूषिताम्
अस्मन्मातरमब्जकान्तवदनां वन्दे जगन्मातरम् ॥ १ ॥

स्वस्ति श्रीर्दिश मे शशाङ्कवदने कल्याणदे वत्सले
सर्वेषां किल रङ्गनाथदयिते तत्क्षान्तिसंवर्धके ।
संत्यक्ते निवहैः सतामशरणे तापत्रयीबाधिते
पापिष्ठे मयि दुर्मतौ तव कृपा कार्येत्यहं प्रार्थये ॥ २ ॥

अस्मन्मातः श्रुतीनां शिरसि विलसिते वत्सले सिन्धुकन्ये
कान्ते श्रीरङ्गराजः कुवलयनयने सर्वलोकाधिराजः ।
ईशाने लोकमातः सरसिजवदने दीप्रगात्रे सुशीले
पद्मे त्वं पाहि दीनं भवजलधिगतं दुर्मतिं दुर्दशं माम् ॥ ३ ॥

दुर्वृत्तं दुर्मनीषं भवजलधिगतं विष्णुभक्तापराधै-
र्वाग्गात्रस्वान्तजन्यैर्भरितमशरणं गर्हितं सर्वलोकैः ।
नित्यं मूर्खं नृशंसं मदनपरवशं मोहवश्यप्रवश्यं
दुःखाब्धौ मज्जितं मां सपदि हि कमले पाहि मातः प्रसीद ॥ ४ ॥

श्रीरङ्गनाथदयितेऽखिललोकमातः
कार्या कृपा ह्यशरणे मयि सिन्धुकन्ये ।
वात्सल्यतस्तु कमले मम दिव्यबोधं
देहि त्वमेव शरणं भव दिव्यसौख्यम् ॥ ५ ॥

सौख्यं प्रदेहि सुभगे दयिते मुरारेः
श्रीरङ्गिणः खलु रमे सुलभे सुशीले ।
कान्तस्मिते शशिलसद्वदने दयां ते
नित्यं कुरुष्व मयि मां परिपाहि पद्मे ॥ ६ ॥

कमले कमलारुणदिव्यमुखे
सुखदे जगतां खलु कल्पलते ।
अयि मामवलोकय सिन्धुसुते
कृपया तव केवलमब्जपदे ॥ ७ ॥

पतितं भववारिधिमध्यगतं
सततं विमतं जनताभिमते ।
अयि मामवलोकय पद्मकरे
दयिते जगदीश्वरि रङ्गपतेः ॥ ८ ॥

पदयोः शरणागतमब्धिसुते
तव दीनमकिञ्चनमार्तियुतम् ।
अयि मामवलोकय रङ्गपते-
र्दयिते विधिशङ्करमुख्यपतेः ॥ ९ ॥

अपि दुःसहपापशतैर्भरितं
जगतां जननि क्षमया कमले ।
परिपालय मां दयनीयमिमं
परिदीनहृदं तव रङ्गपतेः ॥ १० ॥

युवयोरपि दुःसहपापशतै-
र्भुवनेश्वरि रङ्गपतेर्दयिते ।
अपि मां भरितं परिपालय ते
दयया शरणागतिकं पदयोः ॥ ११ ॥

मातः प्रसीद कमले जगतां सुशीले
तापत्रयीजनितदुःखसहस्रसङ्घैः ।
पापैरनन्यगतिकं भरितं च दीनं
मां रक्ष दिव्यकृपया शरणागतं त्वाम् ॥ १२ ॥

युष्मत्पदाम्बुजयुगं शरणं गतस्य
मातः प्रयच्छ वरदे जगतां प्रियं मे ।
श्रीरङ्गनायकि मनोहरदिव्यरूपे
पाहि प्रसीद कमले सुभगे सुशीले ॥ १३ ॥

भवसिन्धुमग्नमरविन्दलोचने
प्रणतप्रसन्नमुखचन्द्रमण्डले ।
परिपालयाद्य दयनीयदुर्दशं
कृपया च मां च कमले दयानिधे ॥ १४ ॥

तव रङ्गिणश्च चरणाम्बुजे विना
गतिरस्ति नो च मम रङ्गनायकि ।
इह मां कुरुष्व तव किङ्करं सदा
जननी समस्तजगतां दयानिधे ॥ १५ ॥

विधिशङ्करेन्द्रमुखनिर्जरैः सदा
वनितायुतैश्च कमले समर्चिते ।
अखिलेष्टदे सकललोकवल्लभे
सततं कुरुष्व तव किङ्करं तु माम् ॥ १६ ॥

जननी मम त्वमसि सिन्धुकन्यके
शरणं त्वमेव कमले दयानिधे ।
इह निस्तरेयमहमब्जलोचने
कृपया तवैव भवघोरसागरम् ॥ १७ ॥

मातः श्रीः सिन्धुकन्ये कुवलयशफरीपद्मसौगन्धिकादि-
प्रस्पर्धिस्फारनेत्रे सरसिजवदने दिव्यलावण्यगात्रे ।
बिम्बश्रीविद्रुमाभाधररुचिलसिते दिव्यवक्षोजदीप्रे
पद्मे [रक्ष]श्रीरङ्गहर्म्याङ्गणकनकलते त्वत्कटाक्षैः शुभैर्माम् ॥ १८ ॥

मां रक्ष रङ्गिदयिते मधुरैः कटाक्षै-
राभोगतुङ्गरुचिरस्तनभासमाने ।
सर्वेश्वरस्तव सुदर्शनलोलदृष्टि-
स्त्वां वीक्षते तव पतिः सततं सुशीले ॥ १९ ॥

संमज्जति स्तनतटे तव रङ्गनाथो
व्यामुग्धवांस्त्वयि शुभे झषमुग्धनेत्रे ।
वश्यः सदा भवति ते कमले ततस्त्वं
मां रक्ष रङ्गिदयिते करुणाकटाक्षैः ॥ २० ॥

ईषत्प्रफुल्लकमलोत्पलकान्तनेत्रे
मुग्धस्मितप्रविलसद्वदनारविन्दे ।
श्रीरङ्गनायकि मनोहरदिव्यगात्रे
नित्यं प्रसीद मम वृत्तमचिन्तयित्वा ॥ २१ ॥

श्रीरङ्गराजसयुजे श्रियै कनकभूषणैः ।
माणिक्यभूषणैर्दीप्रतन्वङ्गयै जयमङ्गलम् ॥ २२ ॥

॥ इति श्रीरङ्गनायिकास्तोत्रं सम्पूर्णम् ॥

---

## २१. ॥ अथ श्रीसरस्वतीस्तोत्रम् सिद्धसारस्वतम् ॥

बृहस्पतिरुवाच—

सरस्वति नमस्यामि चेतनाहृदि संस्थिताम् ।
कण्ठस्थां पद्मयोनेस्त्वां ह्रीं ह्रीङ्कारप्रियां तथा ॥ १ ॥

मतिदां वरदां चैव सर्वकामफलप्रदाम् ।
केशवस्य प्रियां भार्यां वीणाहस्तां वरप्रदाम् ॥ २ ॥

ह्रीं ह्रीं मन्त्रप्रियां हृद्यां कुमतिध्वंसकारिणीम् ।
स्वप्रकाशनिरालम्बामज्ञानतिमिरापहाम् ॥ ३ ॥

मोक्षप्रदां शुभां नित्यां शुभदां भुवनप्रियाम् ।
पद्मस्थितां कुण्डलिनीं शुक्लवस्त्रां मनोरमाम् ॥ ४ ।

आदित्यमण्डले लीनां प्रणमामि जनप्रियाम् ।
नित्यवासस्थितां देवीं वागीशेन महात्मना ॥ ५ ॥

आत्मानं दर्शयामास शरदिन्दुसमप्रभा ।
वरं वृणीष्व भद्रं ते यत्ते मनसि वर्तते ॥ ६ ॥

बृहस्पतिरुवाच—

प्रसन्ना भव हे देवि दिव्यज्ञानं प्रयच्छ मे ॥

सरस्वत्युवाच—

वर्तते निर्मलं ज्ञानं कुमतिध्वंसकारकम् ।
स्तोत्रेणानेन यो भक्त्या मां स्तुवन्ति सदा नरः ॥ ७ ॥

त्रिसन्ध्यं प्रयतो भूत्वा यः स्तुतिं पठते तथा ।
तस्य कण्ठे सदा वासं करिष्यामि न संशयः ॥ ८ ॥

प्रथमं भारती चैव द्वितीयं तु सरस्वती ।
तृतीयं शारदा देवी चतुर्थं कंसमर्दनी ॥ ९ ॥

पञ्चमं तु जगन्माता षष्ठं चैव तु पार्वती ।
सप्तमं चैव वाराही ह्यष्टमं ब्रह्मचारिणी ॥ १० ॥

नवमं चैव कामाक्षी दशमं ब्रह्मपुत्रिका ।
एकादशं तु लक्ष्मीस्तु द्वादशं सुरसुन्दरी ॥ ११ ॥

द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ।
तस्य सारस्वतं चैव षण्मासादेव सिध्यति ॥ १२ ॥

सिद्धसारस्वतं नाम स्तोत्रं वक्ष्येऽहमुत्तमम् ।
उमा च भारती भद्रा वाणी च विजया जया ॥ १३ ॥

वाणी सर्वगता गौरी कामाक्षी कमलप्रिया ।
सरस्वती च कमला मातङ्गी चेतना शिवा ॥ १४ ॥

क्षेमङ्करी शिवानन्दी कुण्डली वैष्णवी तथा ।
[ऐ]इन्द्री मधुमती लक्ष्मीर्गिरिजा शाम्भवाम्बिका ॥ १५ ॥

तारा पद्मावती हंसा पद्मवासा मनोन्मणी ।
अपर्णा ललिता देवी कौमारी कबरी तथा ॥ १६ ॥

शाम्भवी सुमुखी नेत्री त्रिनेत्री विश्वरूपिणी ।
आर्या मृडानी ह्रीङ्कारी साधनी सुमनाश्च हि ॥ १७ ॥

सूक्ष्मा परापरा कार्तस्वरवर्णा हरिप्रिया ।
ज्वालामालिनिका चर्चा कन्या च कमलासना ॥ १८ ॥

महालक्ष्मीर्महासिद्धिः स्वधा स्वाहा सुधामयी ।
त्रिलोकपावनी भर्त्री त्रिसन्ध्या त्रिपुरा त्रयी ॥ १९ ॥

त्रिशक्तिस्त्रिपुरा दुर्गा ब्राह्मी त्रैलोक्यमोहिनी ।
त्रिपुष्करत्रिवर्गादौ त्रिवर्णा त्रिस्वधामयी ॥ २० ॥

त्रिगुणा निर्गुणा नित्या निर्विकारा निरञ्जना ।
कामाक्षी कामिनी कान्ता कामदा कलहंसगा ॥ २१ ॥

सहजा कालजा प्रज्ञा रमा मङ्गलसुन्दरी ।
वाग्विलासा विशालाक्षी सर्वविद्या सुमङ्गला २२ ॥

काली महेश्वरी चैव भैरवी भुवनेश्वरी ।
अष्टोत्तरशतं नाम्नां वाग्भत्रि[त्रीं च]पुरार्जितम् ॥ २३ ॥

त्रिसन्ध्यं कीर्तयेद्यस्तु सर्वसिद्धिं लभेत सः ।
आयुरारोग्यमैश्वर्यं सुखं सम्पत्तिवर्धनम् ॥ २४ ॥

षट्कर्मसिद्धिदं स्तोत्रं साक्षात्त्रैलोक्यमोहनम् ।
सिद्धसारस्वतं चैव भवेद्विषयनाशनम् ॥ २५ ॥

॥ इति श्रीसरस्वतीस्तोत्रं सिद्धसारस्वतं सम्पूर्णम् ॥

---

## २२. ॥ अथ श्रीसरस्वतीप्रार्थनास्तोत्रम् ॥

शुभानि विदधातु नः किमपि पाणिपद्मस्थली-
विभासिशुकपोतकप्रियवचोभिरानन्दितम् ।
सुधाकरकलासमुल्लसितशेखरं पद्मभू-
वशीकरणचातुरीकलितलीलमाद्यं महः ॥ १ ॥

सदा हृदि विभासतां विलसदैन्दवश्रीसख-
प्रभानिकरनिर्धुताखिलजगत्तमःसंहति ।
सदातनवचस्तुतातुलितवैभवं दुर्दशा-
निशातनदयारसाञ्चितविलोकनं दैवतम् ॥ २ ॥

कलक्वणितनूपुरं कलितदीनरक्षाकरं
शशाङ्ककृतशेखरं शमितभक्तदैन्योत्करम् ।
कदा दुरितदुर्लभं कमलभूमनोवल्लभं
महोऽहमवलोकये महितसाहितीलब्धये ॥ ३ ॥

रसज्ञहृदयङ्गमस्फुरदसीमभावोदयां
तदीयरसभावनासमुचितैर्गुणैर्बन्धुराम् ।
निरर्गलविनिर्गलत्सुरधुनीतरङ्गक्रमां
विधातृवरवर्णिनी वितरताद्वचोवैखरीम् ॥ ४ ॥

विदूरय ममापदं वितर भद्रमव्याहतं
विधेहि विमलं यशो विरचय प्रसादं मयि ।
सुधारससहोदरैः शिशिरयान्तरं मामकं
दयारसतरङ्गितैर्भुवनमातरालोकनैः ॥ ५ ॥

त्वामेव यामि शरणं जगदम्ब वाणि
शीतांशुखण्डपरिशोभितमौलिभागे ।
वाचालनूपुरसमञ्चितपादपद्मे
वाचामधीश्वरि विधेहि मयि प्रसादम् ॥ ६ ॥

भाष्यकारेण रचिता जीयद्वाग्देवतानुतिः ।
श्रीकालहस्तीशगुरुवर्यपादाब्जसेवया [सेविना] ॥ ७ ॥

॥ इति श्रीसरस्वतीप्रार्थनास्तोत्रं सम्पूर्णम् ॥

---

## २३. ॥ अथ श्रीसरस्वतीस्तोत्रम् ॥

कुन्दालिद्युतिमन्दहाससुमुखी राकेन्दुबिम्बानना
मल्लीतल्लजमालतीसुमनसां सौभाग्यपाटच्चरी ।
फुल्लेन्दीवरबृन्दषट्पदतमःसन्दोहसन्देहकृ-
द्वेणीका विधिसुन्दरी मम भवेदानन्दसन्दोहिनी ॥ १ ॥

यत्पादाम्बुजसेवयैव ससुरो लोकः समर्त्यासुरो
वागौन्नत्यमगाहत श्रुतिवचोवीथीषु या गीयते ।
या श्वेताम्बुजमध्यवासरसिका या नम्ररक्षामणिः
धातुः कापि कुटुम्बिनी वितरतात् सा निर्वृतिं नोऽतुलाम् ॥ २ ॥

कस्तूरीघनसारगन्धलहरीसंवासितोरःस्थला
संवीता स्फुटकाशपुष्पसदृशक्षौमांशुकेनानिशम् ।
पुस्तं हस्तचतुष्टये जपवटीं शस्तां शुकीं वल्लकीं
बिभ्राणा गृहिणी विधातुरवतान्नः सेवया तोषिता ॥ ३ ॥

शुभ्रं दभ्रवलग्नमभ्रतनु तेऽदभ्रप्रमोदप्रदं
विभ्रान्ते भ्रमदन्धपस्य सततं तैस्तैर्निजैर्विभ्रमैः ।
शब्दब्रह्ममये जगत्यनितरापेक्षाधिकारक्रियं
किञ्चित्कुञ्चितकेशमद्य जयति स्रष्टुर्भुविष्ठं महः ॥ ४ ॥

॥ इति श्रीसरस्वतीस्तोत्रं सम्पूर्णम् ॥

---

## २४. ॥ अथ श्रीसरस्वतीस्तोत्रमहामन्त्रः ॥

अस्य श्रीसरस्वतीस्तोत्रमहामन्त्रस्य मार्कण्डेय ऋषिः । स्रग्धरानुष्टुप् छन्दांसि । श्रीसरस्वती देवता । अथ शुभतिथौ मम सकलविद्यात्मकप्रतिबन्धकजाड्यनिरासद्वारा श्रीसरस्वतीप्रीत्यर्थं एकविंशतित्रयोदशीषु मौनव्रतादिनियमपूर्वकं सरस्वतीस्तोत्रपाठमविच्छेदमेकविंशतिवारं करिष्ये । वाक्सिद्ध्यर्थंजपे विनियोगः ॥

शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् ।
हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ १ ॥

ह्रीं ह्रीं ह्रां हृद्यबीजे शशिरुचिकमलाकल्पविस्पष्टशोभे
भव्ये भव्यानुकूले कुमतिवनदहे विश्ववन्द्याङ्घ्रिपद्मे ।
पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसंपादयित्रि
प्रोत्फुल्लज्ञानकूटे हरिहरदयिते देवि संसारसारे ॥ २ ॥

ऐं ऐं ऐंजाप्यतुष्टे हिमरुचिमकुटे वल्लकीव्यग्रहस्ते
मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् ।
विद्ये वेदान्तगीते श्रुतिपरिपठिते मुक्तिदे मुक्तिमार्गे
मार्गातीतस्वरूपे मम भव वरदे शारदे शुभ्रवर्णे ॥ ३ ॥

धीं धीं धीं धारणाख्ये धृतिमतिनतिभिर्नामभिः कीर्तनीये
नित्ये नित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे ।
पुण्ये पुण्यप्रवाहे हरिहरनमिते वर्णतत्त्वे सुवर्णे
मातर्मन्त्रार्थतत्त्वे मतिमति मतिदे माधवप्रीतिदाने ॥ ४ ॥

क्लीं क्लीं क्लीं सुस्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते
सन्तुष्टाकारचित्ते स्मितमुखि सुभगे जृम्भिणीस्तम्भविद्ये ।
मोहे मुग्धप्रबोधे मम कुरु विमतिध्वान्तविध्वंसमीड्ये
गीर्गीर्वाग्भारती त्वं कविवृषरसनासिद्धिदे सिद्धिसाध्ये ॥ ५ ॥

सौं सौं सौं शक्तिबीजे कमलभवमुखाम्भोजभूतस्वरूपे
रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ।
निस्थूले नैव सूक्ष्मे [नविदितविभवे] नाप्यविज्ञाततत्त्वे
विश्वे विश्वान्तराले सुरगणनमिते निष्कले नित्यशुद्धे ॥ ६ ॥

स्तौमि त्वां त्वां च वन्दे मम खलु रसनां मा कदाचित् त्यजेस्त्वं
मा मे बुद्धिर्विरुद्धा भवतु जनमनो पातु मां देवि पापम् ।
मा मे दुःखं कदाचित् क्वचिदपि विषये पुस्तके नाकुलत्वं
शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदापि ॥ ७ ॥

इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो
वाण्या वाचस्पतेरप्यविदितविभवो वाक्पटुर्मृष्टपङ्कः ।
स स्यादिष्टार्थलाभात् सुतमिव सततं पाति तं सा च देवी
सौभाग्यं तस्य लोके प्रसरति कविता विघ्नमस्तं प्रयाति ॥ ८ ॥

निर्विघ्नं तस्य विद्या प्रभवति सततं चाश्रुतग्रन्थबोधः
कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षात् ।
दीर्घायुर्लोकपूज्यः सकलगुणनिधिः सन्ततं राजमान्यो
वाग्देव्याः सत्प्रसादात् त्रिजगति विजयी जायते सत्सभासु ॥ ९ ॥

ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः ।
सारस्वतो जनः पाठात् स स्यादिष्टार्थलाभवान् ॥ १० ॥

पक्षद्वये च यो भक्त्या त्रयोदश्येकविंशतिम् ।
अविच्छिन्नं पठेद्धीमान् ध्यात्वा देवीं सरस्वतीम् ॥ ११ ॥

सर्वपापविनिर्मुक्तः सुभगो लोकविश्रुतः ।
वाञ्छितं फलमाप्नोति लोकेऽस्मिन्नात्र संशयः ॥ १२ ॥

॥ इति श्रीनारदनन्दिकेश्वरसंवादे ब्रह्मपुराणोक्तं ब्रह्मप्रोक्तं श्रीसरस्वतीस्तोत्रं सम्पूर्णम् ॥

## २५. ॥ अथ श्रीसरस्वतीदशश्लोकीस्तोत्रम् ॥

ऋषय ऊचुः—

कथं सारस्वतप्राप्तिः केन ध्यानेन सुव्रत ।
महासरस्वती येन तुष्टा भवति तद्वद ॥ १ ॥

आश्वलायन उवाच—

शृण्वन्तु ऋषयः सर्वे गुह्याद्गुह्यतमं महत् ।
दशश्लोकीस्तुतिमिमां वदामि ध्यानपूर्वकम् ॥ २ ॥

अङ्कुशं चाक्षसूत्रं च पाशं पुस्तं च धारिणीम् ।
मुक्ताहारैः समायुक्तां देवीं ध्यायेच्चतुर्भुजाम् ॥ ३ ॥

सितेन दर्पणाभेन वक्त्रेण परिभूषिताम् ।
सुस्तनीं वेदिमध्यां तां चन्द्रार्धकृतशेखराम् ॥ ४ ॥

जटाकलापसंयुक्तां पूर्णचन्द्रनिभाननाम् ।
त्रिलोचनीं महादेवीं स्वर्णनूपुरधारिणीम् ॥ ५ ॥

कटकस्वर्णरत्नाढ्यमहावलयभूषिताम् ।
कम्बुकण्ठीं सुताम्रोष्ठीं सर्वाभरणभूषिताम् ॥ ६ ॥

केयूरैर्मेखलाद्यैश्च द्योतयन्तीं जगत्त्रयम् ।
शब्दब्रह्मारणिं ध्यायेद्ध्यानकामः समाहितः ॥ ७ ॥

वक्ष्ये सारस्वतं स्तोत्रं वाक्प्रवृत्तिकरं शुभम् ।
लक्ष्मीविवर्धनं चैव विवादे विजयप्रदम् ॥ ८ ॥

परब्रह्मात्मिकां देवीं भुक्तिमुक्तिफलप्रदाम् ।
प्रणम्य स्तौमि तामेव ज्ञानशक्तिं सरस्वतीम् ॥ ९ ॥

या वेदान्तोक्ततत्त्वैकस्वरूपा परमार्थतः ।
नामरूपात्मिका व्यक्ता सा मां पातु सरस्वती ॥ १० ॥

या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते ।
अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥ ११ ॥

या वर्णपदवाक्यार्थस्वरूपेणैव वर्तते ।
अनादिनिधनानन्ता सा मां पातु सरस्वती ॥ १२ ॥

अध्यात्ममधिदैवं च देवानां सम्यगीश्वरी ।
प्रत्यगात्मेव सन्ती या सा मां पातु सरस्वती ॥ १३ ॥

अन्तर्याम्यात्मना विश्वं त्रैलोक्यं या नियच्छति ।
रुद्रादित्यादिरूपस्था सा मां पातु सरस्वती ॥ १४ ॥

या प्रत्यग्दृष्टिभिर्ज्ञानैर्व्यज्यमानानुभूयते ।
व्यापिनी ज्ञप्तिरूपैका सा मां पातु सरस्वती ॥ १५ ॥

नामजात्यादिभिर्भेदैरष्टधा या विकल्पिता ।
निर्विकल्पात्मिका चैव सा मां पातु सरस्वती ॥ १६ ॥

व्यक्ताव्यक्तगिरः सर्वे देवाद्या व्याहरन्ति याम् ।
सर्वकामदुघा धेनुः सा मां पातु सरस्वती ॥ १७ ॥

यां विदित्वाखिलं बन्धं निर्मथ्यामलवर्त्मना ।
योगी याति परं स्थानं सा मां पातु सरस्वती ॥ १८ ॥

नामजात्यादिकं सर्वं यस्यामाविश्य तां पुनः ।
ध्यायन्ती ब्रह्मरूपैका सा मां पातु सरस्वती ? ॥ १९ ॥

यः कवित्वं निरातङ्कं भुक्तिं मुक्तिं च वाञ्छति ।
सोऽभ्यर्च्यैनां दशश्लोक्या भक्त्या स्तौतु सरस्वतीम् ॥ २० ॥

तस्यैवं स्तुवतो नित्यं समभ्यर्च्य सरस्वतीम् ।
भक्तिश्रद्धाभियुक्तस्य षण्मासात् प्रत्ययो भवेत् ॥ २१ ॥

ततः प्रवर्तते वाणी स्वेच्छया ललिताक्षरा ।
गद्यपद्यात्मिका विद्या प्रमेयैश्च विवर्तते ॥ २२ ॥

अश्रुतो बुध्यते ग्रन्थः प्रायः सारस्वतः कविः ।
श्रुतं च धारयेदाशु स्खलद्वाक् स्पष्टवाग्भवेत् ॥ २३ ॥

प्रख्यातः सर्वलोकेषु वाग्मी भवति पूजितः ।
अजितः प्रतिपक्षाणां स्वयं जेताऽधिजायते ॥ २४ ॥

अयोध्यैर्वेदबाह्यैर्वा विवादे प्रस्तुते सति ।
अहं वाचस्पतिर्विष्णुः शिवो वास्मीति भावयेत् ॥ २५ ॥

एवं भावयता तेन बृहस्पतिरपि स्वयम् ।
न शक्नोति परं वक्तुं नरेष्वन्येषु का कथा ॥ २६ ॥

न काञ्चन स्त्रियं निन्देत् न देवान्नापि च द्विजान् ।
अनार्यैर्नाभिभाषेत सर्वत्रैव क्षमी भवेत् ॥ २७ ॥

सर्वत्रैव प्रियं ब्रूयात् [यथेच्छालब्ध]मात्मनः ।
श्लोकैरेव तिरस्कृत्य द्विषन्तं प्रतिवादिनम् ॥ २८ ॥

प्रतिवादिगजानां तु सिंहो भवति तद्वचः ।
यद्वागितिबृचेनैव देवीं योऽर्चति सुव्रतः ॥ २९ ॥

तस्य नासंस्कृता वाणी मुखादुच्चारिता क्वचित् ।
प्रथमं भारती नाम द्वितीयं च सरस्वती ।
तृतीयं शारदा देवी चतुर्थं कंसमर्दनी ॥ ३० ॥

पञ्चमं तु जगन्माता षष्ठं चैव तु पार्वती ।
सप्तमं चैव कामक्षी ह्यष्टमं ब्रह्मचारिणी ॥ ३१ ॥

नवमं चैव वाराही दशमं ब्रह्मपुत्रिका ।
एकादशं च वाग्देवी द्वादशं वरदाम्बिका ॥ ३२ ॥

द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ।
तस्य सारस्वतं चैव षण्मासेनैव सिध्यति ॥ ३३ ॥

यस्याः स्मरणमात्रेण वाग्विभूतिर्विजृम्भते ।
सा भारती प्रसन्नाक्षी रमतां मन्मुखाम्बुजे ॥ ३४ ॥

इत्याश्वलायनमुनिर्निजगाद देव्याः
स्तोत्रं समस्तफलभोगनिधानभूतम् ।
एतत् पठन् द्विजवरः शुचितामुपैति
सन्ध्यासु वाञ्छितमुपैति न संशयोऽत्र ॥ ३५ ॥

॥ इति श्रीसरस्वतीदशश्लोकीस्तोत्रं सम्पूर्णम् ॥

---

## २६. ॥ अथ श्रीवानाद्रिनाथदयितास्तोत्रम् ॥

मातः समस्तजगतां वनशैलनाथ-
वक्षोविहारिणि मनोहरदिव्यवक्त्रे ।
श्रीभूषणैर्मणिमयैः शुभदिव्यगात्रे
त्वत्पादपङ्कजयुगं शरणं प्रपद्ये ॥ १ ॥

श्रीमद्वनाद्रितटगस्य सुसुन्दरस्य
दोर्दण्डषण्डसुविहारिणि सिन्धुकन्ये ।
त्वद्वीक्षणैर्विलसितैः स्तिमितैः शुभैश्च
लक्ष्मि त्वमेव परिपालय दुर्बलं माम् ॥ २ ॥

दयानिधे कोमलदिव्यगात्रे
शुचिस्मिते निर्मलचन्द्रवक्त्रे ।
सरोजकान्तायतलोचने त्वं
ममाब्धिकन्ये सुसुखं प्रदेहि ॥ ३ ॥

पिता च माता च गुरुश्च बन्धुः
त्वमेव सर्वं मम सिन्धुकन्ये ।
पदारविन्दे शरणं गतं मां
ततस्तु ते पालय लोकमातः ॥ ४ ॥

मणिसङ्घभूषणगणैरलङ्कृते
गणनाविहीनसुगुणैर्विभूषिते ।
अपि मां सुधाब्धितनये शुचिस्मिते
गुणहीनकं च परिपालयेन्दिरे ॥ ५ ॥

वनशैलनाथदयिते दयानिधे
भुवनाधिपेश्वरि शुचिस्मितानने ।
नलिनायताक्षि नमतां सुखप्रदे
तव पादपङ्कजयुगं भजे सदा ॥ ६ ॥

वृषाचलेशस्य सुसुन्दरस्य
भुजान्तरारामयथेच्छलीले ।
गुणेन रूपेण विलासितैस्त्वं
रमे सदानन्दयसे मुकुन्दम् ॥ ७ ॥

मुकुन्दवक्षःस्थलदिव्यलीला-
विलासितैस्त्वं वनशैलराजम् ।
त्वदङ्गसौन्दर्यसदाविमुग्धं
हरिप्रिये नन्दयसे त्वदीशम् ॥ ८ ॥

सर्वाङ्गसुन्दरहरिस्तव दिव्यागात्र-
सौन्दर्यमज्जितहृदस्तमितान्यभावः ।
त्वां वीक्षते सततमब्धिसुते सुशीले
सौन्दर्यवल्लि कमले परिपाहि मां त्वम् ॥ ९ ॥

सौन्दर्यवल्लि कमले सकलैकमातः
सर्वाङ्गसुन्दरमनोहरदिव्यरूपे ।
पद्मे मनोज्ञवदने सुभगे सुशीले
त्वत्पादपङ्कजयुगं शरणं गतोऽस्मि ॥ १० ॥

वितर वितर भद्रं सम्पदं भक्तिरूपा-
मिह च मम परत्र श्रीपतौ भाष्यकारे ।
वरवरमुनिवर्ये त्वत्पदाम्भोजयुग्मे
मम तु जलधिकन्ये निश्चलां लोकमातः ॥ ११ ॥

कलशजलधिकन्ये लोकमातः सुशीले
स्मितविलसितवक्त्रे कल्पवल्लि श्रितानाम् ।
दिवि भुवि वनशैलक्ष्मापतेर्वल्लभे श्रीः
मम तु तव पदाब्जे निश्चला भक्तिरस्तु ॥ १२ ॥

दिवि भुवि मम पद्मे सम्पदं भक्तिरूपां
वितर तव पदाब्जे सुन्दरश्रीपदाब्जे ।
शठरिपुपदपद्मे भाष्यकारे यतीन्द्रे
वरवरमुनिवर्ये लक्ष्मि कल्याणशीले ॥ १३ ॥

कल्याणशीले रमणीयगात्रे
लावण्यसौन्दर्यनिधे मनोज्ञे ।
कल्याणदे कल्पलते श्रितानां
पद्मे प्रयच्छ प्रियमब्धिकन्ये ॥ १४ ॥

प्रियमिह मम पद्मे संप्रयच्छ प्रयच्छ
तव तु चरणपद्मे संस्मरामि स्मरामि ।
गतिरिह मम नास्ति त्वत्पदाम्भोजयुग्मा-
दशरणमतिदीनं पाहि मां सिन्धुकन्ये ॥ १५ ॥

शरणमिह परत्र त्वत्पदाम्भोजयुग्मं
मम वनगिरिराजः पादकैङ्कर्यलक्ष्म्याः ।
सपदि किल ततस्त्वं लक्ष्मि पद्मायताक्षि
सकलभुवनमातः पाहि मां सिन्धुकन्ये ॥ १६ ॥

नमो लोकमातो न माता विना त्वां
रमे सिन्धुकन्ये सरोजायताक्षि ।
ततस्त्वं सुशीले प्रसीद प्रसीद
प्रियं विष्णुकान्ते प्रयच्छ प्रयच्छ ॥ १७ ॥

कृतान्मे सुशीले तनुस्वान्तवाग्भिः
 समस्तापचारान् ममाम्ब क्षमस्व ।
वनाद्रीश्वरि त्वं पयस्सिन्धुकन्ये
 सरोजाक्षि पद्मे प्रसन्नाब्जवक्त्रे ॥ १८ ॥

न माता पिता वा विना त्वां सुशीले
 न नाथः प्रियो वा विना सुन्दरेशम् ।
कलानाथवक्त्रे कटाक्षैस्ततस्त्वं
 सुधासिन्धुकन्ये रमे रक्ष मां त्वम् ॥ १९ ॥

श्रियै सुन्दरराजस्य महिष्यै नित्यमङ्गलम् ।
माणिक्यभूषणोद्दीप्रतन्वङ्ग्यै जयमङ्गलम् ॥ २० ॥

॥ इति श्रीवानाद्रिनाथदयितास्तोत्रं सम्पूर्णम् ॥

---

## २७. ॥ अथ श्रीपादसप्ततिः ॥

यत्संवाहनलोभिनः शशिकलाचूडस्य हस्ताम्बुज-
 स्पर्शेनापि च लोहितायति मुहुस्त्वत्पादपङ्केरुहम् ।
तेनैवोद्धतकासरासुरशिरश्शृङ्गाग्रसञ्चूर्णन-
 प्राचण्ड्यं तदनुष्ठितं किल तथा मुक्तिस्थलस्थे शिवे ॥ १ ॥

त्वत्पादं निजमस्तके घटयितुं के के न लोके जनाः
 किं किं नाचरयन्ति दुश्चरतपश्चर्यासपर्यादिकम् ।
मन्ये धन्यतमं तु देवि महिषं वैरस्थयैव त्वया
 यन्मूर्ध्नि स्वयमेव पातकहरं पादाम्बुजं पातितम् ॥ २ ॥

त्वत्पादाम्बुजमर्पितं क नु शिवे किन्तु त्रयीमस्तके
 नित्यं तत्त्वविचारदत्तमनसां चित्ताम्बुजाग्रेषु वा ।
किं वा तत्प्रणयप्रकोपविनमन्मारारिमौलिस्थले
 किं प्रोत्खण्डितघोरसैरिभमहादैत्येन्द्रमूर्धान्तरे ॥ ३ ॥

त्वत्पादाञ्चलरूपकल्पलतिकाबालप्रवालद्वयं
 ये तावत् कलयन्ति जातु शिरसा नम्रेण कस्रोज्ज्वलम् ।
तेषामेव हि देवि नन्दनवनक्रीडासु लभ्यं पुनः
 स्वर्मल्लीतरुणप्रवालभरणं सेवानुरूपं फलम् ॥ ४ ॥

धावल्यं परिलाल्यते पुररिपोरङ्गेन तुङ्गश्रिया
 किञ्च श्यामलिमापि कोमलतरे भात्येव गात्रे हरेः ।
तत्तादृक्पदवीं ममापि जनयेत्यस्तोकसेवारसा-
 दारुण्यं तव लीयते चरणयोः कारुण्यमूर्ते शिवे ॥ ५ ॥

आरुण्यं यदिदं त्वदीयपदयोराभाति तत् केचन
प्राहुस्तुङ्गनितम्बभारभरणक्लान्त्या किलोपागतम् ।
अन्ये माहिषमूर्धवेधगलितं रक्तद्रवं मन्वते
मन्येऽहं तु नतेषु सान्द्रमनुरागोद्गारमेवानयोः ॥ ६ ॥

प्राहुः पद्मसमाश्रयं शतधृतिं त्वत्पादपद्माश्रया-
दन्तरत्वत्पदपद्मवीक्षणवशात् कृष्णोऽपि पद्मेक्षणः ।
यत्पद्मार्चनमामनन्ति सुधियो दारिद्र्यविद्रावणं
मुक्तिक्षेत्रगते भवानि तदपि त्वत्पादपद्मार्चनम् ॥ ७ ॥

पादं ते सरसीरुहं[स्वय]मिदं यत् सेवते पद्मभूः
नूनं तस्य निवासपङ्कजवनश्रीलङ्घनाशङ्कया ।
गोविन्दोऽपि च वारिराशिदुहितुर्वासाब्जबाधाभिया
स्वस्यैवाग्रकरोद्गृहीतकमलत्राणाभिलाषेण वा ॥ ८ ॥

सेवन्ते कुलसंपदे नखमयाः शीतांशवस्त्वत्पदं
तत्पाको ननु वीक्ष्यते हि नितरामन्येषु शीतांशुषु ।
एको बालक एव मौलिमयितो यातो ललाटात्मता-
मन्यो निर्मलगण्डमण्डलदशामन्यौ तु धन्यौ गतौ ॥ ९ ॥

घोरं पादसहस्रकं प्रकटयन्नाशासु भासां पतिः
ध्वान्तं नो पुनरान्तरं शमयितुं शक्नोति शैलात्मजे ।
त्वत्पादद्वितयेन कोमलतरेणानेन चेतःस्पृशा
जन्तूनां बहिरन्तरन्धतमसं कृन्तत्यनन्तं शिवे ॥ १० ॥

सूर्येन्द्राग्निसमीरणादिसकलस्वर्वासिनामुन्मदः
सर्वाण्येव पदानि यो मथितवान् दुर्वारशौर्येषुणा ।
तं घोरं महिषासुरं निजपदेनैकेन संमृद्नती
यत्त्वं प्रत्यक्कथारततः किमपरं त्वद्वैभवं ब्रूमहे ॥ ११ ॥

एकं वामतयैव दक्षिणतयैवान्यत्पदं देहिनां
ख्यातं मुक्तिपुराधि(पान्विनि)[वासिनि] शिवे चित्रं त्वयि त्वीदृशम् ।
आनम्रेषु जनेष्वभीष्टकरणे पादावुभौ दक्षिणौ
चानम्रे तु कृतागसि स्मरहरे वामाक्षि वामावुभौ ॥ १२ ॥

आनम्रस्य पुरद्रुहः शिरसि ते पादाब्जपातश्शिवे
जीयाद्येन बभूव पङ्कजवती मौलिस्रवन्ती क्षणम् ।
किञ्चोदञ्चितबालपल्लववती जाता जटावल्लरी
लाक्षापातवशेन सान्ध्यसुषमां सान्द्रा च चान्द्री कला ॥ १३ ॥

दृष्ट्वा रात्रिषु चन्द्रपादजनितां पाथोरुहाणां व्यथां
देवि त्वं करुणाकुलेव कुरुषे तद्वैरनिर्यातनम् ।
मानानम्रमहेशमौलिवलभीवासस्य शीतत्विषो
नित्यं पङ्कजपादपातजनिता बाधा यदाधीयते ॥ १४ ॥

सम्भ्रान्तिस्तव देवि सा विजयते मानावनम्रे हरे
त्वत्पादाम्बुजविप्रहारमुदिते मन्दं समुत्थायिनि ।
लाक्षारागरसारुणे निपतितं गङ्गापयःशीकरं
दृष्ट्वा शोणितशङ्कया तरलिता कान्तं यदालम्बथाः ॥ १५ ॥

सा पादद्वितयाहतिर्जयति ते यस्यां गिरीन्द्रात्मजे
प्राचीनेन्दुयुते नखेन्दुदशके मौलिस्थलीसङ्गते ।
स्वस्यैकादशमूर्तितासमुचितामेकादशैवोडुपा-
नाबिभ्राण इवाबभौ स भगवानेकोऽपि रुद्रः स्वयम् ॥ १६ ॥

किं वैरिञ्चकरोटिकोटिनिहतं किं वा फणिग्रामणी-
निश्वासाहतिवेपितं न्विदमिति प्रेमार्द्रसंल्लापिना ।
मानस्योपशमे करेण शनकैरावृत्तता[वर्तितं]शम्भुना
भूयश्चुम्बितमम्बुजद्युतिपदं ध्यायामि माये तव ॥ १७ ॥

पूर्वं जह्नुसुता सकृन्मुररिपुश्रीपादसंक्षालना-
पुण्यादीदृशवैभवा समभवद्गोविन्दवन्द्ये शिवे ।
सेयं सम्प्रति शम्भुमौलिनिलया मानप्रसङ्गानतौ
नित्यं त्वच्चरणावसेचनभुवा पुण्येन कीदृग्भवेत् ॥ १८ ॥

पूर्वं व्याकरणप्रपञ्चनविधौ लब्ध्वाप्यनेकं पदं
किं नो तृप्तिमगादगाधिपसुते शेषः फणिग्रामणीः ।
आलीनः शशिमौलिमूर्धनि चिरं प्रेमप्रकोपानतौ
लब्धुं ते पदमेकमेव कुतुकी नित्यं यतो वर्तते ॥ १९ ॥

तिष्ठन्त्यां प्रणयप्रकोपवशतो बाष्पाकुलाक्ष्यां त्वयि
श्रीकण्ठे नखदर्पणप्रतिफलद्रूपे पुरोवर्तिनि ।
पादाग्रे पतितोऽयमित्यभिहिते सख्या तवालोकनं
लोलं पादतले विभाति सहसा साकोपमालीमुखे ॥ २० ॥

कान्तालोकनलज्जया विनमिते कान्ते मुखाम्भोरुहे
यासौ भूतलपातुका नयनयोः शोभा तवाभासते ।
सा तावत्तरुणारुणाम्बुजयुगभ्रान्त्या त्वदङ्घ्रिद्वय-
प्रान्ते भाति मरन्दपानकुतुकभ्रान्तेव भृङ्गावली ॥ २१ ॥

किं ब्रूमः कुटिलात्मकोऽपि कबरीभारस्त्वदीयःशिवे
केलीविश्लथितं तनोति यदयं त्वत्पादसंस्पर्शनम् ।
तद्भूयः सुमनोगणादृतगुणस्त्वन्मौलिसंलाल्यतां
धत्ते चित्रमसौ त्वदङ्घ्रिभजनात् किं केन नो लभ्यते ॥ २२ ॥

रागद्वेषमुखा हि विभ्रमभरं नश्यन्ति[नो यान्ति] विश्वेश्वरि
त्वत्सङ्गादिति मुक्तिदेशनिलये मिथ्या जनैः कथ्यते ।
उद्यद्वेषमुदारविभ्रमधरं गात्रं दधत्या त्वया
रागो विध्रियतेऽधिकं चरणयोः शोणाम्बुजच्छाययोः ॥ २३ ॥

देवि त्वत्पदसत्परागमनिशं मौलौ समाबिभ्रतां
साधूनामपरागतैव भवतीत्याश्चर्यमास्तामिदम् ।
पादस्ते नखरप्रभावलसितो जागर्ति सोऽयं पुनः
चित्रं नाम खरप्रभावलसितो दुष्टासुरं पिष्टवान् ॥ २४ ॥

द्वित्वेन स्थितयोस्त्वदीयपदयोर्द्वैतं निरस्य स्फुटं
कैवल्यप्रतिपादने कुशलता जातेति कोऽयं क्रमः ।
किं वा युक्तिभिरत्र मुक्तिकरता व्यक्तैव ते पादयोः
मुक्ता एव हि विस्फुरन्ति विमलास्तत्त्वं हि नोऽमी नखाः ॥ २५ ॥

पादाग्रं तव कामदं सुरलताशाखाग्रमाचक्ष्महे
जाता यत्र हि बालपल्लवरुचिः स्वैरेव रागोदयैः ।
उत्सर्पन्नखमण्डलीसुषमया पुष्पालिरुत्पादिता
सञ्जातालिरुचिश्च मञ्जुलतरैर्मञ्जीरशिञ्जारवैः ॥ २६ ॥

देवीयं तव सन्नतेशमकुटस्वर्लोककल्लोलिनी-
कल्लोलाहतिभिर्विशेषविमला जीयान्नखश्रेणिका ।
यद्धावल्यमवाप्तुमात्तकुतुकास्तोयेऽन्ववस्यन्त्यमी
दीनाः फेनकणाश्च मौक्तिकगणाः शङ्खाश्च शङ्कामहे ॥ २७ ॥

माने शम्भुशिरःप्रहारचरितं नैव त्वदिच्छाकृतं
जाने देवि पदाब्जयोस्तु पुरजिन्मूर्ध्ना विरोधादिदम् ।
एते पादनखांशुबद्धकलहाः शीतांशुमन्दाकिनी
भोगीन्द्राः किल शङ्करस्य शिरसा शङ्कां विना रक्षिताः ॥ २८ ॥

देवि त्वच्चरणोज्ज्वलन्नखमणिश्रेणीषु लीनो नम-
न्नाभाति स्फटिकाचलस्फुटतटीशायीव सायंनटः ।
हंसालीनवपुः स्वयं कमलभूः क्षीराब्धिशायीव च
श्रीभर्ता मघवापि नाकसरिति ध्यायन्निवालोक्यते ॥ २९ ॥

डोलाकेलिविधौ हिमाचलशिलादेशे समभ्यागतात्
पादाग्रात्तव यानि यावकरसप्रस्यन्दनान्यम्बिके ।
तान्यद्यागतवृन्दसङ्गरभवद्रक्ताम्बुविस्फारणा-
बिन्दुक्षेपनिभानि नन्ददमरीवृन्दानि वन्दामहे ॥ ३० ॥

डोलाकेलिषु यं हिमाचलशिलालग्नं वने वासिनो
भक्त्या योगिवरास्त्रिपुण्ड्रकलिते बिम्बन्ति फालान्तरे ।
यं सिद्धिप्रमदाः समेत्य तिलकं कुर्वन्ति नत्वा मुहु-
स्तं दाक्षायणि ते कदा नु पदयोरीक्षेय लाक्षारसम् ॥ ३१ ॥

देवि त्वं मुरवैरिणः प्रणमने यत्किञ्चिदाकुञ्चय-
च्छ्रीपादाम्बुजमन्यथास्य शिरसि त्वत्पादलाक्षाञ्चिते ।
श्रीभूम्योरितरप्रणामकृतमित्यन्योऽन्यमाशङ्कया
रोषव्याकुलयोश्चिरं स भगवान् जायेत पर्याकुलः ॥ ३२ ॥

प्रागुद्वाहविधौ हिमाचलसदस्यश्माधिरोपाय य-
न्न स्प्रक्ष्यामि वियद्धुनीमिति पुनः सत्यं विधातुं च यत् ।
दैत्योत्पेषणसाहसेऽपि रचिते संवाहनार्थं च यत्
तत्पादग्रहणत्रयं विजयते शर्वेण शर्वाणि ते ॥ ३३ ॥

सुन्दरते किल देवि रागकलहे पादप्रहारोत्सवं
लब्धुं काङ्क्षितवानुपायमिह खल्वज्ञो न विज्ञातवान् ।
यद्यायोत्स्यति घोरमाहिषवपुर्धारी स वैरी ततः
प्राघानिष्यत मूर्ध्नि कोमलरुचा पादारविन्देन ते ॥ ३४ ॥

आनम्रे गिरिशे पदप्रहरणे दत्ते भवत्या रुषा
नाथे किं महिषोऽहमित्यभिहिते देवेन तस्मिन् क्षणे ।
आलिष्वाकलितस्मितासु पुनरप्युद्दामपुष्यद्रुषः
तन्मौलौ जयति द्वितीयमपि ते पादाब्जसन्ताडनम् ॥ ३५ ॥

पादाग्रं तव सङ्गरश्रमवशादाक्षारिलाक्षारसं
विन्यस्तं मृगनायकोपरि चिरं जीयादगेन्द्रात्मजे ।
यत्कान्त्यैव च लोहितो मृगपतिर्दैत्यप्रहारोद्गल-
द्रक्ताम्भःकणिका वहन्नपि तथा नामानि वैमानिकैः ॥ ३६ ॥

नैवालिम्प निलिम्पमूर्धसु न वा सिंहोपरि त्यज्यतां
मा चेदं महिषस्य मूर्ध्नि रभसादालिप्य लोलुप्यताम् ।
पत्युर्मौलिनदीजले परमिदं संक्षालनीयं त्वये-
त्यालीकेलिगिरो जयन्ति गिरिजे त्वत्पादलाक्षार्पणे ॥ ३७ ॥

नत्वैव प्रथमं त्वदङ्घ्रिकमलं तौ पुष्पवन्तावुभौ
त्रैलोक्यं महसाभिभूय चरतो व्योमान्तरप्रान्तरे।
नाथे तौ कथमन्यथा परिगलल्लाक्षारसक्षालितौ
वीक्षेतेद्दशशोणबिम्बमुदयारम्भे[वीक्ष्येते भृशशोणबिंबसहितौ कल्ये]प्रियंभावुकौ॥

त्रैलोक्यं वशयन्ति पापपटलीमुच्चारयन्त्युच्चकैः
विद्वेषं जनयन्त्यधर्मविषये प्रस्कन्दयन्त्यापदम्।
आकर्षन्त्यभिवाञ्छितानि महिषस्ववैरिणो मारणा-
च्चित्रं त्वत्पदविन्दुचूर्णनिवहाः षट्कर्मणां साधकाः॥ ३९॥

किं कल्पद्रुमपञ्चकं प्रणमतामाकाङ्क्षितापादने
किं पञ्चायुधबाणपञ्चकमिदं मारारिसंमोहने।
सूक्ष्मा किञ्चन पञ्चभूतवपुषो विश्वस्य किं कारणं
त्वत्पादाङ्गुलिपञ्चकात्मकमिदं किं भाति शम्भोः प्रिये॥ ४०॥

डोलाकेलिषु दूरदूरगमने प्रेङ्खोलनाविभ्रमे
मेदिन्यामनिपातितं जयति ते नाथे पदाम्भोरुहम्।
भक्त्या सन्नमतां त्वदाननगलद्गानामृतं मूर्छया
भूपृष्ठे[पृष्ठे]चिरशायिनां दिविषदामाघट्टनात् साध्वसात्॥ ४१॥

मञ्जीरप्रसरन्मसारसुषमारूपा कलिन्दात्मजा
स्वच्छच्छायनखांशुसञ्चयमयी गङ्गा च सङ्गामुका।
शोणः पादरुचां चयश्च मिलितो येन त्वदग्रे ततो
मज्जन्ती वनिपन्ति[मज्जन्तो निपतन्ति]तत्र मुनयः सर्वे विशिष्टाङ्गने॥

मञ्जीरार्पितशक्रनीलशकलश्रीचञ्चलीकाञ्चितं
रञ्जद्रेणुविभूषितं परमहंसालीभिरासेवितम्।
त्वत्पादाग्रसरोजमङ्गुलिदलच्छायाभिराभासुरं
विष्वग्रोचिनखांशुजालपयसि स्वच्छे समुच्छोभते॥ ४३॥

मञ्जीरस्वनमञ्जुविष्किररवे तत्सङ्गिनीलोत्पल-
च्छायारूपतमोलवे नखमिषादक्षीणताराङ्गणे।
सन्ध्यारागनिभस्वकान्तिपटले त्वत्पादमूलात्मक-
प्रत्यूषोपगमे हि देवि लभते लोकः प्रबोधोदयम्॥ ४४॥

विद्यामुक्तिरमावधूषु नितरां कामातुरा मानवा-
स्तत्रास्त्वन्नखकान्तिचन्दनरसैरालिप्य गात्रं निजम्।
त्वत्पादाब्जरुचिप्रवालनिचिते भूमीतले शेरते
नित्यं देवि भवत्कृपाप्रियसखीविश्वासतः केवलम्॥ ४५॥

मञ्जीरक्कणितैः क्षिपन्निव मुहुः श्रीनन्नखांशूद्गमैः
दैत्येन्द्रं प्रहसन्निवारुणरुचा रूष्यन्निवास्रैर्भृशम् ।
धीरायां त्वयि निर्विकारमनसि त्वत्पाद एव स्फुटं
पुष्णन् वैरिविकारमेष महिषध्वंसी परित्रायताम् ।। ४६ ।।

क्षिप्रं देवि शिरस्पदेन महिषं पिष्ट्वा ततोऽधस्पदं
दित्सन्त्यां त्वयि कण्ठभञ्जनभिया कण्ठीरवे विद्रुते ।
मेदिन्यामपि भीतिकम्पिततनौ प्रेमत्वराशालिना
शर्वेणैव निजाङ्कसीम्नि निहितं पादद्वयं ते जयेत् ।। ४७ ।।

पूर्वं देवि पदाम्बुजेन महिषप्रध्वंसिनाभ्यासतः
पश्चात्कुत्सितशुम्भदैत्यविजयोऽप्येवं कृतः किं त्वया ।
नो चेद्धन्ति कथं कुसुम्भविजयी पादाग्रदेशोऽयमि-
त्यालापे गिरिशस्य तद्विजयते मन्दस्मितं देवि ते ।। ४८ ।।

बिभ्राणेन मनोज्ञयावकरसं मञ्जुध्वनिं नूपुरं
श्लेषालङ्कृतिशालिना नखमणीजातप्रसादश्रिया ।
एकेनैव पदेन देवि महिषध्वंसे महीयस्तर-
श्लोकोऽयं रचितस्त्वयेति विबुधाः संश्लाघनां कुर्वते ।। ४९ ।।

त्वं शम्भोर्महिषी भवस्यगसुते तेनोपहासाय ते
दैत्योऽयं महिषीभवन्नुपगतः सोऽयं कथं क्षम्यते ।
इत्थं नूपुरनिस्वनैरिव वदन् पादस्त्वदीयो रुषा
शस्त्रप्रग्रहणात् पुरैव महिषं निघ्नन् परित्रायताम् ।। ५० ।।

देव्या पङ्कशयोद्यतोऽपि महिषच्छद्मा महान् कण्टकः
पादेनाहत इत्युदूढहसितं सख्या समावेदिते ।
सद्यः कण्टकशालिना करतलेनासाद्य पादाम्बुजं
गृह्णन्नार्तिविनोदनाय गिरिशो जीयात्प्रियस्ते शिवे ।। ५१ ।।

त्वत्पादाम्बुजपल्लवैरगसुते देवि स्वयं पञ्चभिः
पञ्चत्वं गमितो महासुर इति स्वात्मानुरूपं कृतम् ।
एतैरेव नतो जनस्त्रिदशतां नीतो महेशः पुनः
लक्षत्वं गमितः प्रसूनधनुषो विस्मापनं तत् द्वयम् ।। ५२ ।।

ब्राह्मं माघवनं च वाहनमहो मन्दैर्गतैर्निन्दितं
धावल्येन नखत्विषां विहसितो वाहोऽपि माहेश्वरः ।
इत्थं वाहनवैरितां भजति ते पादस्ततो मन्महे
कात्यायन्यमुना न्यघानि महिषः कातान्तवाहभ्रमात् ।। ५३ ।।

सीमन्तप्रकरे सुरेन्द्रसुदृशां सिन्दूररेखात्मना
माणिक्यद्युतिसंज्ञयैव मकुटीकोटीषु दैत्यद्रुहाम् ।
शम्भोर्मूर्ध्नि जटाघटारुणरुचिव्याजेन पादप्रभै-
वैका ते परिणाममेति करुणामूर्ते गिरीन्द्रात्मजे ॥ ५४ ॥

नो केशः परमाश्रयः सुमनसां पादाब्जरेणुश्च ते
नो मन्दं रसितं परं स्मितरुचिर्मञ्जीरयोश्च द्वयी ।
नो बाहुः कलहंसमेत्य जयति त्वद्यानलीलाप्यसौ
नो शुम्भत्तरलाक्षमाननमिदं पादाम्बुजं चाम्बिके ॥ ५५ ॥

नाथे तावकवाहसिंहचलितास्त्वत्पादमूले नता
नूनं बभ्रमुरभ्रमुप्रियमुखा दिक्कुम्भिवीराश्चिरम् ।
नो चेदेष कथं तदुन्नतशिरस्सिन्दूरसन्दोहजो
रागस्ते चरणाम्बुजे परिणमन्नद्यापि विद्योतते ॥ ५६ ॥

त्वत्पादोऽयमजाश्रितश्च रुचिरस्पर्शान्वितो योगिना-
मन्तःस्थाकृतिरूष्मभाक् च महिषप्रध्वंसनप्रक्रमे ।
एवं खल्वखिलाक्षरात्मकममुं शैलेन्द्रकन्ये कथं
भाषन्ते नतवर्गबन्धुमपवर्गालम्बनं वा जनाः ॥ ५७ ॥

उन्मीलन्नखमण्डलीहिमकणः शोणप्रभागैरिकं
बिभ्राणः परिशोभमानकटको भूयो वनैकाश्रयः ।
गायत्सिद्धवधूनिषेविततलः पादस्त्वदीयः शिवे
राजत्येष हिमाद्रिपादवदिदं युक्तं हिमाद्रेः सुते ॥ ५८ ॥

दिक्पालैर्दशभिः पृथक् पृथगयं त्वत्पादयोरर्पितो
दृश्यो भक्त्यनुराग एव दशधा शोणाङ्गुलिश्रीमिषात् ।
पादाभ्यामपि तान् प्रति प्रकटिता नूनं प्रसादाङ्कुरा
दृश्यन्ते पदकान्तिपङ्क्तिदशकव्याजेन शैलात्मजे ॥ ५९ ॥

मेघानां कुलिशस्य चाप्रतिहतं धाराः क्रमन्तां चिरं
नो दृश्यो मददानवारिविभवो नाकस्य नागस्य च ।
पुत्रोऽयं मम सैनिकाश्च दधतां नित्यं जयन्तः सुखं
त्वत्पादाम्बुजपातिनः सुरपतेरित्थं जयन्त्यर्थनाः ॥ ६० ॥

आज्यासक्तकरैर्द्विजन्मभिरहं हूयेय नो दानवैः
स्वाहारोचितमस्तु पार्श्वमनिशं तादृक् च हव्यं लभे ।
रक्षावानिति भूतिमानिति च मे शब्दप्रसिद्ध्या शिवे
नोऽपेक्ष्योऽहमिति त्वदङ्घ्रिनमने जीयासुरग्नेर्गिरः ॥ ६१ ॥

त्वद्भक्तोऽहमबुद्धिपूर्वलिखितं स्याच्चेत् क्षमेथाश्शिवे
कान्तस्ते मयि रोषवान् कुरु पुनस्तस्यार्द्रभावं शनैः ।
देवि त्वं महिषादिहन्त्रि चकितं त्रायस्व मे वाहनं
कालस्येति जयन्ति ते पदनतौ लोलस्य सत्प्रार्थनाः ॥ ६२ ॥

धर्माचारपरोऽहमित्यपमतो रक्षोभिरेकान्वयै-
र्मह्यं वेदविनिन्दितां दिशमदुर्जातिद्विषश्चामराः ।
दैवादित्युभयच्युतो विशरणो रक्ष्योऽहमित्यादयः
त्वत्पादप्रणतौ जयन्ति निरृतेरित्याकुलाः प्रार्थनाः ॥ ६३ ॥

मत्पुत्र्या मम वा मुकुन्दगृहताभाग्यं न संक्षीयतात्
माहं पायिषि कुम्भजेन मुनिना कल्पान्तसूर्येण वा ।
द्वेधा मे सुरवाहिनीदयितता साधु त्वया रक्ष्यतां
त्वत्पादाम्बुजपातिनो जलपतेरित्थं जयन्त्यर्थनाः ॥ ६४ ॥

विश्वप्राणमयी त्वमेव मम तु प्राहुर्जगत्प्राणतां
सर्वस्यापि सदागतिर्हि भवती मामेवमाहुर्जनाः ।
लज्जापादकमीदृशं जननि नः किं कुर्महे पाहि मा-
मित्येवं पवनस्य ते पदनतौ वाचो जयन्त्याकुलाः ॥ ६५ ॥

शङ्खोल्लासिगलोज्ज्वले समकरे पद्मेन कुन्दस्मिते
पादाग्राहतकच्छपे मुखमहापद्मे मुकुन्दाश्रिते ।
इत्यस्मन्निधिगात्रि नीलनयने चर्चात्मिके पाहि मा-
मित्यापादनतिः शिवे विजयते सख्युः कुबेरस्य ते ॥ ६६ ॥

स[म]न्नामेषु भवत्पदाम्बुजनखच्छायां जटासङ्गिनीं
गङ्गेत्यालिजना वदन्ति वितथं मा भून्मुधा कोपिनी ।
दृष्टिर्मय्युपनीयतां परुषमप्येकं वचो दीयता-
मीशानस्य भवानि ते पदनताविथं जयन्त्यर्थनाः ॥ ६७ ॥

नाभीतोऽभवमादितस्तव बलात्पश्चादभीतोऽस्म्यहं
त्र्यक्षेण त्रिमुखीकृतोऽपि चतुरास्योऽहं तवैव स्तवैः ।
त्वं विश्वात्मतयोपजन्य न पुनःस्रष्टारमाख्याहि मा-
मित्थं देवि जयन्ति ते पदनतौ वाणीपतेः प्रार्थनाः ॥ ६८ ॥

आशीरस्ति मुखे विलम्बयति मां भूयोऽपि चाशीस्पृहा
भोगाः सन्ति सहस्रधा पुनरहं भोगान् कथं प्रार्थये ।
शेषोऽहं स्पृहयाम्यशेषसुखमित्येतच्च हासास्पदं
नाथे चिन्तय सर्वमित्यहिपतेस्त्वत्पादपातो जयेत् ॥ ६९ ॥

पार्वत्याः पदमत्र दृश्यमिति वा पादेभवत्वेन वा
साधुत्त्वात्तदुपास्तये हिततया पद्यान्यमूनि स्फुटम् ।
सैषा मुक्तिपुरीगिरीन्द्रतनयातोषाय नारायणे-
नाबद्धा खलु सत्पतिर्दिशतु वः कल्याणहल्लोहलम् ॥ ७० ॥

दक्षाधःकरपल्लवे लसदसिं दक्षोर्ध्वके शूलिनीं
वामोर्ध्वे फलकोज्ज्वलां कटितटिन्यस्तान्यहस्ताम्बुजाम् ।
शूलाग्राहतकासरासुरशिरोनिष्ठां प्रहृष्टां सुरैः
जुष्टामिष्टफलप्रदां भगवतीं मुक्तिस्थलस्थां भजे ॥ ७१ ॥

॥ इति श्रीनारायणविरचिता श्रीपादसप्ततिः समाप्ता ॥

---

## २८. ॥ अथ श्रीपार्वतीमानसस्तोत्रम् ॥

कल्लोलोल्लसितामृताब्धिलहरीमध्ये विराजन्मणि-
द्वीपे कल्पकवाटिकापरिवृते कादम्बवाप्युज्ज्वले
रत्नस्तम्भसहस्रनिर्मितसभामध्ये विमानोत्तमे
चिन्तारत्नविनिर्मितं जननि ते सिंहासनं भावये ॥ १ ॥

एणाङ्कानलभानुमण्डललसच्छ्रीचक्रमध्यस्थितां
बालार्कद्युतिभासुरां करतलैः पाशाङ्कुशौ बिभ्रतीम् ।
चापं बाणमपि प्रसन्नवदनां कौसुम्भवर्णांशुकां
तां त्वां चन्द्रकलावतंसमकुटां चारुस्मितां भावये ॥ २ ॥

ईशानादिपदं शिवैकफलकं रत्नासनं ते शुभं
पाद्यं चन्दनकुङ्कुमादिभरितैरर्घ्यं सुरत्नाक्षतैः ।
शुद्धैराचमनीयकं तव जलैर्भक्त्या मया कल्पितं
कारुण्यामृतवारिधे तदखिलं सन्तुष्टये कल्पताम् ॥ ३ ॥

लक्ष्ये योगिजनस्य रक्षितजगज्जाले विशालेक्षणे
प्रालेयाम्बुपटीरकुङ्कुमलसत्कर्पूरमिश्रोदकैः ।
गोक्षीरैरपि नालिकेरसलिलैः शुद्धोदकैर्मन्त्रितैः
स्नानं देवि विधेहि मङ्गलकरैर्गाङ्गेयकुम्भोद्धृतैः ॥ ४ ॥

ह्रीङ्काराङ्कितमन्त्रलक्षिततनो हेमाचलात्सञ्चितै-
रत्नैरुज्ज्वलमुत्तरीयसहितं कौसुम्भवर्णांशुकम् ।
मुक्तासन्ततं[त]यज्ञसूत्रममलं सौवर्णतन्तूद्भवं
दत्तं देवि धिया मया तदखिलं सन्तुष्टये कल्पताम् ॥ ५ ॥

हंसैरप्यतिलोभनीयगमने हारावलीमुज्ज्वलां
हिन्तालद्युतिहीरपूरिततरे हेमाङ्गदे कङ्कणे ।
मञ्जीरे मणिकुण्डले मकुटमप्यर्धेन्दुचूडामणिं
नासामौक्तिकमङ्गुलीयकटकान् काञ्चीमपि स्वीकुरु ॥ ६ ॥

सर्वाङ्गे घनसारकुङ्कुमघनश्रीगन्धपङ्काङ्कितं
कस्तूरीतिलकं च फालफलके गोरोचनापत्रके ।
गण्डादर्शनमण्डले नयनयोर्दिव्याञ्जनं तेऽञ्चितं
कण्ठाब्जे मृगनाभिपङ्कममलं त्वत्प्रीतये कल्पताम् ॥ ७ ॥

कल्हारोत्पलमल्लिकामरुवकैः सौवर्णपङ्केरुहै-
र्जातीचम्पकमालतीवकुलकैर्मन्दारकुन्दादिभिः ।
केतक्या करवीरकैर्बहुविधैः कृत्वा स्रजो मालिकां
सङ्कल्पेन समर्पयामि वरदे त्वत्प्रीतये कल्पताम् ॥ ८ ॥

हन्तारं मदनस्य नन्दयसि यैरङ्गैरनङ्गोज्ज्वले
यैर्भृङ्गावलिनीलकुन्तलभरैर्बध्नासि तस्याशयम् ।
तानीमानि तवाम्ब कोमलतराण्यामोदलीलागृहा-
ण्यामोदाय दशाङ्गगुग्गुलुघृतैर्धूपैरहं धूपये ॥ ९ ॥

लक्ष्मीरुज्ज्वलयामि रत्ननिवहैर्भादन्तुरे मन्दिरे
मालारूपविलम्बितैर्मणिमयैः स्तम्भेषु सम्भावितैः ।
रत्नैर्हाटकपुत्रिकाकरगतैर्गव्यैर्घृतैर्वर्तिभिः
दिव्यैर्दीपगणैर्धिया गिरिसुते त्वत्प्रीतये कल्पताम् ॥ १० ॥

ह्रीङ्कारेश्वरि तप्तहाटककृतस्थालीसहस्रैर्भृतं
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदं तव ।
दुग्धान्नं मधुशर्करादधियुतं माणिक्यपात्रे स्थितं
माषापूपसहस्रमम्ब सफलं नैवेद्यमावेदये ॥ ११ ॥

सच्छायैर्वरकेतकीदलरुचा ताम्बूलवल्लीदलैः
पूगैर्भूरिगुणैः सुगन्धिमधुरैः कर्पूरक[ख]ण्डोज्ज्वलैः ।
मुक्तापूर्णविराजितैर्बहुविधैर्वक्त्राम्बुजामोदनैः
पूर्णा रत्नकलाचिका तव मुदे न्यस्ता पुरस्तादुमे ॥ १२ ॥

कन्याभिः कमनीयकान्तिभिरलङ्कारामलाभिःसदा
पात्रीमौक्तिकचित्रवर्तिविलसत्कर्पूरदीपालिभिः ।
तत्तत्तालमृदङ्गनादसहितं नृत्यत्पदाम्भोरुहं
मन्त्राराधनपूर्वकं सुनिहितं नीराजनं गृह्यताम् ॥ १३ ॥

लक्ष्मीमौक्तिकलक्षकल्पितसितच्छत्रं नु धत्ते सदा
हीन्द्राणी च रतिश्च चामरवरौ धत्ते स्वयं भारती ।
वीणामेणविलोचनाः सुमनसां नृत्यन्ति सद्रागव-
द्भावैरिङ्गितसाक्षिकैः स्फुटलसन्म [मा]तस्तदालोक्यताम् ॥ १४ ॥

ह्रीङ्कारत्रयसंपुटेन मनुनोपास्ये त्रयीमौलिभि-
र्वाक्यैर्लक्ष्यतनो तव स्तुतिविधौ को वा क्षमेताम्बिके ।
संल्लापाः स्तुतयः प्रदक्षिणशतं सञ्चार एवास्तु मे
संवेशो नमनासहस्रमखिलं त्वत्प्रीतये कल्पताम् ॥ १५ ॥

श्रीमन्त्राक्षरमालया गिरिसुतां यः पूजयेच्चेतसा
सन्ध्यासु प्रतिवासरं सुनियतस्तस्यामलस्याचिरात् ।
चित्ताम्भोरुहमण्टपे गिरिसुता नृत्तं विधत्ते सदा
वाणी वक्त्रसरोरुहे जलधिजा गेहे जगन्मङ्गला ॥ १६ ॥

॥ इति श्रीपार्वतीमानसस्तोत्रं सम्पूर्णम् ॥

---

## २९. ॥ अथ श्रीसौभाग्यकवचम् ॥

कैलासशिखरे रम्ये सुखासीनं सुरार्चितम् ।
गिरीशं गिरिजा स्तुत्वा स्तोत्रैर्वेदान्तपारगैः ॥ १ ॥

प्रणम्य परया भक्त्या तमपृच्छत् कृताञ्जलिः ।
रहस्यं रक्षणं किं वा सर्वसम्पत्करं वद ॥ २ ॥

शृणु देवि प्रवक्ष्यामि यस्मात्त्वं परिपृच्छसि ।
यस्य श्रवणमात्रेण भवभीतिर्न जायते ॥ ३ ॥

एतत् सौभाग्यकवचं रहस्यातिरहस्यकम् ।
सौभाग्यकवचं देवि शृणु सौभाग्यदायकम् ॥ ४ ॥

ओं अस्य श्रीसौभाग्यकवचस्तोत्रमहामन्त्रस्य आनन्दभैरव ऋषिः । अनुष्टुप् छन्दः । श्रीसौभाग्यसुन्दरी देवता । ओं क्लीं सौः बीजम् । ह्रीं क्लीं शक्तिः । आं ह्रीं क्रों कीलकम् । मम सौभाग्यसिद्ध्यर्थे जपे विनियोगः । ऐं इत्यादि षडङ्गन्यासः ॥

॥ ध्यानम् ॥

ऐहिकपरफलदात्रीमैशानीं मनसि भावये मुद्राम् ।
ऐन्दवकलावतंसामैश्वर्यस्फुरणपरिणतिं जगताम् ॥ ५ ॥

क्लीबत्वदैत्यहन्त्रीं क्लिन्नमनस्कां महेश्वराश्लिष्टाम् ।
क्लप्तजनेष्टकर्त्रीं कल्पितलोकभ्रमां नमामि कलाम् ॥ ६ ॥

सौभाग्यदिव्यकनिधिं सौरभकचवृन्दविचलदलिमालाम् ।
सौशील्यशेषतल्पां सौन्दर्यविभामञ्जरीं कलये ॥ ७ ॥

पाशपाणि सृणिपाणि भावये चापपाणि शरपाणि दैवतम् ।
यत्प्रभापटलपाटलं जगत् पद्मरागमणिमण्डपायते ॥ ८ ॥

हेमाद्रौ हेमपीठस्थितिमखिलसुरैरीड्यमानां विराज-
त्पुष्पेष्विष्वासपाशाङ्कुशकरकमलां रक्तवेषातिरक्ताम् ।

दिक्षूद्यद्भिश्चतुर्भिर्मणिमयकलशैः पञ्चशक्त्याञ्चितैः स्व-
भ्रष्टैः क्लप्ताभिषेकां भजत भगवतीं भूतिदामन्त्ययामे ॥ ९ ॥

शिखाग्रं सततं पातु मम त्रिपुरसुन्दरी ।
शिरः कामेश्वरी नित्या तत्पूर्वं भगमालिनी ॥ १० ॥

नित्यक्लिन्नावताद्दक्षं भेरुण्डा तस्य पश्चिमम् ।
वह्निवासिन्यवेद्वामं मुखं विद्येश्वरी तथा ॥ ११ ॥

शिवदूती ललाटं मे त्वरिता तस्य दक्षिणम् ।
तद्वामपार्श्वमवतात्तथैव कुलसुन्दरी ॥ १२ ॥

नित्या पातु भ्रुवोर्मध्यं भ्रुवं नीलपताकिनी ।
वामभ्रुवं तु विजया नयनं सर्वमङ्गला ॥ १३ ॥

ज्वालामालिन्यक्षि वामं चित्रा रक्षतु पक्ष्मणी ।
दक्षश्रोत्रं महानित्या वामं पातु महोद्यमा ॥ १४ ॥

दक्षं वामं च वटुका कपोलौ क्षेत्रपालिका ।
दक्षनासापुटं दुर्गा तदन्यं पातु भारती ॥ १५ ॥

नासिकाग्रं सदा पातु महालक्ष्मीर्निरन्तरम् ।
अणिमा दक्षिणकटिं महिमा च तदन्यकम् ॥ १६ ॥

दक्षगण्डं च गरिमा लघिमा चोत्तरं तथा ।
ऊर्ध्वोष्ठकं प्राप्तिसिद्धिः प्राकाम्यमधरोष्ठकम् ॥ १७ ॥

ईशित्वमूर्ध्वदन्तांश्च ह्यधो दन्तान् वशित्वकम् ।
रससिद्धिश्च रसनां मोक्षसिद्धिश्च तालुकम् ॥ १८ ॥

तालुमूलद्वयं ब्राह्मीमाहेश्वर्यौ च रक्षताम् ।
कौमारी चिबुकं पातु तदधः पातु वैष्णवी ॥ १९ ॥

कण्ठं रक्षतु वाराही चैन्द्राणी रक्षतादधः ।
कृकाटिकां तु चामुण्डा महालक्ष्मीस्तु सर्वतः ॥ २८ ॥

सर्वसंक्षोभिणी मुद्रा स्कन्धं रक्षतु दक्षिणम् ।
तदन्यं द्राविणी मुद्रा पायादंसद्वयं क्रमात् ॥ २१ ॥

आकर्षणी वश्यमुद्रा चोन्मादिन्यथ दक्षिणम् ।
भुजं महाङ्कुशा वामं खेचरी दक्षकक्षकम् ॥ २२ ॥

वामकक्षं बीजमुद्रा योनिमुद्रा तु दक्षिणम् ।
लसत्त्रिखण्डिनी मुद्रा वामभागं प्रपालयेत् ॥ २३ ॥

श्रीकामाकर्षिणी नित्या रक्षताद्दक्षकूर्परम् ।
कूर्परं वाममवतात् सा बुद्ध्याकर्षिणी तथा ॥ २४ ॥

अहङ्काराकर्षिणी तु प्रकाण्डं पातु दक्षिणम् ।
शब्दाकर्षिणिका वामं स्पर्शाकर्षिणिकावतु ॥ २५ ॥

प्रकोष्ठं दक्षिणं पातु रूपाकर्षिणिकेतरम् ।
रसाकर्षिणिका पातु मणिबन्धं च दक्षिणम् ॥ २६ ॥

गन्धाकर्षिणिका वामं चित्ताकर्षणिकावतु ।
करभं दक्षिणं धैर्याकर्षिणी पातु वामकम् ॥ २७ ॥

स्मृत्याकर्षिण्यसौ वामं नामाकर्षिणिकेतरम् ।
बीजाकर्षिणिका पायात् सततं दक्षिणाङ्गुलीः ॥ २८ ॥

आत्माकर्षिणिका त्वन्या अमृताकर्षिणी नखान् ।
शरीराकर्षणी वामनखान् रक्षतु सर्वदा ॥ २९ ॥

अनङ्गकुसुमा शक्तिः पातु दक्षस्तनोपरि ।
अनङ्गमेखला चान्यस्तनोर्ध्वमभिरक्षतु ॥ ३० ॥

अनङ्गमदना दक्षा स्तनं तच्चूचुकं पुनः ।
रक्षतादनिशं देवी ह्यनङ्गमदमेदुरा ॥ ३१ ॥

अनङ्गरेखा वामं तु वक्षोजं तस्य चूचुकम् ।
अनङ्गवेगिनी क्रोडमनङ्गस्याङ्कुशावतु ॥ ३२ ॥

अनङ्गमालिनी पायाद्वक्षःस्थलमहर्निशम् ।
सर्वसंक्षोभिणी शक्तिर्हृत्सर्वद्राविणी परा ॥ ३३ ॥

कुक्षिं सर्वाकर्षिणी तु पातु पार्श्वं च दक्षिणम् ।
आह्लादिनी वामपार्श्वं मध्यं सम्मोहिनी चिरम् ॥ ३४ ॥

सा सर्वस्तम्भिनी पृष्ठं नाभिं वै सर्वजृम्भिणी ।
वशङ्करी वस्तिदेशं सर्वसंस्तम्भिनी कटिम् ।। ३५ ।।

सा तु सर्वोन्मादिनी मे पायाज्जघनमण्डलम् ।
सर्वार्थसाधिनी शक्तिः नितम्बं रक्षतान्मम ।। ३६ ।।

दक्षस्फिचं सदा पातु सर्वसम्पत्तिपूरणी ।
सर्वमन्त्रमयी शक्तिः पातु वामस्फिचं मम ।। ३७ ।।

पायात् कुकुन्दरद्वन्द्वं सर्वद्वन्द्वक्षयङ्करी ।
सर्वसिद्धिप्रदा देवी पातु दक्षिणवङ्क्षणम् ।। ३८ ।।

सर्वसम्पत्प्रदा देवी पातु मे वामवङ्क्षणम् ।
सर्वप्रियङ्करी देवी गुह्यं रक्षतु मे सदा ।। ३९ ।।

मेढ्रं रक्षतु मे देवी सर्वमङ्गलकारिणी ।
सर्वकामप्रदा देवी पातु मुष्कं तु दक्षिणम् ।। ४० ।।

पायात्तदन्यमुष्कं तु सर्वदुःखविमोचनी ।
सर्वमृत्युप्रशमनी देवी पातु गुदं मम ।। ४१ ।।

पातु देवी गुह्यमध्यं सर्वविघ्ननिवारिणी ।
सर्वाङ्गसुन्दरी देवी रक्षतादक्षसक्थिकम् ।। ४२ ।।

वामसक्थितलं पायात् सर्वसौभाग्यदायिनी ।
अष्ठीवं मम सर्वज्ञा देवी रक्षतु दक्षिणम् ।। ४३ ।।

वामाष्ठीवं सर्वशक्तिः देवी पातु युगं मम ।
सर्वैश्वर्यप्रदा देवी दक्षजानुं सदावतु ।। ४४ ।।

सर्वज्ञानमयी देवी जानुमन्यं ममावतात् ।
अव्याद्देवी दक्षजङ्घां सर्वव्याधिविनाशिनी ।। ४५ ।।

तदन्यां पातु देवी सा सर्वाधारस्वरूपिणी ।
सर्वपापहरा देवी गुल्फं रक्षतु दक्षिणम् ।। ४६ ।।

सर्वानन्दमयी देवी वामगुल्फं सदावतु ।
पार्ष्णिं मे दक्षिणं पायात् सर्वरक्षास्वरूपिणी ।। ४७ ।।

अव्यात् सव्यं सदा पार्ष्णिं सर्वेप्सितफलप्रदा ।
दक्षाङ्घ्रिपार्श्वं वशिनी पूर्वं[वामं]वाग्देवता मम ।। ४८ ।।

सर्वं कामेश्वरी पूर्वं[चोर्ध्व]मधो वाग्देवता मम ।
मेदिनी प्रपदं पातु विमला दक्षिणेतरे ।। ४९ ।।

अङ्गुलीररुणा पातु दक्षपादनखोज्ज्वला: ।
तदन्या जयिनी पातु सदा वाग्देवता मम ॥ ५० ॥

वामपादतलं पायात् कौलिनी देवता मम ।
कुर्वन्तु जृम्भणा बाणा: त्रैलोक्याकर्षणं मम ॥ ५१ ॥

मोहं संहरतादिक्षुकोदण्डं भृङ्गमौर्विकम् ।
करोतु सततं पाशो वशीकरणमद्भुतम् ॥ ५२ ॥

विदध्यादङ्कुशं नित्यं स्तम्भनं शत्रुसङ्कटे ।
पीठं मे कामरूपाख्यं पातु कामान्तिकं मन: ॥ ५३ ॥

पूर्णं पूर्णगिरे: पीठं कान्ति मे जनयेत् सदा ।
जालन्ध्रमन्यजालन्ध्रपीठं रक्षतु मे सदा ॥ ५४ ॥

सायुज्ये नियतां प्रज्ञां श्रीपीठं श्रीकरं मम ।
कामेश्वरीत्वात्मतत्त्वं रक्षेद्वज्रेश्वरी तथा ॥ ५५ ॥

विद्यातत्त्वं शैवतत्त्वं पायाच्छ्रीभगमालिनी ।
कामश्चिद्यान्महाशत्रूनमृतार्णवमानसम् ॥ ५६ ॥

क्रोधं क्रोधापहा हन्यान्मन्युं पैताम्बुजासनम् ।
लोभं चिदासनं हन्याद्देव्यात्मामृतरूपभाक् ॥ ५७ ॥

मोहं संहरताच्चक्रं मदन्मन्त्रासनं मम ।
मात्सर्यं नाशयेन्नित्यं मम साध्यासनं तथा ॥ ५८ ॥

आधारं त्रिपुरा रक्षेत् स्वाधिष्ठानं पुरेश्वरी ।
मणिपूरं मणिद्योता पायात्त्रिपुरसुन्दरी ॥ ५९ ॥

अव्यादनाहतं भव्या नित्यं त्रिपुरवासिनी ।
विशुद्धिं त्रिपुरा श्रीश्च आज्ञां त्रिपुरमालिनी ॥ ६० ॥

इडां मे त्रिपुरा सिद्धा त्रिपुरा चापि पिङ्गलां ।
सुषुम्नां पातु मे नित्या पायात्त्रिपुरभैरवी ॥ ६१ ॥

त्रैलोक्यमोहनं चक्रं रोमकूपांश्च रक्षतु ।
सर्वाशापूरकं चक्रं सप्त धातूंश्च रक्षतु ।
सर्वसंक्षोभणं चक्रं प्राणाद्यं वायुपञ्चकम् ॥ ६२ ॥

सौभाग्यदायकं चक्रं नागाद्यनिलपञ्चकम् ।
सर्वार्थसाधकं चक्रं कारणानां चतुष्टयम् ॥ ६३ ॥

सर्वरक्षाकरं चक्रं रक्षतान्मे गुणत्रयम् ।
सर्वरोगहरं चक्रं पायात् पुर्यष्टकं मम ॥ ६४ ॥

सर्वसिद्धिप्रदं चक्रमव्यान्मे कोशपञ्चकम् ।
सर्वानन्दमयं चक्रं यशः कीर्तिं च रक्षतु ॥ ६५ ॥

सौन्दर्यं मन्मथा पायाद् धृतिश्चापि रतिं मम ।
प्रीतिं मे पातु या प्रीतिरूपा पातु वसन्तकः ॥ ६६ ॥

सङ्कल्पं कल्पकोद्यानं महालक्ष्मीः श्रियं मम ।
कान्तिं कपालिनीं रक्षेत् मन्दिरं मणिमण्डपः ॥ ६७ ॥

पुत्रान् शङ्खनिधिः पायाद्भार्यां पद्मनिधिस्तथा ।
मार्गे क्षेमकरी रक्षेत्मातङ्गी मकुटं तथा ॥ ६८ ॥

योगिनीप्रकटाद्यास्ता नवद्वाराणि पान्तु मे ।
भोजने मामन्नपूर्णा मातङ्गी क्रीडनेऽवतात् ॥ ६९ ॥

वने रक्षतु मां दुर्गा जाग्रती दुष्टनिग्रहे ।
त्रिधाहङ्कारनैष्ठुर्यदोषत्रयमलत्रयम् ॥ ७० ॥

डाकिन्यो योगिनीमुख्याः संहरन्तु ममानिशम् ।
इच्छाशक्तिर्गुरोर्भक्तिं पातु मे ज्ञानमात्मनि ॥ ७१ ॥

ज्ञानशक्तिः क्रियाशक्तिर्वैराग्यविषयेष्वपि ।
हृत्पद्मकर्णिकामध्ये ह्रींकारी परिरक्षतु ॥ ७२ ॥

वैखरी श्रवणं पातु मध्यमा मननं पुनः ।
योगं रक्षतु पश्यन्ती साक्षात् ज्ञानपरा मम ॥ ७३ ॥

ब्रह्माणी जाग्रतं पातु शयानं वैष्णवी तथा ।
सुषुप्तौ चण्डिका पातु तुर्या मे मोहकारिणी ॥ ७४ ॥

सदा मां भैरवी पातु जगद्भरणपण्डिता ।
चरणाम्भोरुहानन्दपरामृतरसेरिता ॥ ७५ ॥

प्लाविनी कुण्डली पूर्णा अन्तरान्तं सदावतात् ।
अष्टदिक्षु महेन्द्राद्याः सायुधाः पान्तु सर्वदा ॥ ७६ ॥

पायादूर्ध्वां दिशं ब्रह्मा विष्णुश्चक्रायुधोऽप्यधः ।
अनावृतानि स्थानानि कवचेन तु यानि मे ॥ ७७ ॥

तानि सर्वाणि रक्षन्तु शिवाद्या गुरवः सदा ।
एतत्सौभाग्यकवचं शाङ्करं यस्तु पाठयेत् ॥ ७८ ॥

त्रिसन्ध्यं यः पठेद्भक्त्या शृणुयाद्वा समाहितः ।
तस्य शीघ्रेण सिध्यन्ति सिद्धयस्त्वणिमादयः ॥ ७९ ॥

घुटिकापादुकाद्यष्टसिद्धयः सम्भवन्ति च ।
वश्यादीन्यष्टकर्माणि योगश्चाष्टाङ्गसंयुतः ॥ ८० ॥

ब्रह्मविष्णुगिरीशेन्द्रकन्दर्परतिभिः सह ।
विचरन्ते तदखिलान् सिद्धगन्धर्वसेविताः ॥ ८१ ॥

तस्य स्मरणमात्रेण ग्रहभूतपिशाचकाः ।
कीटवत् प्रपलायन्ते कूश्माण्डा भैरवादयः ॥ ८२ ॥

तस्याङ्घ्रितोयपतनात् प्रशाम्यन्ति महारुजाः ।
तत्पादकमलासक्तरजोलेशाभिर्शनात् ॥ ८३ ॥

वश्यं भवति शीघ्रेण त्रैलोक्यं सचराचरम् ।
आ[स]बालमहिला भूपाः किमु मायाविमोहिताः ॥ ८४ ॥

॥ इति वामकेश्वरतन्त्रे नित्याषोडशिकार्णवे श्रीसौभाग्यकवचं सम्पूर्णम् ॥

---

## ३०. ॥ अथ श्रीचेल्लूरपुरीशस्तवः ॥

लक्ष्मीविद्युद्विलासः प्रसृमरकरुणासारवर्ष्मप्रकर्षः
कुर्वाणो नीलकण्ठं प्रमदपरवशं चन्द्रकोद्भासमानम् ।
सच्चेतश्चातकानां सपदि विरचय [न्धारयान]न्दपूरं
दृष्टोऽयं सङ्गमाख्ये महति पुरवरे श्यामलः कोऽपि मेघः ॥ १ ॥

चित्रं जनाः शृणुत सङ्गमरङ्गभाजो
लक्ष्मीसखस्य पुरतः पुरुषोत्तमस्य ।
मध्येकुलीपिनि निमज्य भवांबुराशे-
रुद्धूतपङ्कमुदमज्जि मया किमेतत् ॥ २ ॥

कर्णायुष्यमुदञ्चयत्यहरहः [1]श्रीशम्बराध्यासिनो
बालस्याम्बुदमेचकस्य मधुरो वेणुध्वनिर्विश्रुतः ।
वृक्षान् पल्लवयन् शिलास्तरलयन्नम्भांसि च स्तम्भयन्
गोपस्त्रीकुचमण्डलीः पुलकयंस्तापत्रयं खण्डयन् ॥ ३ ॥

तेजांसि मानसे मे दृढकुचकुम्भानि दलितखुंभानि ।
विद्यात्मकानि कान्यपि विद्यन्ते कान्तितुलितविद्युन्ति ॥ ४ ॥

---

1. श्रीशम्बरम्=Triccambaram.

जननमरणक्लेशच्छेदाय जाग्रति तावके
चरणकमले मातर्हा हन्त मोहवशादहम् ।
अधनिकसदनं धावंधावं निजोदरभस्त्रिका-
भरणविधये कष्टं कष्टं भ्रमामि कियच्चिरम् ॥ ५ ॥

उत्पन्नमात्रक्षणमुक्तमाया-
स्त्रैणस्य विष्णोः स्तनपानलोभात् ।
मुधैव चुम्बन्तमुरो मुखेन
शास्तारमीडे सकलार्थसिद्ध्यै ॥ ६ ॥

यद्दोरन्तरमम्बुराशिसुकृतोन्मेषेण शृङ्गारितं
यन्नाभीकमले चरन्मधुकरो निर्मातुमीष्टे जगत् ।
यन्नेत्रद्वयमातनोति जगतां नक्तंदिवाप्रक्रमं
नावाक्षेत्रविहारिणी विजयते काचिन्महःप्राचुरी ॥ ७ ॥

शब्दब्रह्मचणं यदीय[1]तलिमं छन्दांसि यद्वाहनं
वक्षो यस्य महाम्बुराशितपसां पाकेन कल्लोलितम् ।
विश्वोत्पत्तिनिदानसूतिसदनं यन्नाभिपङ्केरुहं
सोऽयं कोऽपि मुरारिनामनि पुरे देवो दरीदृश्यते ॥ ८ ॥

प्रादुस्सन्तु पुरः पुरत्रयवधूबिब्बोकसंपद्द्रुहः
श्रीचेल्लूरपुरीनिवासरसिकास्तेजोविलासा मम ।
येषु ध्यानपथं गतेषु भविता नृणां फणी भूषणं
वामाङ्गं वनिता दिशश्च वसनं भागीरथी मालिका ॥ ९ ॥

ये ध्यायन्ति निषेदुषीमुपपटं व्याख्यानमुद्रासखीं
मूर्तिं ते मुनिमानसैकसुगमां मुग्धेन्दुचूडामणे ।
तेषामाशु विनिःसरन्ति वदनात् सङ्क्रन्दनारामभू-
मन्दारद्रुमकोरकस्रुतसुधामाधुर्यधुर्या गिरः ॥ १० ॥

उत्कूलप्रणयातिरेकमुदयद्रोमाञ्चपुञ्जं मुहुः-
प्रत्याख्यानपरैकभागवचनं चेल्लूरपुर्यामहो ।
नीवीस्पर्शविलोलदक्षिणकरव्यापाररोधक्रिया-
वैयग्र्याकुलवामपाणि शिवयोरैक्यं परिक्रीडते ॥ ११ ॥

---

1. तलिमम्=तलिप्परम्बा नाम क्षेत्रम् ।

नीहाराहार्यकन्यामृदुलभुजलतालिङ्गनोत्कण्ठकण्ठः
खण्डं बिभ्रत्किरीटे कमपि कुवलयानन्दनाडिन्धमांशुम् ।
ब्रह्मक्षेत्रे पवित्रे परिचितकरुणः पोस्फुरीत्याश्रितानां
निर्भिन्दन् मोहबन्धानकृतकवचसां निश्चितः कश्चिदर्थः ॥ १२ ॥

घोरघ्राणमुदग्रहुङ्कृति मिलद्धर्माम्बु लम्बाधरं
व्याविद्धभ्रुकुटीकठोरनिटिलं वान्तस्फुलिङ्गेक्षणम् ।
विद्युत्पाटलकेशमुग्रदशनं विष्टब्धकर्णद्वयं
वक्त्रं मृत्युभटस्य शङ्कर नहि त्वद्भक्तिमान् पश्यति ॥ १३ ॥

भजत जननीमेकां लोकत्रयस्य दयामयीं
पतत सुधियो मा मा भीमे पुनर्भववारिधौ ।
अकृतकवचोवेद्यामाद्यामपा[ङ्गित]शङ्करां
मृदितमहिषां मुक्तिक्षेत्रे मुकुन्दसहोदरीम् ॥ १४ ॥

ब्रह्मक्षेत्रेश शंभो त्वदपरममरं यद्यहं वर्णयिष्ये
कण्ठे कुण्ठप्रचारं स्खलति मम वचो जालकर्मालिदर्थम् (?)।
तुष्टूषे चेद्भवन्तं त्रिपुरहर गिरां मन्मुखाम्भोजगर्भात्
जृम्भन्ते केऽपि गुम्भा बलमथनधुनीपद्धतिस्पर्धिनीनाम् ॥ १५ ॥

भूधराधिपसुतामुखपद्मप्रभ्रमद्भ्रमरविभ्रमनेत्रः ।
बोभवीति भवभीतिविभेदी श्रीविभीतकपुरे पुरमाथी ॥ १६ ॥

योगीन्द्रमानससरोरुहषट्पदाय
शैलेन्द्रजानयनषट्पदपङ्कजाय ।
अज्ञानरूपतिमिरौघदिवाकराय
[भक्तार्तिभञ्जनपराय नमो नमस्ते] ॥ १७ ॥

मुहुर्भिन्तादिन्दुर्मकुटगृहमेधी पुररिपोः
परक्रोडक्रीडानिलयनजुषो मोहतिमिरम् ।
कुचे गौर्या हारा इव मृदुलहासा इव मुखे
नवा मल्लीमाला इव कचभरे यस्य किरणाः ॥ १८ ॥

क्वाणाः किं कङ्कणस्य त्रिपुरविजयिनो नृत्यतश्चित्तरङ्गे
किं वा तस्यैव चूडाघुमुघुमितवियद्वाहिनीवीचिरावाः ।
आहोस्विद्वक्त्रखेलत्कमलजमहिलाश्रोणिकाञ्चीनिनादा
वाचस्ते विक्रमक्ष्मावलमथन मुखाम्भोरुहान्निस्सरन्ति ॥ १९ ॥

कर्णं सावर्णमर्णोमुचममितशुचं दीनवाचं दधीचं
चिन्तालग्नं द्युरत्नं शिबिमपशिबिकं स्वर्गवीं[पङ्]गुवीर्याम्।
शश्वद्विश्राणनश्रीः शिव शिव दिविषद्द्रून् विषद्रून् विधत्ते
विश्वोत्तीर्णस्य विश्वंभरचरितनिधे विक्रमक्ष्मापते ते ॥ २० ॥

प्रक्रीडत्कार्तवीर्यार्जुनभुजविधृतोन्मुक्तसोमोद्भवाम्भ-
स्संभारक्षोभसम्भेदनचतुरवचोगुम्भगम्भीरिमश्रीः।
तुण्डीरक्षोणिखण्डादिह तव विषयेऽहिण्डतोद्दण्डसूरिः
सोऽयं ते विक्रमक्षोणिप किमु न गतः श्रोत्रियः श्रोत्रदेशम् ॥ २१ ॥

पुष्णन्नेवमहर्निशं द्विजगणान् मृष्टान्नदानक्रमैः
श्रीकण्ठक्षितिपाल जीवतु भवानाचन्द्रमातारकम्।
स्तावं स्तावममी वयं च भवतः कीर्तिं दिशं दक्षिणा-
माढौक्य प्रतियाम कैरपि दिनैः कर्तुं पुनर्दर्शनम् ॥ २२ ॥

दृष्टं मया मणिकवाटपुटान्तराले
श्रुत्यन्तचुम्बिनयनोदितकामतन्त्रम्।
मुग्धस्मिताङ्कुरविकस्वरगण्डमूल-
मुद्यन्मृगाङ्करुचिरं मुखमुत्तरायाः ॥ २३ ॥

वदनगलितलालं मातुरुत्सङ्गलोलं
तरलचिकुरजालं स्तन्यपानानुकूलम्।
निखिलभुवनमूलं चेतसा सार्वकालं
बलभिदुपलनीलं बालमालोकयामः ॥ २४ ॥

जीयासुर्जनिघर्मतप्तसुमनश्चेतःसुधावृष्टयो
मायावल्लवबालकस्य मधुरा वंशीनिनादाङ्कुराः।
ये शश्वत् स्थगयन्ति गोपसुदृशां नीरन्ध्ररोमोद्गम-
श्रेणीकञ्चुलिभिर्विमूढमनसां स्रस्तोत्तरीयान् कुचान् ॥ २५ ॥

अङ्गणे घटितरिङ्गणं चलितकिङ्किणीकृतझणज्झणं
चञ्चलालककुलाकुलं तरललोचनं जननमोचनम्।
अङ्कुरद्द्विशददन्तकुड्मलविलोभनीयवदनाम्बुजं
शंम्बरे कमपि चिन्तयामि शिशुमिन्द्रनीलमणिमेचकम् ॥ २६ ॥

आकुलाकुलविनीलकुन्तलं गोकुलानुगतिकेलिलालसम्।
आकपोलमनुलिप्तकज्जलं लोकपालकमुपैमि बालकम् ॥ २७ ॥

व्यत्यासाहितपादयापि वलितग्रीवाभिरामश्रिया
सत्यानन्दघनस्वरूपवपुषः स्थित्या जगन्मोहयन् ।
वंशारावसुधारसैरपहरन् संसारतापं सतां
उत्तंसायितबर्हभारसुभगः कंसारिरास्तां मुदे ॥ २८ ॥

चञ्चलीकरणमञ्जुकुञ्चितघनालकं व्रजनितम्बिनी-
चञ्चलीकरणकेलिदुर्ललितवेणुमुद्रितमुखाम्बुजम् ।
पिञ्छभारकृतभूषणं मधुरभाषणं दुरितमोषणं
वञ्चनाकलितगोपवेषमुररीकरोमि परपूरुषम् ॥ २९ ॥

उत्तरललोचनमुलूखलनिबद्धं
भग्नयमलार्जुनमसज्जनविदूरम् ।
जानुकृतचङ्क्रमणसङ्कुलकराब्जं
ध्यायत नमस्कुरुत गायत किशोरम् ॥ ३० ॥

...धामपि पिङ्गलां च यमिनः कृत्वा सुषुम्नापथे
यत्नाद्वातमनाहतस्रुतसुधास्वादानुसन्धायिनः (?) ।
सत्यं ज्ञानमनन्तमुत्तमगुणं ध्यायन्ति यत्तत्पदं
तद्ब्रह्मापि ननु त्वमेव निगमैर्गौरीश जेगीयसे ॥ ३१ ।

व्यक्ताव्यक्तमिदं जगत्प्रभवति त्वत्तः परं ज्योतिषः
तत्सर्वं स्वयमात्मनो महिमतः संव्याप्य संत्रायसे ।
उत्पत्तिक्रमतस्तथैव तदिदं त्वय्येव संलीयते
चेल्लूरेश्वर दुर्विगाहमहहा चित्रं चरित्रं तव ॥ ३२ ॥

नेच्छा तुच्छतरे नरेन्द्रविभवे नापि स्मरस्मेरदृ-
ग्गौराङ्गीपरिभोगकेलिषु न च स्वर्गाधिराज्योदये ।
नो तत्राप्यपवर्गकुट्टिमपरिक्रीडासु किं त्वन्वहं
सेवायै स्पृहयामि केवलमहं चेल्लूरपुर्याः प्रभोः ॥ ३३ ॥

याचे किञ्चिदिदं कृताञ्जलिपुटं चेल्लूरपुर्याः पते
स्वामिन् वारय चन्द्रशेखर कृपावारांनिधे मामकीम् ।
द्वित्रग्रामटिकाधिपत्यकलिताहंभावशुम्भन्मति-
क्षुद्रक्ष्माधवचाटुकोटिघटनादैन्यस्य दोग्ध्रीं दशाम् ॥ ३४ ॥

कण्ठग्राहिकफे स्खलद्गिरि चलद्बोधे गलन्मारुते
मीलच्चक्षुषि वेपमानहृदये काले सति प्रस्तुते ।
आरुह्य स्वयमद्रिराजसुतया साकं महाशाकरं
स्वामिन् शङ्कर सन्निधेहि कृपया चेल्लूरभूषामणे ॥ ३५ ॥

भिन्तां हृन्मौढ्यमाढ्यङ्करणमहिकुलग्रामणीदामनद्धं
मुग्धं मूर्धस्थलं ते कपिशरुचिजटामण्डनं कुण्डनाथ ।
युद्धक्रीडत्सुभद्रासहचरमहितारम्भदोस्तम्भघूर्ण-
द्गाण्डीवोद्दण्डदण्डाहतिघटितकिणग्रन्थिलं चन्द्रमौले ॥ ३६ ॥

मज्जन्तो मार्ष्टुकामा इव मदनवधूनव्यवैधव्यदाना-
दुद्भूतं पातकौघं मुकुटतटवियद्वाहिनीवारिपूरे ।
कुर्वाणा भूषणाहिव्रजफणफलके दीप्रमाणिक्यशङ्कां
पिङ्गा नेत्रस्फुलिङ्गा झटिति पशुपते भस्मयन्त्वस्मदंहः ॥ ३७ ॥

पादाङ्गुष्ठं पुरारेर्भजत नवलतापल्लवाग्रान्म्रदिष्ठं
क्रीडास्पर्शेन यस्य प्रचयितशिखरन्यञ्चिते राजताद्रौ ।
अस्तव्यस्ताग्रकेशोत्तरलदशमुखीदारुणाक्रन्दभिन्न-
ब्रह्माण्डो भूमिपृष्ठोल्लुठितभुजवनः पङ्क्तिकण्ठो जिहिण्डे ॥ ३८ ॥

आबद्धभ्रुकुटीविभङ्गमजहत्कौर्याङ्कुरं किंकरं
भो भो श्राद्धपते वृथा मम कृते मा जित्वरं तत्वरः ।
पादाब्जं परिभाति चेतसि परक्रोडेशितुर्धूर्जटेः
पूर्वं येन भवद्भुजान्तरशिलाकुट्टाकटङ्कायितम् ॥ ३९ ॥

कण्ठे कफैः कबलिते करणे सकम्पे
नेत्रे निमीलति मरुत्यपि मन्दमन्दे ।
सद्यः क्वणत्कनकनूपुरचारु मातः
प्रत्यक्षमस्तु चरणं परिपाटलं ते ॥ ४० ॥

स्फुरन्ति मम चेतसि द्युतिनिरस्तकङ्केलयो
दृगञ्चलनियन्त्रितत्रिदशवाहिनीमौलयः ।
दुरन्तदुरिताचलप्रकरभेददंभोलयः
कुसुंभरुचिराधराः कुचभरानताः केलयः ॥ ४१ ॥

मकरन्दतुन्दिलशरं मधुरिमधौरेयचारुकोदण्डम् ।
पाशसृणिपाणि किञ्चन पाशुपतं भाग्यमाविरस्तु पुरः ॥ ४२ ॥

करतलकलितेक्षुकार्मुकाणां
कमलकुलारिकलावतंसितानाम् ।
पशुपतितपसां पचेलिमानां
परिचयवानहमस्मि पाटलिम्नाम् ॥ ४३ ॥

कृत्तिधरहस्तलालितनिस्तुलकुचविजितहस्तिमस्तरुचि ।
मुक्तिपुरे निस्तिमिरं मुग्धकुरङ्गाक्षमस्ति वस्तु परम् ॥ ४४ ॥

जय जय पोर्कलिमातरुमे तरुणारुणकोटिविमानरुचे
जगदभयङ्करि शङ्करभामिनि किङ्करितामरि तुङ्गकुचे ।
भवभयकंपिनि सुंभनिसुंभनिसुंभनसंभृतचण्डतनो
त्रिभुवनपालिनि घोरकपालिनि शूलिनि खेलिनि पालय माम् ॥ ४५ ॥

समधिकदुर्मदमेदुरदारुकदानवदारुविदारविधा-
चटुलकठोरकुठारकृपाणतरालितपाटलपाणितलाम् ।
प्रणमत पोर्कलिमातरमातुरचातकजातपयोदघटां
धवलसटाकुलभासुरकेसरिकण्ठगतामविकुण्ठकृपाम् ॥ ४६ ॥

दिनमुखजृंभभृदंबुजसंभृतदंभसमृद्ध्युदरंभरिदृग-
वलनानिगुम्भितशंबरशासनतन्त्रनियन्त्रितशङ्करया ।
निलयितमस्तु मनस्तु कयाचन हस्तिपनिस्तुलमस्तजयि-
स्तन(वि)[युग]भुग्नविलग्नवलत्त्रिवलीलवलीकुलया कलया ॥ ४७ ॥

परिचरणाचरणोचितखेचरराजपुरीचरचन्द्रमुखी-
करकलचालितचामरकोरकमारुतपोतकधूतकचे ।
सपदि विजृम्भय संपदमम्ब भयं परिकम्पय किञ्च दृशा
क्षणमनुकम्पय शंभुकुटुम्बिनि तुङ्गनितम्बिनि कम्बुगले ॥ ४८ ॥

॥ इति श्रीचेल्लूरपुरीशस्तवः सम्पूर्णः ॥

---

## ॥ अथ श्रीमङ्गलाष्टकम् ॥

ब्रह्मा विष्णुर्गिरीशः सुरपतिरनलः प्रेतराड्यातुनाथः
तोयाधीशश्च वायुर्धनदगुहगणेशार्कचन्द्राश्च रुद्राः ।
विश्वादित्याश्विसाध्या वसुपितृमरुतः सिद्धविद्याध्रयक्षाः
गन्धर्वाः किन्नराश्चाखिलगगनचराः मङ्गलं मे दिशन्तु ॥ १ ॥

वाणी लक्ष्मीर्धरित्री हिमगिरितनया चण्डिका भद्रकाली
ब्राह्मयाद्या मातृसङ्घा अदितिदितिसतीत्यादयो दक्षपुत्र्यः ।
सावित्री जह्नुकन्या दिनकरतनयारुन्धती देवपत्न्यः
पौलोम्याद्यास्तथान्याः खचरयुवतयो मङ्गलं मे दिशन्तु ॥ २ ॥

मत्स्यः कूर्मो वराहो नृहरिरथ वटुर्भार्गवो रामचन्द्रः
सीरी कृष्णश्च कल्की स कपिलनरनारायणोऽत्रेयवैन्यः ।
अन्ये नानावतारा नरकविजयिनश्चक्रमुख्यायुधानि
तत्पत्न्यः तत्सुताश्चाप्यखिलहरिकला मङ्गलं मे दिशन्तु ॥ ३ ॥

बिश्वामित्रो वसिष्ठः कलशभव उचथ्योऽङ्गिराः काश्यपश्च
व्यासः कण्वो मरीचिः क्रतुभृगुपुलहो गौतमोऽत्रिः पुलस्त्यः ।
अन्ये सर्वे मुनीन्द्राः कुजबुधगुरुशुक्रार्कजाद्या ग्रहा ये
नक्षत्राणि प्रदेशाः फणिगणमनवो मङ्गलं मे दिशन्तु ॥ ४ ॥

तार्क्ष्योऽनन्तो हनूमान् बलिरपि सनकाद्याः शुको नारदश्च
प्रह्लादः पाण्डुपुत्रो नृगनलनहुषा विष्णुरातोऽम्बरीषः ।
भीष्मोऽक्रूरोद्धवोशीनरभरतहरिश्चन्द्ररुक्माङ्गदाद्याः
अन्ये सर्वे नरेन्द्राः रविशशिकुलजाः मङ्गलं मे दिशन्तु ॥ ५ ॥

आकूत्याद्याश्च तिस्रः सकलमुनिकलत्राणि दारा मनूनां
सीता कुन्ती च पाञ्चाल्यथ नलदयिता रुक्मिणी सत्यभामा ।
देवक्याद्याश्च सर्वा यदुकुलवनिता राजभार्यास्तथान्याः
गोप्यश्चारित्रयुक्ताः सकलयुवतयो मङ्गलं मे दिशन्तु ॥ ६ ॥

विप्रा गावश्च वेदाः स्मृतिरपि तुलसी पुण्यतीर्थानि विद्या
नानाशास्त्रेतिहासान्यपि सकलपुराणानि वर्णाश्रमाश्च ।
सांख्यज्ञानञ्च योगा अपि यमनियमौ सर्वकर्माणि कालाः
सर्वे धर्माश्च सत्याद्यवयवसहिता मङ्गलं मे दिशन्तु ॥ ७ ॥

लोका जीवाः समुद्राः क्षितिधरपतयो मेरुकैलासमुख्याः
कावेरीनर्मदाद्याः शुभजलसहिताः स्वर्द्रुमा दिग्गजेन्द्राः ।
मेघा ज्योतींषि नानानरपशुमृगपक्ष्यादयः प्राणिनोऽन्ये
सर्वौषध्यश्च वृक्षाः सकलतृणलता मङ्गलं मे दिशन्तु ॥ ८ ॥

भक्त्या संयुक्तचित्ताः प्रतिदिवसमिमान्मङ्गलस्तोत्रमुख्या-
नष्टौ श्लोकान् प्रभाते दिवसपरिणतौ ये च मर्त्याः पठन्ति ।
ते नित्यं पूर्णकामा इह भुवि सुखिनश्चार्थवन्तोऽपि भूत्वा
निर्मुक्ताः सर्वपापैर्वयसि च चरमे विष्णुलोकं प्रयान्ति ॥ ९ ॥

॥ इति श्रीमङ्गलाष्टकं सम्पूर्णम् ॥

॥ इति स्तोत्रार्णवः सम्पूर्णः ॥

---

## ॥ अनुबन्धः ॥

### I

॥ श्रीविष्णुस्तोत्रेषु १६७ पुटे मुद्रिते श्रीदशावतारस्तोत्रनामके
तृतीयस्तोत्रे अवशिष्टाः श्लोकाः ॥

यो भार्गवः स्वपितृसंहरणोत्थकोपः
शोभास्पदद्विशतपञ्चशकबाहु पङ्क्तिम् ।
स्वाभाविकार्य्यपरशुर्नृपमर्जुनाख्यं
धीभादिसद्गुणनिधिर्हतवान् स पातु ॥ ६ ॥

भूमावभूत् सुरगणैर्दिनराजवंशे
योऽमानन[ा]न्तगुणराशिभिरर्थ्यमानः ।
धीमान् हि गाधिजमखावनकृत् समूढ-
हेमाभमैथिलसुतः स रघूद्वहोऽव्यात् ॥ ७ ॥

जित्वाभियातमपि यो हृतराजलोकं
गत्वा मुनिं भृगुसुतं नगरीमयोध्याम् ।
भुक्त्वा विदेहसुतया विविधांश्च भोगन्
सत्त्वाश्रयो जनमनांसि गुणैर्ममन्थ ॥ ८ ॥

पुत्रार्जवासहितमध्यममातृवाक्यात्
वृत्रारिमुख्यदिविषद्गणसेव्यमानः ।
छत्रावृताननृपत्वदशां विधूय
पित्राटवीमभिययावपि यो नियुक्तः ॥ ९ ॥

हत्वा विराधमृषिपर्णकुटीः क्रमेण
गत्वा फलानि विविधानि च तत्र तत्र ।
भुक्त्वा घटोद्भवकृतानुमतिस्ततो यः
कृत्वा च पञ्चवटिकामवसन्निवासम् ॥ १० ॥

वालप्रियैश्च चमरैर्हरिणैस्तरक्षु-
कोलैः प्रचारवति वानरवारणाढ्ये ।
सालद्रुतालसुतमालतरुप्रकाण्ड-
नीलप्रभाजुषि समावसदाश्रमे यः ॥ ११ ॥

कामावलिप्तहृदया कमनीयगात्रा
रामा भवेयमिति निश्चितधीः कनिष्ठा ।
वामालिका निशिचराधिपतेर्नवाब्द-
धामानमाप किल यं सहमैथिलीकम् ॥ १२ ॥

येनानुजाथ विकृता दशकन्धरस्य
हीना गुणेन वदनावयवेषु लूना ।
श्येनामिषत्वमगमन्निहताः खराद्याः
को नाम तादृगनघेषु सुखी कृतागाः ॥ १३ ॥

यस्माटकेय [यो हाटकेय] हरिणग्रहणे धृताशा-
विस्तारमैथिलसुतापरिचोदितोऽगात् ।
अस्तारिरायततरुप्रकरं वनान्तं
शस्तासिबाणकवचोत्तमचापयुक्तः ॥ १४ ॥

... ... ... ... ... ...
वातावधूतकदलीमिव वेपमानाम् ।
स्फीतामुरोजयुगलेद्धयदीयपत्नीं
सीतां जहार दशकन्धरनामधेयः ॥ १५ ॥

युक्तोऽथ गृध्रनृपतिर्गुरुणा बलेन
शक्तोऽपि संयति निशाचरनाथबाणैः ।
कृत्तो निहत्य रथवाजिकुलं तदीयं
मुक्तोऽभवत्परमया कृपया च यस्य ॥ १६ ॥

संपातिपूर्वजवपुर्विधिनैव दग्ध्वा
शंपावियुक्तजलदप्रतिमो वने यः ।
कुं पावनीं चरणसञ्चरणैर्वित[न्वन्]
पम्पातटे शबरिकाश्रममाससाद ॥ १७ ॥

तत्रार्चितो विधिवदेव तया समीर-
पुत्रान्वितः स्वपदद्स्तनयस्य भानोः ।
वित्रासितस्य सुरलोकपतेः सुतेन
मित्रायते स्म किल यः सहुताशसाक्षिः ॥ १८ ॥

सालद्रुसप्तकमहो विनिहत्य सौम्य-
शीलः प्रधूततरदुन्दुभियातुकायः ।
खेलत्प्रमत्तगजसिंहगतिर्निनाय
कालक्षयं प्रबलवालिनमाहवे यः ॥ १९ ॥

राज्येऽभिषिच्य सुहृदं कपिभूमिपालं
पूज्येऽथ वर्षसमयं गमयांबभूव ।
प्राज्ये च माल्यवति योगिगणैर्मृगाणां
राज्ये भमुख्यवति सन्ततकन्दरे यः ॥ २० ॥

विद्योतमानमचिरप्रभयाभ्रवृन्दं
प्रद्योतनांशुपटलस्य तिरोधिहेतुः ।
सद्यो मनोविकृतिमावहति स्म दारैः
नद्योऽपि वारिनिधिगा रहितस्य यस्य ॥ २१ ॥

केकारवाश्च शिखिनां गिरिनिर्झराम्भ-
स्सेकामलायतशिलातलनृत्तभाजाम् ।
मूकासितेतरपतत्त्रविशासनार्थाः
शोकाग्निदीपनकराः स्म भवन्ति यस्य ॥ २२ ॥

काले पयोधरकदम्बवति त्रियामा-
नीले तिरोहिततुषारघृणिप्रचारे ।
शैले मनोजनिरुजा वसतो जजृम्भे
वेलेव यस्य हृदये जलधेर्हिमांशोः ॥ २३ ॥

तापेन मैथिलसुताविरहोद्भवेन
स्वापेति[ऽपि] येन सहजः प्रहितो यु[ऽभि]तेन ।
कोपेन वानरपतेर्नगरीं सगन्धां
धूपेन सागरुपटीरभवेन भेजे ॥ २४ ॥

धीराभियातरजनीचरभीतिकारि-
वीरायितस्य वरचापगुणारवेण ।
वाराकरध्वनिजितावरजस्य यस्य
तारापतिर्भृशमभूदुपजातकम्पः ॥ २५ ॥

आगादधीरमनसा प्रहिता धवेन
वेगादकोपजननादनुजस्य यस्य ।
सा गाढविह्वलदृशा सविधं मदेन
नागाभिरामगमना कपिराजपत्नी ॥ २६ ॥

नानाकृतीः कपिमुखाः स्ववचोनियाम्याः
सेना अशेषगिरिकानननित्यवासाः ।
आनाययत् प्रशमयन्नतिवेलकोपं
दीनावने कपिपतिर्निरतस्य यस्य ॥ २७ ॥

पाशायुधाहिरिपुकालधनाधिपाना-
माशासु वानरवरानहिनोत् कपीन्द्रः ।
साशाभरस्य पृथिवीदुहितर्यशेष-
देशावलोकनपटून् प्रमुदे च यस्य ॥ २८ ॥

कान्तारभूमिषु विचित्य सुतोऽञ्जनायाः
शान्ताकृतिः सह च वालिसुतेन यस्य ।
कान्तामचिन्त्यमहिमामुपलभ्यदुःख-
ध्वान्ताभिभूतहृदवाप समुद्रतीरम् ॥ २९ ॥

वाराकरावृतमहीध्रगतान् यदीय-
दारानवेत्य हनुमानथ गृध्रवाचा ।
वीरायितेन तुलया रहितो बभूव
धीराग्रणीस्तदवलोकनजातवाञ्छः ॥ ३० ॥

शैले यदङ्गुलिविभूषणभृन्महेन्द्रे
शैलेयगन्धभरितेऽभिललाष तिष्ठन् ।
शैलेशतुल्यविभवे तरणं पयोधेः
शैलेशसन्निभतनुर्मरुतः कुमारः ॥ ३१ ॥

स्थित्वा समीरतनयः पृथिवीधरेऽस्मिन्
नत्वा सलक्ष्मणकपिप्रवराय यस्मै (कपीशमहीसुतं यम्) ।
कृत्वा पयोधितरणेऽभिहरिं प्रतिज्ञां
हित्वा जवेन तमसौ गिरिमुत्पपात ॥ ३२ ॥

मीनादिसत्त्वनिबिडोदधिजृम्भमाणं
मैनाकमश्रमतया समतीत्य दूतः ।
वीनामधीशमपि यस्य जयञ्जवेन
नानामहीध्रगणमाशु तमुत्ततार ॥ ३३ ॥

सन्ताडनेन रजनीचरनाथपुर्याः
सन्तापमुग्रमुपपाद्य सुतोऽञ्जनायाः ।
हन्तास्य वेश्मनि विचित्य यदीयपत्नीं
दन्तालिनिर्जितविधुं तददर्शनार्तः ॥ ३४ ॥

हृद्ये निशाचरकुलाधिपतेरपास्ता-
वद्ये त्वशोकविपिने महिषी यदीया ।
यद्येन भङ्गमुपयास्यति तेन नुन्ना-
विद्येन वायुजनुषा ददृशे स्वभाग्यात् ॥ ३५ ॥

भर्तारमेव सततं हृदि चिन्तयन्ती
　हर्तारमुग्रखरमुख्यनिशाचराणाम् ।
कर्तारमार्यमुनिमुख्यकुलाभिवृद्धेः
　स्मर्तारमप्यनुकलं निजविग्रहस्य ॥ ३६ ॥

प्रज्ञाघनेन हरिणा मरुदुद्भवेन
　विज्ञापिता दशरथोदयमुख्यवृत्तम् ।
अज्ञानसञ्चयहरेण यदीयपत्नी
　विज्ञानिवर्गमहितेन पटुत्वभाजा ॥ ३७ ॥

वातात्मजस्य वचनेन सुधासमेन
　जाता सविश्वसनहृत् कमला हि यस्य ।
सीता प्रवृत्तिमुपलभ्य च सप्रकारां
　याता प्रमोदमतुलं प्रमदोत्तमाभूत् ॥ ३८ ॥

मोदावहं जनकभूमिपतेः सुतायै
　खेदापहं च मणिशोभि यदङ्गुलीयम् ।
प्रादादमेयमहिमा मरुदात्मजोऽस्यै
　पादारविन्दयुगलं प्रणनाम यस्याः ॥ ३९ ॥

तेनातिशायिमुदमावहता पुमर्थ-
　दानानुरागिणि यदीयकरे स्थितेन ।
लीनाखिलासुखचया मिथिलेशपुत्री
　येनाभवद्गुणवता सहितेव हृष्टा ॥ ४० ॥

कृत्वा बलप्रकटनं यदि मां नयेत्तं
　हत्वा निशाचरपतिं सदृशं तदस्य ।
उक्त्वा मरुज्जमहिनोदिति यं प्रकृत्य
　नत्वा पदाब्जयुगलं शिरसा च यस्य ॥ ४१ ॥

भूषा निशाचरमहीशपुरस्य रम्य-
　वेषाभिरस्य निबिडा सततं प्रियाभिः ।
शेषावनीजनिनिवासतरुर्यदीय-
　शेषादशोकवनिकाप हरेर्विभङ्गम् ॥ ४२ ॥

त्रस्ता वनस्थितनिशाचरनाथदास्यः
　शस्तात्मविक्रममम्ं किल यस्य दूतम् ।
मस्तार्पिताञ्जलय ऊचुरमुष्य शीघ्र-
　मस्तालया अवनिजावनजागरूकाः ॥ ४३ ॥

कोपेन यातुनृपतिर्हि यदीयदूतं
भूपेडिताङ्घ्रिरहिनोत् स्वभटाननेकान् ।
कापेयचञ्चलमिहानयतेति रम्य-
धूपे जनाश्रयवरे महिते निषण्णः ॥ ४४ ॥

एतेन किङ्करवरा निहता यदीय-
दूतेन तोरणगतेन चमूमहीशाः ।
घातेन पञ्च जवतोऽपि च मन्त्रिपुत्राः
जातेन यातुनृपतेः सहसाक्षनाम्ना ॥ ४५ ॥

शक्रारिणा कमलजास्त्रवरेण बद्धो
विक्रान्तिमान्निशिचरेशगृहं यदीयः ।
आक्रामदेतदवलोकनवाञ्छया यं
वक्राशरारचितलीलमनेककक्ष्यम् ॥ ४६ ॥

तत्रावनीश्वरमशेषनिशाचराणां
वृत्रारिमुख्यदिविषद्गणभीतिहेतुम् ।
अत्रासमद्भुतशिरोभुजमास दृष्ट्वा
पुत्रादिजुष्टमपि विस्मितहृद्यदीयः ॥ ४७ ॥

गर्वाकरं विधिवरोर्जितमिद्धदीप्तिं
शर्वाचलोद्धरणसम्भवदग्र्यकीर्तिम् ।
सर्वामरद्विषमनेकनरेन्द्रयज्ञ-
निर्वापणैकनिरतं परदारसक्तम् ॥ ४८ ॥

स्वर्वारसुन्दरिकरैरभिवीज्यमानं
पर्वाखरांशुघृणिजित्वरचामराल्या ।
निर्वाहकं निखिलनैर्ऋतसन्ततीनां
दुर्वार[संप]दुदधिं सुरहं समेघम् ॥ ४९ ॥

यस्याभियातुपति दूतवरो निषण्णः
स्वस्यागमस्य परिबोध्य निदानमत्र ।
अस्यानुकूलमभिधाय च दुष्टवृत्तेः
तस्या[शरस्य]विषयोऽप्यपगोरणस्य ॥ ५० ॥

अस्यानुजः परदयो नु विभीषणोऽपि
यस्यानुचारिणमिमं न वधार्हमाह ।
तस्याभवद्धितमदो वचनं [तदानीं]
[रीतिर्हि] दूत इति शास्त्रगिरामवध्यः ॥ ५१ ॥

दूतस्य यस्य वसनावृतवालवह्नि-
नीतस्य कर्षणमितस्तत आशरैस्तैः ।
ख्यातस्य राक्षसपुरीमपि निर्ददाह
शीतत्वमाप मिथिलेशसुताप्रसादात् ॥ ५२ ॥

भूयोऽपि मैथिलसुतां विनमन्महीध्र-
कायो जलाकरममेयकमुत्ततार ।
प्रायोपवेश [गत] वानरतुष्टिकारी
वायोरयं प्रियसुतोऽनुचरो यदीयः ॥ ५३ ॥

अध्यासितं दृढबलैः कपिभिर्मरन्द-
वृद्ध्यास्पदं यदनुचार्यनुमत्युपेतैः ।
यावत्स्वतृप्ति मकरन्दवनं प्रभग्नं
वध्या भवन्ति हि यतस्त्वितरे प्रविष्टाः ॥ ५४ ॥

पुत्रोऽनुजेन मरुतः सहितस्य यस्य
शत्रोरशोकगहने सह राक्षसीभिः ।
तत्रो[पवासनिरता]भवदत् स्वदृष्टां
मित्रोत्सचारविधुरे मधुरद्रुमाढ्ये ॥ ५५ ॥

श्रुत्वा वचो हनुमतोऽनवधिप्रमोदः
कृत्वातमात्मतनुसङ्गतिधन्यमेनम् ।
गत्वाथ सागरतटं सह वानरेन्द्रैः
उक्त्वाप्रमेय इति तं व्यथितो भृशं यः ॥ ५६ ॥

यद्भामिनीपरिसमर्पणयुक्तिजालं
सद्भाववान् प्रतिवदन् स विभीषणोऽर्थ्यम् ।
उद्भानुभूषरुचिरं रजनीचरेशं
तद्भावुकेतरवचोविमना बभूव ॥ ५७ ॥

दारान् विहाय धनमित्रसुतांश्च लङ्कां
धीराग्रणीर[घविमोच]नमाश्रितानाम् ।
कारागृहात् सनिगलादिव मुक्त एष
वाराकरोत्तरतटे शरणं गतोऽस्मि ॥ ५८ ॥

अङ्गीकृतिं प्रति कपीन् स विशङ्कमानां-
स्तुङ्गीभवद्यदरु[णांबुज]पादभक्तीन् ।
भृङ्गीतनुं यमिति यत्पदपद्मयुग्म-
सङ्गी निवेदयत मामुपयातमूचे (?) ॥ ५९ ॥

नानाविधाः कथयतः कपिराजमुख्यान्
सेनापतीन् निशिचरा[भयवर्ज]नोक्तीः ।
येनाभयं विदधता विदितस्वशक्तीन्
दीनावनैकनिरतेन तदा ह्यदायि ॥ ६० ॥

वाराकरं शरणमाश्रितवान् प्रमत्ते
घोरान् शरानपि धनुः प्रगृ[परिगृह्य पाणौ] ।
धाराधरप्रतिम एष ववर्ष तस्मिन्
नीराजितो मणिगणैरमुना प्रदिष्टैः ॥ ६१ ॥

चापेऽर्पितस्य किल यस्य विधेः शरस्य
कोपेन कम्पिततनुर्जडराशिरेषः ।
तापेन च स्वतटवासवतः शरव्यं
पापेष्वपश्चिमतरानसुरानकार्षीत् ॥ ६२ ॥

सेतुं कपीश्वरहृतैर्गिरिभिः समुद्रे
हेतुं वि[देहतनया]वदनोत्सवस्य ।
पातुं जनानघवतोऽपि च यो बबन्ध
यातुं निशाचरमहीश्वरराजधानीम् ॥ ६३ ॥

लीलापरैर्निशिचराधिपराजधानी-
सालावलोकनकुतूहलिभिः कपीन्द्रैः ।
कोलाहलं च विदधद्भिरमाकरोत् सु-
वेलाधिरोहणमुदारयशोधनो यः ॥ ६४ ॥

तुङ्गं निशाचरवरोऽप्यधिरुह्य सौध-
शृङ्गं व्यलोकयदसौ कपिवर्यसेनाः ।
रङ्गं श्रियः पलभुजां कपिराट् किरीट-
भङ्गं चकार किल तस्य यदङ्घ्रिभक्त्या ॥ ६५ ॥

सेना सरा [क्षसमहीभृ] दियं कपीनां
येनात्तचापशरपाणितलेन गुप्ता ।
नानानिशाचरवृतां नगरीं दशास्य-
सेनां समावृणुत देवगणैरधृष्या ॥ ६६ ॥

रुद्धे निशाचरपुरे क्वचन प्रदेशे
दग्धे यदीयपृतनाभिरथान्यतोऽपि ।
मुग्धे पलाशनजने क्वचिदप्यभीक्ष्णं
क्रुद्धे च पङ्क्तिवदने परपीडनेन ॥ ६७ ॥

युद्धाय रात्रिचरवानरधूर्वहाः सं-
नद्धा बभूवुरथ शस्त्रमहीध्रहस्ताः ।
जग्धाश्च केचिदपरे त्विह बाणवह्नि-
दग्धाः परस्परमतीव जयोद्यतास्ते ॥ ६८ ॥

संत्रासयन् हरिकुलं भुजगास्त्रजालैः
सुत्रामजिद्यदनुजं यमपि प्रपीड्य ।
पित्रा प्रहृष्टमनसा बहुमानपूर्वं
कुत्रारिरित्यभिहिते निहतं शशंस ॥ ६९ ॥

पातेन वेगत उदञ्चितचण्डपक्ष-
पातेन पक्षिकुलभूमिभृता व्यभेदि ।
मा ते भयं त्विति तदा वदता स वैरि-
घातेन यत्तनुगतो भुजगास्त्रबन्धः ॥ ७० ॥

ताम्राननेन मरुतः कपिना सुतेन
साम्रादिपादपकरेण विधाय जन्यम् ।
धूम्राक्ष आशर उपेत्य यदङ्घ्रिदास्य-
साम्राज्यतुष्टहृदयेन विनाशमापत् ॥ ७१ ॥

पित्रा समेन बलतः कनकाङ्गदेन
वित्रासितारिनिवहेन सहाङ्गदेन ।
तत्रास युद्धमवलोकयतां सुभीमं
तत्राप नाशमरिजय्यपि वज्रदंष्ट्रः ७२ ॥

नीलेन सैन्यपतिराशरभूभृतः स-
सालेन तालमुखदारुभृता कृताजिः ।
कालेयरञ्जिततनुर्यदनीकजाल-
पालेन कालसदनं निहतः प्रपेदे ॥ ७३ ॥

सेनाभिरायुधवतीभिरतीव रक्तो
येनापि योद्‌धुमुपयाति दशाननः स्म ।
दानाभिवर्षिगजवाहरथैः समेतो
नानाविधैर्नगरतो गिरिमूर्ध्नि भातः ॥ ७४ ॥

कृत्वा रणं हनुमता समतीत्य किञ्चित्
गत्वा कपीश्वरमुखैरपि यत्कनिष्ठम् ।
हत्वायुधेन तमसौ न शशाक हतुं
हत्वा गतोऽनिलसुतः प्रहरद्दशास्यम् ॥ ७५ ॥

येनानिलात्मजगतेन रथी चिराय
नानायुधैर्विहितसंयदसौ चचाल ।
लीनात्मशक्तिरथ बाणहतो भृशार्तो
दीनायतेऽपि[स्म] करतोऽपि विसृष्टचापः ।। ७६ ।।

त्वं गच्छ संयति मदीयशरैर्विभिन्न-
स्त्वङ्ग प्रविश्य विगतश्रम एष [व] लङ्काम् ।
त्वङ्गद्रथादिसहितः पुनरेहि जन्य-
रङ्गस्थलीमिति यतोऽभिहितो दशास्यः ।। ७७ ।।

रक्षोऽधिपोऽनुजमथो निजमात्तनिद्रं
संक्षोभचित्त उदबोधयदुत्थितोऽसौ ।
विक्षोभयन्नुरुबलेन कपीशसेनां
शिक्षोद्यतः कलशकर्ण उपाद्रवद्यम् ।। ७८ ।।

गोत्रप्रमाणतनुरेष कपीन्द्रवाहि-
गात्रः प्रहृष्टहृदयः प्रविवेश लङ्काम् ।
नेत्रप्रियः पलभुजां तदुदीरितात्म-
स्तोत्रस्ततः कपिवरः क्रमशः प्रबुद्धः ।। ७९ ।।

तेनानुजासमदशो रचितः सुरादि-
पानातिमत्त उररीकृतशूल एषः ।
नानास्त्रविज्जनवरेण विखण्डिताङ्गो
येनामरप्रियकरीं मृतिमाशु नीतः ।। ८० ।।

जम्भारिजित्तदनु कोपवता स्वपित्रा
संभावितोऽपि यममोहयदब्जजास्त्रम् ।
स्तम्भावहं यदनुजप्रमुखान् प्रसह्य[युज्य]
डम्भाञ्चितः स्वपितृमानसमोदकारी ।। ८१ ।।

वातात्मजाहृतमहौषधिपर्वतेन
वीतात्मचेतनयदीयकनिष्ठमुख्याः ।
याताश्च योऽपि गतपीडनतामसृक्प-
जेता विधिर्हि निखिलैर्दुरतिक्रमः स्यात् ।। ८२ ।।

इन्द्रात्मजस्य तनयेन यदङ्घ्रिभाजा
तन्द्रालुभावरहितेन किलाङ्गदेन ।
चन्द्राननेन विलयं नरकान्तकोऽगात्
सन्द्राविताखिलकपिः समितौ बलेन ।। ८३ ।।

वातात्मजेन समरे त्रिशिरा हतोऽभू-
न्नेता निशाचरकुलस्य सुरान्तकोऽपि ।
स्थाताग्रतो यदनुजेन सुरेन्द्रसैन्ये
जेतातिकाय इति राक्षसराजसूनुः ॥ ८४ ॥

सूरात्मजेन कपिभूमिभृता च कुम्भो
वीराग्रणीर्विरचिताजिरवाप नाशम् ।
घोरात्मकर्मकृतभीतिकपिबल[वैलैक-]
[वा] राकरेण मरुदुद्भवतो निकुम्भः ॥ ८५ ॥

जम्भारिसैन्यपरिमर्दनकृत् स्वपित्रा
संभावितो यदनुजेन समेत्य युद्धम् ।
डम्भाकरो मघवजित् किल कूटयोधी
स्तम्भाञ्चितो विनिहतोऽतिबलेन यत्नात् ॥ ८६ ॥

सन्नाहवान् दशमुखः स्वयमेव योद्धुं
नुन्नात्मजादिमृतिसंभवशोकभारः ।
खिन्नानपि स्वकजनानथ सान्त्वयित्वा
भिन्नान् कपीनिति करोमि वदन् प्रतस्थे ॥ ८७ ॥

आसीदतोः समरमृद्धकपीन्द्ररक्षो-
नासीरमुज्ज्वलधनुर्धरयोर्द्वयोश्च ।
आसीद्धि यस्य रजनीचरभूपतेः क्व
यासीति तिष्ठ वदतोर्मिथ एहि शीघ्रम् ॥ ८८ ॥

दन्तावलादिचतुरङ्गसमेतजन्ये
यन्ताजहार दिविषन्नृपतेः शताङ्गम् ।
तं तापसैरपि सुरैरभिपूज्यमानो
हन्तारुरोह रजनीचरभूपतेर्यः ॥ ८९ ॥

लोकेशदैवतशरेण निशाचरेन्द्रो
नाकेशसारथिवचःप्रहितेन येन ।
काकेन चागसि समो गगने सुरेशा-
नीके प्रहृष्यति हतो हृदये ममार ॥ ९० ॥

योऽपेतकोप इह पूर्वजनाशतो वि-
लापेन तद्गुणवता स विभीषणोऽपि ।
तापेन शल्यसहितस्तु यदीयदार-
पापेन युक्त इति तद्दहनं न चक्रे ॥ ९१ ॥

यच्छासनेन दहनं पुनरस्य चक्रे
स्वच्छाध्वरोक्तविधिना सहसामभिः सः ।
पुच्छाभिघातविहतिं कपयोऽपि जग्मु-
र्विच्छायतां निशिचराश्च तदावशिष्टाः ॥ ९२ ॥

नेता समस्तजगतां रजनीचरेश-
जेताधिलङ्कमभिषिच्य कनिष्ठमस्य ।
सीतामवाप विधिरुद्रमुखैश्च योऽसौ
पूतां शुचौ स्वजनकेन च नन्द्यमानः ॥ ९३ ॥

यानेन विस्तृततरेण तु पुष्पकेण
सेनेन वानरजनेन सदारकेण ।
मानेन मेरुतुलितेन विभीषणेन
योऽनेन यातुमहितेन सह प्रतस्थे ॥ ९४ ॥

वीतासुखं निजसमागमतो विमाने
सीतामिति ह्यकथयत् परितुष्टहृद्यः ।
याता पुरीं प्रति निशाचरसन्ततीनां
नेतात्र जानकि मया निहतस्त्वदर्थे ॥ ९५ ॥

अम्भोनिधौ जनकनन्दिनि पश्य सेतुं
कुम्भोपमोरुकुचशालिनि कोमलाङ्गि ।
रम्भोरु वानरसमाहृतशैलवृक्ष-
स्तम्भोच्चयेन रचितं भवतीमवाप्तुम् ॥ ९६ ॥

मामाप जानकि तदात्र विभीषणोऽयं
सामानि राक्षसवरं कथयंस्त्वदर्थे ।
कामातुरं तदनु तेन विनिन्द्यमानो
धीमान् विसृज्य सहजं सहितश्चतुर्भिः ॥ ९७ ॥

अत्राभजं शरणमम्बुनिधिं ततः स
वित्रासितस्तदनु पङ्कजसंभवास्त्रात् ।
मित्रायमाण उपहार्यवदन्नलं स्व-
पित्रा समोऽयमिति सेतुकृतौ समर्थः ॥ ९८ ॥

यानं प्रयाति लघु जानकि पश्य शैल-
मेनं च यत्र सहजेन हृतात्मदारः ।
जानन् सदृक्षमपि मामभवत् सखा मे
दीनं कपीश इतसंपदपास्तशत्रुः ॥ ९९ ॥

गोदावरीं जनकनन्दिनि पश्य पश्य-
  स्त्वेदापहां त्वमनु पञ्चवटीं प्रसन्नाम् ।
वेदाङ्गविन्मुनिजनैर्विहिताभिषेकां
  मोदावहां मम तवापि विहारकाले ॥ १०० ॥

अत्रानुजेन रचितां मम पर्णशालां
  वृत्रारिचापदमुनेरपि सन्मुनीनाम् ।
तत्रापि तत्र विविधाश्रमभूमिभागां-
  श्चित्रान् विलोकय तलोदरि चित्रकूटम् ॥ १०१ ॥

उक्त्वा विदेहतनयामिति यस्तु पूर्णे
  नत्वाधिपञ्चमि मुनिं च चतुर्दशाब्दे ।
गत्वा समागममथो भरतेन पौरैः
  कृत्वा समन्त्रिभिरसौ नगरीप्रवेशम् ॥ १०२ ॥

तत्राभिषेकमभजत् सहमैथिलीकः
  सुत्रामनीलमुखरत्नविचित्रपीठे ।
छत्रादिभृद्भिरनुजैरपि सेव्यमानो
  मित्रान्ववायतिलको विरराज दीप्त्या ॥ १०३ ॥

हित्वा विमानमपि वोढुमथैकपिङ्गं
  कृत्वा कपीशपृतनागमनाभ्यनुज्ञाम् ।
दत्त्वा विभीषणकृते नु धनं कुलस्य
  मत्वा निजावतरणं सफलं तुतोष ॥ १०४ ॥

कुम्भोद्भवादिकथितात्मरिपुप्रशस्त-
  डम्भोच्चयोद्भववरानिहरिर्जयाढ्यः ।
अम्भोधरारवविचित्रकथाश्च शृण्वन्
  जम्भोपमर्दनजयप्रमुखाः प्रहृष्टः ॥ १०५ ॥

यो राजमौलिविनतः कुरुते स्म राज्यं
  चोरादिबाधरहितं बहुधेष्ट्यज्ञः ।
चारा भिदृष्टजनवृत्तमुदारशीलः
  श्रीराम एष सततं हृदि संनिधत्ताम् ॥ १०६ ॥

यो रेवतीमुखविकासकरस्वकीय-
  वेरेण नीलवसनस्तुलितोऽद्रिणासौ ।
गौरेण शोभितशयो निहतप्रलम्बः
  सीरेण हन्तु दुरितं निखिलं बलो वः ॥ १०७ ॥

यो देवकीजठरतो वसुदेवसूनु-
भूदेवतागुरुभरं परिहर्तुकामः ।
वेदेषु गीतविभवोऽवततार संप्र-
पेदे व्रजं तदनु नन्दगृहेऽपि वृद्धः ॥ १०८ ॥

नानाविधानवनिपीडनकारकोग्र-
सेनात्मसंभवमुखान् विनिहत्य भूमिम् ।
दीनामनुग्रहभरेण चकार हृष्टां
यो नायको व्रजकुलस्य स पातु कृष्णः ॥ १०९ ॥

वाहाधिरूढ उररीकृतखड्गपाणि -
र्मोहाविलान् कलिविजृम्भितकल्मषाढ्यान् ।
यो हा हनिष्यति हि विष्णुयशस्तनूजो
नीहारभानुवदनोऽवतु नः स कल्की ॥ ११० ॥

श्रीवादिभीतिकरनामगुरोः कुदृष्टि-
नीवारजालशमनस्य तनूभवेन ।
सेवाकृतास्य रचितेयमहो स्तुतिर्भू-
देवाभिनन्दनकरेण वृषाचलेशा ॥ १११ ॥

॥ इति श्रीप्रतिवादिभयङ्करवेङ्कटेशविरचितं
दशावतारस्तोत्रं सम्पूर्णम् ॥

